आयुर्वेदीयग्रन्थमाला ।

द्वादशं पुष्पम् ।

वैद्यवर्यश्रीशोढलविरचितो

# गदनिग्रहः ।

( कायचिकित्सा शालाक्य-शल्य-भूतविद्या-कौमारभृत्य-अगद-रसायन-वाजीकरण-पञ्चकर्माधिकाराख्यनवखण्डात्मको द्वितीयो भागः)

आचार्योपाह्वेन त्रिविक्रमात्मजेन यादवशर्मणा
संशोधितः प्रकाशितश्च ।

ÂYURVEDÎYA-GRANTHAMÂLÂ.

No. 12.

# GADANIGRAHA.

SECOND PART

BY

VAIDYAVARYA SHRI SHODHALA.

EDITED BY

VAIDYA JÂDAVAJÎ TRIKUMAJÎ ÂCHÂRYA

372, BORÂ BAZÂR STREET, FORT, BOMBAY.

1915 A. D.

मूल्यं ४॥ रूप्यकाः । *Price 4½ Rupees.*

# निवेदनम् ।

गदनिग्रहस्य प्रयोगखण्डात्मकः प्रथमो भागश्चतुर्भ्यो वत्सरेभ्यः पूर्वमायुर्वेदीयग्रन्थमालायां मुद्रयित्वा प्रसिद्धिं नीतः । संप्रति कायचिकित्सा-शालाक्य-शल्य-भूतविद्या-कौमारभृत्य-अगदतन्त्र-रसायन-वाजीकरण-पञ्चकर्माधिकाराख्य-नवखण्डात्मकोऽयं द्वितीयो भाग आयुर्वेदीयग्रन्थमालाया ग्राहकेभ्यः समर्प्यते । अस्मिन् ग्रन्थे प्रायश्चिकित्साशास्त्रस्य समस्तान्यङ्गानि सविस्तरमुपवर्णितानि । ग्रन्थोऽयं भिषजां गदानां निग्रहे उपकरणरूपः सन् स्वनाम्नोऽन्वर्थकतां प्रतिपादयति । गदनिग्रहस्यास्य द्वितीयभागस्य संशोधने पुस्तकद्वयमादर्शत्वेनालम्बितम् । प्रथमं क.संज्ञितं मदीयपरमसुहृदां स्वर्वासिनां वैद्य मुरारजी शर्मणां, द्वितीयं ख.संज्ञितं मदीयपरमसुहृदां बुन्दीराजधानीनिवासिनां राजवैद्यानां पं० श्रीप्रसादशर्मणाम् । अस्य द्वितीयभागस्य शुद्धिपत्रकरणे विषयानुक्रमकरणे च श्रीनासिकक्षेत्रनिवासिना मदीयसुहृदा वैद्य वामनशास्त्री दातार इत्यनेन सुमहत्सहायं दत्तं, तमप्यत्र संभावयामि । ग्रन्थस्यास्य संशोधनार्थं यथामति कृतेऽपि यत्ने भ्रमप्रमादादिवशाज्जातं स्खलनं क्वाप्युपलभ्येत चेत् क्षन्तव्योऽहं, सफलयितव्यश्च ममायं प्रयासो ग्रन्थस्यास्य पठनपाठनपर्यालोचनादिनेति

यादवशर्मणः ।

# गदनिग्रहः ।

## अथ कायचिकित्साखण्डो द्वितीयः ।

### अथातो ज्वराधिकारः प्रथमः ।

रोगज्ञानसाधनानि ।

निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा ।
संप्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥ १ ॥

निदानलक्षणम् ।

निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः ।
निदानमाहुः पर्यायैः

पूर्वरूपलक्षणम् ।

प्राग्रूपं येन लक्ष्यते ॥ २ ॥
उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः ।
लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम् ॥ ३ ॥

रूपलक्षणम् ।

तदेव व्यक्ततां यातं रूपमित्यभिधीयते ।
संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः ॥ ४ ॥

उपशयानुपशयलक्षणम् ।

हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम्
औषधान्नविहाराणामुपयोगं सुखावहम् ॥ ५ ॥
विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः ।
विपरीतोऽनुपशयो व्याध्यसात्म्य इति स्मृतः ॥ ६ ॥

संप्राप्तिलक्षणम्।

यथा दोषेण दुष्टेन यथा चानुविसर्पता।
निर्वृत्तिरामयस्यासौ संप्राप्तिर्जातिरागतिः॥ ७
संख्याविकल्पप्राधान्यबलकालविशेषतः।
सा भिद्यते यथाऽत्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति।
दोषाणां समवेतानां विकल्पोऽशांशकल्पना।
स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशे
हेत्वादिकात्स्न्र्यावयवैर्बलाबलविशेषणम्।
नक्तंदिनर्तुभुक्तांशैर्व्याधिकालो यथामलम्॥ १
इति प्रोक्तो निदानार्थस्तव्द्यासेनोपदिश्यते।

वातादीनां सर्वरोगेष्वव्यभिचरितकारणत्वम्।

सर्वेषामेव रोगाणां निदानं कुपिता मलाः॥ १
तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम्।

रोगस्यापि रोगान्तरकर्तृत्वम्।

निदानार्थकरो रोगो रोगस्याप्युपलभ्यते॥ १२
तद्यथा ज्वरसंतापाद्रक्तपित्तमुदीर्यते।
रक्तपित्ताज्ज्वरस्ताभ्यां शोषश्चाप्युपजायते॥ १
प्लीहाभिवृद्ध्या जठरं जठराच्छोफ एव च।
अर्शोभ्यो जाठरं दुःखं गुल्मश्चाप्युपजायते॥ १
प्रतिश्यायादथो कासः कासात्संजायते क्षयः।
क्षयो रोगस्य हेतुत्वे शोषस्याप्युपजायते॥ १५
ते पूर्वं केवला रोगाः पश्चाद्धेत्वर्थकारिणः।

व्याधिवैचित्र्यम्।

कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति॥
न प्रशाम्यति चाप्यन्यो हेत्वर्थं कुरुतेऽपि च।

निदानज्ञानस्यावश्यकता।

एवं कृच्छ्रतमा नृणां दृश्यन्ते व्याधिसङ्कराः॥

तस्माद्यत्नेन सद्वैद्यैरिच्छद्भिः सिद्धिमुत्तमाम्।
ज्ञातव्यो वक्ष्यते योऽयं ज्वरादीनां विनिश्चयः॥ १८॥

ज्वरसंप्राप्तिः।

दक्षापमानसंक्रुद्धरुद्रनिःश्वाससंभवः।
ज्वरोऽष्टधा पृथग्द्वन्द्वसंघातागन्तुजः स्मृतः॥ १९॥
(वातपित्तकफोद्भूतः सन्निपाताभिचारजः।
देवग्रहप्रकोपोत्थो मानसोऽष्टविधः स्मृतः॥ २०॥
शोकात्क्रोधात्तथा मोहात्सन्तापाद्बलहानितः।
अन्तकाले च मर्त्यानां जायन्ते दारुणा ज्वराः॥ २१॥
अन्येऽपि विविधाकारा व्यायामाजीर्णसंभवाः।
धातोरसात्म्यवैषम्यैः कायजाता ह्यनेकधा॥ २२॥)
मिथ्याहारविहाराभ्यां दोषा ह्यामाशयाश्रयाः।
बहिर्निरस्य कोष्ठाग्निं ज्वरदाः स्यू रसानुगाः॥ २३॥
(१ मैतिरोगमिति क्रुद्धा रोगाधिष्ठानगामिनीः।
रसायनीः प्रपद्याशु दोषो देहे विकुर्वते॥ २४॥)

ज्वरस्य सामान्यलक्षणम्।

स्वेदावरोधः सन्तापः सर्वाङ्गग्रहणं तथा।
युगपद्यत्र रोगे च स ज्वरः परिकीर्तितः॥ २५॥

ज्वरे गात्रोष्णतायाः स्वेदावरोधस्य च हेतुः।

दोषैः सर्वैर्बहुधा समुद्भ्रान्तैर्विमार्गगैः।
विक्षिप्यमानोऽन्तरग्निर्भवत्याशु बहिश्चरः॥ २६॥
रुणद्धि चाप्यपांधातुं यस्मात्तस्माज्ज्वरातुरः।
भवत्यत्युष्णगात्रश्च नच स्विद्यति सर्वशः॥ २७॥

---

१ ( ) एतच्चिह्नान्तर्गतः पाठः ख. पुस्तके नोपलभ्यते। २ ( ) एतच्चिह्नान्तर्गतः पाठः क. पुस्तके नोपलभ्यते।

ज्वरस्य सामान्यपूर्वरूपाणि।

श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः।
इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु॥ २८॥
जृम्भाऽङ्गमर्दो गुरुता रोमहर्षोऽरुचिस्तमः।
अप्रहर्षश्च शीतं च भवत्युत्पत्स्यति ज्वरे॥ २९॥
सामान्यतो

ज्वरस्य विशिष्टपूर्वरूपाणि।

पित्तात्तु नयनयोर्दाहः कफादन्नारुचिस्तथा।
विशेषात्तु जृम्भाऽत्यर्थं समीरणात्॥ ३०॥
रूपैरन्यतराभ्यां तु संसृष्टैर्द्वन्द्वजं विदुः।
सर्वलिङ्गसमवायः सर्वदोषप्रकोपजे॥ ३१॥

वातज्वरलक्षणम्।

वेपथुर्विषमो वेगः कण्ठौष्ठपरिशोषणम्।
निद्रानाशः क्षवस्तम्भो गात्राणां रौक्ष्यमेव च॥ ३२॥
शिरोहृद्गात्ररुग्वक्त्रवैरस्यं बद्धविट्कता।
शूलाध्माने जृम्भणं च भवत्यनिलजे ज्वरे॥ ३३॥

पित्तज्वरलक्षणम्।

वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः।
कण्ठौष्ठमुखनासानां पाकः स्वेदश्च जायते॥ ३४॥
प्रलापो वक्त्रकटुता मूर्छा दाहो मदस्तृषा।
पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च॥ ३५॥

श्लेष्मज्वरलक्षणम्।

स्तैमित्यं स्तिमितो वेग आलस्यं मधुरास्यता।
शुक्लमूत्रपुरीषत्वं स्तम्भस्तृप्तिरथापि च॥ ३६॥
गौरवं शीतमुत्क्लेदो रोमहर्षोऽतिनिद्रता।
लालास्रावो विडल्पत्वं प्रसेको लवणास्यता॥ ३७॥

नात्युष्णगात्रता छर्दिरङ्गसादोऽविपाकिता ।
प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोश्च शुक्लता ॥ ३८ ॥

वातपित्तज्वरलक्षणम् ।

तृष्णा मूर्च्छा भ्रमो दाहः स्वप्ननाशः शिरोरुजा ।
कण्ठास्यशोषो वमथू रोमहर्षोऽरुचिस्तमः ॥ ३९ ॥
पर्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः ।

वातश्लेष्मज्वरलक्षणम् ।

स्तैमित्यं पर्वणां भेदो निद्रा गौरवमेव च ॥ ४० ॥
शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्तनम् ।
सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥ ४१ ॥

पित्तश्लेष्मज्वरलक्षणम् ।

लिप्ततिक्तास्यता तन्द्रा मोहः कासोऽरुचिस्तथा ।
मुहुर्दाहो मुहुः शीतं पित्तश्लेष्मज्वराकृतिः ॥ ४२ ॥

सन्निपातज्वरलक्षणम् ।

क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरोरुजा ।
सास्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने ॥ ४३ ॥
सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः ।
तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः ॥ ४४ ॥
तद्वच्छीतं महानिद्रा दिवा जागरणं निशि ।
सदा वा नैव वा निद्रा महान् स्वेदोऽति नैव वा ॥४५॥
गीतनर्तनहासादिविकृतेहाप्रवर्तनम् ।
परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परम् ॥ ४६ ॥
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च ।
शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा ॥ ४७ ॥
स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः ।
कृशत्वं नातिगात्राणां प्रततं कण्ठकूजनम् ॥ ४८ ॥

कोठानां श्यावरक्तानां मण्डलानां च दर्शनम्।
मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च ॥ ४९ ॥
चिरात्पाकश्च दोषाणां सन्निपातज्वराकृतिः।

सन्निपातपूर्वलक्षणम्।

( अकस्माच्छीलविकृतिरकस्माद्धृष्टरुष्टतम् ॥ ५० ॥
अकस्मादिन्द्रियोत्पत्तिः सन्निपाताग्रलक्षणम्।)

सन्निपातज्वरस्य साध्यासाध्यलक्षणम्।

दोषे विबद्धे नष्टेऽग्नौ सर्वसंपूर्णलक्षणः ॥ ५१ ॥
सन्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा।

सन्निपातोपद्रवः।

सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः।
शोफः संजायते तेन कश्चिदेव प्रमुच्यते ॥ ५२ ॥

सन्निपातज्वरमर्यादा।

पित्तकफानिलवृद्ध्या दशदिवसद्वादशाहसप्ताहात्।
हन्ति विमुञ्चति वाऽऽशु त्रिदोषजो धातुमलपाकात् ॥५३
सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा।
पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा ॥ ५४ ॥
सप्तमी द्विगुणा यावन्नवम्येकादशी तथा।
एषा त्रिदोषमर्यादा मोक्षाय च वधाय च ॥ ५५ ॥

आगन्तुज्वरलक्षणम्।

अभिचाराभिघाताभ्यामभिषङ्गाच्च शापतः।
आगन्तुर्जायते दोषैर्यथास्वं तं विभावयेत् ॥ ५६ ॥
श्यावास्यता विषकृते तथातीसार एव च।
भक्तारुचिः पिपासा च तोदश्च सह मूर्च्छया ॥ ५७ ॥
औषधीगन्धजे मूर्च्छा शिरोरुग्वमथुः क्षवः।
कामजे चित्तविभ्रंशस्तन्द्राऽऽलस्यमभोजनम् ॥ ५८ ॥
हृदये वेदना चास्य गात्रं च परिशुष्यति।

भयात्प्रलापः शोकाच्च भवेत्कोपाच्च वेपथुः ॥ ५९ ॥
अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते ।
भूताभिषङ्गादुद्वेगो हास्यरोदनकम्पनम् ॥ ६० ॥

आगन्तुज्वरेषु प्रतिनियतदोषानुबन्धप्रदर्शनम् ।

कामशोकभयाद्वायुः क्रोधात्पित्तं त्रयो मलाः ।
भूताभिषङ्गात्कुप्यन्ति भूतसामान्यलक्षणाः ॥ ६१ ॥

विषमज्वरसंप्राप्तिः ।

दोषोऽल्पोऽहितसंभूतो ज्वरोत्सृष्टस्य वा पुनः ।
धातुमन्यतमं प्राप्य करोति विषमज्वरम् ॥ ६२ ॥
सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ।
सन्ततं रसरक्तस्थः सोऽन्येद्युः पिशिताश्रितः ॥ ६३ ॥
मेदोगतस्तृतीयेऽह्नि अस्थिमज्जगतः पुनः ॥ ६४ ॥
कुर्याच्चातुर्थकं घोरमन्तकं रोगसङ्करम् ।

सन्ततादिविषमज्वराणां लक्षणानि ।

स्रोतोभिर्विसृता दोषा गुरवो रसवाहिभिः ॥ ६५ ॥
सर्वगात्रानुगाः स्तब्धा ज्वरं कुर्वन्ति संततम् ।
सप्ताहं वा दशाहं वा द्वादशाहमथापि वा ॥ ६६ ॥
सन्तत्या योऽविसर्गी स्यात्सन्ततः स निगद्यते ।
अहोरात्रे सततको द्वौ कालावनुवर्तते ॥ ६७ ॥
अन्येद्युष्कस्त्वहोरात्र एककालं प्रवर्तते ।
तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः ॥ ६८ ॥
दिनमेकं तु विश्रम्य प्रत्येति स तृतीयकः ।
दिनद्वयमतिक्रम्य प्रत्येति स चतुर्थकः ॥ ६९ ॥
यः स्यादनियतात्कालाच्छीतोष्णाभ्यां तथैव च ।
वेगतश्चापि विषमो ज्वरः स विषमो मतः ॥ ७० ॥

विषमज्वरस्यैकीयमते भूताभिषङ्गजत्वम् ।

केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम् ।

विषमज्वराणां मुख्याभिव्यक्तित्वे हेतुः।

अधिशेते यथा भूमिं बीजं काले प्ररोहति ॥ ७१ ॥
अधिशेते तथा धातून् दोषः काले प्रकुप्यति।
स वृद्धिं बलकालं च प्राप्य दोषस्तृतीयकम् ॥ ७२ ॥
चतुर्थकं च कुरुते प्रत्यनीकबलक्षयात्।

उल्बणदोषभेदेन तृतीयकचतुर्थकयोर्लक्षणान्तरम्।

कफपित्तात्त्रिकग्राही पृष्ठाद्वातकफात्मकः ॥ ७३ ॥
वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृतीयकः।
चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः ॥ ७४ ॥
जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरस्तोऽनिलसंभवः।
विषमज्वर एवान्यश्चतुर्थकविपर्ययः ॥ ७५ ॥
अस्थिमज्जोभयगते चतुर्थकविपर्ययः।
स मध्ये ज्वरयत्यह्नी आदावन्ते च मुञ्चति ॥ ७६ ॥

वातबलासकज्वरलक्षणम्।

नित्यं मन्दज्वरो रूक्षः शूनः कृच्छ्रेण सिध्यति।
स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी ॥ ७७ ॥

प्रलेपकज्वरलक्षणम्।

प्रलिम्पन्निव गात्राणि श्लेष्मणा गौरवेण च।
मन्दज्वरविलेपी च स शीतः स्यात्प्रलेपकः ॥ ७८ ॥

विषमज्वरविशेषाः।

विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते।
तेनार्धं शीतलं देहे अर्धं चोष्णं प्रजायते ॥ ७९ ॥
काये दुष्टं यदा पित्तं श्लेष्मा चान्ते व्यवस्थितः।
तेनोष्णत्वं शरीरस्य शीतत्वं हस्तपादयोः ॥ ८० ॥
काये श्लेष्मा यदा दुष्टः पित्तं चान्ते व्यवस्थितम्।
शीतत्वं तेन देहस्य उष्णत्वं करपादयोः ॥ ८१ ॥

दाहपूर्वशीतपूर्वज्वरयोर्लक्षणम्।

त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे।
तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च ॥ ८२ ॥
करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च।
तस्मिन् प्रशान्ते त्वरितौ कुरुतः शीतमन्ततः ॥ ८३ ॥
द्वावेतौ दाहशीतादिज्वरौ संसर्गजौ स्मृतौ।
दाहपूर्वस्तयोः कष्टः कृच्छ्रसाध्यतमश्च सः ॥ ८४ ॥

रसादिधातुगतज्वरलक्षणम्।

गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ।
रसस्थे तु ज्वरे लिङ्गं दैन्यं चास्योपजायते ॥ ८५ ॥
रक्तनिष्ठीवनं दाहो मोहश्छर्दनविभ्रमौ।
प्रलापः पिटिका तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥ ८६ ॥
पिण्डिकोद्वेष्टनं तृष्णा सृष्टमूत्रपुरीषता।
ऊष्मान्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे ॥ ८७ ॥
भृशं स्वेदस्तृषा मूर्च्छा प्रलापश्छर्दिरेव च।
दौर्गन्ध्यारोचकौ ग्लानिर्मेदःस्थे चासहिष्णुता ॥ ८८ ॥
भेदोऽस्थ्नां कूजनं श्वासो विरेकश्छर्दिरेव च।
विक्षेपणं च गात्राणामेतदस्थिगते ज्वरे ॥ ८९ ॥
तमःप्रवेशनं हिक्का कासः शैत्यं वमिस्तथा।
अन्तर्दाहो महाश्वासो मर्मच्छेदश्च मज्जगे ॥ ९० ॥
मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे।
शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः ॥ ९१ ॥

प्राकृतवैकृतज्वरयोर्लक्षणम्।

वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात्।
वैकृतोऽन्यः स दुःसाध्यः प्राकृतश्चानिलोद्भवः ॥ ९२ ॥
वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम्।
कुर्यात्पित्तं च शरदि तस्य चानुबलः कफः ॥ ९३ ॥

तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ।
कफो वसन्ते तमपि वातपित्तं भवेदनु ।

कालव्यापि दोषविशेषलक्षणम् ।

काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव च ॥ ९४ ॥
निदानोक्तानुपशयो विपरीतोपशायिता ।

अन्तर्वेगज्वरलक्षणम् ।

अन्तर्दाहोऽधिकं तृष्णा प्रलापः श्वसनं भ्रमः ॥ ९५ ॥
सन्ध्यस्थिशूलमस्वेदो दोषवर्चोविनिग्रहः ।
अन्तर्वेगस्य लिङ्गानि ज्वरस्यैतानि लक्षयेत् ॥ ९६ ॥

बहिर्वेगज्वरलक्षणानि ।

संतापो ऽधिको बाह्यस्तृष्णादीनां च मार्दवम् ।
बहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च ॥ ९७ ॥

आमज्वरलक्षणम् ।

लालाप्रसेकहृल्लासहृदयाशुद्ध्यरोचकाः ।
तन्द्रालस्याविपाकास्यवैरस्यं गुरुगात्रता ॥ ९८ ॥
क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवान् ज्वरः ।
आमज्वरस्य लिङ्गानि न दद्यात्तत्र भेषजम् ॥ ९९ ॥
भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम् ।

पच्यमानज्वरलक्षणम् ।

ज्वरवेगोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः ॥ १०० ॥
मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ।

निरामज्वरलक्षणानि ।

क्षुत्क्षामता लघुत्वं च गात्राणां ज्वरमार्दवम् ।
दोषप्रवृत्तिरष्टाहो निरामज्वरलक्षणम् ॥ १०१ ॥

सम्यग्लङ्घितलक्षणानि ।

प्रकाङ्क्षा लाघवं ग्लानिः सच्छता सुप्रसन्नता ।
उपद्रवनिवृत्तिश्च सम्यग्लङ्घितलक्षणम् ॥ १०२ ॥

ज्वरस्यासाध्यलक्षणानि ।

बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ।
श्वासो मूर्च्छाऽरुचिश्छर्दिस्तृष्णातीसारविड्ग्रहाः ॥ १०३॥
हिक्काकासाङ्गभेदाश्च ज्वरस्योपद्रवा दश ।
हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणः ॥ १०४ ॥
ज्वरः प्राणान्तकृद्यश्च शीघ्रमिन्द्रियनाशनः ।
ज्वरः क्षीणस्य शूनस्य गम्भीरो दैर्घ्यरात्रिकः ॥ १०५ ॥
असाध्यो बलवान् यश्च केशसीमन्तकृज्ज्वरः ।
आरम्भाद्विषमो यस्तु यश्च वा दैर्घ्यरात्रिकः ॥ १०६ ॥
विसंज्ञस्ताम्यते यस्तु शेते निपतितोऽपि वा ।
शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः ॥ १०७ ॥
यो हृष्टरोमा रक्ताक्षो हृदि संघातशूलवान् ।
वक्रेण चैवोच्छ्वसिति तं ज्वरो हन्ति मानवम् ॥ १०८ ॥
हिक्काश्वासतृषायुक्तं मूढं विभ्रान्तलोचनम् ।
सन्ततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः ॥ १०९ ॥
हतप्रभेन्द्रियं क्षाममरोचकनिपीडितम् ।
गम्भीरतीक्ष्णवेगार्तं ज्वरितं परिवर्जयेत् ॥ ११० ॥
गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया ।
आनद्धत्वेन चात्यर्थं श्वासकासोद्गमेन च ।
क्षीणस्य चातिरूक्षस्य गम्भीरो यस्य हन्ति तम् ॥ १११ ॥

स्वेदो ललाटे हिमवन्नरस्य
　शीतार्दितस्यैति सुपिच्छिलश्च ।
कण्ठस्थितो यस्य न याति वक्षो
　नूनं यमस्यैति गृहं स मर्त्यः ॥ ११२ ॥
यस्ताम्यति स्वपिति शीतलगात्रयष्टि-
　रन्तर्विदाहसहितः स्मरणादपेतः ।

सोत्क्लासितः संहृषितः सशूल-
स्तं वर्जयेद्विषमिह ज्वरलक्षणज्ञः ॥ ११३ ॥

ज्वरमुक्तलक्षणम्।

दाहः स्वेदो भ्रमस्तृष्णा कम्पविड्भेदसंज्ञिताः।
कूजनं चास्यवैगन्ध्यमाकृतिर्ज्वरमोक्षणे ॥ ११४ ॥
स्वेदो लघुत्वं शिरसः कण्डूः पाको मुखस्य च।
क्षवथुश्चान्नलिप्सा च ज्वरमुक्तस्य लक्षणम् ॥ ११५ ॥
विगतक्लेशसंतापमव्यथं विमलेन्द्रियम्।
भक्तं काङ्क्षति सर्वं च विद्यात् पुरुषमज्वरम् ॥ ११६ ॥
विमुक्तस्यापि शिरसो ज्वरो यस्य न मुञ्चति।
अविमुक्तः स विज्ञेयो ज्वरः पुनरुपैति तम् ॥ ११७ ॥
देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम्।
स्वेदः क्षवः प्रकृतियोगि मनोऽन्नलिप्सा
कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि ॥ ११८ ॥

---

अथातः सर्वज्वरनाशनयोगान् व्याख्यास्यामः।

मङ्गलाचरणम्।

अनङ्गनं शान्तमुदात्तमद्भुतं
पुरः स्फुरद्विश्वपदार्थसार्थभृत्।
स्तुवे तदेवेदमहं तमोपहं
सदा चिदानन्दमयं महन्महः ॥ ११९ ॥

रोगविज्ञानोपायाः।

संस्पर्शनप्रश्नविमर्शवीक्षा-
दिभिः प्रकारैः प्रथमं चतुर्भिः।
व्याधेः परिज्ञानमुशन्ति सन्तो
यतस्तवः क्वापि न सन्ति तज्ज्ञाः ॥ १२० ॥

तद्दोपदेशबलकालविकारसत्त्व-
सात्म्यौषधानलवयःप्रकृतीः परीक्ष्य।
नानाप्रकारपवनादिगदातुराणा-
मुक्तं चिकित्सितमिदं नतु कर्मजानाम् ॥१२१॥

व्याधेः कर्मजादिभेदाः।

कर्मप्रकोपेण कदाचिदेके
दोपप्रकोपेण भवन्ति चान्ये।
तथाऽपरे प्राणिषु कर्मदोप-
प्रकोपजाः कायमनोविकाराः ॥ १२२ ॥

ते वातपित्तकफजास्त्रिविधा द्विधाऽत्र
काये मनस्यपि च सन्त्यपरे नराणाम्।
साध्याः क्वचित्क्वचिदपि प्रभवन्ति याप्याः
केचित्क्वचित्पुनरसाध्यतमाः प्रदिष्टाः ॥ १२३ ॥

साध्यव्याधिलक्षणम्।

एकैकदोपजनिता निरुपद्रवाश्च
दीप्तानलस्य च सदाऽऽत्मवतश्च जन्तोः।
वित्तान्वितस्य च रुजः सदुपक्रमेण
साध्या भवन्ति भिषजामचिरोद्भवाश्च ॥ १२४॥

याप्यव्याधिलक्षणम्।

ये यावदेव भिषजामगदप्रयोगा-
स्तावत्प्रशान्तिमुपयान्त्यगदैर्विना ये।
प्रादुर्भवन्ति च पुनः सहसा द्विदोपा-
स्तादृग्विधाः स्युरिति याप्यतमा गदा हि ॥१२५॥

असाध्यव्याधिलक्षणम्।

ये कर्मजाः सह भवन्ति शरीरिणां हि
ये च त्रिदोपजनिताश्चिरकालजाश्च।

सोपद्रवाश्च्युतघनस्य च वै गतामे-
रुग्रा गदा गदवतस्त्वगदैरगम्याः ॥ १२६ ॥

कर्मजव्याधिलक्षणम् ।

यथाशास्त्रं विनिर्णीतो यथाव्याधि चिकित्सितः ।
न शमं याति यो व्याधिः स ज्ञेयः कर्मजो बुधैः ॥ १२७ ॥
स्वल्पदोषे गरीयान् यः स ज्ञेयः कर्मदोषजः ।

कर्मजादिव्याधीनां प्रशमोपायः ।

कर्मक्षयात्कर्मकृतो दोषजः स्वशमौषधैः ॥ १२८ ॥
कर्मदोषोद्भवो याति कर्मदोषक्षयात्क्षयम् ।
यथा विषं यथा शस्त्रं यथाऽग्निरशनिर्यथा ॥ १२९ ॥
तथौषधमविज्ञातं विज्ञातममृतं यथा ।
उत्पद्यते हि साऽवस्था दोषकालबलं प्रति ।
यस्यां कार्यमकार्यं स्यात् कर्म कार्यं च गर्हितम् ॥ १३० ॥

ज्वरसामान्यलक्षणम् ।

खेदस्य नोद्भेदकता समग्र-
गात्रग्रहस्तापकृतः प्रलापः ।
जायेत यस्मिन् युगपद्विकारे
मनीषिणस्तं ज्वरमुद्दिशन्ति ॥ १३१ ॥

ज्वरे लङ्घनकरणे हेतुः ।

आमाशयस्थो ज्वलनं निहन्य
स्रोतांसि चामानुगतो निरुध्य ।
दोषो ज्वरं घोरतरं तनोति
कुर्यादतो लङ्घनमस्तदोषम् ॥ १३२ ॥
ज्वरघ्नं दीपनं काङ्क्षा रुचिलाघवकारकम् ।
अवेक्ष्य दोषं प्राणं च कार्यं स्यादपतर्पणम् ॥ १३३ ॥

अवस्थाविशेषे लङ्घननिषेधः।

तद्धि मारुतक्षुत्तृष्णामुखशोषभ्रमान्विते।
कार्यं न बाले वृद्धे वा न गर्भिण्यां न दुर्बले ॥ १३४ ॥
न तथाऽध्वश्रमक्रोधशोककामक्षयज्वरे।
शुद्धवातक्षयागन्तुजीर्णज्वरिषु लङ्घनम् ॥ १३५ ॥
नचेष्यते तेषु हितं शमनं यन्न कर्षणम्।

आगन्तुरोगलक्षणम्।

ये भूतविषवाय्वग्निक्षतभङ्गादिसंभवाः ॥ १३६ ॥
कामक्रोधभयाद्याश्च ते स्युरागन्तवो गदाः।

लङ्घने बलरक्षणस्यावश्यकता।

बलाविरोधिना चैनं लङ्घनेनोपपादयेत् ॥ १३७ ॥
बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः।

सम्यक्कृतलङ्घनलक्षणम्।

वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे।
हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते ॥ १३८ ॥
स्वेदे जाते रुचौ चापि क्षुत्पिपासासहोदये।
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ॥ १३९ ॥

अतिकृतलङ्घनलक्षणम्।

पर्वभेदोऽङ्गमर्दश्च कासः शोषो मुखस्य च।
क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्बल्यं श्रोत्रनेत्रयोः ॥ १४० ॥
मनसः संभ्रमोऽभीक्ष्णमूर्ध्ववातस्तमो हृदि।
देहाग्निबलहानिश्च लङ्घनेऽतिकृते भवेत् ॥ १४१ ॥

तन्द्रालक्षणम्।

इन्द्रियार्थेष्वसंप्राप्तिर्गौरवं जृम्भणं क्लमः।
निद्रार्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत् ॥ १४२ ॥

जृम्भालक्षणम्।

पीत्वैकमनिलोच्छ्वासमुद्वेष्टन् विवृताननः।
यं मुञ्चति सनेत्रास्रु स जृम्भ इति संज्ञितः ॥ १४३ ॥

श्रमलक्षणम् ।

योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः ।
क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥ १४४ ॥

क्षवथुलक्षणम् ।

प्राणोदानौ समौ स्रातौ मूर्धस्रोतःपथि स्थितौ ।
नस्तः प्रवर्तते शब्दः क्षवथुं तं विनिर्दिशेत् ॥ १४५ ॥

आलस्यलक्षणम् ।

सुखस्पर्शप्रसंगित्वं दुःखद्वेषणलोलता ।
शक्तस्य चाप्यनुत्साहः कर्मण्यालस्यमुच्यते ॥ १४६ ॥

उत्क्लेदलक्षणम् ।

यस्य त्वन्नं न निर्गच्छेत् प्रसेकः ष्ठीवते नरः ।
हृदयं पीड्यते यस्य तस्योत्क्लेदं विनिर्दिशेत् ॥ १४७ ॥

ग्लानिलक्षणम् ।

वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः ।
न चान्नमभिकाङ्क्षेत ग्लानिं तस्य विनिर्दिशेत् ॥ १४८ ॥

गौरवलक्षणम् ।

आर्द्रचर्मावनद्धं च यो गात्रं मन्यते नरः ।
तथा गुरु शिरोऽत्यर्थं गौरवं तं विनिर्दिशेत् ॥ १४९ ॥

ज्वरे वमनावस्था ।

सद्योभुक्तस्य संजाते ज्वरे सामे विशेषतः ।
वमनं वमनार्हस्य शस्तमित्याह वाग्भटः ॥ १५० ॥

अनुक्तव्याधिज्ञानोपायः ।

नास्ति रोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः ।
अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत् ॥ १५१ ॥
विकारनामाकुशलो न जिह्रीयात्कदाचन ।
नहि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः ॥ १५२ ॥

चिकित्साया आवश्यकता।

साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा।
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम् ॥ १५३ ॥
जातमात्रश्चिकित्स्यस्तु नोपेक्ष्योऽल्पतया गदः।
वह्निशस्त्रविषैस्तुल्यः स्वल्पोऽपि विकरोत्यसौ ॥ १५४ ॥
निवृत्तोऽपि पुनर्व्याधिः स्वल्पेनाऽऽयाति हेतुना।
क्षीणे मार्गीकृते दोषे शेषः सूक्ष्म इवानलः ॥ १५५ ॥

तरुणादिज्वरलक्षणम्।

आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः।
मध्यं चतुर्दशाहं तु पुराणमत उत्तरम् ॥ १५६ ॥
आसप्तरात्रात्तरुणं च पञ्च-
दिनान्यथो मध्यममामनन्ति।
पश्चाज्ज्वरं जीर्णमिति ज्वरस्य
तिस्रोऽप्यवस्थाः कथिता हिताय ॥ १५७ ॥

तरुणज्वरे वर्ज्यानि।

परिषेकान् प्रदेहांश्च स्नेहान् संशोधनानि च।
दिवास्वप्नं व्यवायं च व्यायामं शिशिरं जलम् ॥ १५८ ॥
क्रोधप्रवातभोज्यानि वर्जयेत्तरुणज्वरी।

तरुणज्वरे परिषेकादिसेवनादुपद्रवाः।

शोथश्छर्दिर्मदो मूर्च्छा भ्रमस्तृष्णा त्वरोचकः ॥ १५९ ॥
प्राप्नोत्युपद्रवानेतान् परिषेकादिसेवनात्।

ज्वरे पक्वदोषलक्षणम्।

मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च ॥ १६० ॥
पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम्।

ज्वरे विरेचनयोग्यावस्था।

रोगे शोधनसाध्ये तु यं विद्याद्दोषदुर्बलम् ॥ १६१ ॥
तं समीक्ष्य भिषक्कुर्याद्दोषप्रच्यावनं मृदु।

आमज्वरे संशोधननिषेधः ।

पाययेद्दोषहरणं मोहादामज्वरे तु यः ॥ १६२ ॥
प्रसुप्तं कृष्णसर्पं स कराग्रेण परामृशेत् ।

तरुणज्वरे कषायनिषेधः ।

न कषायं प्रशंसंति नराणां तरुणज्वरे ॥ १६३ ॥
कषायेणाकुलीभूता दोषा जेतुं सुदुस्तराः ।
न तु कल्पनमुद्दिश्य कषायः प्रतिषिध्यते ॥ १६४ ॥
यः कषायकषायः स्यात्स वर्ज्यस्तरुणज्वरे ।
दोषा बद्धाः कषायेण स्तम्भित्वात्तरुणज्वरे ।
स्तभ्यन्ते न विपच्यन्ते कुर्वन्ति विषमज्वरम् ॥ १६५ ॥

ज्वरे भेषजं कदा देयम् ? ।

लङ्घनादतिनिवातसेवनात्स्वेदनात्क्वथितवारिपानतः ।
आमभावरहिते सति ज्वरे योजयेत्तदनु भेषजं भिषक् ॥१६६॥

ज्वरे औषधमात्रा ।

उत्तमस्य पलं मात्रा मध्यस्याक्षैस्त्रिभिर्भवेत् ।
जघन्यस्य पलार्धेन स्नेहक्वाथ्यौषधेषु च ॥ १६७ ॥

क्वाथकरणपरिभाषा ।

क्वाथ्यद्रव्यपले वारि द्विरष्टगुणमिष्यते ।
चतुर्भागावशिष्टं तु पेयं पलचतुष्टयम् ॥ १६८ ॥

यवाग्वाद्यर्थं ज्वरे हितान्यन्नानि ।

रक्तशाल्यादयः शस्ताः पुराणाः षष्टिकैः सह ।
यवाग्वोदनलाजार्थे ज्वरितानां ज्वरापहाः ॥ १६९ ॥

ज्वरे पेयाप्रशंसा ।

दीपनी पाचनी लघ्वी ज्वरार्तानां ज्वरापहा ।
अन्नकाले हिता पेया यथास्वं पाचनैः कृता ॥ १७० ॥

ज्वरविशेषेऽन्नव्यवस्था ।

श्रमोपवासानिलजे हितो नित्यं रसौदनः ।
मुद्गयूषौदनश्चापि देयः कफसमुत्थिते ॥ १७१ ॥

स एव सितया युक्तः शीतः पित्तज्वरे हितः।
मुद्गामलकयूषस्तु वातपित्तात्मके हितः॥ १७२॥
ह्रस्वमूलकयूषस्तु कफवातात्मके हितः।
निम्बमूलकयूषस्तु हितः पित्तकफात्मके॥ १७३॥
यथास्वं पाचनैः सिद्धो वातपित्तकफात्मके।
लघुना पञ्चमूलेन पिप्पल्या सह धान्यया॥ १७४॥
महत्या पञ्चमूल्या च व्याघ्रीदुःस्पर्शगोक्षुरैः।
सिद्धानि भिषगन्नानि प्रयुञ्जीत यथाक्रमम्॥ १७५॥
श्लेष्मपित्ते वातपित्ते कफवाते त्रिदोषजे।

ज्वरे यवाग्वादिकरणपरिभाषा।

क्वाथ्यद्रव्याञ्जलिं क्षुण्णं श्रपयित्वा जलाढके॥ १७६॥
अर्धशृतेन तेनाथ यवाग्वाद्युपकल्पयेत्।
वृद्धवैद्याः पलं द्रव्यं ग्राह्यमस्त्याढकेऽम्भसि॥ १७७॥
भेषजस्यातिबाहुल्यात्कदाचिदरुचिर्भवेत्।
यदप्सु शृतशीतासु षडङ्गादि प्रयुज्यते॥ १७८॥
कर्षमात्रं ततो द्रव्यं साधयेत्प्रास्थिकेऽम्भसि।
अर्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ॥ १७९॥
कर्षार्धं वा कणाशुण्ठ्योः कल्कद्रव्यस्य वा पलम्।
विनीय पाचयेद्युक्त्या वारिप्रस्थेन चापरान्॥ १८०॥
यूषांश्च रसकांश्चैव कल्पेनानेन साधयेत्।

ज्वरे जलव्यवस्था।

तृषिते सलिलं चोष्णं दद्याद्वातकफज्वरे॥ १८१॥
पित्तमद्यविषोत्थेषु शीतलं तिक्तकैः शृतम्।
मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः॥ १८२॥
शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये।

तरुणज्वरे गौणभैषज्यस्याप्रतिषिद्धत्वम्।

मुख्यभैषज्यसंबन्धो निषिद्धस्तरुणज्वरे॥ १८३॥

तोयपेयादिसंस्कारैर्निर्दोषं तेन भेषजम् ।
पादक्षेपः कषायः स्याद्यः षोडशगुणेऽम्भसि ॥ १८४ ॥
कथितोऽतः षडङ्गादिर्न निषिद्धो नवज्वरे ।

ज्वरे भोजनव्यवस्था ।

ज्वरितं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु ॥ १८५ ॥
श्लेष्मक्षये विवृद्धोष्मा बलवाननलस्तदा ।
गुर्वभिष्यन्दिकाले च ज्वरी नाद्यात्कथंचन ॥ १८६ ॥
नतु तस्याहितं भुक्तमायुषे च सुखाय च ।

ज्वरे पथ्यसेवनावश्यकता ।

विनाऽपि भेषजैर्व्याधिः पथ्यादेव निवर्तते ॥ १८७ ॥
नतु पथ्यविहीनस्य भेषजानां शतैरपि ।
सात्म्यासात्म्याद्यभावाच्च पथ्यं द्वेष्यत्वमागतम् ॥ १८८
कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत्पुनः ।

पूर्वोक्तक्रियाभिरप्रशाम्यति ज्वरे पाचनव्यवस्था ।

लङ्घनाम्बुयवागूभिर्यदा दोषो न पच्यते ॥ १८९ ॥
तदा तं मुखवैरस्यतृष्णारोचकनाशनैः ।
कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः समुपाचरेत् ॥ १९० ॥

---

## आमज्वरेपाचनकषायाः ।

शुण्ठ्यादिपाचनकषायः ।

तुल्यैर्नागरभूनिम्बगुडूचीमुस्तकैः शृतम् ।
कषायं पाययेदामे ज्वरे ज्वरविनाशनम् ॥ १९१ ॥

द्वितीयः शुण्ठ्यादिपाचनकषायः ।

नागरं देवकाष्ठं च धान्यकं बृहतीद्वयम् ।
दद्यात्पाचनकं पूर्वं ज्वरितानां ज्वरापहम् ॥ १९२ ॥

गुडूच्यादिपाचनकषायः ।

गुडूची नागरं मुस्तं पटोलारिष्टवत्सकम् ।
त्रिफला च कषायः स्यात्पाचनो ज्वरनाशनः ॥ १९३

चन्दनादिपाचनकषायः।

चन्दनोत्पलह्रीबेरकटुकोशीरधान्यकम्।
बृहती नागरं मुस्तं वचा पर्पटकोऽमृता ॥ १९४ ॥
क्वाथः सातिविषः पेयः पाचनो ज्वरनाशनः।

दुरालभादिपाचनकषायः।

दुरालभापर्पटकक्वाथं मधुयुतं पिबेत् ॥ १९५ ॥

द्राक्षादिपाचनकषायः।

द्राक्षापटोलभूनिम्बक्वाथः पाचनमुच्यते।

कटुरोहिण्यादिपाचनकषायः।

सर्वज्वरेषु शस्यन्ते यथादोषबलं प्रति ॥ १९६ ॥
कटुका रोहिणी मुस्तं पिप्पलीमूलमेव च।
हरीतकी च तत्पेयमामाशयगते ज्वरे ॥ १९७ ॥

मुस्तादिपाचनकषायः।

पाक्यं शीतकषायं वा मुस्तपर्पटकं पिबेत्।

नागरादिपाचनकषायः।

सनागरं पर्पटकं पिबेद्वा सदुरालभम् ॥ १९८ ॥

किराततिक्तादिपाचनकषायः।

किराततिक्तकं मुस्तं गडूचीं विश्वभेषजम्।
पाठामुशीरं सोदीच्यं पिबेद्वा ज्वरशान्तये ॥ १९९ ॥

वातज्वरे दशमूलपाचनकषायः।

दशमूलकषायं तु पाचनं पवनज्वरे।

पित्तज्वरे मुस्तादिपाचनकषायः।

सक्षौद्रं पैत्तिके मुस्तकटुकेन्द्रयवैः कृतम् ॥ २०० ॥

कफज्वरे पिप्पल्यादिपाचनकषायः।

पिप्पल्यादिकषायं तु कफजे परिपाचनम्।

संसृष्टदोषेषु ज्वरेषु पाचनकषायव्यवस्था।

संसृष्टदोषेषु हितं संसृष्टमथ पाचनम् ॥ २०१ ॥

वातज्वरे गडूच्यादिपाचनकषायः।

गडूची पिप्पलीमूलं नागरं चेति तत्समम्।
वातज्वरे पाचनीयं बिल्वाद्यं वाऽनिले हितम्॥ २०२॥

पित्तज्वरे इन्द्रयवादिपाचनकषायः।

कलिङ्गं कट्फलं मुस्तं तथा कटुकरोहिणी।
पक्वं सशर्करं पीतं पाचनं पैत्तिके ज्वरे॥ २०३॥

पित्तज्वरे किरातादिपाचनकषायः।

किराततिक्तकं क्षौद्रं ह्रीवेरामलकीफलम्।
ज्वरघ्नं तत्पिबेच्छीतं पाचनं पैत्तिके ज्वरे॥ २०४॥

कफज्वरे मातुलुङ्गीमूलादिपाचनकषायः।

मूलानां मातुलुङ्गास्तु पिप्पलीशृङ्गवेरयोः।
अजमोदस्य च क्काथः सक्षारः पाचनः कफे॥ २०५॥

पूर्वोक्तकषायाणां गुणाः।

ज्वरघ्ना दीपनाश्चैते कषाया दोषपाचनाः।
तृष्णारुचिप्रशमना मुखवैरस्यनाशनाः॥ २०६॥

---

## अथ बालज्वरचिकित्सा।

अतः संशमनीयानि कषायाणि निबोध मे।
सर्वज्वरेषु देयानि वैद्येन च विजानता॥ २०७॥

संशमनलक्षणम्।

न शोधयति यद्दोषान् समान्नोदीरयत्यपि।
समीकरोति च क्रुद्धांस्तत्संशमनमुच्यते॥ २०८॥

वातज्वरे गुडूच्यादिकषायः।

गुडूची सारिवा द्राक्षा शतपुष्पा पुनर्नवा।
सगुडोऽयं कषायः स्याद्वातज्वरविनाशनः॥ २०९॥

वातज्वरे पिप्पल्यादिकषायः।

पिप्पलीसारिवाद्राक्षाशतपुष्पाहरेणुभिः।
कृतः कषायः सगुडो हन्यात्पवनजं ज्वरम्॥ २१०॥

वातज्वरे बलादिकषायः।

बलाश्वदंष्ट्रादर्भाणां कषायं पादशेषितम्।
शर्कराघृतसंयुक्तं पिबेद्वातज्वरापहम्॥ २११॥

वातज्वरे शतपुष्पादिकषायः।

शतपुष्पा वचा कुष्ठं देवदारु हरेणुका।
कुस्तुम्बरूणि नलदं मुस्तं चैवाप्सु साधयेत्॥ २१२॥
क्षौद्रेण सितया वापि युक्तः क्वाथोऽनिलात्मके।

वातज्वरे आरग्वधादिकषायः।

शम्याकः कटभी रास्ना काश्मरी मधुकं बला॥ २१३॥
एष वातज्वरहरः कषायः सगुडः स्मृतः।

वातज्वरे द्वितीयो गुडूच्यादिक्वाथः।

गुडूची त्रायमाणा च द्राक्षा काश्मर्यसारिवे॥ २१४॥
कषायो गुडसंयुक्तः सद्यो वातज्वरं जयेत्।

वातज्वरे शतावर्यादिस्वरसः।

शतावरीगुडूचीभ्यां स्वरसो यन्त्रपीडितः॥ २१५॥
गुडप्रगाढः शमयेत्सद्यो वातात्मकं ज्वरम्।

वातज्वरे बिल्वादिक्वाथः।

बिल्वादिपञ्चमूली च गुडूच्यामलकं तथा॥ २१६॥
कुस्तुम्बरुयुतो ह्येष कषायो वातिके ज्वरे॥ २१७॥

वातज्वरे मुस्तादिक्वाथः।

मुस्ताऽटरूषः सुरदारु कुष्ठं
निदिग्धिकानागरकाकजङ्घाः।
द्राक्षामृतापिप्पलिकाकषायं
पिबेच्च वातज्वरयुक्तजन्तुः॥ २१८॥

वातज्वरे शुण्ठ्यादिक्वाथः।

शुण्ठीमुस्तादुरालभागुडूचीक्वथितं जलम्।
पिबेदष्टावशेषं यत्तद्धि वातज्वरं हरेत्॥ २१९॥

वातज्वरे द्वितीयः शतावर्यादिक्वाथः ।

शतावरी गुडूच्यम्बु सगुडश्चिश्चिणीरसः ।
सद्यो वातज्वरे देयः प्रयत्नेन चिकित्सकैः ॥ २२० ॥

वातज्वरे तृतीयो गुडूच्यादिक्वाथः ।

गुडूचीनागरक्वाथः सद्यो वातज्वरं हरेत् ।

वातज्वरे दुरालभादिक्वाथः ।

दुरालभामृताक्वथस्तथा वातज्वरापहः ॥ २२१ ॥

वातज्वरे चतुर्थो गुडूच्यादिक्वाथः ।

गुडूची सारिवा द्राक्षा बला चांशुमती तथा ।
सिद्ध एषां कषायस्तु वातज्वरविनाशनः ॥ २२२ ॥

वातज्वरे सुरसादिक्वाथः ।

सुरसादारुपिप्पल्यो धान्यकः सदुरालभः ।
पाक्यं सलवणस्नेहं सोष्णं वातज्वरापहम् ॥ २२३ ॥

वातज्वरे रास्नादिक्वाथः ।

रास्ना वृक्षादनी दारु सरलं सैलवालुकम् ।
कोष्णं सगुडसर्पिष्कं पिबेद्वातज्वरापहम् ॥ २२४ ॥

वातज्वरे पञ्चमो गडूच्यादिक्वाथः ।

गुडूच्यंशुमती दारु बला मधुकसारिवे ।
रास्ना परूषकं द्राक्षा त्रिफला शैलवालुकम् ॥ २२५ ॥
कोष्णं सगुडसर्पिष्कं पिबेद्वातज्वरापहम् ।

वातज्वरे द्वितीय आरग्वधादिक्वाथः ।

शम्पाकशाल्मलीरास्नाबलाकाश्मरिबिल्वकम् ॥ २२६ ॥
पक्कं गुडक्षौद्रयुतं पिबेद्वातज्वरापहम् ।

वातज्वरे कतिपययोगाः ।

सगुडं वा रसं ज्ञात्वा अमृतायाः शृतं पिबेत् ॥ २२७ ॥
त्रिफलां वा पटोलीं वा गुडूच्याः क्वाथमेव वा ।
ससर्पिष्कं पिबेच्चूर्णं वातज्वरनिपीडितः ॥ २२८ ॥

पिबेत्सशृङ्गवेरं वा देवदारुपलं शृतम्।
द्राक्षायवासकपलं पथ्यां वा सगुडां पिबेत्॥ २२९॥

वातज्वरे काकोल्यादिक्वाथः।

काकोली बृहती मुस्ता कुष्ठं दारु विषाऽमृता।
शुण्ठीकाथः सितापीतो हन्ति वातज्वरं परम्॥ २३०॥

वातज्वरे षष्ठो गडूच्यादिक्वाथः।

अमृतोरुबूकविश्वासुरतरुरास्नाहरीतकीकाथः।
सकलसमीरणरोगान् प्रातः पीतो हरेत्सद्यः॥ २३१॥

वातज्वरे सप्तमो गुडूच्यादिक्वाथः।

गुडूच्यतिविषामूर्वामञ्जिष्ठाधन्वयासकैः।
वासाखदिरनिम्बैश्च पिबेत्क्वाथं हि वातिके॥ २३२॥

इति वातज्वरचिकित्सा।

---

## अथ पित्तज्वरचिकित्सा।

पित्तज्वरलक्षणम्।

अतीसारो भ्रमो दाहः प्रलापस्तृण्मुखं कटु।
नासाधरनखाः कृष्णा मूर्च्छा पित्तज्वरेङ्गितम्॥ २३३॥

गुटिकाधिकारोक्तः कम्पिल्लकाद्यो मोदकः पित्तज्वरे देयः।

पित्तज्वरे किरातादिक्वाथः।

किराततिक्तकटुकामुस्तपर्पटकामृताः।
पटोलारिष्टरजनीः पिबेत्क्वाथं तु पैत्तिके॥ २३४॥

पित्तज्वरे दुरालभादिक्वाथः।

दुरालभापर्पटकप्रियङ्गु-
भूनिम्बवासाकटुरोहिणीनाम्।
जलं पिबेच्छर्करयाऽवगाढं
तृष्णास्रपित्तज्वरदाहयुक्तः॥ २३५॥

पित्तज्वरे पटोलादिक्वाथः।

पटोलयवनिष्क्वाथो मधुना मधुरीकृतः।
तीव्रपित्तज्वरामर्दी पानात्तृड्दाहनाशनः॥ २३६॥

पित्तज्वरे पर्पटादिक्वाथः।

पर्पटश्चन्दनं मुस्ता विश्वोशीरद्वयं समम्।
एषां क्वाथस्तृषां हन्ति छर्दिं पित्तज्वरं तथा॥ २३७॥

पित्तज्वरे कटुरोहिणीकल्कः।

सशर्करां कल्कपेष्यां पिबेत्कटुकरोहिणीम्।
नहि तुल्यं तया किंचित्पित्तज्वरनिबर्हणम्॥ २३८॥

पित्तज्वरे मधुकादिक्वाथः।

मधुकं त्रायमाणां च पिप्पलीमूलमेव च।
किराततिक्तकं मुस्तं पर्पटं सविभीतकम्॥ २३९॥
सशर्करं पीतमेतत्पित्तज्वरनिबर्हणम्।

पित्तज्वरे वासादिक्वाथः।

वासा दुरालभा श्यामा पर्पटः कटुरोहिणी॥ २४०॥
किरातो निम्ब एतेषां क्वाथः पीतः सितायुतः।
रक्तोद्भवं महादाहं तृष्णां मूर्च्छामतिभ्रमम्॥ २४१॥
पित्तज्वरं हरत्याशु पापमीशो यथा स्मृतः।
घृते तैले च योगे च यद्द्रव्यं पुनरुच्यते॥ २४२॥
तज्ज्ञातव्यमिहार्येण भागतो द्विगुणं भवेत्।

पित्तज्वरे द्राक्षादिशीतकषायः।

द्राक्षा च पिचुमन्दं च मधुकं तिक्तरोहिणी॥ २४३॥
निशां कषायोऽभ्युषितः पित्तज्वरविनाशनः।

पित्तज्वरे द्वितीयः पर्पटादिक्वाथः।

एकः पर्पटकः सिद्धः पित्तज्वरविनाशनः॥ २४४॥
किं पुनर्यो भवेद्युक्तश्चन्दनोदीच्यनागरैः।

पित्तज्वरे वासास्वरसः ।

वासकस्वरसं वापि सिताक्षौद्रसमन्वितम् ॥ २४५ ॥
रक्तपित्तज्वरहरं श्वासकासापहं पिबेत् ।

पित्तज्वरे शुण्ठ्यादिक्काथः ।

विश्वाम्बुपर्पटोशीरघनचन्दनसाधितम् ॥ २४६ ॥
दद्यात्सुशीतलं वारि तृट्छर्दिज्वरदाहनुत् ।

पित्तज्वरे श्रीपर्ण्यादिक्काथः ।

श्रीपर्णी कौशली द्राक्षा चन्दनं बालकद्वयम् ॥ २४७ ॥
श्याह्वः पर्पटको यष्टिरमीषां समभागतः ।
अष्टावशेषतः क्काथः पीतः शर्करया समम् ॥ २४८ ॥
पित्तज्वरं भ्रमं दाहं छर्दिं शोषं निहन्ति च ।

पित्तज्वरे द्राक्षादिक्काथः ।

द्राक्षाभयापर्पटकाब्दतिक्ता-
क्काथं सशम्याकफलं विदध्यात् ।
प्रलापमूर्च्छाभ्रमदाहशोष-
तृष्णान्विते पित्तभवे ज्वरे च ॥ २४९ ॥

अन्तर्दाहे धान्यकहिमः ।

पर्युषितं धान्यजलं प्रातः पीतं सशर्करं पुंसाम् ।
अन्तर्दाहं शमयति प्रवृद्धमपि तत्क्षणादेव ॥ २५० ॥

पित्तज्वरे द्वितीयः श्रीपर्ण्यादिक्काथः ।

श्रीपर्णीचन्दनोशीरपरूषकमधूकजः ।
शर्करामधुरो हन्ति कषायः पैत्तिकं ज्वरम् ॥ २५१ ॥

पित्तज्वरे परूषकादिहिमः ।

परूषकमधूकानि काश्मर्यामलकानि च ।
बलाखर्जूरमृद्वीकाशीतपाकीनिदिग्धिकाः ॥ २५२ ॥
मधूकं प्रपौण्डरिकं चन्दनोशीरपद्मकम् ।
एतान्यापोथ्य तुल्यानि वासयेदुत्तमोदके ॥ २५३ ॥

शर्करामधुसंयुक्तं प्रातरुत्थाय पाययेत् ।
तेनास्य पित्तसंभूतो ज्वरः क्षिप्रं प्रणश्यति ॥ २५४ ॥

पित्तज्वरे मृद्वीकादिहिमः ।

मृद्वीका मधुकं निम्बं कटुका रोहिणी समम् ।
अवश्यायस्थितं पेयमेतत्पित्तज्वरापहम् ॥ २५५ ॥

पित्तज्वरे द्वितीयः किरातादिक्वाथः ।

किराततिक्तकटुकामुस्तपर्पटकाम्बुदाः ।
पटोलरजनीयुक्ताः पैत्तिकज्वरनाशनाः ॥ २५६ ॥

पित्तज्वरे मुद्गादिक्वाथः ।

मुद्गानामञ्जलिं पूर्णां यष्टीमधुकसाधिताम् ।
पाचयं शीतकषायं वा पिबेत्पित्तज्वरापहम् ॥ २५७ ॥)

पित्तज्वरे शिरीषादिहिमः ।

शिरीषासनकाश्मर्यमधूकं मधुकं बलाम् ।
पियालतिन्दुकफलं खर्जूरं सपरूषकम् ॥ २५८ ॥
शीतं सशर्कराक्षौद्रं पिबेत्पित्तज्वरापहम् ।

पित्तज्वरेऽरुचिप्रतीकारः ।

अरुचाविक्षुकाण्डानि विदारी सपरूषकम् ॥
द्राक्षा लाजाफलं चान्यत्स्वादुरिष्टं प्रयोजयेत् ॥ २५९ ॥

पित्तज्वरे नलदादिक्वाथः ।

पित्तोद्भवे नलदपर्पटकाम्बुशुण्ठी-
श्रीखण्डनिःक्वथितमेतदुशन्ति वैद्याः ।

पित्तज्वरे वालकादिक्वाथः ।

पिबति योऽम्बुयवासकवासकान्
सकटुकान् समहौषधधान्यकान् ॥ २६० ॥
क्वथितवारियुतान् ज्वरितस्य ते
व्यपनयन्त्यमलं च पितज्वरे ।

पित्तज्वरे निदिग्धिकादिक्काथः ।

निदिग्धिकावारिददेवदारु-
शृतं जलं हन्ति रुजो ज्वरोत्थाः ।
मृणालमुस्तासहितं कदाचि-
त्तदेव हन्ति क्वथितं ज्वरार्तिम् ॥ २६१ ॥

पित्तज्वरे गुडूच्यादिक्काथः ।

छिन्नोद्भवानिम्बपटोलमुस्ता-
फलत्रिकैर्धान्यकसंयुतैर्यः ।
कृतं कषायं मधुशर्कराभ्यां
पिबेज्ज्वरस्तस्य शमं प्रयाति ॥ २६२ ॥

पित्तज्वरे मृणालादिक्काथः ।

मृणालधात्रीफलचन्दनैर्यः
शृतं गुडूचीघनपर्पटैश्च ।
सधान्यकैरम्बु पिबेत्सिताढ्यं
मध्वन्वितं तस्य कुतो ज्वरार्तिः ॥ २६३ ॥

पित्तज्वरे द्राक्षादिक्काथः ।

द्राक्षाशिवारग्वधरोहिणीनां
यः पर्पटोशीरविमिश्रितानाम् ।
क्काथं पिबेत्पित्तसमुद्भवोऽस्य
ज्वरः शमं याति सतृट् समूर्च्छः ॥ २६४ ॥

पित्तज्वरे ह्रीबेरादिकषायः ।

ह्रीबेरपर्पटकचन्दनशुण्ठ्युशीर-
मुस्तैः कृतं पिबति यः पुरुषः कषायम् ।
तृड्दाहस्वेदजननं जयति ज्वरं स
पित्तोत्थमुग्रमपि दत्तदुरन्तमूर्च्छम् ॥ २६५ ॥

पित्तज्वरे चन्दनादिकषायः।

श्रीखण्डयष्टीमधुकाकजङ्घाः
श्रीपर्णिकापर्पटमुस्तद्राक्षाः।
खर्जूरकोशीरयुगान्विताश्च
पित्तज्वरे शर्करया कषायः॥ २६६॥

पित्तज्वरे पद्मकादिक्वाथः।

पद्मकं धान्यकं शुण्ठी पर्पटोशीरकद्वयम्।
एभिः क्वाथः कृतः सद्यो देयः पित्तज्वरच्छिदे॥ २६७

पित्तज्वरे गुडूच्यादिक्वाथः।

सकुण्डलीपद्मकरक्तचन्दनं
सनिम्बकुस्तुम्बरुवारिभिः शृतम्।
पिबेत्सदा पित्तमलासजं ज्वरं
जयेत्सतृद्दाहमरोचकान्वितम्॥ २६८॥

पित्तज्वरे दाहतृषाशान्त्यर्थमनुलेपनादि।

दाहज्वरार्तं मतिमान् वामयेत् क्षिप्रमेव तु।
अम्लपिष्टैः सुशीतैर्वा पालाशतरुजैर्दिहेत्।
बदरीपल्लवोत्थेन फेनेनारिष्टकस्य वा॥ २६९॥
विदारी दाडिमं रोध्रं दधित्थं बीजपूरकम्।
एभिः प्रदिह्यान्मूर्धानं तृड्दाहार्तस्य देहिनः॥ २७०
बिभीतकास्थिमज्जायां दाहे कुर्यात्प्रलेपनम्।
स्वादुतिक्तकषायाणां कषायैः शर्करायुतैः॥ २७१॥
सुशीतैः शमयेत्तृष्णां महद्वा दाहमेव च।
शीतं मधुयुतं तोयमाकण्ठाद्वा पिपासितम्॥ २७२
वामयेत्पाययित्वा तु तेन तृष्णा प्रशाम्यति।
क्षीरैः क्षीरिकषायैश्च सुशीतैश्चन्दनायुतैः॥ २७३॥
अन्तर्दाहे विधातव्यः प्रदेहो दाहशान्तये।

पित्तज्वरे यवादिशीतकषायः ।

यवान् भृष्टानुशीराणि समङ्गां काश्मरीफलम् ॥ २७४ ॥
निदध्यादप्सु चालोड्य निशापर्युषितं ततः ।
क्षौद्रेण युक्तं पिबतो ज्वरः पैत्तः प्रशाम्यति ॥ २७५ ॥

पित्तज्वरे दाहशान्त्यर्थं शीतजलसेकः ।

उत्तानसुप्तस्य गभीरताम्र-
कांस्यादिपात्रं प्रणिधाय नाभौ ।
तत्राम्बुधारा बहुलाः पतन्ति
निहन्ति दाहं त्वरितं सुशीताः ॥ २७६ ॥

पित्तज्वरे दाहशान्त्यर्थं विहाराः ।

वाप्यः कमलहासिन्यो जलयन्त्रगृहाः शुभाः ।
नार्यश्चन्दनदिग्धाङ्ग्यो दाहज्वरहरा मताः ॥ २७७ ॥
हर्म्ये शुभ्राभ्रसङ्काशे शशाङ्ककरशीतले ।
मलयोदकसंसिक्ते स्वप्यात्पित्तज्वरी नरः ॥ २७८ ॥
जिह्वाताल्वगलक्लोमशोषे मूर्धनि दापयेत् ।
केसरं मातुलुङ्गस्य मधुसैन्धवसंयुतम् ॥ २७९ ॥

इति पित्तज्वरचिकित्सा ।

---

अथातः श्लेष्मज्वरचिकित्सितम् ।

कफज्वरे कटुत्रिकादिक्वाथः ।

कटुत्रिकं नागपुष्पं हरिद्रा कटुरोहिणी ।
कौटजं च फलं हन्यात्सेव्यमानं कफज्वरम् ॥ २८० ॥

कफज्वरे शठ्यादिक्वाथः ।

शठीपुष्करभार्गीभिर्पाठाकट्फलदारुभिः ।
पर्पटारिष्टशृङ्गीभिः पिबेत्क्वाथं कफज्वरे ॥ २८१ ॥

कफज्वरे हरिद्रादिक्वाथः ।

हरिद्रां चित्रकं निम्बमुशीरातिविषे वचाम् ।
कुष्ठमिन्द्रयवान् मूर्वां पटोलं चापि साधितम् ॥ २८२ ॥

पिबेन्मरिचसंयुक्तं सक्षौद्रं कफजे ज्वरे।

कफज्वरे सारिवादिकाथः।

सारिवातिविषाकुष्ठपुराख्यैः सदुरालभैः ॥ २८३ ॥
मुस्तया च कृतः क्वाथो हन्यात्कफकृतं ज्वरम्।

कफज्वरे कण्टकार्यादिकषायः।

कण्टकारी देवदारु वृषा विश्वा समांशतः ॥ २८४ ॥
काथः कणारजःपीतः श्लेष्मज्वरविनाशनः।

कफज्वरे निम्बादिकषायः।

निम्बशुण्ठीकणामूलपथ्याः कटुकरोहिणी ॥ २८५ ॥
व्याधिघातसमं क्वाथः पीतः श्लेष्मज्वरापहः।

श्लेष्मज्वरे त्रिफलादिकषायः।

त्रिफलापटोलवासाच्छिन्नरुहा(तिक्त)रोहिणीपङ्कन्थाः।
मधुना श्लेष्मसमुत्थे दशमूलीवासकस्य वा क्वाथः ॥२८६॥

श्लेष्मज्वरे वासकादिकाथः।

वासकोऽतिविषा कुष्ठं देवदारु महौषधम्।
मुस्ता समांशतः क्वाथः पीतः श्लेष्मज्वरापहः ॥ २८७ ॥

श्लेष्मज्वरे बालपानुर्भद्रकावलेहः।

कट्फलं पौष्करं कृष्णा शृङ्गी च मधुना सह।
श्वासकासज्वरहरः श्रेष्ठो लेहः कफान्तकृत् ॥ २८८ ॥
क्षौद्रोपकुल्यासंयोगः कासश्वासज्वरापहः।
प्लीहानं हन्ति हिक्कां च बालानां च प्रशस्यते ॥ २८९ ॥
कर्षश्चूर्णस्य कल्कस्य गुटिकानां च सर्वशः।
द्रवशुक्त्यास्त्वलेढव्यः पातव्यश्च चतुर्द्रवः ॥ २९० ॥

कफज्वरे क्वाथत्रयम्।

एलाजमोदमरिचामलकाभयाना-
मारग्वधाम्बुदमहौषधपिप्पलीनाम्।
भूनिम्बनिम्बबृहतीद्वयनागराणां
क्वाथत्रयं त्विह कफप्रचुरज्वरेषु ॥ २९१ ॥

कफज्वरे शुण्ठ्यादिकषायः ।

शुण्ठीयवासकघनाब्दकृतः कषायः
श्लेष्मोद्भवं शमयति ज्वरमाशु पीतः ।

कफज्वरे विश्वादिकषायः ।

सर्वज्वरप्रशमनार्थमुदाहरन्ति
विश्वौषधेन सह पर्पटकं मुनीन्द्राः ॥ २९२ ॥

कफज्वरे द्वितीयो विश्वादिकषायः ।

विश्वौषधच्छिन्नरुहाकिरात-
तिक्तैः समुस्तैः क्वथितं जलं यः ।
पिबत्यसौ न ज्वरसंभवाना-
माधारतामेति रुजां कदाचित् ॥ २९३ ॥

कफज्वरे निदिग्धिकादिकषायः ।

निदिग्धिकाच्छिन्नरुहोपकुल्या-
विश्वौषधैः साधितमम्बु पीतम् ।
हन्ति ज्वरश्वासबलासकासान्
शूलानि मान्द्यं जठरानलस्य ॥ २९४ ॥

कफज्वरे पिप्पलीमूलादिक्वाथः ।

यः पिप्पलीमूलशिवाम्बुवाह-
व्याधिघ्नशुण्ठीकटुरोहिणीनाम् ।
क्वाथं निकुम्भासहितं पिबेत्स
ज्वरं जयेच्छ्वासमरुत्कफांश्च ॥ २९५ ॥

कफज्वरे वासादिक्वाथः ।

आटरूपलघुकण्टकारिका-
विश्वभेषजगुडूचिकान्वितः ।
देवदारुसहितः कफज्वरे
क्वाथ एष गजपिप्पलीकणैः ॥ २९६ ॥

कफज्वरे निम्बादिकषायः ।

निम्बनागरपिप्पल्यो देवदारु किरातकः ।
गुडूची पौष्करं मूलं हितः क्वाथः कफज्वरे ॥ २९७ ॥

कफज्वरे कटुरोहिण्यादिकषायः ।

कटुरोहिणिकारग्वधविश्वाग्निकपिप्पलीमूलम् ।
शूलकफज्वरहारी क्वाथोऽयं पिप्पलीमिश्रः ॥ २९८ ॥

कफज्वरे कुष्ठादिकषायः ।

कुष्ठं सातिविषं मुस्ता नागरं देवदारु च ।
यवासकः कृतः क्वाथो हितः श्लेष्मज्वरान्विते ॥ २९९ ॥

कफज्वरे द्वितीयो वासादिक्वाथः ।

आटरूपदुरालम्भाशुण्ठीसंमिश्रितो यतः ।
निषेवणीयः क्वाथोऽयं सद्यः श्लेष्मज्वरच्छिदे ॥ ३०० ॥

कफज्वरे सप्तच्छदादिक्वाथः ।

सप्तच्छदं गुडूचीं च निम्बं खर्जूरमेव च ।
क्वाथयित्वा पिबेत्क्वाथं सक्षौद्रं कफजे ज्वरे ॥ ३०१ ॥

कफज्वरे मुस्तादिकषायः ।

मुस्ता वृक्षकबीजानि त्रिफला कटुरोहिणी ।
परूषकाणि च क्वाथः कफज्वरविनाशनः ॥ ३०२ ॥

कफज्वरे त्रिफलादिकषायः ।

त्रिफलाऽतिविषा मुस्तं क्रमुकं सकलिङ्गकम् ।
पटोलारग्वधं चैव रोहिणी चित्रकं समम् ॥ ३०३ ॥
क्वाथः क्षौद्रयुतः श्लेष्मज्वरकासगलामये ।

कफज्वरे करञ्जादिक्वाथः ।

नक्तमालगुडूच्यग्निचित्रकारग्वधं समम् ॥ ३०४ ॥
मधूकं पाटलामूर्वा ब्राह्मी स्वादुकण्टकः ।
निम्बः सप्तच्छदः पाठा वृक्षकः सुषवी शठी ॥ ३०५ ॥

कषायः पूर्ववच्छ्रेष्मज्वरकासगलार्तिषु ।

कफज्वरे द्वितीयत्रिफलादिकषायः ।

त्रिफलोशीरभूतीकं निम्बरोहिषमुस्तकम् ॥ ३०६ ॥
सरलं दारु खदिरं पटोलं विश्वभेषजम् ।
त्वक्सप्तपर्णातिपिप्पल्यः कार्पासास्थि त्वयोरजः ॥ ३०७ ॥
पक्त्वा तुल्यानि निःस्राव्य स्थापयेन्मृण्मये नवे ।
ततः संस्रुते हृद्यं स्थिरं क्षौद्रयुतं पिबेत् ॥
हन्याच्च श्लैष्मिकान् रोगान् ज्वरं च कफसंभवम् ॥३०८॥

इति श्लेष्मज्वरचिकित्सा

## अथातो वातपित्तज्वरचिकित्सितम् ।

वातपित्तज्वरलक्षणम् ।

श्वासकासौ तृषा छर्दिर्जडत्वं मधुरं मुखम् ।
प्रतिश्यायो जलं चास्ये निद्रा शीर्षकटिव्यथा ॥ ३०९ ॥
रोमोद्गमो ज्वरे चिह्नं वातपित्तसमुद्भवे ।

वातपित्तज्वरे त्रिफलादिकषायः ।

त्रिफला शाल्मली रास्ना व्याधिघाताटरूषकौ ॥ ३१० ॥
एषां क्राथः सितायुक्तो वातपित्तज्वरापहः ।

वातपित्तज्वरे द्राक्षादिक्राथः ।

द्राक्षा किरातको धात्री कर्चूरोऽमृतवल्लरी ॥ ३११ ॥
एषां क्राथो गुडोपेतः पीतो द्वन्द्वजरोगजित् ।

वातपित्तज्वरे यष्ट्यादिकषायः ।

मधुयष्टिर्निशायुग्मं पटोलं व्याधिघातकः ।
मुस्तनिम्बामृताक्राथो वातपित्तज्वरापहः ॥ ३१२ ॥

वातपित्तज्वरे भूनिम्बादिकषायः ।

भूनिम्बकल्याणकनिम्बच्छिन्ना-
रास्नाम्बुदोशीरकनिम्बकं च ।

भिषक्कुसुमावाकटुकायवासा
द्वन्द्वज्वरं हन्ति कृतः कषायः ॥ ३१३ ॥

वातपित्तज्वरे रास्नादिकषायः।

रास्ना वृषोऽथ त्रिफला राजवृक्षफलैः सह।
कषायः साधितः पीतो वातपित्तज्वरं जयेत् ॥ ३१४ ॥

वातपित्तज्वरे किरातादिकषायः।

किराततिक्तममृतां द्राक्षामामलकीं शठीम्।
निःक्वाथ्य पित्तानिलजे तं क्वाथं सगुडं पिबेत् ॥ ३१५ ॥

वातपित्तज्वरे मुस्तादिकषायः।

मुस्तमारग्वधोशीरं हरिद्रां दारुसाह्वयम्।
पटोलपिचुमन्दौ च यष्टीमधुकमेव च ॥ ३१६ ॥
कषायः एषः सिद्धः स्याद्वातपित्तोद्भवे ज्वरे।

वातपित्तज्वरे नीलोत्पलादिकषायः।

नीलोत्पलमुशीराणि बला पद्मकमेव च ॥ ३१७ ॥
काश्मरी मधुकं द्राक्षा मधुकानि परूषकम्।
पेयः शीतकषायोऽयं वातपित्तज्वरापहः ॥ ३१८ ॥
सप्रलापं समोहं च शमयेत्पैत्तिकं ज्वरम्।

वातपित्तज्वरे निदिग्धिकादिकषायः।

निदिग्धिका त्रायमाणा गुडूची सारिवा बला ॥ ३१९ ॥
मसूरविदलैर्युक्तो वातपित्तज्वरे हितः।

वातपित्तज्वरे त्रिफलादिकषायः।

त्रिफलाशाल्मलीरास्नाराजवृक्षाटरूषकैः ॥ ३२० ॥
शृतं तोयं हरेत्तूर्णं वातपित्तोद्भवं ज्वरम्।

वातपित्तज्वरे गुडूच्यादिकाथः।

गुडूचीं पर्पटं मुस्तं किरातं विश्वभेषजम्।
वातपित्तज्वरे देयं पञ्चद्रव्यमिदं शुभम् ॥ ३२१ ॥

वातपित्तज्वरे उशीरादिकषायः।

उशीरयष्टीमधुनिम्बमिश्रं
मुस्तं हरिद्राद्वितयं पटोलम्।
आरग्वधश्चेति कृतः कषायः
सवातपित्तज्वरजिन्मतोऽयम् ॥ ३२२ ॥

वातपित्तज्वरे रास्नादिक्वाथः।

रास्नारग्वधसंयुक्ता सारिवा च फलत्रयम्।
आटरूपमिति क्वाथो वातपित्तज्वरापहः ॥ ३२३ ॥

वातपित्तज्वरे मसूरादिक्वाथः।

प्रसृतौ द्वौ मसूराणां मूर्वा मधुकचन्दनम्।
सारिवोशीरमृद्वीकापरूपकफलोत्पलम् ॥ ३२४ ॥
पटोलपिचुमन्दौ च शीतपाकी तथा घनम्।
पक्त्वा तच्छर्कराक्षौद्रयुक्तं पित्तानिलज्वरे ॥ ३२५ ॥

वातपित्तज्वरे खर्जूरादिक्वाथः।

खर्जूरोशीरमृद्वीकापद्मकं पद्मकेसरम्।
धात्री परूपकं व्याघ्री बला मधुकचन्दनम् ॥ ३२६ ॥
मधूकपुष्पं काश्मर्यं शीतपाकी घनं तथा।
पक्त्वा पर्युषितं रात्रौ स्थितं मृद्भाजने नवे ॥ ३२७ ॥
लाजाचूर्णप्रतीवापं शर्करामधुसंयुतम्।
जातीपुष्पाधिवासं तु पिबेत्तृट्छर्दिमूर्छितः ॥ ३२८ ॥
दाहभ्रममदाविष्टो वातपित्तज्वरातुरः।
पीत्वा निर्वृतिमाप्नोति दीप्तं गृहमिवाम्बुभिः ॥ ३२९ ॥

वातपित्तज्वरे दाहशान्त्यर्थं मुद्गादिप्रलेपः।

मुद्गामलकचूर्णानि प्रसिक्तानि घृतेन तु।
अम्लकाञ्जिकयुक्तानि प्रदेहो दाहनाशनः ॥ ३३० ॥

वातपित्तज्वरे तृष्णादाहनिवारणार्थं दधित्थादिशिरोलेपः।

दधित्थं दाडिमं रोध्रं विदारी बीजपूरकम्।
शिरःप्रदेहः श्रेष्ठोऽयं तृष्णादाहनिवारणः॥ ३३१॥

वातपित्तज्वरे पद्मकादिक्वाथः।

पद्मकं मधुपुष्पाणि यष्टीमध्वाटरूपकम्।
उशीरद्वितयं द्राक्षानीलोत्पलदलान्वितम्॥ ३३२॥
आबालाच्च निपेव्योऽयं क्वाथः कथितशीतलः।
वातपित्तज्वरं मोहं प्रलापं च यतो हरेत्॥ ३३३॥

इति वातपित्तज्वरचिकित्सा।

---

अथातो वातश्लेष्मज्वरचिकित्सितम्।

वातश्लेष्मज्वरे वालुकास्वेदः।

कर्परभृष्टपटस्थितकाञ्जिकसिक्तो हि वालुकास्वेदः।
शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन्॥ ३३४॥
स्रोतसां मार्दवं कृत्वा नीत्वा पावकमाशयम्।
हत्वा वातकफस्तम्भान् स्वेदो ज्वरमपोहति॥ ३३५॥

मातुलुङ्गफलकेसरो धृतः
सिन्धुजन्ममरिचान्वितो मुखे।
हन्ति वातकफरोगमास्यगं
शोषमाशु जडतामरोचकम्॥ ३३६॥

वातश्लेष्मज्वरे पञ्चकोलकषायः।

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः।
दीपनीयः स्मृतो वर्गः कफानिलगदापहः॥ ३३७॥

गिरिमालापञ्चककषायः।

आरग्वधग्रन्थिकमुस्ततिक्ता-
हरीतकीभिः क्वथितः कषायः।

सामे सशूले कफवातयुक्ते
ज्वरे हितो दीपनपाचनश्च ॥ ३३८ ॥

वातकफज्वरे पिप्पलीकषायः।

पिप्पलीभिः शृतं तोयमनभिष्यन्दि दीपनम्।
वातश्लेष्मविकारघ्नं प्लीहघ्नं ज्वरनाशनम् ॥ ३३९ ॥

वातकफज्वरे मुस्तादिकषायः।

मुस्तपर्पटदुःस्पर्शगुडूचीविश्वभेषजम्।
कफवातारुचिच्छर्दिदाहशोषज्वरापहम् ॥ ३४० ॥

वातश्लेष्मज्वरे क्षुद्रादिकषायः।

क्षुद्रामृतानागरपुष्कराह्वयैः
कृतः कषायः कफमारुतोत्तरे।
सश्वासकासारुचिपार्श्वरुक्करे
ज्वरे त्रिदोषप्रभवे प्रशस्यते ॥ ३४१ ॥

वातश्लेष्मज्वरे दशमूलीकषायः।

दशमूलीरसः पेयः कणायुक्तः कफानिले।
अविपाकेऽतिनिद्रायां पार्श्वरुक्श्वासकासके ॥ ३४२ ॥

वातश्लेष्मज्वरे त्रिफलादिकषायः।

त्रिफलाव्योषकटुकागुडूचीनिम्बवत्सकान्।
किराततिक्तकं मुस्तं पटोलं चैव संहरेत् ॥ ३४३ ॥
सिद्धः कषायः पातव्यो वातश्लेष्मोद्भवे ज्वरे।

वातश्लेष्मज्वरे देवदार्वादिकषायः।

दारु पर्पटकं मुस्तमभया विश्वभेषजम् ॥ ३४४ ॥
पूतीकं कट्फलं भार्गी कुस्तुम्बुरिवचे समम्।
पक्त्वा क्वाथं पिबेद्धिङ्गुमधुयुक्तं ज्वरापहम् ॥ ३४५ ॥
वातश्लेष्मणि कासे च कुष्ठरोगे गलग्रहे।

वातश्लेष्मज्वरे स्वेदार्थे योगाः।

अजाजीं सगुडां खादेत्कल्कं वा मधुना लिहेत् ॥ ३४६ ॥

भक्षयेत्त्रपुसं वापि तक्रं चानुपिबेज्ज्वरी ।
तत्पीत्वा चातपे तिष्ठेद्यावत्स्वेदागमो भवेत् ॥ ३४७ ॥
कफमारुतजात्क्षिप्रं ज्वरादेवं प्रमुच्यते ।

वातश्लेष्मज्वरे कट्फलादिक्वाथः ।

कट्फलकत्तृणधान्यकपर्पटभार्गीहरीतकीमुस्ताः ।
शुण्ठीसुरदारुवचाकाथः श्लेष्मानिलं हन्ति ॥ ३४८ ॥

वातश्लेष्मज्वरे निदिग्धिकादिक्वाथः ।

निदिग्धिकामृताशुण्ठीपुष्कराह्वैः कृतं पिबेत् ।
क्वाथं कासारुचिश्वासकफवातज्वरापहम् ॥ ३४९ ॥

वातकफज्वरे आरग्वधादिक्वाथः ।

शम्याककटुकापथ्यामुस्तकग्रन्थिकैः पिबेत् ।
कफवातज्वरे क्वाथं सशूले च प्रभेदनम् ॥ ३५० ॥

इति वातश्लेष्मज्वरचिकित्सा ।

---

अथातः श्लेष्मपित्तज्वरचिकित्सितम् ।

श्लेष्मपित्तज्वरलक्षणम् ।

शीतं दाहोऽरुचिः श्वासस्तृषा दाहो मुखं कटु ।
आलस्यमिति चिह्नानि श्लेष्मपित्तज्वराकृतौ ॥ ३५१ ॥

श्लेष्मपित्तज्वरे आरग्वधादिक्वाथः ।

आरोग्यशिम्बी कैरातं वालकं धान्यकं निशा ।
मुस्ता यष्टीमधुर्भार्गी पर्पटः समभागतः ॥ ३५२ ॥
अष्टावशेषितः क्वाथो मधुनः प्रतिवापतः ।
श्लेष्मपित्तज्वरं हन्ति सद्य एवं निषेवितः ॥ ३५३ ॥

श्लेष्मपित्तज्वरे बलादिक्वाथः ।

बलापटोलत्रिफलायष्ट्याह्वानां वृषस्य च ।
क्वाथो मधुयुतः पीतो हन्ति पित्तकफज्वरम् ॥ ३५४ ॥

कफपित्तज्वरे कटुकादिक्काथः ।

कटुकाविजयाद्राक्षामुस्तपर्पटकैः शृतः ।
कषायो नाशयेत्पीतः पित्तश्लेष्मभवं ज्वरम् ॥ ३५५ ॥

कफपित्तज्वरे पटोलादिक्काथः ।

पटोलपिचुमन्दौ च त्रिफला मधुकं वला ।
साधितोऽयं कषायः स्यात्पित्तश्लेष्मोद्भवे ज्वरे ॥ ३५६ ॥

कफपित्तज्वरे द्वितीय आरग्वधादिक्काथः ।

शम्याककण्टकीरास्नात्रिफलाः साटरूषकाः ।
कषायः एष सिद्धः स्यात्पित्तश्लेष्मोद्भवे ज्वरे ॥ ३५७ ॥

कफपित्तज्वरे द्वितीयः पटोलादिकषायः ।

पटोलं रिङ्गिणी शुण्ठी किरातं कटुरोहिणी ।
गुडूचीन्द्रयवा वासा मुस्ता भार्गी च चन्दनम् ॥ ३५८ ॥
क्वाथः पीतोऽरुचिं दाहं तृष्णां छर्दिमसंशयम् ।
श्लेष्मपित्तज्वरं हन्ति कासं शूलं च दारुणम् ॥ ३५९ ॥

कफपित्तज्वरे त्रायन्त्यादिकषायः ।

त्रायन्ती कटुका मुस्तं चन्दनोशीरसारिवाः ।
पटोलपत्रं मधुकं मधूकं चाक्षसंमितम् ॥ ३६० ॥
तत्पक्वं मधुना पेयं कफपित्तोद्भवे ज्वरे ।

कफपित्तज्वरे तृतीयः पटोलादिक्काथः ।

पटोलारिष्टपत्राणि साभया कटुरोहिणी ।
हरिद्रे मधुकं मुस्तमुशीरं चतुरङ्गुलः ॥ ३६१ ॥
पिवेत्कषायं मधुना श्लेष्मपित्तज्वरेऽरुचौ ।

कफपित्तज्वरे चतुर्थः पटोलादिक्काथः ।

पटोलं चन्दनं मूर्वा पाठा तिक्ताऽमृता गणः ॥ ३६२ ॥
पित्तश्लेष्मज्वरच्छर्दिदाहकण्डूविषापहः ।

---

१ 'चाटरूषकः' ख. ।

कफपित्तज्वरे वासास्वरसः ।

सपत्रपुष्पवासाया रसः क्षौद्रसितायुतः ॥ ३६३ ॥
कफपित्तज्वरं हन्ति सास्रपित्तं सकामलम् ।

कफपित्तज्वरे कटुकायोगः ।

सशर्करामक्षमात्रां कटुकामुष्णवारिणा ।
पीत्वा ज्वरं जयेज्जन्तुः कफपित्तसमुद्भवम् ॥ ३६४ ॥

कफपित्तज्वरे धान्यकादिक्वाथः ।

दीपनं कफविच्छेदि पित्तवातानुलोमनम् ।
ज्वरघ्नं पाचनं भेदि शृतं धान्यपटोलयोः ॥ ३६५ ॥

कफपित्तज्वरे तृतीय भार्ग्यादिकषायः ।

भार्गी पथ्या वचा मुस्ता हरिद्रा च हरीतकी ।
मधुयष्टीपर्पटकौ क्वाथः पित्तकफज्वरे ॥ ३६६ ॥

कफपित्तज्वरे तृतीय आरग्वधादिकषायः ।

आरग्वधो निम्बदलानि तिक्ता मुस्ता हरिद्रा च हरीतकी च
यष्टीमधूशीरकपर्पटं च क्वाथो हितः पित्तकफज्वरे सः३६

कफपित्तज्वरे त्रिफलादिकषायः ।

फलत्रिकमुशीरं च पटोलं मधुयष्टिका ।
आटरूपः कषायोऽयं पेयः पित्तकफज्वरे ॥ ३६८ ॥

कफपित्तज्वरे रोहिण्यादिकषायः ।

रोहिणी नागरं मुस्ता पटोली कण्टकारिका ॥ ३६९ ॥
आटरूपगुडूचीन्द्रयवभार्गीकिरातकाः ।
चन्दनं च हरत्येष कासं दाहं तृषान्वितम् ॥ ३७० ॥

कफपित्तज्वरे द्वितीयो भार्ग्यादिक्वाथः ।

भार्गीवचापर्पटकधान्यहिङ्ग्वभयाघनैः ।
काश्मर्यनागरैः क्वाथः सक्षौद्रः श्लेष्मपित्तजे ॥ ३७१ ॥

कफपित्तज्वरे काश्मर्यादिशीतकषायः ।

काश्मर्यफलमृद्वीकाशीतपाकीपरूपकम् ।
मधुकत्रिफलामुस्तचन्दनोशीरपद्मकम् ॥ ३७२ ॥

त्रायन्ती कटुका तुल्या यष्ट्याह्वं चापि तत्समम् ।
पिबेत्पर्युषितं शीतं मधुना श्लेष्मपित्तजित् ॥ ३७३ ॥

इति कफपित्तज्वरचिकित्सा ।

अथातः सन्निपातचिकित्सितं व्याख्यास्यामः ।

सन्निपातज्वरलक्षणम् ।

आलस्यमरुचिः कर्णस्वनः शीर्षेऽतिवेदना ।
मूर्च्छा दाहस्तथा निद्रा नैव जिह्वातिपाण्डुरा ॥ ३७४ ॥
पीते वा लोहिते नीलेऽक्षिणी शीतं तथा वपुः ।
भ्रमः कासो मुखं पूति सन्निपातज्वरेङ्गितम् ॥ ३७५ ॥

सन्निपातचिकित्साक्रमः ।

श्लेष्मनिग्रहमेवादौ कुर्याद्व्याधौ त्रिदोषजे ।
निरस्ते श्लेष्मणि ह्यस्य स्रोतःसूक्ष्माटितेषु च ॥ ३७६ ॥
लाघवं जायते सद्यस्तृष्णा चैवोपशाम्यति ।
दुर्गेऽम्भसि यथा मज्जद्भाजनं त्वरया बुधः ॥ ३७७ ॥
गृह्णीयात्तलमप्राप्तं तथाऽभिन्यासपीडितम् ।
निद्रोपेतमभिन्यासं क्षीणं विद्याद्धतौजसम् ॥ ३७८ ॥

सन्निपातोपक्रमाः ।

लङ्घनं वालुका स्वेदो नस्यं निष्ठीवनं तथा ।
अवलेहोऽञ्जनं चैव प्राक्प्रयोज्यं त्रिदोषजे ॥ ३७९ ॥
त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा ।

सन्निपातज्वरे लङ्घनम् ।

लङ्घनं सन्निपातेषु कुर्यादारोग्यदर्शनात् ॥ ३८० ॥
दोषाणामेव सा शक्तिर्लङ्घने या सहिष्णुता ।
न तु दोषक्षयात्कश्चित्सहते लङ्घनादिकम् ॥ ३८१ ॥
लङ्घनं स्वेदनं नस्यमञ्जनं कवलग्रहः ।
एतान्यादौ प्रयुञ्जीत सन्निपाते सुयुक्तिमान् ॥ ३८२ ॥

सन्निपातज्वरे नस्यप्रयोगः ।

मातुलुङ्गार्द्रकरसं कोष्णं त्रिलवणान्वितम् ।
अन्यद्वा सिद्धिविहितं नस्यं तीक्ष्णं प्रयोजयेत् ॥ ३८३ ॥
नस्येन भिद्यते श्लेष्मा प्रभिन्नश्च प्रसिच्यते ।
शिरोहृदयकण्ठास्यपार्श्वरुक्चोपशाम्यति ॥ ३८४ ॥
प्रमीलकस्तालुशोषः कासः श्वासश्च शाम्यति ।
जिह्वातालुगुरुत्वं च दृष्टिश्चास्य प्रसीदति ॥ ३८५ ॥
तस्मात्पुनः पुनः कुर्याच्छ्लेष्मकर्षणमौषधम् ।

सन्निपातज्वरे वमनम् ।

उदीर्णदोषं प्रथमे दिवसे वामयेन्नरम् ॥ ३८६ ॥
विदोषितं न वामयेद्वामयेन्मध्यमं तथा ।

सन्निपातज्वरे मधूकसारादिनस्यम् ।

मधूकसारसिन्धूत्थवचोषणकणाः समाः ॥ ३८७ ॥
श्लक्ष्णं पिष्ट्वाऽम्भसा नस्यं कुर्यात्संज्ञाप्रबोधनम् ।

सन्निपातज्वरे कवलधारणम् ।

आर्द्रकस्वरसोपेतं सैन्धवं सकटुत्रयम् ॥ ३८८ ॥
आकण्ठं धारयेच्चास्ये निष्ठीवेच्च पुनः पुनः ।
तेनास्य हृदयाच्छ्लेष्मा मन्यापार्श्वशिरोगलात् ॥ ३८९
लीनोऽप्याकृष्यते शुष्को लाघवं चास्य जायते ।
पर्वभेदो ज्वरो मूर्च्छा निद्राकासगलामयाः ॥ ३९० ।
मुखाक्षिगौरवं जाड्यमुत्क्लेशश्चोपशाम्यति ।
सकृद्द्वित्रिचतुः कुर्याद्दृष्ट्वा दोषबलाबलम् ॥ ३९१ ॥
एतद्धि परमं प्राहुर्भेषजं सान्निपातिके ।
पुनः पुनश्च निद्रायां कटु नस्याञ्जनं हितम् ॥ ३९२
तीक्ष्णैर्द्रव्यैः सलवणैर्मातुलुङ्गरसाप्लुतैः ।
द्रवाम्लयुक्तैरथवा कोष्णास्तु कवलग्रहाः ॥ ३९३ ॥

१ सिद्धिस्थाने प्रोक्तमित्यर्थः ।

सन्निपातेऽष्टाङ्गावलेहिका।

कट्फलं पौष्करं भार्गी व्योषं यासश्च कारवी।
श्लक्ष्णचूर्णीकृतं चैव मधुना सह लेहयेत्॥ ३९४॥
एषाऽवलेहिका हन्ति सन्निपातं सुदारुणम्।
हिक्कां श्वासं च कासं च कण्ठरोगं नियच्छति॥ ३९५॥
एतद्योज्यं कफोद्रेके चूर्णमार्द्रकजै रसैः।

सन्निपातज्वरे क्षौद्रोपयोगनिषेधः।

सर्वेषु सन्निपातेषु न क्षौद्रमवचारयेत्॥ ३९६॥
क्षौद्रं शीतोपचारं हि शीतं चात्र विरुध्यते।
उष्णोपचारः सततं सन्निपातेषु शस्यते॥ ३९७॥

सन्निपातज्वरे संज्ञाप्रबोधनार्थं शिरीषाद्यञ्जनम्।

शिरीषबीजगोमूत्रकृष्णामरिचसैन्धवैः।
अञ्जनं स्यात्प्रबोधाय सरसोनशिलावचैः॥ ३९८॥

सन्निपातज्वरे शिग्रुमूलाद्यं नस्यम्।

शोभाञ्जनकमूलस्य रसं च सुरसान्वितम्।
विसंज्ञितानां नस्यं स्याद्बोधनं चाशु रोगिणाम्॥ ३९९॥

सन्निपातज्वरे बृहत्याद्यं प्रध्मापनं नस्यम्।

एकं बृहत्या फलपिप्पलीकं शुण्ठीयुतं चूर्णमिदं प्रशस्तम्।
प्रध्मापयेद्घ्राणपुटे विसंज्ञश्चेष्टां करोति क्षवथुप्रबुद्धः॥४००॥

सन्निपातज्वरे संज्ञाप्रबोधनार्थं दाहः।

कृते संज्ञाविधानेऽपि संज्ञा यस्य न जायते।
पादयोस्तं ललाटे वा दहेत्तप्तशलाकया॥ ४०१॥

सन्निपातज्वरेऽन्नव्यवस्था।

शस्तं मुलङ्घितस्यादौ विधाय कवलग्रहम्।
लाजासक्तुकपथ्यं स्यात्सैन्धवेनावचूर्णितम्॥ ४०२॥
रक्तपित्तहितत्वेन दाहज्वरहृते तथा।
सक्तवः शीतवीर्याः स्युर्लाजपूर्वा हिता न ते॥ ४०३॥

स चेज्जीर्यत्यविघ्नेन ज्वरी जीवेत्तदा ध्रुवम् ।
पाचनो दीपनो लाजमण्डस्तेनोष्ण इष्यते ॥ ४०४ ॥
अतोऽयं दशमूलादिसाधितो भिषजां मतः ।
पञ्चमुष्टिकयूषेण त्रिकण्टककृतेन वा ॥ ४०५ ॥
आदोषशमनात्पथ्यं त्रिकण्टेनैव साधयेत् ।

सन्निपातज्वरे पञ्चमुष्टिकयूषः ।

यवकोलकुलत्थानां मुद्गमूलकशुण्ठयोः ।
एकैकं मुष्टिमादाय पचेदष्टगुणे जले ॥ ४०६ ॥
पञ्चमुष्टिक इत्येष वातपित्तकफापहः ।
शस्यते शूलगुल्मेषु कासे श्वासे क्षये ज्वरे ॥ ४०७ ॥

सन्निपातज्वरे चातुर्भद्रपञ्चमूलम् ।

पञ्चमूलीकिरातादिर्गणो योज्यस्त्रिदोषजे ।
पित्तोत्कटे च मधुना कणया च कफोत्कटे ॥ ४०८ ॥

सन्निपातज्वरे निर्गुण्ड्यादिधूपः ।

निर्गुण्डीपिचुमन्दकुष्ठविजयाकार्पाससिद्धार्थकैः
[illegible]
धूपोऽयं ग्रहसन्निपातजनितां पीडां पिनष्टि क्षणात् ४०९

सन्निपाते रास्नादिद्वाविंशतिकः क्वाथः ।

रास्नाशुण्ठीगुडूचीसहचरजलदाभीरुपथ्यासुराह्वैः
शुक्लाकर्चूरवासानिलारिपुसहितैः पञ्चमूलद्वयेन ।
एभिर्द्रव्यैः कषायस्त्वरितमपनयेत्पीतमात्रः प्रभाते
मन्यास्तम्भाश्वगृध्रिज्वरपिटिककटीसन्धिसर्वाङ्गपीडाम् ४१०

सन्निपातज्वरे द्वितीयो निर्गुण्ड्यादिधूपः ।

निर्गुण्डीपुरसहितः सिद्धार्थनिम्बपत्रसंयुक्तः ।
सर्जरसेन समेतो धूपवरः सन्धिगं हन्ति ॥ ४११ ॥

सन्निपातज्वरे दशमूलीकषायः ।

बिल्वश्योनाकगाम्भारीपाटलीगणिकारिकाः ।
दीपनं कफवातघ्नं पञ्चमूलमिदं महत् ॥ ४१२ ॥
शालिपर्णीपृश्निपर्णीबृहतीद्वयगोक्षुरम् ।
वातपित्तहरं वृष्यं कनीयः पञ्चमूलकम् ॥ ४१३ ॥
उभयं दशमूलं तु सन्निपातज्वरापहम् ।
कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते ॥ ४१४ ॥
पिप्पलीचूर्णसंयुक्तं कण्ठहृद्ग्रहनाशनम् ।
चिरज्वरे वातकफोल्बणे वा
त्रिदोषजे वा दशमूलमिश्रः ।
किराततिक्तादिगणः प्रयोज्यः
शुद्ध्यर्थिनो वा त्रिवृताविमिश्रः ॥ ४१५ ॥

सन्निपातज्वरे मुस्तादयोऽष्टादशाङ्गकाथः ।

मुस्तपर्पटकोशीरदेवदारुमहौषधम् ।
त्रिफला धन्वयासश्च नीली कम्पिल्लकं त्रिवृत् ॥ ४१६ ॥
किराततिक्तकं पाठा बला कटुकरोहिणी ।
मधुकं पिप्पलीमूलं मुस्तादो गण उच्यते ॥ ४१७ ॥
अष्टादशाङ्ग उदित एष वा सन्निपातहा ।
पित्तोत्तरे सन्निपाते हितश्चोक्तो मनीषिभिः ॥ ४१८ ॥

सन्निपातज्वरे दशमूलाद्यो द्वितीयोऽष्टादशाङ्गकाथः ।

दशमूली शठी शृङ्गी पौष्करं सदुरालभम् ।
भार्गी कुटजबीजं च पटोलं कटुरोहिणी ॥ ४१९ ॥
अष्टादशाङ्ग इत्येष सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्तिश्वासहिक्कावमीहरः ॥ ४२० ॥

सन्निपातज्वरे बृहत्यादिकाथः ।

बृहत्यौ पौष्करं भार्गी शठी शृङ्गी दुरालभा ।
[illegible]

बृहत्यादिगणः प्रोक्तः सन्निपातज्वरापहः ।
कासादिषु च सर्वेषु हितः सोपद्रवेषु च ॥ ४२२ ॥

सन्निपातज्वरे भूनिम्बादस्तृतीयोऽष्टादशाङ्गक्वाथः ।

भूनिम्बदारुदशमूलमहौषधाब्द-
तिक्तेन्द्रबीजधनिकेभकणाकषायः ।
तन्द्राप्रलापकसनारुचिदाहमोह-
श्वासादियुक्तमखिलज्वरमाशु हन्ति ॥ ४२३ ॥

सन्निपातज्वरे शट्यादिक्वाथः ।

शठी पुष्करमूलं च व्याघ्री शृङ्गी दुरालभा ।
गुडूची नागरं पाठा किरातं कटुरोहिणी ॥ ४२४ ॥
एष शट्यादिको वर्गः सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्तितन्द्राश्वासेषु शस्यते ॥ ४२५ ॥

सन्निपातज्वरे द्वितीयः शट्यादिक्वाथः ।

शट्यासुपर्णी कृमिहा विशाला
ह्रीबेरमेला सुरदारु शिग्रुः ।
किराततिक्ताकुटजोग्रगन्धा-
निशाद्वयं तिक्तकरोहिणी च ॥ ४२६ ॥
कषाय एषां कृमिजातरोग-
युक्तं त्रिदोषं शमयेदुदीर्णम् ॥ ४२७ ॥

सन्निपातज्वरे कुलत्थादिचूर्णम् ।

कुलत्थं त्रायमाणां च पिप्पलीं चैव हिङ्गु च ।
सैन्धवं काललवणं शृङ्गवेरं सचित्रकम् ॥ ४२८ ॥
वयस्थां कोलमज्जानं धन्वयासं हरेणुकाम् ।
त्वचं दारु हरिद्रे च सूक्ष्मैलां चोरकं तथा ॥ ४२९ ॥
बलां मूर्वां समञ्जिष्ठां विडङ्गं तुम्बरूणि च ।
हरीतकीं तामलकीं शिग्रुकस्य फलानि च ॥ ४३० ॥

मरिचं चाजमोदं च यथालाभेन संहरेत् ।
चूर्णीकृतानि सर्वाणि लेहयेन्मधुसर्पिषा ॥ ४३१ ॥
रसेन मातुलुङ्गस्य पयसाऽम्लेन वा पुनः ।
दधिमण्डेन चालोड्य मूत्रेणान्यतमेन वा ॥ ४३२ ॥
वातोत्तरं सन्निपातं क्षिप्रमेव चिकित्सति ।
समस्तं वर्गमर्धं वा यथालाभमथापि वा ॥ ४३३ ॥
प्रयुञ्जीत भिषक् प्राज्ञः कालसात्म्यविभागवित् ।

सन्निपातज्वरे अजगन्धादिपानकम् ।

अजगन्धा त्रिकटुकं तथैव च हरीतकी ॥ ४३४ ॥
पाठा मूर्वा समञ्जिष्ठा विडङ्गं सैन्धवं वचा ।
एतान् सर्वान् समानीय कल्कपेष्यान् प्रकल्पयेत् ॥४३५॥
तस्यार्धशुक्तिं पूतस्य गव्यमूत्रेण पाययेत् ।
एतद्धि पानकं श्रेष्ठं कासश्वासनिबर्हणम् ॥ ४३६ ॥
सन्निपातभवान् व्याधीन् सद्य एव चिकित्सति ।

सन्निपातज्वरे परूषकादिक्वाथः ।

परूषकाणि त्रिफला देवदारु सकट्फलम् ॥ ४३७ ॥
चन्दनं पद्मकं चैव तथा कटुकरोहिणी ।
पृथक्कर्षसमैः सिद्धमुषितं शीतलं पिबेत् ॥ ४३८ ॥
पित्तोत्तरे नृणामेतत्सन्निपाते चिकित्सितम् ।

सन्निपातज्वरे आमलकादिलेहः ।

स्विन्नमामलकं पिष्ट्वा द्राक्षया सह संसृजेत् ॥ ४३९ ॥
विश्वभेषजसंयुक्तं मधुना सह लेहयेत् ।
तेनास्य शाम्यते मूर्च्छा श्वासः कासस्तथैव च ॥ ४४० ॥

सन्निपातज्वरे पटोलादिक्वाथः ।

पटोलपत्रं बृहती सुपवी कण्टकारिका ।
मरिचं [illegible] चिरबिल्वः सचित्रकः ॥ ४४१ ॥

करञ्जबीजं मञ्जिष्ठा त्रायन्ती विश्वभेषजम् ।
मलप्रशोधनं पानमभिन्यासज्वरे हितम् ॥ ४४२ ॥

अभिन्यासज्वरे कारव्यादिक्वाथः ।

कारवीपौष्कररैरण्डं त्रायन्ती वासकोऽमृता ।
दशमूली शठी शृङ्गी यासो भार्गी पुनर्नवा ॥ ४४३ ॥
तुल्या मूत्रेण निःक्वाथ्य पीतास्तेतोविशोधनाः ।
अभिन्यासं ज्वरं घोरमाशु हन्युः समुत्थितम् ॥ ४४४ ॥
( दीपनं दशमूलं च स्याद्वा द्विदशमूलकम् ।
सपञ्चदशमूलं वा शृतं पेयं लघूदकम् ॥ ४४५ ॥
सर्वैर्वा पञ्चमूलैस्तु शृतं तोयं सुदीपनम् । )

सन्निपातज्वरे आरग्वधादिक्वाथः ।

आरग्वधो शुष्ककश्च मदनः स्वादुकण्टकः ॥ ४४६ ॥
सप्तपर्णस्त्वथोशीरं शिरीषः खदिरासनौ ।
वत्सकः प्रग्रहो मूर्वा नक्तमालो वितुन्नकः ॥ ४४७ ॥
पटोलपिचुमन्दौ च हरिद्रा कटुरोहिणी ।
त्रिफला देवकाष्ठं च भद्रमुस्तं निदिग्धिका ॥ ४४८ ॥
एतान्याहृत्य तुल्यानि कषायमुपसाधयेत् ।
तं कषायं पिबेद्युक्त्या सन्निपातोद्भवे ज्वरे ॥ ४४९ ॥
कासे श्लेष्मप्रसेके च श्वयथावरुचौ तथा ।

वृद्धवाग्भटासाध्यसन्निपाते भार्ग्यादिक्वाथः ।

भार्गीं पुष्करमूलं च रास्नां बिल्वं यवानिकाम् ।
तगरं[1] दशमूलं च पिप्पलीं चाशु साधयेत् ॥ ४५० ॥
सन्निपातज्वरे देयं हृत्पार्श्वानाहशूलिनाम् ।
कासश्वासाग्निमान्द्यत्वं तन्द्रां च विनिवर्तयेत् ॥ ४५१ ॥

---

१ 'नागरं' ख. ।

सन्निपातज्वरे त्रिकर्षादिकषायचतुष्टयम् ।

इमं चान्यं प्रवक्ष्यामि समासेन यथाक्रमम् ।
सर्वज्वरहरं श्रेष्ठं कषायममृतोपमम् ॥ ४५२ ॥
त्रिकर्षं पञ्चकर्षं वा सप्तकर्षमथापि वा ।
एवं संशमनार्थं तु देयं सान्नवकार्षिकम् ॥ ४५३ ॥
त्रिकार्षिकं पटोलं तु मधुकं भद्ररोहिणी ।
एतदेव समुस्तं स्यात्साभयं पञ्चकार्षिकम् ॥ ४५४ ॥
सनिम्बपत्रं सोशीरं विज्ञेयं सप्तकार्षिकम् ।
त्वक्चात्र सप्तपर्णस्य फलान्यारग्वधस्य च ॥ ४५५ ॥
सन्निपातप्रशमनं विज्ञेयं नवकार्षिकम् ।
एतदेव कषायं तु सर्पिषा सह योजितम् ॥ ४५६ ॥
वातपित्तसमुत्थस्य ज्वरस्य त्वमृतोपमम् ।
सुखोष्णलवणं दद्याद्वातश्लेष्मोद्भवे ज्वरे ॥ ४५७ ॥
शर्करासंयुतं पीतं पित्तज्वरविनाशनम् ।
क्षौद्रेण सह संयुक्तं श्लेष्मज्वरहरं परम् ॥ ४५८ ॥
गोमूत्रेण समायुक्तं सन्निपातज्वरापहम् ।

सन्निपातज्वरे हरिद्रादिकषायः ।

हरिद्रा भद्रमुस्तं च त्रिफला कटुरोहिणी ॥ ४५९ ॥
पिचुमन्दः पटोली च देवदारु निदिग्धिका ।
एषां कषायः पीतस्तु सन्निपातज्वरं जयेत् ॥ ४६० ॥
अविपक्तिं प्रसेकं च शोषं कासमरोचकम् ।

सुश्रुतोक्तकषायद्वयम् ।

त्रैफलो वा ससर्पिष्कः क्वाथः पेयस्त्रिदोषजे ॥ ४६१ ॥
द्विपञ्चमूलीकथनेन संयुता
भिषग्भिरुक्ता मगधा विचूर्णिता ।
सकासशोषारुचिसंयुते ज्वरे
त्रिदोषजे चापि शिरोरुगन्तरे ॥ ४६२ ॥

करञ्जबीजं मञ्जिष्ठा त्रायन्ती विश्वभेषजम्।
मलप्रशोधनं पानमभिन्यासज्वरे हितम्॥ ४४२॥

अभिन्यासज्वरे कारव्यादिक्काथः।

कारवीपौष्करैरण्डं त्रायन्ती वासकोऽमृता।
दशमूली शठी शृङ्गी यासो भार्गी पुनर्नवा॥ ४४३॥
तुल्या मूत्रेण निःक्वाथ्य पीताश्चैतेऽतिशोधनाः।
अभिन्यासं ज्वरं घोरमाशु हन्युः समुत्थितम्॥ ४४४॥
(दीपनं दशमूलं च साद्धा द्विदशमूलकम्।
सपञ्चदशमूलं वा शृतं पेयं लघूदकम्॥ ४४५॥
सर्वैर्वा पञ्चमूलैस्तु शृतं तोयं सुदीपनम्।)

सन्निपातज्वरे आरग्वधादिक्काथः।

आरग्वधो मुष्ककश्च मदनः स्वादुकण्टकः॥ ४४६॥
सप्तपर्णस्तथोशीरं शिरीषः खदिरासनौ।
वत्सकः प्रग्रहो मूर्वा नक्तमालो त्रिवुश्चकः॥ ४४७॥
पटोलपिचुमन्दौ च हरिद्रा कटुरोहिणी।
त्रिफला देवकाष्ठं च भद्रमुस्तं निदिग्धिका॥ ४४८॥
एतान्याहृत्य तुल्यानि कषायमुपसाधयेत्।
तं कषायं पिबेद्युक्त्या सन्निपातोद्भवे ज्वरे॥ ४४९॥
कासे श्लेष्मप्रसेके च श्वयथावरुचौ तथा।

वृद्धवाग्भटात्साध्यसन्निपाते भार्ग्यादिक्काथः।

भार्गीं पुष्करमूलं च रास्नां बिल्वं यवानिकाम्।
तगरं[1] दशमूलं च पिप्पलीं चाशु साधयेत्॥ ४५०॥
सन्निपातज्वरे देयं हृत्पार्श्वानाहशूलिनाम्।
कासश्वासाग्निमान्द्यत्वं तन्द्रां च विनिवर्तयेत्॥ ४५१॥

---

१ 'नागरं' ख.।

सन्निपातज्वरे त्रिकर्षादिकषायचतुष्टयम् ।

इमं चान्यं प्रवक्ष्यामि समासेन यथाक्रमम् ।
सर्वज्वरहरं श्रेष्ठं कषायममृतोपमम् ॥ ४५२ ॥
त्रिकर्षं पञ्चकर्षं वा सप्तकर्षमथापि वा ।
एवं संशमनार्थं तु देयं स्यान्नवकार्षिकम् ॥ ४५३ ॥
त्रिकार्षिकं पटोलं तु मधुकं भद्ररोहिणी ।
एतदेव समुस्तं स्यात्साभयं पञ्चकार्षिकम् ॥ ४५४ ॥
संनिम्बपत्रं सोशीरं विज्ञेयं सप्तकार्षिकम् ।
त्वक्चात्र सप्तपर्णस्य फलान्यारग्वधस्य च ॥ ४५५ ॥
सन्निपातप्रशमनं विज्ञेयं नवकार्षिकम् ।
एतदेव कषायं तु सर्पिषा सह योजितम् ॥ ४५६ ॥
वातपित्तसमुत्थस्य ज्वरस्य त्वमृतोपमम् ।
सुखोष्णलवणं दद्याद्वातश्लेष्मोद्भवे ज्वरे ॥ ४५७ ॥
शर्करासंयुतं पीतं पित्तज्वरविनाशनम् ।
क्षौद्रेण सह संयुक्तं श्लेष्मज्वरहरं परम् ॥ ४५८ ॥
गोमूत्रेण समायुक्तं सन्निपातज्वरापहम् ।

सन्निपातज्वरे हरिद्रादिकषायः ।

हरिद्रा भद्रमुस्तं च त्रिफला कटुरोहिणी ॥ ४५९ ॥
पिचुमन्दः पटोली च देवदारु निदिग्धिका ।
एषां कषायः पीतस्तु सन्निपातज्वरं जयेत् ॥ ४६० ॥
अविपक्तिं प्रसेकं च शोषं कासमरोचकम् ।

सुश्रुतात्कषायद्वयम् ।

त्रैफलो वा ससर्पिष्कः क्वाथः पेयस्त्रिदोषजे ॥ ४६१ ॥

द्विपञ्चमूलीकथनेन संयुता
भिषग्भिरुक्ता मगधा विचूर्णिता ।
सकासशोषारुचिसंयुते ज्वरे
त्रिदोषजे चापि शिरोरुगन्वरे ॥ ४६२ ॥

सन्निपातज्वरे द्वितीयो बृहत्यादिकषायः।

बृहती पुष्करं भार्गी शठी शृङ्गी दुरालभा।
पक्त्वा पानं प्रशंसन्ति श्लेष्मा तेनास्य शाम्यति ॥४६३॥

अभिन्यासज्वरे बीजपूरकादिकषायः।

बीजपूरकबिल्वाश्मभेदकं बृहतीद्वयम्।
एकैकांशमथैरण्डमूलं चाष्टगुणीकृतम् ॥ ४६४ ॥
क्वाथो गोमूत्रसंयुक्तो बिडसौवर्चलान्वितः।
हृद्वस्तिशूले सानाहे त्वभिन्यासज्वरे तथा ॥ ४६५ ॥

सन्निपातज्वरे पुनर्नवादिकषायः।

पुनर्नवा गुडूची च त्रायन्त्यैरण्डवासकम्।
पञ्चमूल्येकतश्चात्र गोमूत्रेण शृतं शुभम् ॥ ४६६ ॥
नश्यत्यनेनाभिन्यासः संज्ञा चास्योपजायते।

अभिन्यासे संज्ञाप्रबोधनं नस्यम्।

मधूकसारो मरिचं पिप्पल्यः सैन्धवं वचा ॥ ४६७ ॥
संज्ञाप्रबोधनं नस्यमभिन्यासप्रशान्तये।

अभिन्यासज्वरे संज्ञाप्रबोधनार्थं शिरीषाद्यञ्जनम्।

शिरीषबीजं लशुनं पिप्पल्यः सैन्धवं वचा ॥ ४६८ ॥
मनःशिला समरिचा वास्तं मूत्रं च तत्समम्।
अञ्जनं तदभिन्यासे संज्ञाबोधनमिष्यते ॥ ४६९ ॥

सन्निपातज्वरे देवदार्वादिकषायः।

दारुनागरभूनिम्बधान्यतिक्ताकलिङ्गकाः।
गजाह्वा दशमूलाब्दौ मृत्युकल्पं ज्वरं जयेत् ॥ ४७० ॥

सन्निपातज्वरे दशमूलादिकषायः।

दशमूलस्य निःक्वाथः कट्फलादिगणः शृतः।
तुल्यार्द्रकरसोपेतो मृत्युकल्पं ज्वरं जयेत् ॥ ४७१ ॥

सन्निपातज्वरे कतृणादिकषायः।

कतृणं दारुत्रिफलाचन्दनं सपरूषकम्।
कटुकापत्रकोशीरं विपचेत्कार्षिकान् जले ॥ ४७२ ॥

तत्सर्वं सन्निपातघ्नं पानमात्रेयपूजितम् ।

सन्निपातज्वरे किरातादिक्वाथः ।

किराततिक्तं त्रिफलां गुडूचीं वत्सकात्फलम् ॥ ४७३ ॥
पिचुमन्दं पटोलं च पाठां कटुकरोहिणीम् ।
त्र्यूषणं चाक्षतुल्यांशं पचेत्तोये चतुर्गुणे ॥ ४७४ ॥
सन्निपातपरीतानां तृट्छर्दिज्वरनाशनम् ।

सन्निपातज्वरे त्रिवृतादिमोदकः ।

त्रिवृत्पिप्पलिसंयुक्तो गुडसर्पिर्विपाचितः ॥ ४७५ ॥
मण्डानुपानो दातव्यो मोदकः सन्निपातहा ।

अभिन्यासज्वरे त्रायन्त्यादिक्वाथः ।

त्रायन्तीदशमूलपुष्करजटावातारिभिः कारवी-
भार्गीध्यामकवैद्यमातृशठिभिर्गोमूत्रसंयोजितः ।
शृङ्गीयासपुनर्नवाभिरचिराद्युक्तः कषायो हरेत्
साभिन्यासगदं कफज्वरहरो निःसंशयं पानतः॥४७६॥

सन्निपातज्वरे भार्ग्यादो द्वात्रिंशकः क्वाथः ।

भार्गीभूनिम्बनिम्बैर्नलदकटुवचाव्योपवासाविशाला-
रास्नानन्तापटोलीसुरतरुरजनीपाटलाटिण्टुकीभिः ।
ब्राह्मीदार्वीगुडूचीत्रिवृदतिविषापुष्करत्रायमाणा-
व्याघ्रीशृङ्गीकलिङ्गैस्त्रिफलशठियुतैः कल्पितस्तुल्यभागैः४७७
क्वाथो द्वात्रिंशनामा त्रिकलितदशकान् सन्निपातान्निहन्ति
शूलं श्वासं च हिक्काकसनगुदरुजाध्मानविध्वंसकः स्यात्।
मन्यास्तम्भान्त्रवृद्धीर्गलगदमरुतः सर्वसन्धिग्रहार्तिं
मातङ्गौघं निहन्यान्मृगरिपुरिव सदाध्मानजालं तथैव ४७८

सन्निपातज्वरे मञ्जिष्ठादिक्वाथः ।

मञ्जिष्ठाशिखिबिल्वमूलकशठीशुण्ठीकरञ्जान्वितं
त्रायन्तीबृहतीद्वयोषणकणाक्वाथं तु पेपीयते ।

यः प्रातः प्रणिधाय लक्षितगदं वैद्योत्तमं सन्निधौ
तस्यापि प्रशमं प्रयान्ति सततं सर्वे मलव्याधयः ॥४७९॥

धारावक्रयशिताकः क्राथः ।

धाराधाराधरत्रिपथुपागारवल्लीन्द्रवल्ली-
कालीकालीयककरिकणाकट्फलारिष्टकुष्ठैः ।
पृथ्वीपृथ्वीकलिसुरतरुव्याकुलिङ्गाकलिङ्गैः
शिग्रुव्याघ्रीकटुतृणयधूरोहिणीरोहिणीभिः ॥४८०॥

क्राथं पथ्याकवचरसनापञ्चकोलानुकूलै-
स्तुल्यैरेभिः कफगदजये सन्निकत्रिंशमाहुः ।
श्वासालस्यश्वयथुजडतोदीर्णकासे बलासे
सामे कामं मथनभिषजा शंसितः सन्निपाते ॥ ४८१ ॥

सन्निपातज्वरे तन्द्राचिकित्साया अवश्यकरणीयता ।

सन्निपातज्वरे यत्नं कृत्वा तन्द्रां जयेद्बुधः ।
उपद्रवः कष्टतमस्तं च नस्याञ्जनैर्जयेत् ॥ ४८२ ॥

सन्निपातज्वरे जिह्वाचिकित्सा ।

उच्छुष्कां स्फुटितां जिह्वां द्राक्षया मधुपिष्टया ।
प्रलेपयेत्सघृतया सन्निपातात्मके ज्वरे ॥ ४८३ ॥

सन्निपातज्वरे बाष्पप्रयोगः ।

देवदाली तथैरण्डः पिचुमन्ददलानि तु ।
त्रिभिर्निष्कथितैर्बाष्पः सन्निपातज्वरापहः ॥ ४८४ ॥

सन्निपातज्वरे स्वेदातिप्रवृत्तिचिकित्सा ।

स्वेदोद्गमे भृष्टकुलत्थचूर्ण-
निपातनं शस्तमिति ब्रुवन्ति ।
मृत्युश्च तस्मिन्बहुपिच्छिलत्वा-
च्छीतस्य मृत्योः पुरतः सरत्वात् ॥ ४८५ ॥

अथवा चणका भृष्टा यवानीचूर्णमिश्रिताः ।
वचोपणरजोयुक्ताः स्वेदसंशोषणा मताः ॥ ४८६ ॥

विषभागो भवेदेको मरिचास्त्रिगुणो मतः।
आरण्योत्पलजं भस्म षोडशांशसमन्वितम् ॥ ४८७ ॥
एकत्र मिलितं चूर्णं धूर्तस्वरसभावितम्।
आतपे शोषितं तच्च शीतस्वेदहरं परम् ॥ ४८८ ॥

सन्निपातज्वरे रिष्टलक्षणम्।

स्वेदो ललाटे हिमवन्नरस्य
शीतार्दितस्यैति सुपिच्छिलश्च।
कण्ठस्थितो याति न यस्य वक्षो
नूनं यमस्यैति गृहं स मर्त्यः ॥ ४८९ ॥

दोषविशेषेण सन्निपातज्वरमर्यादा।

वातपित्तकफैः सप्तदशद्वादशवासरान्।
प्रायोऽनुयाति मर्यादा मोक्षाय च वधाय च ॥ ४९० ॥
द्विगुणा सप्तमी यावन्नवम्येकादशी तथा।
एषा त्रिदोषमर्यादा मोक्षाय च वधाय च ॥ ४९१ ॥

सन्निपातज्वरे कर्णग्रन्थिचिकित्सा।

सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः।
शोफः संजायते तेन कश्चिदेव विमुच्यते ॥ ४९२ ॥
रक्तावसेचनैः पूर्वं सर्पिःपानैश्च तं जयेत्।
प्रदेहैः कफपित्तघ्नैर्वमनैः कवलग्रहैः ॥ ४९३ ॥

कर्णमूलशोथे बीजपूरकमूलादिलेपः।

बीजपूरकमूलानि वह्निमन्थस्तथैव च।
सनागरं देवदारु रास्नाचित्रकपेषितम् ॥ ४९४ ॥
प्रलेपनमिदं श्रेष्ठं गलशोफविनाशनम्।

कर्णमूलशोथे कुलत्थाद्यो लेपः।

कुलत्थं कट्फलं शुण्ठी कारवी च समांशकम् ॥ ४९५ ॥
सुखोष्णं लेपनं कार्यं कर्णमूले मुहुर्मुहुः।

कर्णमूलशोथे इङ्गुद्यादिलेपः ।

इङ्गुदिनिशाविशालासैन्धवसुरदारुकुष्ठरविदुग्धैः ।
दत्तः क्रमेण लेपो हरति महाकर्णकग्रन्थिम् ॥ ४९६ ॥

कर्णग्रन्थावर्कदुग्धादिलेपः ।

दशशतकरदुग्धं पुष्करं त्वक्समेतं
दहनगुडनिकुम्भाकुष्ठकाशीसयुक्तम् ।
अपनयति विकीर्णं लेपनं सप्तरात्रा-
च्छ्वयथुहरणमुग्रं कर्णकग्रन्थिमेतत् ॥ ४९७ ॥

कर्णशोथे नस्यप्रयोगः ।

अशिशिरजलयुक्तं नावनं कर्णकार्ते
जनयति सुखसिद्धिं घ्राणरन्ध्रप्रवेशात् ।
परमलवणकृष्णाचूर्णमिश्रं प्रभाते
सकलमुनिभिरुक्तं व्याधिविध्वंसकारि ॥ ४९८ ॥

सन्निपातज्वरे द्राक्षादिक्वाथः ।

द्राक्षाटरूपकृतमालयवासभूमि-
निम्बैः शृतं मलयजेन युतं पयो यः ।
दोषत्रयेण जनितेऽपि पिबेज्ज्वरेऽसौ
तत्कालमाशु लभते बलमत्युदारम् ॥ ४९९ ॥

सन्निपातज्वरे वचादिकषायः ।

वचा गुडूची सुरदारु शुण्ठी किरातकं मुस्तकमाटरूपः ।
सकाकजङ्घा लघुकण्टकारी क्वाथोऽयमित्युद्धतसन्निपाते ॥

सन्निपातज्वरे किरातादिचूर्णम् ।

चूर्णमाहुः सकिरातकमुस्तं नागरेन्द्रयवतिक्तममीभिः ।
शर्करासहितमिन्दुकलाभृत्सन्निपातजनितज्वरहारि ॥५०१॥

हरीतक्यादिचूर्णम् ।

चूर्णं हरीतकीहिङ्गुपिप्पलीनागरान्वितम् ।
मातुलुङ्गरसाक्तं तु सन्निपातज्वरे हितम् ॥ ५०२ ॥

सन्निपातज्वरे दार्व्यादिकषायः।

दार्व्यम्बुदस्तिक्तफलत्रिकं च
क्षुद्रा पटोली रजनी सनिम्बा।
क्वाथं विदध्याज्ज्वरसन्निपाते
निश्चेतने पुंसि विबोधनार्थम्॥ ५०३॥

सन्निपातज्वरे निम्बादिकषायः।

निम्बाब्ददारुकटुकात्रिफलाहरिद्रा-
क्षुद्रापटोलदलनिःकथितः कषायः।
पेयस्त्रिदोषजनितज्वरनाशनाय
क्वाथः समं मगधया दशमूलजो वा॥ ५०४॥

सन्निपातज्वरे पुष्करमूलादिकषायः।

पुष्करमूलगुडूचीनिदिग्धिकानागरैः कृतः क्वाथः।
कासश्वासचलासाङ्कुरं च हन्ति त्रिदोषसंभूतम्॥ ५०५॥

सन्निपातज्वरे कर्चूरादिकषायः।

कर्चूरभार्गी कटुका पटोली-
दुरालभा पुष्करमूलमैन्द्री।
व्याघ्री तथा कर्कटशृङ्गिका च
क्वाथोऽयमुक्तः प्रचुरे त्रिदोषे॥ ५०६॥

कालो ह्येष यमश्चैव नियतिर्मृत्युरेव च।
तस्मिन्नपगते देहाज्जन्मेह पुनरुच्यते॥ ५०७॥

सन्निपातज्वरे शीतजलसेचननिषेधः।

सन्निपाते तु दाहार्तं यः सिञ्चेच्छीतवारिणा।
आतुरः स कथं जीवेद्वैद्यो वा स कथं भवेत्॥ ५०८॥

सन्निपातचिकित्सितुर्वैद्यस्य प्रशंसा।

सन्निपातार्णवे मग्नं यो ह्युद्धरति मानवम्।
कस्तेन न कृतो धर्मः कां च पूजां न सोऽर्हति॥ ५०९॥

मृत्युना सह योद्धव्यं सन्निपातं चिकित्सता ।
यश्च तत्र भवेज्जेता स जेताऽऽमयसंगरे ॥ ५१० ॥

इति सन्निपातज्वरचिकित्सा ।

---

अथातो विषमज्वरचिकित्सितं व्याख्यास्यामः ।

पाचने शमने चैव पुराणे विषमज्वरे ।
लङ्घनं न हितं विद्याच्छमनैस्तमुपाचरेत् ॥ ५११ ॥

विषमज्वराणां त्रिदोषजत्वम् ।

ज्वराश्च विषमाः सर्वे सन्निपातसमुद्भवाः ।
यथोल्बणस्य दोषस्य तेषां कार्यं चिकित्सितम् ॥ ५१२ ॥

जीर्णज्वरे निदिग्धिकादिक्वाथः ।

निदिग्धिकानागरकामृतानां
क्वाथं पिबेन्मिश्रितपिप्पलीकम् ।
जीर्णज्वरारोचककासशूल-
श्वासाग्निमान्द्यार्दितपीनसेषु ॥ ५१३ ॥
(हन्त्यूर्ध्वजानयं प्रातः सायं येनोपयुज्यते ।)

जीर्णज्वरे गुडपिप्पलीयोगः ।

कासाजीर्णारुचिश्वासहृत्पाण्डुकृमिरोगनुत् ॥ ५१४ ॥
जीर्णज्वरेऽग्निसादे च शस्यते गुडपिप्पली ।
पिप्पलीचूर्णसंयुक्तः क्वाथश्छिन्नोद्भवोद्भवः ॥ ५१५ ॥
जीर्णज्वरकफध्वंसी पञ्चमूलीकृतोऽथवा ।

जीर्णज्वरे शिरोविरेचनप्रयोगः ।

शिरोगौरवशूलघ्नमिन्द्रियप्रतिबोधनम् ॥ ५१६ ॥
जीर्णज्वरे रुचिकरं दद्याच्छीर्षविरेचनम् ।

विषमज्वरे विभीतकादिक्वाथः ।

विभीतो व्याधिघातश्च कटुका त्रिफला निशा ॥ ५१७ ॥

क्वाथो हन्ति तृषां दाहं ज्वरं च विषमं द्रुतम् ।

सततज्वरे पटोलादिक्वाथः ।

पटोलीन्द्रयवादारुगुडूचीनिम्बपल्लवाः ॥ ५१८ ॥
हन्ति क्वाथो निपीतोऽयं सततं विषमज्वरम् ।
मधुसर्पिःसिताकृष्णाशृतक्षीरविलोडितः ॥ ५१९ ॥
विषमज्वरहृद्रोगश्वासकासक्षयापहः ।
ज्वरेऽञ्जनं निशातैलकृष्णामरिचसैन्धवैः ॥ ५२० ॥

विषमज्वरे हरिद्राद्यञ्जनम् ।

वचा हरीतकी सर्पिर्धूपः स्याद्विषमज्वरे ।

विषमज्वरे वचादिधूपः ।

सततं विषमं चापि क्षीणस्य सुचिरोत्थितम् ॥ ५२१ ॥
ज्वरं संभोजनैः पथ्यैर्ज्वरघ्नैः समुपाचरेत् ।

विषमज्वरे हितानि शाकानि ।

तन्दुलीयकवास्तूकयालमूलकपर्पटान् ॥ ५२२ ॥
पटोलममृतापत्रं शाकार्थे दार्विपत्रिकाम् ।

विषमज्वरे हितानि मांसानि ।

मांसार्थमेणलावादीन् दद्याद्युक्त्या विचक्षणः ॥ ५२३ ॥

ज्वरक्षीणे वमनादिनिषेधः ।

ज्वरक्षीणस्य न हितं वमनं न विरेचनम् ।
कामं तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥ ५२४ ॥

अरोचकादौ निवृत्तज्वरेऽपि संशोधनावश्यकता ।

अरोचके गात्रसादे वैवर्ण्येऽङ्गमलादिषु ।
शान्तज्वरोऽपि शोध्यः स्यादनुबन्धभयान्नरः ॥ ५२५ ॥

विषमज्वरे त्रिफलादिविरेचनम् ।

चूर्णितैस्त्रिफलाश्यामात्रिवृत्पिप्पलिकेसरैः ।
सक्षौद्रः शर्करायुक्तो विरेकस्तु प्रशस्यते ॥ ५२६ ॥

विषमज्वरसंप्राप्तिः ।

कृशानां ज्वरमुक्तानां मिथ्याहारविहारिणाम् ।
दोषः स्वल्पोऽपि संवृद्धो देहिनामनिलेरितः ॥ ५२७ ॥
सततान्येद्युष्कत्र्याख्यचतुर्थान् सप्रलेपकान् ।
कफस्थानविभागेन यथासंख्यं करोति च ॥ ५२८ ॥
अहोरात्रादहोरात्रात् स्थानात्स्थानं प्रपद्यते ।
ततश्चामाशयं प्राप्य दोषः कुर्याज्ज्वरं नृणाम् ॥ ५२९ ॥
कफसामाशयः स्थानं कण्ठोरोमूर्धसन्धयः ।
समौ वातकफौ यस्य हीनपित्तस्य देहिनः ॥ ५३० ॥
प्रायो रात्रौ ज्वरस्तस्य दिवा हीनकफस्य च ।
प्रलेपकस्तु विषमः प्रायः क्लेशाय शोषिणाम् ॥ ५३१ ॥

सततकज्वरे तिक्तादिक्वाथः ।

क्वाथः सततके तिक्ता पटोलं सारिवा घनम् ।

तृतीयकज्वरे भूनिम्बादिक्वाथः ।

तृतीयके तु भूनिम्बगुडूचीनागरं घनम् ॥ ५३२ ॥
पटोलेन्द्रयवान् द्राक्षां मुस्तं निम्बफलत्रिकम् ।
मुस्ताविश्वामृतं धान्यं वालकं चन्दनं समम् ॥ ५३३ ॥
क्वाथो मधुसितायुक्तस्त्र्याहिकज्वरनाशनः ।

चातुर्थकज्वरे मुस्तादिक्वाथः ।

मुस्तापाठाशिवाक्वाथश्चतुर्थकहरः परः ॥ ५३४ ॥

चातुर्थकज्वरे त्रिफलाप्रयोगः ।

दुग्धेन त्रिफला पीता हन्ति चातुर्थिकं ज्वरम् ।

पश्चाह्ज्वरे चन्दनादिक्वाथः ।

चन्दनं धान्यकं मुस्तं गुडूची विश्वभेषजम् ॥ ५३५ ॥
पश्चाहसंभवं हन्ति ज्वरं क्वाथो निषेवितः ।

षडहज्वरे यवासादिक्वाथः ।

यवासो हेहयो दारु शुण्ठी वासा समांशकः ॥ ५३६ ॥

काथो निषेवितो हन्ति ज्वरं वै षड्दिनोद्भवम् ।

विषमज्वरे शिरीषादिचूर्णम् ।

शिरीषो लाङ्गली कुष्ठं निम्बो देवी हरीतकी ॥ ५३७ ॥
मध्वाज्यभक्षितं चूर्णं विषमज्वरनाशनम् ।

विषमज्वरादौ शिरीषादिनस्यम् ।

शिरीषनिम्बपत्राणि हिङ्गु सर्पस्य कञ्चुकी ॥ ५३८ ॥
समांशचूर्णमेतेषां वारिपिष्टं हि नस्यतः ।
ग्रहभूतपिशाचानां शाकिनीरक्षसामपि ॥ ५३९ ॥
दोषं हन्ति ज्वरं तीव्रं तरणिस्तिमिरं यथा ।

ज्वरे शिरीषादिधूपः ।

शिरीषबीजजम्ब्वाम्रकपित्थार्जुनपल्लवैः ॥ ५४० ॥
पुराख्यशल्लकैर्धूपः सर्वज्वरग्रहापहः ।

ज्वरे लशुनाद्यञ्जनम् ।

लशुनं पिप्पली राजी वचा पथ्या समांशकाः ॥ ५४१ ॥
एतच्चूर्णं जलापिष्टं चक्षुःस्थं ज्वरनाशनम् ।

अन्येद्युष्कचातुर्थकयोर्योगौ ।

अन्येद्युष्केष्वन्तरे तु गुडूच्यामलकं घनम् ॥ ५४२ ॥
वृषदंशपुरीषं वा पयसाऽऽलोड्य यः पिबेत् ।
चतुर्थकस्यागमने नियतं न भविष्यति ॥ ५४३ ॥

सन्तताद्विविषमज्वरेषु पञ्चकषायाः ।

कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी ।
पटोलं सारिवा मुस्तं पाठा तिक्तकरोहिणी ॥ ५४४ ॥
निम्बं पटोलं त्रिफला मृद्वीका मुस्तवत्सकौ ।
किराततिक्तममृता चन्दनं विश्वभेषजम् ॥ ५४५ ॥
गुडूच्यामलकं मुस्तमर्धश्लोकसमापनाः ।
कषायाः शमयन्त्याशु पञ्च पञ्चविधान् ज्वरान् ॥ ५४६ ॥

वाग्भटात् सन्ततादिज्वरेषु पञ्चकषायाः ।

पटोलेन्द्रयवारिष्टभद्रमुस्तामृताद्वयम् ।
सारिवादितयं पाठा त्रायन्ती कटुरोहिणी ॥ ५४७ ॥
पटोलारिष्टमृद्वीकाशम्याकत्रिफलावृषाः ।
चन्दनोशीरधान्याब्दगुडूचीविश्वभेषजम् ॥ ५४८ ॥
देवदारुस्थिराशुण्ठी वासा धात्री हरीतकी ।
पञ्च पञ्चज्वरान्हन्ति योगा मधुसितोत्कटाः ॥ ५४९ ॥

चातुर्थकज्वरे वासादिक्वाथः ।

वासाधात्रीस्थिरादारुपथ्यानागरसाधितः ।
सितामधुयुतः क्वाथश्चातुर्थकनिवारणः ॥ ५५० ॥

चातुर्थकेऽगस्त्यपुष्परसनस्यम् ।

अगस्त्यपुष्पस्वरसेन नस्यं
निहन्ति चातुर्थिकमुग्रवीर्यम् ।

तृतीयकज्वरे महौषधादिकषायः ।

महौषधामृतामुस्तचन्दनोशीरधान्यकैः ।
क्वाथस्तृतीयकं हन्ति शर्करामधुसंयुतः ॥ ५५१ ॥

तृतीयकज्वरे नागरादिकषायः ।

सनागरोशीरघनः सधान्यः
सपिप्पलीकश्च सचन्दनश्च ।
तृतीयकं हन्ति कृतः कषायः
समाक्षिकश्चापि सशर्करश्च ॥ ५५२ ॥

चतुर्थकज्वरे पथ्यादिकषायः ।

पथ्यास्थिरानागरदेवदारु-
धात्रीवृषैरुत्क्वथितः कषायः ।
सितोपलामाक्षिकसंप्रयुक्त-
श्चातुर्थकं हन्त्यचिरेण पीतः ॥ ५५३ ॥

अपामार्गजटा कट्यां लोहितैः सप्ततन्तुभिः।
बद्धा वारे रवौ तूर्णं ज्वरं हन्ति तृतीयकम् ॥ ५५४ ॥

विषमज्वरे दैवव्यपाश्रयचिकित्सा।

गङ्गाया उत्तरे कूले अपुत्रस्तापसो मृतः।
तस्मै तिलोदकं दद्यान्मुञ्चत्यैकाहिको ज्वरः ॥ ५५५ ॥
अङ्गवङ्गकलिङ्गेषु सौराष्ट्रे मगधेषु च।
पारावारे तथा काश्यां राक्षसी दुन्दुभी वसेत् ॥ ५५६ ॥
तस्मै तिलोदकं दद्यान्मुञ्चत्यैकाहिको ज्वरः।

ज्वरनाशार्थं मूर्ध्नि मूलबन्धनम्।

मूलं भूमिजयन्त्याशु सहदेवोद्भवं तथा ॥ ५५७ ॥
तन्दुलीयकमूलं च बद्धं मूर्ध्नि ज्वरापहम्।

विषमज्वरेऽभयाप्रयोगः।

मधुना चाभया लीढा हन्त्याशु विषमज्वरम् ॥ ५५८ ॥

विषमज्वरे पटोलादिक्काथः।

पटोलयष्टीमधुतिक्तरोहिणी-
धनाभयाभिर्विषमज्वरापहः।
कृतः कषायस्त्रिफलामृतावृषैः
पृथक्पृथग्वा विषमज्वरापहः ॥ ५५९ ॥

चातुर्थकज्वरे विदारिकादियोगः।

विदारीक्षुरसं सर्पिर्मधु तैलं शृतं पयः।
पिबेच्चातुर्थकश्वासकासवातकफापहम् ॥ ५६० ॥

तृतीयकचतुर्थकयोः शिराव्यधः।

शिरां वा धमनीं पार्श्वस्कन्धसंस्थां चतुर्थके।
व्यधयेत्त्रिकसंस्थां तु तृतीयकहरां भिषक् ॥ ५६१ ॥

विषमज्वरे पञ्चसारम्।

सर्पिः क्षौद्रं शृतं क्षीरं पिप्पल्यः सितशर्करा।
पिबेत्खजेनोन्मथितं पञ्चसारमिति स्मृतम् ॥ ५६२ ॥

विषमज्वरहृद्रोगक्षतकासापहं परम् ।

विषमज्वरे जीरकगुडप्रयोगः ।

अजाजी गुडसंयुक्ता विषमज्वरनाशनी ॥ ५६३ ॥
अग्निसादं जयेत्सम्यग्वातरोगांश्च नाशयेत् ।

विषमज्वरे गुडत्रिफलाप्रयोगः ।

गुडप्रगाढां त्रिफलां पिबेद्वा विषमार्दितः ॥ ५६४ ॥

विषमज्वरे मुस्तादिक्वाथः ।

मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्वाथः ।
पीतः सकणाचूर्णः समधुर्विषमज्वरं हन्ति ॥ ५६५ ॥

विषमज्वरे रसोनयोगः ।

प्रातः प्रातः ससर्पिष्कं रसोनमुपयोजयत् ।

विषमज्वरे पिप्पलीवर्धमानप्रयोगः ।

पिप्पलीवर्धमानं वा पिबेत्क्षीररसाशनः ॥ ५६६ ॥
त्रिभिरथ परिवृद्धं पञ्चभिः सप्तभिर्वा
दशभिरथ विवृद्धं पिप्पलीवर्धमानम् ।
इति पिबति पयसा तस्य न श्वासकास-
ज्वरजठरगुदार्शोवातरक्तक्षयाः स्युः ॥ ५६७ ॥

विषमज्वरे पटोलादिक्वाथः ।

पटोलकटुकामुस्तापथ्यानां मधुकस्य च ।
त्रिचतुःपञ्चशः क्वाथो विषमज्वरनाशनः ॥ ५६८ ॥

विषमज्वरे कतिपययोगाः ।

पिबेत्पर्पटकक्वाथं गुडूच्या वासकस्य वा ।
त्रिफलाया रसं वापि श्लैष्मिके विषमज्वरे ॥ ५६९ ॥
निम्बदारुकषायं वा हितं सौमनसं तथा ।
यवान्न विकृतिः सर्पिर्मद्यं च विषमे हितम् ॥ ५७० ॥
दशमूलीकषायेण पिप्पलीर्वा प्रयोजयेत् ।
ताम्रचूडस्य मांसेन पिबेद्वा मद्यमुत्तमम् ॥ ५७१ ॥

विषमज्वरे द्वितीयो रसोनयोगः।

रसोनकल्कं तिलतैलयुक्तं
योऽश्नाति नित्यं विषमज्वरार्तः।
विमुच्यते सोऽप्यचिरेण जन्तु-
र्वातामयैश्चापि सुघोररूपैः॥ ५७२॥

विषमज्वरे नलमूलादिकषायः।

नलवेतसयोर्मूलं मूर्वा च सुरदारु च।
कषायं विधिवत्कृत्वा पेयं सर्वज्वरापहम्॥ ५७३॥

विषमज्वरेऽनन्तादिकल्कः।

अनन्तां बालकं मुस्तां नागरं कटुरोहिणीम्।
पिष्ट्वा सुखाम्बुना कल्कं पाययेत्ताक्षसंमितम्॥ ५७४॥
एष सर्वज्वरान् हन्ति दीपयत्याशु चानलम्।

सर्वज्वरे आमलकादियोगः।

आमलत्र्यमया कृष्णा चित्रकश्चेत्ययं गणः।
सर्वज्वरकफातङ्कभेदी घृष्योऽग्निदीपनः॥ ५७५॥

सर्वज्वरे गुडूच्यादिगणः।

गुडूचीनिम्बधान्याकपद्मकं चन्दनान्वितम्।
तृष्णादाहारुचिच्छर्दिसर्वज्वरहरो गणः॥ ५७६॥

पित्तश्लेष्मज्वरे पटोलादिगणः।

पटोलश्चन्दनं मूर्वा पाठा तिक्ताऽमृता गणः।
पित्तश्लेष्मज्वरच्छर्दिदाहकण्डूविषापहः॥ ५७७॥

सर्वज्वरे त्रिवृतादिभेदनक्राथः।

त्रिवृद्विशालाकटुकात्रिफलारग्वधैः शृतः।
सक्षारो भेदनः क्राथः पेयः सर्वज्वरापहः॥ ५७८॥

जीर्णज्वरे क्षीरोपयोगः।

जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम्।
तदेव तरुणे पीतं विषवद्धन्ति मानवम्॥ ५७९॥

कृशोऽल्पदोषो दीनश्च नरो जीर्णज्वरान्वितः ।
पिपासार्तः सदाहो वा पयसा स सुखी भवेत् ॥ ५

जीर्णज्वरे क्षीरयोगाः ।

पृश्नीवबिल्ववर्षाभूतोयं क्षीरांशयोजितम् ।
पचेत्क्षीरावशिष्टं तु तद्धि सर्वज्वरापहम् ॥ ५८१ ॥
उदकांशास्त्रयः क्षीरं शिंशपासारमेव च ।
क्षीरावशिष्टं क्वथितं पेयं सर्वज्वरापहम् ॥ ५८२ ॥
सनागरं समृद्वीकं मधूकक्षौद्रशर्करम् ।
शृतं पयः सखर्जूरं पिपासाज्वरनाशनम् ॥ ५८३ ॥
कासाच्छ्वासाच्छिरःशूलात्पार्श्वशूलाच्चिरज्वरात् ।
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ॥ ५८४
त्रिकण्टकबलाव्याघ्रीगुडनागरसाधितम् ।
वर्चोमूत्रविबन्धघ्नं शोफज्वरहरं पयः ॥ ५८५ ॥
यथादोषप्रशमनैरौषधैः साधितं पयः ।
सर्वज्वराणां जीर्णानां प्रोक्तं भैषज्यमुत्तमम् ॥ ५८

क्षीरपाकपरिभाषा ।

द्रव्यादष्टगुणं क्षीरं क्षीराच्चोयं चतुर्गुणम् ।
क्षीरावशेषं कर्तव्यं क्षीरपाके त्वयं विधिः ॥ ५८७

ज्वरे घृतयोग्यावस्था ।

यदा न याति प्रशमं लङ्घनाद्यैर्ज्वरः क्रमैः ।
रूक्षस्य बहुदोषस्य तदा सर्पिर्विधीयते ॥ ५८८ ॥

ज्वरे कतिपया सर्पिर्योगाः ।

द्राक्षासिद्धं घृतं वापि त्रिफलासिद्धमेव वा ।
पिबेद्बृहत्पञ्चपक्वं वा सर्पिर्ज्वरहरं परम् ॥ ५८९ ॥
गुडूचीरससिद्धं वा बलासिद्धमथापि वा ।
यष्टीमधुकसिद्धं वा पिबेत्सर्पिर्ज्वरापहम् ॥ ५९० ।

जीर्णज्वरे विडङ्गाद्यं घृतम् ।

विडङ्गसौवर्चलचव्यवह्नि-
व्योषाग्निसिन्धूद्भवयावशूकैः ।
पलांशकैः क्षीरसमं घृतस्य
प्रस्थं पचेज्जीर्णकफज्वरघ्नम् ॥ ५९१ ॥

स्नेहसिद्धिलक्षणम् ।

स्नेहकल्को यदाऽङ्गुल्या वर्तितो वर्तिवद्भवेत् ।
वह्नौ क्षिप्ते च नो शब्दस्तदा सिद्धं विनिर्दिशेत् ॥ ५९२ ॥
शब्दव्युपरमे प्राप्ते फेनस्योपरमे तथा ।
गन्धवर्णरसादीनां संपत्तौ सिद्धिमादिशेत् ॥ ५९३ ॥
घृतस्यैवं विपक्कस्य जानीयात्कुशलो भिषक् ।
फेनोऽतिमात्रं तैलस्य शेषं घृतवदादिशेत् ॥ ५९४ ॥

जीर्णज्वरे तैलम्

लाक्षाविश्वानिशामूर्वामञ्जिष्ठासर्जिकामयैः ।
षड्गुणेन च तक्रेण सिद्धं तैलं ज्वरान्तकृत् ॥ ५९५ ॥

जीर्णज्वरे प्रह्लादनतैलम् ।

यवार्धकुडवं पिष्ट्वा मञ्जिष्ठार्धपलं तथा ।
अम्लप्रस्थरसोन्मिश्रं तैलप्रस्थं विपाचयेत् ॥ ५९६ ॥
एतत्प्रह्लादनं तैलं ज्वरदाहविनाशनम् ।

ज्वरे स्नेहाभ्यङ्गावस्था ।

पक्के पित्तोत्तरे रक्त ऊर्ध्वगे श्वयथौ तथा ॥ ५९७ ॥
कफवातोत्थयोरेवं स्नेहाभ्यङ्गैर्विशोधयेत् ।

त्वक्स्थे ज्वरे चिकित्सा ।

हृतावशेषं पित्तं तु त्वक्स्थं जनयति ज्वरम् ॥ ५९८ ॥
पिबेदिक्षुरसं तत्र शीतं वा शर्करोदकम् ।
शालिषष्टिकयोश्चान्नं पयसा घृतमश्नुयात् ॥ ५९९ ॥

ज्वरे शिराव्यधः ।

लङ्घनाद्यैः क्रमैर्यस्य नोपशाम्येज्ज्वरः क्वचित् ।
तस्य बाहुशिरां विध्येद्रक्तमोक्षात्प्रशाम्यति ॥ ६०० ॥

विषमज्वरे दैवव्यपाश्रयचिकित्सा ।

सोमं सानुचरं देवं समातृगणमीश्वरम् ।
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात् ॥ ६०१ ॥

ज्वरे धूपः ।

अजाव्योश्चर्मरोमाणि वचा कुष्ठं पलङ्कषा ।
निम्बपत्राणि मधु च धूपनं ज्वरनाशनम् ॥ ६०२ ॥

ज्वरे अष्टाङ्गधूपः ।

पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी ।
सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम् ॥ ६०३ ॥

ज्वरे विष्णुसहस्रनामपाठः ।

विष्णुं सहस्रमूर्धानं चराचरपतिं विभुम् ।
स्तुवन्नामसहस्रेण ज्वरान् सर्वान् व्यपोहति ॥ ६०४ ॥

कम्पज्वरे धूपः ।

वैडालं वा शकृद्योज्यं वेपमानस्य धूपनम् ।

ज्वरे अपराजितधूपः ।

सहदेवा वचा भद्रा नाकुली चेति धूपनम् ॥ ६०५ ॥
प्रदेहोद्वर्तनं चापि ज्वरघ्नमपराजितम् ।

विषमज्वरे सैन्धवाद्यञ्जनम् ।

सैन्धवं पिप्पलीनां च तन्दुलाः समनःशिलाः ॥ ६०६ ॥
नेत्राञ्जनं तैलपिष्टं शस्यते विषमज्वरे ।

एकाहिकज्वरे मूलिकाबन्धनम् ।

काकजङ्घा बला श्यामा ब्रह्मदण्डी कृताञ्जलिः ॥ ६०७ ॥
पृश्निपर्णी ह्यपामार्गस्तथा भृङ्गरसोऽष्टमः ।
एषामन्यतमं मूलं पुष्येणोद्धृत्य यत्नतः ॥ ६०८ ॥

रक्तसूत्रेण संवेष्ट्य बद्धमेकाहिकं जयेत् ।

आगन्तुज्वरचिकित्सा।

अभिशापाभिचारोत्थौ ज्वरौ होमादिना जयेत् ॥ ६०९ ॥
दानस्वस्त्ययनातिथ्यैरुत्पातं ग्रहपीडितः ।
औषधीगन्धविषजौ विषपित्तप्रणाशनैः ॥ ६१० ॥
जयेत्कषायैर्मतिमान् सर्वगन्धकृतैर्भिषक् ।
क्रोधजे पित्तजित् कामे कथाः सद्वाक्यमेव च ॥ ६११ ॥
आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ।
हर्षणैश्च शमं यान्ति कामशोकभयज्वराः ॥ ६१२ ॥
भूतविद्यासमुद्दिष्टैर्बन्धवेशनताडनैः ।
जयेद्भूताभिषङ्गोत्थं मनःशान्त्यैव मानसम् ॥ ६१३ ॥

विषमज्वरे क्षीरयोगाः ।

यः पिप्पलीमूलविमिश्रिताज्य-
मध्वन्वितं सुक्वथितं च गव्यम् ।
पयः पिबत्याशु विनाशमेतो
हृद्रोगकासौ विषमज्वराश्च ॥ ६१४ ॥
गव्यं पयो गोमयसारवारि-
मिश्रं प्रदेयं विषमज्वरार्तौ ।
आजं कदाचिन्मसृणप्रमृष्ट-
विश्वौषधोपेतमिमं निहन्ति ॥ ६१५ ॥

ज्वरेऽतिनिद्राप्रतीकारः।

सिन्धूत्थमुस्तबृहतीफलयष्टिचूर्ण-
नस्येन नश्यति नृणां विषमाऽपि निद्रा ।
शाम्यत्यसौ मरिचमाक्षिकवाजिलाला-
पूर्णेक्षणस्य यदि वा पुरुषस्य सद्यः ॥ ६१६ ॥

१ 'काम्या अर्थाः' ख. ।

विषमज्वरे सर्पत्वचादिधूपः ।

सर्पत्वचासर्षपहिङ्गुनिम्ब-
पत्राण्यमीषां समचूर्णधूपः ।
विनिग्रहं राक्षसडाकिनीनां
करोति रक्षां विषमज्वरे सः ॥ ६१७ ॥

विषमज्वरे मनःशिलाद्यञ्जनम् ।

मनःशिलासैन्धवपिप्पलीनां
चूर्णं सतैलं समभागभाजाम् ।
नेत्राञ्जनं वह्निहितं मुनीन्द्रैः
सुखाय पुंसां विषमज्वरेषु ॥ ६१८ ॥

भूतज्वरे पिप्पल्याद्यञ्जनम् ।

पिप्पलीलशुनराजिकावचाः
पथ्यया सह जलेन चूर्णिताः ।
अञ्जनं च गुटिकादिकं स्फुटं
सर्वभूतजनितज्वरापहम् ॥ ६१९ ॥

सर्वज्वरे कण्टकारिकादिक्वाथः ।

कण्टारिकानागरकं गुडूची-
क्वाथं सुखोष्णं मनुजो निषेवेत् ।
यः पिप्पलीचूर्णयुतं जयेत्स
सद्यो ज्वरं श्वासकासशूलम् ॥ ६२० ॥

इति विषमादिज्वरचिकित्सा समाप्ता ।

---

अथातः सर्वज्वरोपद्रवचिकित्सितं व्याख्यास्यामः ।

ज्वरोपद्रवाणां चिकित्सासूत्रम् ।

छर्दिमूर्च्छापिपासादीनविरोधाज्ज्वरस्य तु ।
उपद्रवान् जयेच्चापि प्रत्यनीकेन हेतुना ॥ ६२१ ॥

विशेषमपरं चात्र शृण्वुपद्रवनाशनम्।

शिरोभितापादौ मधुकादिलेपः।

मधुकं रजनी मुस्तं दाडिमं साम्लवेतसम् ॥ ६२२ ॥
अञ्जनं तिन्तिडीकं च नलदं पत्रमुत्पलम्।
त्वचं व्याघ्रनखं चैव मातुलुङ्गरसं मधु ॥ ६२३ ॥
दिह्यादेभिर्ज्वरार्तस्य मस्तुशुक्तयुतैः शिरः।
शिरोभितापसंमोहवमिहिक्काप्रवेपनुत् ॥ ६२४ ॥
प्रदेहो नाशयत्येष ज्वरितानामुपद्रवान्।

वम्युपद्रवशान्त्यर्थं मधुकादिचूर्णम्।

मधूकमथ ह्रीबेरमुत्पलानि मधूलिकाम् ॥ ६२५ ॥
लीढ्वा चूर्णानि मधुना सर्पिषा वा जयेद्वमिम्।
कफप्रसेकास्रविपत्तहिक्काश्वासांश्च दारुणान् ॥ ६२६ ॥

कासश्वासोपद्रवशान्त्यर्थं त्रिफलादिचूर्णम्।

लिह्याज्ज्वरार्तस्त्रिफलां पिप्पलीं च समाक्षिकाम्।
कासे श्वासे च मधुना सर्पिषा च सुखी भवेत् ॥६२७॥

जिह्वादिशोषे विदार्यादिशिरोलेपः।

विदारी दाडिमं रोध्रं दधित्थं बीजपूरकम्।
एभिः प्रदिह्यान्मूर्धानं तृड्दाहार्तस्य देहिनः ॥ ६२८ ॥
जिह्वातालुगलक्लोमशोषे मूर्ध्नि निधापयेत्।

मुखवैरस्य नाशार्थं कल्कगण्डूषौ।

केसरं मातुलुङ्गस्य मधुसैन्धवसंयुतम् ॥ ६२९ ॥
शर्करादाडिमाभ्यां च द्राक्षाखर्जूरयोस्तथा।
वैरस्ये धारयेत्कल्कं गण्डूषं च यथाहितम् ॥ ६३० ॥

मूर्च्छाद्युपद्रवेषु कतिपययोगाः।

[illegible]

॥६३१॥

श्लेष्मजे तु समुत्क्लेशे धूमं प्रायोगिकं पिबेत् ।
हृतदोषो भ्रमार्तस्तु लिह्यात्क्षौद्रसिताभयाम् ॥ ६३२ ॥
मूर्च्छावदतिनिद्रायां कुर्याच्छीतविवर्जितम् ।
मद्यं पुराणं मन्दाग्नेर्यवान्योपहितं हितम् ॥ ६३३ ॥
सव्योषं वितरेत्तक्रं कफारोचकपीडिते ।
अरोचके गात्रसादे वैवर्ण्येऽङ्गमलादिषु ॥ ६३४ ॥

तृष्णोपद्रवशान्त्यर्थं करवीरपुष्पादिशिरोलेपः ।

करवीरस्य पुष्पाणि चन्दनं सारिवा तिलाः ।
तृष्णायां शिरसो लेप आरनालेन पेषितः ॥ ६३५ ॥

तालुशोषे मूर्ध्नि मातुलुङ्गरसप्रलेपः ।

स्वरसं मातुलुङ्गस्य संयुक्तं मधुसर्पिषा ।
तालुशोषे प्रदेहोऽयं मूर्ध्नि देयः ससैन्धवः ॥ ६३६ ॥

जीर्णज्वरे श्वासाद्युपद्रवनाशाय निदिग्धिकादिक्वाथः ।

निदिग्धिकामृताभ्यां च शुण्ठ्या च परिसाधितम् ।
क्वाथं जीर्णज्वरार्तस्तु पिप्पलीचूर्णमिश्रितम् ॥ ६३७ ॥
श्वासकासविनाशाय मन्दाग्नेर्दीपनाय च ।
अरुचेश्च निवृत्त्यर्थं प्रातरुत्थाय वै पिबेत् ॥ ६३८ ॥

विषमज्वरेऽपामार्गमूलबन्धनम् ।

अपामार्गस्य मूलं तु प्रातरक्षालिताननः ।
विषमज्वरनाशाय बध्नीयाद्वामपाणिना ॥ ६३९ ॥

सर्वज्वरे पिप्पल्यादिकषायः ।

कृष्णाग्निपथ्यामलकैः कषायः
कृतः समस्तज्वरहाऽग्निहेतुः ।
व्याघ्रीगुडूचीद्वयजोऽथ कास-
श्वासज्वरघ्नश्च सपिप्पलीकः ॥ ६४० ॥

सर्वज्वरे दुरालभादिकषायः ।

दुरालभावालकतिक्तरोहिणी-
पयोदविश्वौषधिकल्कितं जलम् ।

प्रपीतमुष्णं सकलज्वरापहं
प्रवर्धनं जाठरजातवेदसः ॥ ६४१ ॥

सर्वज्वरे पटोलादिक्वाथः ।

शृतं पटोलत्रिफलाब्दपाब्दैः
सरोहणीकैः पिचुमन्दयुक्तैः ।
सदेवकाष्ठैश्च जलं नराणां
सर्वज्वरं हन्ति निपीयमानम् ॥ ६४२ ॥

ज्वरे घृतयोग्यावस्था ।

घृतं द्वादशरात्रात्तु देयं सर्वज्वरेषु च ।
तेनान्तरेणाशयगाः स्ततो दोषा भवन्ति हि ॥ ६४३ ॥

विषमज्वरे चित्राङ्ग्यादिचूर्णम् ।

चित्राङ्गी सिंहवदनस्ताम्रमूली महौषधम् ।
पयोधरशिवं काली चूर्णमुष्णाम्बुसंयुतम् ॥ ६४४ ॥
प्रपीतं विषमं हन्ति जठरानलदीपनम् ।

सर्वज्वरहरगणः ।

युग्मं मृगपतेरास्यं शूकरोमरुभूमिजः ॥ ६४५ ॥
चक्राङ्का रामसेनश्च सर्वज्वरहरो गणः ।

ज्वरे मुखधावनयोगः ।

हरीतकी प्रियङ्गुश्च पिप्पली रोध्रमेव च ॥ ६४६ ॥
दार्वी हरिद्रा तेजोह्वा सक्षौद्रं मुखधावनम् ।
एतेन कटुभावाच्च मुखरोगश्च शाम्यति ॥ ६४७ ॥
वक्त्रं विशदतामेति भक्तच्छन्दश्च जायते ।

अरुचिनाशार्थं कवलप्रयोगौ ।

अजाजी शर्करायुक्ता दाडिमस्वरसेन तु ॥ ६४८ ॥
रुचिष्यो मधुना युक्तः कर्तव्यः कवलग्रहः ।
रोध्रं मुस्तं सतेजोह्वं पिप्पली तगरं तथा ॥ ६४९ ॥

---

१ 'निशाब्दैः' ख. ।

महती पञ्चमूली तु वातश्लेष्माधिके तथा।

ज्वरातिसारे उत्पलादिक्वाथः।

उत्पलं दाडिमं त्वक् च पद्मकेसरमेव च ॥ ६६९ ॥
पिबेत्तन्दुलतोयेन ज्वरातीसारनाशनम्।

ज्वरातिसारे उशीरादिक्वाथः।

उशीरं बालकं मुस्तं धान्यकं बिल्वमेव च ॥ ६७० ॥
समङ्गा धातकी रोध्रं विश्वं दीपनपाचनम्।
हन्त्यरोचकपिच्छामं विबन्धं सातिवेदनम् ॥ ६७१ ॥
सशोणितमतीसारं सज्वरं वाथ विज्वरम्।

ज्वरातिसारे दशमूल्यादिक्वाथः।

दशमूलीकषायेण शुण्ठीमक्षसमां पिबेत् ॥ ६७२ ॥
ज्वरे चैवातिसारे च सशोथे ग्रहणीगदे।

ज्वरातिसारे किराताद्विक्वाथः।

किराताब्दामृताविश्वाचन्दनोदीच्यवत्सकैः।
दाहतृष्णाज्वरच्छर्दिशोफातीसारनाशनः ॥ ६७३ ॥

ज्वरातिसारे द्वितीय उशीरादिक्वाथः।

उशीरपाठाकुटजाटरूष-
श्रीखण्डमुस्तातिविषाविमिश्रः।
सनागरः क्वाथवरः सुखाय
ज्वरातिसारे मधुनाऽन्वितो भवेत् ॥ ६७४ ॥

ज्वरातिसारे गुडूच्यादिक्वाथः।

गुडूच्यतिविषोशीरं गिरिमल्ली च मोचकः।
कुष्ठं लज्जावतीयष्टीमधुचन्दनसारिवाः ॥ ६७५ ॥
एषां कषायः कथितो मधुना च विमिश्रितः।
हन्ति ज्वरातिसारं स कुक्षिशूलं निषेवितः ॥ ६७६ ॥

ज्वरातिसारे गोक्षुरादिक्वाथः।

गोक्षुरश्चन्दनं यष्टी कुटजोऽतिविषामृता।
मुस्तावालककुष्ठानि कैरातः समभागतः ॥ ६७७ ॥

अष्टावशेषितः क्वाथो निपीतो मधुना सह।
ज्वरातीसारजित्प्रोक्तः कुक्षिशूलेऽपि पूजितः॥ ६७८॥

ज्वरादावपथ्यानि।

वर्जयेद्द्विदलं शूली, कुष्ठी मांसं, ज्वरी घृतम्।
नवमन्नमतीसारी, नेत्ररोगी च मैथुनम्॥ ६७९॥

ज्वरे पथ्यानि।

शालयो रक्तशाल्याद्याः शस्यन्ते षष्टिकस्तथा।
पटोलपत्रवार्ताककर्कोटाद्या नवज्वरे॥ ६८०॥
अष्टदालीकृता मुद्गाः शालिलाजाश्च धान्यकम्।
जीरकं सैन्धवं तोयमेभिः पेया प्रशस्यते॥ ६८१॥
पटोली वास्तुकं मेथी तुण्डिका शतपुष्पिका।
तन्दुली तिलपर्णीका ज्वरिणां पथ्यकृद्गणः॥ ६८२॥

इति ज्वरातीसारचिकित्सा।

इति वैद्यवरश्रीसोढलप्रथिते गदनिग्रहे चिकित्साखण्डे ज्वराधिकारः प्रथमः।

---

## अथातिसाराधिकारो द्वितीयः।

अतिसारनिदानम्।

गुर्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः।
विरुद्धाध्यशनाजीर्णैरसात्म्यैश्चापि भोजनैः॥ १॥
स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषैर्भयैः।
शोकाद्दुष्टाम्बुमद्यातिपानात्सात्म्यर्तुपर्ययैः॥ २॥
जलातिरमणैर्वेगविघातैः कृमिदोषतः।
नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते॥ ३॥

अतिसारसंप्राप्तिः।

संशम्यापां धातुरग्निं प्रवृद्धो
वर्चोमिश्रो वायुनाधः प्रणुन्नः।

वृद्धोऽतीवाधः सरत्येष यस्मा-
द्व्याधिं घोरं तं त्वतीसारमाहुः ॥ ४ ॥
एकैकस्मात् सर्वशश्चापि दोषैः
शोकेनान्यः षष्ठ आमेन चोक्तः ।
केचित्प्राहुर्नैकरूपप्रकारं
नैवेत्येवं काशिराजस्त्ववोचत् ॥ ५ ॥

अतिसारपूर्वरूपाणि ।

हृन्नाभिपायूदरकुक्षितोद-
गात्रावसादानिलवेगरोधाः ।
विड्बन्ध आध्मानमथाविपाको
भविष्यतस्तस्य पुरःसराणि ॥ ६ ॥

वातातिसारलक्षणानि ।

अरुणं फेनिलं रूक्षमल्पमल्पं मुहुर्मुहुः ।
सकृदामं सरुक्शब्दं मारुतेनातिसार्यते ॥ ७ ॥

पित्तातिसारलक्षणानि ।

पित्तात्पीतं हारितं लोहितं वा
तृष्णामूर्च्छादाहपाकोपपन्नम् ।

कफातिसारलक्षणानि ।

शुक्लं सान्द्रं सकफं श्लेष्मणा च
विस्रं शीतं हृष्टरोमा मनुष्यः ॥ ८ ॥

सन्निपातातिसारलक्षणम् ।

वराहस्नेहमांसाम्बुसदृशं सर्वरूपिणम् ।
कृच्छ्रसाध्यमतीसारं विद्याद्दोषत्रयोद्भवम् ॥ ९ ॥

शोकातिसारलक्षणम् ।

तैस्तैर्भावैः शोचतोऽल्पाशनस्य
बाष्पोष्मा वै वह्निमाविश्य जन्तोः ।

कोष्ठं गत्वा क्षोभयेत्तस्य रक्तं
तच्चाधस्तात्काकणन्तीप्रकाशम् ॥ १० ॥
निर्गच्छेद्वै विड्विमिश्रं ह्यविड्वा
निर्गन्धं वा गन्धवद्वाऽतिसारः ।
शोकोत्पन्नो दुश्चिकित्स्योऽतिमात्रं
रोगो वैद्यैः कष्ट एष प्रदिष्टः ॥ ११ ॥

आमातिसारलक्षणम् ।

अन्नाजीर्णात्प्रद्रुताः क्षोभयन्तः
कोष्ठं दोषा धातुसङ्घान् मलांश्च ।
नानावर्णं नैकशः सारयन्ति
शूलोपेतं षष्ठमेनं वदन्ति ॥ १२ ॥

आमपुरीषलक्षणम् ।

संसृष्टमेभिर्दोषैस्तु न्यस्तमप्स्ववसीदति ।
पुरीषं भृशदुर्गन्धि पिच्छिलं चामसंज्ञितम् ॥ १३ ॥

पक्वपुरीषलक्षणम् ।

एतान्येव तु लिङ्गानि विपरीतानि यस्य वै ।
लाघवं च विशेषेण तस्य पक्वं विनिर्दिशेत् ॥ १४ ॥

अतिसारासाध्यलक्षणानि ।

पक्वजाम्बवसंकाशं यकृत्पिण्डनिभं च यत् ।
घृततैलवसामज्जवेसवारपयोदधि- ॥ १५ ॥
मांसधावनतोयाभं कृष्णनीलारुणप्रभम् ।
मेचकं स्निग्धकर्बूरं चन्द्रिकोपगतं घनम् ॥ १६ ॥
कुणपं मस्तुलुङ्गाभं दुर्गन्धि कुथितं बहु ।
तृष्णादाहतमःश्वासहिक्कापार्श्वार्तिशूलिनम् ॥ १७ ॥
संमूर्च्छारतिसंमोहयुक्तं पक्वलीगुदम् ।
असंवृतगुदं क्षीणं सदाध्मातमुपद्रुतम् ॥ १८ ॥

गुदे पक्के गतोष्माणमतिसारिणमुत्सृजेत्।
श्वासशूलपिपासार्तं क्षीणं ज्वरनिपीडितम्॥ १९॥
विशेषेण नरं वृद्धमतीसारो विनाशयेत्।
हस्तपादाङ्गुलीसन्धिप्रपाको मूत्रनिग्रहः॥ २०॥
पुरीषस्योष्णताचैव मरणायातिसारिणः।

रक्तातिसारलक्षणम्।

पित्तकृन्ति यदात्यर्थं द्रव्याण्यश्नाति पैत्तिके॥ २१॥
तदा प्रजायते तीक्ष्णो रक्तातीसार उल्बणः।
दोषलिङ्गेन मतिमान् संसर्गं तत्र लक्षयेत्॥ २२॥

प्रवाहिकालक्षणम्।

वायुः प्रवृद्धो निचितं बलासं
नुदत्यधस्तादहिताशनस्य।
प्रवाहतोऽल्पं बहुशो मलाक्तं
प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः॥ २३॥
प्रवाहिका वातकृता सशूला
पित्तात्सदाहा सकफा कफाच्च।
सशोणिता शोणितसंभवा च
ताः स्नेहरूक्षप्रभवा मतास्तु॥ २४॥
तासामतीसारवदादिशेच
लिङ्गं क्रमं चामविपक्कतां च।

अतिसारनिवृत्तिलक्षणम्।

यस्योच्चारं विना मूत्रमधो वायुश्च वर्तते।
दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः॥ २५॥

वातातिसाराणां प्रकारान्तरेण लक्षणानि।

शूलं शब्दो गुदे गात्रे शैथिल्यं कुक्षिवेदना।
अल्पाल्पमलता ज्ञेयो वातातीसार एव हि॥ २६॥

अन्तर्दाहो मलः पीतो नीलो वापि तृषाऽरुचिः।
श्रमोऽतीवेति विज्ञेयं पित्तातीसारलक्षणम् ॥ २७ ॥
दुर्गन्धः शीतलः पाण्डुः पिच्छिलो मन्दवेदनः।
मलः स्यादिति विज्ञेयं श्लेष्मातीसारलक्षणम् ॥ २८ ॥

अतिसारासाध्यलक्षणानि।

लशुनकुणपगन्धं पूतिगन्धं घनं वा
पललजलसमानं पक्वजम्बूनिभं वा।
घृतमधुपयसाभं तैलसेवालतुल्यं
सघनदधिसवर्णं वर्जयेच्चातिसारम् ॥ २९ ॥
जम्बूपक्वरसाज्यतैलपललक्षाराम्बुमज्जावसा-
सच्छायं बहु वेसवारपयसा तुल्यं च कृष्णं घनम्।
नीलं मेचकमारुणं च शववद्गन्धं च चन्द्रप्रभं
निर्गन्धं कथितं कुलत्थजलवत्साम्मस्तुलुङ्गप्रभम् ॥३०॥
स्निग्धं चन्द्रिकयान्वितं तनुशकृत्पिण्डाभमाव्राहिकं
वर्चो वीक्ष्य चिकित्सकैरिति सदा वर्ज्यो ह्यतीसारकी।

अतिसारनिदानोपसंहारः।

षोढातिसारोऽपि विचिन्तनीयः सामो निरामश्च पुनर्द्विधा सः।
पुनस्तथैवं परिचिन्तनीया प्रवाहिका सापि चतुर्विधा च ॥ ३१ ॥

इत्यतीसारनिदानम्।

---

## अथातिसारचिकित्सितम्।

अतिसारे लङ्घनम्।

लङ्घनमेकं मुक्त्वा न चान्यदस्तीह भेषजं बलिनः।
समुदीर्णदोषनिचयं शमयति तत्पाचयत्यपि च ॥ ३२ ॥

अतिसारे पिपासाचिकित्सा।

धान्योदीच्यशृतं तोयं तृष्णादाहातिसारिणे।
ह्रीबेरशृङ्गबेराभ्यां मुस्तपर्पटकेन वा ॥ ३३ ॥

शृतोदीच्यशृतं तोयं देयं वापि पिपासवे।

अतिसारे आहारकल्पना।

शालिपर्ण्यादिसिद्धेन साधितेन शुभिन्दुना ॥ ३४ ॥
मयूरजेन यूषेण पथ्यं स्याल्लावकस्कुभिः।
गुर्वी पिण्डी खराऽत्यर्थं लघ्वी सैव विपर्ययात् ॥ ३५ ॥
सक्तूनामाशु जीर्येत मृदुत्वादवलेहिका।
लाजमण्डकृतैर्योगैस्तैः कृता हस्तमण्डिका ॥ ३६ ॥
वरसुरा यवागूर्वा प्रशतं क्षीरभक्तकम्।
सुनिषण्णकवार्ताकं कशटं हितमुच्यते ॥ ३७ ॥
शाकमांसफलैर्युक्ता विलेप्योऽम्लाश्च दुर्जराः।
शालिपर्णी पृश्निपर्णी बृहती कण्टकारिका ॥ ३८ ॥
बलाश्वदंष्ट्राबिल्वानि पाठानागरधान्यकम्।
एतदाहारसंयोगे हितं सर्वातिसारिणाम् ॥ ३९ ॥
तृष्णापनयनी लघ्वी दीपनी बस्तिशोधनी।
ज्वरे चैवातिसारे च यवागूः सर्वदा हिता ॥ ४० ॥
शालिपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता।
दाडिमाम्ला हिता पेया पित्तश्लेष्मातिसारिणाम् ॥ ४१ ॥
धान्यपञ्चकसिद्धो वा धान्यविश्वाकृतोऽथवा।
आहारो भिषजा योज्यो वातपित्तातिसारिणाम् ॥ ४२ ॥
लघुना पञ्चमूलेन वातपित्ते प्रशस्यते।

अतिसारे पक्वाममललक्षणम्।

आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः ॥ ४३ ॥
अतः सर्वेऽतिसारास्तु ज्ञेयाः पक्वामलक्षणैः।
मज्जत्यामा गुरुत्वाद्विट् पक्वा तूत्प्लवते जले ॥ ४४ ॥
विनाऽतिद्रवसङ्घातशैत्यश्लेष्मप्रदूषणात्।
आमं दुर्गन्धि साटोपं विष्टम्भार्तिप्रसेककृत् ॥ ४५ ॥

विपरीतं निरामं तु कफात्पक्वं निमज्जति ।

आमेऽतिसारे संग्रहणौषधनिषेधः ।

नामे संग्रहणं दद्यादतीसारे कथंचन ॥ ४६ ॥
अकाले संगृहीतो हि विकारान् कुरुते बहून् ।
शोफपाण्ड्वामयप्लीहकुष्ठगुल्मोदरज्वरान् ॥ ४७ ॥
दण्डकालसकाध्मानग्रहण्यर्शोगदांस्तथा ।

आमातिसारेऽपि स्तम्भनयोग्यावस्था ।

क्षीणधातुबलार्तस्य बहुदोषोऽतिनिःसृतः ॥ ४८ ॥
आमोऽपि स्तम्भनीयः स्यात्पाचनान्मरणं व्रजेत् ।

अतिसारे विरेचनम् ।

स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्यते ॥ ४९ ॥
अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ।

आमातिसारे कुटजादिक्वाथः ।

कुटजो दाडिमं मुस्तं धातकी बिल्ववालकम् ॥ ५० ॥
रोध्रचन्दनपाठाश्च कषायं मधुना पिबेत् ।
सामे सशूले रक्ते च पिच्छास्रावे च शस्यते ॥ ५१ ॥
कुटजादिरिति ख्यातः सर्वातीसारनाशनः ।

आमातिसारे हरिद्रादिवचादिगणोपयोगः ।

हरिद्रादिं वचादिं वा पिबेदामेषु बुद्धिमान् ॥ ५२ ॥

आमातिसारे यवाग्वादिषु पिप्पलीगणोपयोगः ।

मण्डयूषयवागूषु पिप्पल्यादिं च योजयेत् ।

आमातिसारे धान्यपञ्चकम् ।

धान्यनागरमुस्तं च वालकं बिल्वमेव च ॥ ५३ ॥
आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ।

पित्तातिसारे धान्यचतुष्कम् ।

पित्ते धान्यचतुष्कं तु शुण्ठीत्यागाद्वदन्ति हि ॥ ५४ ॥

पक्वातिसारे संग्रहणौषधदानम् ।

पक्वोऽसकृदतीसारो ग्रहणीमार्दवाद्यदा ।
प्रवर्तते तदा कार्यः क्षिप्रं संग्राहको विधिः ॥ ५५ ॥

वातातिसारे पञ्चमूल्यादियोगः ।

पञ्चमूलीबलाशुण्ठीधान्यकोत्पलबिल्वकाः ।
वातातिसारिणां देयास्तक्रेणान्यतमेन हि ॥ ५६ ॥

पक्वातिसारे गङ्गाधरो योगः ।

कञ्चटदाडिमजम्बूशृङ्गाटकपत्रबिल्वह्रीबेरम् ।
जलधरनागरसहितं गङ्गामपि वेगिनीं रुन्ध्यात् ॥ ५७ ॥

पक्वातिसारे द्वितीयो गङ्गाधरः ।

मोचरसमुस्तनागरपाठारलुधातकीकुसुमैः ।
चूर्णं मथितसमेतं रुणद्धि गङ्गाप्रवाहमपि ॥ ५८ ॥

पक्वातिसारे तृतीयो गङ्गाधरः ।

मुस्तावत्सकबीजं मोचरसो बिल्वधातकीरोध्रम् ।
गोमथितसंप्रयुक्तं गङ्गामपि वाहिनीं रुन्ध्यात् ॥ ५९ ॥

शुण्ठीन्दीवरकेसराजशिखरीक्षीराविकादीप्यकं
मूर्वावर्तकजीरकद्वययुतं भृष्टं मनाक्खर्परैः ।
पिष्ट्वा पर्युषिताम्बुना दिनमुखे पीतं निहन्त्याशु णां
नानावर्णमथातिसारकगदं प्रोवाच धन्वन्तरिः ॥ ६० ॥

सर्वातिसारे गङ्गाधरचूर्णम् ।

कट्वङ्गमुस्ते कुटजस्य बीज-
माम्रास्थिशुण्ठीजलरोध्रपाठाः ।
जम्बूफलं कोमलबिल्वधात्री-
विपाद्ययष्ट्योप्यथ धातकी च ॥ ६१ ॥
गङ्गाधरं नाम वदन्ति चूर्णं
सर्वानतीसारगदान्निहन्ति ॥ ६२ ॥

किराततिक्तकं मुस्तं वत्सकं सरसाञ्जनम्।
पिबेत्पित्तातिसारघ्नं सक्षौद्रं वेदनापहम् ॥ ६३ ॥

पित्तातिसारे इन्द्रयवक्काथः।

पलं वत्सकबीजस्य श्रपयित्वा जलं पिबेत्।
यो रसाशी जयेच्छीघ्रं स पैत्तं जठरामयम् ॥ ६४ ॥

पित्तश्लेष्मातिसारे कुटजादिक्काथः।

कुटजातिविषामुस्तं हरिद्रा पर्णिनीद्वयम्।
सक्षौद्रशर्करं शस्तं पित्तश्लेष्मातिसारिणाम् ॥ ६५ ॥

अतिसारे कुटजादिकषायः।

कुटजत्वक्फलं मुस्तं क्राथयित्वा पिबेज्जलम्।
अतीसारं जयेदाशु शर्करामधुयोजितम् ॥ ६६ ॥

छर्दियुक्तातिसारे बिल्वादिक्काथः।

बिल्वचूतास्थिनिर्यूहः पीतः सक्षौद्रशर्करः।
निहन्याच्छर्द्यतीसारं वैश्वानर इवाहुतिम् ॥ ६७ ॥

अतिसारे प्रियङ्ग्वादिचूर्णम्।

प्रियङ्ग्वञ्जनमुस्ताख्यं पाययेत यथाबलम्।
तृष्णातीसारछर्दिघ्नं सक्षौद्रं तन्दुलाम्बुना ॥ ६८ ॥

अतिसारे पटोलादिक्काथः।

पटोलयवधान्यानां क्राथः पेयः सुशीतलः।
शर्करामधुसंयुक्तश्छर्द्यतीसारनाशनः ॥ ६९ ॥

श्लेष्मातिसारचिकित्सा।

श्लेष्मातिसारे प्रथमं हितं लङ्घनपाचनम्।
योज्यश्चामातिसारघ्नो यथोक्तो दीपनो गणः ॥ ७० ॥

आमातिसारे त्र्यूषणादिचूर्णम्।

त्र्यूषणातिविषाहिङ्गुवचासौवर्चलाभयाः।
पीत्वोष्णेनाम्भसा हन्यादामातीसारमुद्धतम् ॥ ७१ ॥

आमातिसारे हिङ्गलकरसः।

दलोत्थः खरसः पीतो हिङ्गलस्य समाक्षिकः।
जयत्याममतीसारं क्वाथो वा कुटजोद्भवः॥ ७२॥

सर्वातिसारे कुटजादिलेहः।

कुटजत्वकृतः क्वाथो घनीभूतः सुशीतलः।
लेहितोऽतिविषायुक्तः सर्वातीसारनुद्भवेत्॥ ७३॥
लेहे यत्रास्ति नो भागो निर्दिष्टो द्रवकल्कयोः।
तत्रापि पादिकः कल्को द्रवात्कार्यो विजानता॥ ७४॥
इत्थं तत्राष्टमांशेन क्वाथादतिविषारजः।

रक्तातिसारे दाडिमत्वचादिकल्कः।

कषायो मधुना पीतस्त्वचो दाडिमवत्सकात्॥ ७५॥
सद्यो जयेदतीसारं रक्तजं दुर्निवारकम्।

रक्तातिसारे बिल्वयोगः।

गुडेन खादयेद्बिल्वं रक्तातीसारनाशनम्॥ ७६॥
आमशूलविबन्धघ्नं कुक्षिरोगविनाशनम्।

रक्तातिसारे दाडिमीत्वचादिकल्कः।

दाडिमीकुटजयोस्त्वचाकृतं यः कषायमुपसेवते नरः॥७७॥
शोणितातिसरणार्दितो मधुप्लावितं स लभतेऽचिरात्सुखम्।

रक्तातिसारे शल्लकीत्वचादियोगः।

शल्लकीबदरीजम्बूपियालाम्रार्जुनत्वचः।
पीताः क्षीरेण मध्वाढ्याः पृथक् शोणितनाशनाः॥ ७८॥

रक्तातिसारे शतावरीकल्कः।

पीत्वा शतावरीकल्कं पयसा क्षीरभुग्जयेत्।
रक्तातिसारं पीत्वा वा तया सिद्धं घृतं नरः॥ ७९॥

आमातिसारे वत्सकादिक्वाथः।

सवत्सकः सातिविषः सबिल्वः
सोदीच्यमुस्तश्च कृतः कषायः।

सामे सशूले सहशोणिते च
चिरप्रवृत्तेऽपि हितोऽतिसारे ॥ ८० ॥

अतिसारे कलिङ्गपद्गः ।

बिधाकलिङ्गातिविषाब्दबिल्वैः
सबालकैरुत्क्वथितः कषायः ।
तस्मै सशूलाय सशोणिताय
सामाय शस्तोऽथ कलिङ्गपद्गः ॥ ८१ ॥

रक्तातिसारे कलिङ्गपद्गः ।

सहरीतकीप्रतिविषारुचकं सवचं सहिङ्गुसकलिङ्गयवम् ।
इति तत्कलिङ्गयवपद्गमिदं रुधिरातिसारगुदशूलहरम् ॥ ८२ ॥

आमातिसारे सौवर्चलादिचूर्णम् ।

सौवर्चलं प्रतिविषा हिङ्गुपथ्याकलिङ्गकाः ।
शुण्ठी चामातिसारघ्नं शूलघ्नं ग्राहि पाचनम् ॥ ८३ ॥

सामपित्तातिसारे बिल्वादिकषायः ।

बिल्वशक्रयवाम्भोदबालकातिविषाकृतः ।
कषायो हन्त्यतीसारं सामं पित्तसमुद्भवम् ॥ ८४ ॥

भयादिसमुत्थातिसारचिकित्सा ।

भयशोकसमुद्भूते क्रिया वातहरा सदा ।
सर्वजे बहुवर्णत्वात्पुटपाकक्रिया मता ॥ ८५ ॥

अतिसारावस्थायां पुटपाकयोगः ।

अवेदनं सुसंपक्वं दीप्ताग्नेः सुचिरोत्थितम् ।
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ ८६ ॥

सर्वातिसारे कुटजत्वक्पुटपाकः ।

स्निग्धं घनं कुटजवल्कमजन्तुजग्ध-
मादाय तत्क्षणमतीव च पोथयित्वा ।
जम्बूपलाशपुटतन्दुलतोयसिक्तं

सुखिन्नमेतदवपीड्य रसं गृहीत्वा
क्षौद्रेण युक्तमतिसारवते च दद्यात् ।
कृष्णात्रिपुत्रमतपूजित एष योगः
सर्वातिसारहरणे स्वयमेव राजा ॥ ८८ ॥

सर्वातिसारे अरलुत्वक्पुटपाकः ।

श्रीपर्णिपर्णावृतदीर्घवृन्तज-
त्वक्पिण्डकात्तन्दुलवारिकल्किताद् ।
मृद्वेष्टितादग्निविपाचिताद्रसं
पिबेदतीसारहरं समाक्षिकम् ॥ ८९ ॥

सर्वातिसारे वटादिपुटपाकः ।

इत्युक्तया कल्पनया वटादिना
कल्कीकृतेनोदरगेन तित्तिरेः ।
प्रकल्पितः स्यात्पुटपाकजो रसः
सशर्करः क्षौद्रयुतोऽतिसारजित् ॥ ९० ॥

पुटपाकसिद्धिलक्षणम् ।

पुटपाकस्य पाकोऽयं बहिरारक्तवर्णता ॥ ९१ ॥

आमातिसारे मधुपक्वहरीतकी ।

छिन्नामबिल्वयवगोक्षुरकोरुबूक-
छिन्नोद्भवातुपजलैर्मधुनावलीढा ।
बद्धाल्पविट्कमतिशूलमसृग्विमिश्र-
मामातिसारमुपहन्ति हरीतकीयम् ॥ ९

आमातिसारे नाभावार्द्रकस्वरसपूरणम् ।

पीत्वा गलवालं सुदृढं पिष्टैरामलकैर्भिषक् ।
रक्तातिस-स्वरसेनाशु पुरयेन्नाभिमण्डलम् ॥ । ८७ ॥
सवत्सकः पभं वेगं भद्दं दुर्धरं नृणाम् ।
सोदीच्य एजमयं नाशयत्येष योग

अतिसारेऽङ्कोल्लमूलयोगः।

मूलकल्कः सर्षोद्रस्तण्डुलाम्बुना पीतः।
वारिवेगं झटिति निरुन्ध्यादतीसारम् ॥ ९५ ॥

वत्सकादा गुटिका।

स्यामृतायाश्च द्वे पले प्रसर्मादकम्।
का रसे तस्मिन् पादशेषेऽवतारिते ॥ ९६ ॥
लानि शक्रस्य यवाश्चूर्णीकृतानि च।
विदित्वा तु यथा चाग्न्यवतारितम् ॥ ९७ ॥
तीतिसारांश्च सर्वांश्च ग्रहणीगदान्।
पयेयामि कृष्णात्रेयस्य शासनात् ॥ ९८ ॥

आमातिसारे शुण्ठ्यादिक्वाथः।

ाघनवचातिविषामराद-
ोऽथ विश्वजलदातिविषाम्बुनो वा।
ारशमनः कथितः कषायः
ेघनप्रतिविषामृतवह्निनो वा ॥ ९९ ॥

[illegible]

[illegible]

कुण्डलीकैः सकिराततिक्तैः।
नैरुत्कथितैर्निपेवितं
ज्वरं हन्त्यतिसारमामजम् ॥ १०० ॥

आमातिसारे चित्रकादिचूर्णम्।

पिप्पलीमूलं वचा कटुकरोहिणी।
कबीजानि हरीतकी महौषधम् ॥ १०१ ॥
मूत्थानमतिसारं सवेदनम्।
सपित्तं च वर्चो बध्नाति वै ध्रुवम् ॥ १०२ ॥

पित्तातिसारे रसाञ्जनादिचूर्णम्।

सातिविषं कुटजस्य फलं त्वचम्।
र्कीं शृङ्गवेरं च पाययेत्

माक्षीकयुक्तं नुदति पित्तातीसारमुल्बणम् ।
मन्दं दीपयते चाग्निं शूलं चाशु निवर्तयेत् ॥ १०४ ॥

रक्तातिसारे जम्ब्वादिस्वरसः ।

जम्ब्वाम्रामलकीनां तु पल्लवानथ कुट्टयेत् ।
संगृह्य स्वरसं तेषामजाक्षीरेण योजयेत् ॥ १०५ ॥
तं पिबेन्मधुना युक्तं रक्तातीसारनाशनम् ।

आमातिसारे पथ्यादिचूर्णम् ।

पथ्या सौवर्चलं हिङ्गु सैन्धवातिविषे वचा ॥ १०६ ॥
आमातिसारं कफजं पीतमुष्णाम्भसा जयेत् ।

श्लेष्मातिसारे वत्सकादिचूर्णम् ।

वत्सकौ द्वौ प्रतिविषा शृङ्गवेरं रसाञ्जनम् ॥ १०७ ॥
धातकी द्विगुणा क्षौद्रयुतं श्लेष्मातिसारनुत् ।

श्लेष्मातिसारे पाठादिचूर्णम् ।

पाठा वचा त्रिकटुकं कुष्ठं कटुकरोहिणी ॥ १०८ ॥
पीतमुष्णाम्बुना चैतच्छ्लेष्मातीसारनाशनम् ।

वातपित्तातिसारे कलिङ्गादिचूर्णम् ।

कलिङ्गं कट्फलं मुस्तं दारुः सातिविषा शिवा ॥१०९॥
कल्कं तण्डुलतोयेन पिबेत्पित्तानिलामयी ।

पित्तश्लेष्मातिसारे मुस्तादिकषायः ।

मुस्तं सातिविषा दार्वी वचा शुण्ठी च वत्सकम् ॥११०
कषायं क्षौद्रसंयुक्तं श्लेष्मपित्तातिसारिणाम् ।

वातश्लेष्मातिसारे बिल्वादिकषायः ।

बिल्वं वत्सकबीजानि पाठा हिङ्गुशिवाटिका ॥ १११ ॥
वातश्लेष्मातिसारे च कषायं पाचनं पिबेत् ।

वातश्लेष्मातिसारे देवदार्वादिकषायः ।

पूतिदारुवचारोध्रं कलिङ्गफलनागरम् ॥ ११२ ॥

दाडिमाम्लयुतं दद्याद्वातश्लेष्मातिसारिणाम् ।

सर्वातिसारे कुटजादिघृतम् ।

कुटजक्वाथतुल्योऽत्र दाडिमस्य रसो मतः ॥ ११३ ॥
वत्सकस्य तु बीजानि दार्व्याश्च त्वच उत्तमाः ।
पिप्पली शृङ्गवेरं च लाक्षा कटुकरोहिणी ॥ ११४ ॥
षड्भिरेतैर्घृतं सिद्धं पेयामण्डावचारितम् ।
अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ॥ ११५ ॥

अतिसारे क्षीरयोगः ।

यथाऽमृतं तथा क्षीरमतीसारेषु पूजितम् ।
चिरोत्थितेषु तत्पेयमपां भागैस्त्रिभिः शृतम् ॥ ११६ ॥

प्रवाहिकालक्षणम् ।

स्रुते रक्ते पुरीषे च वायुना विद्धि वर्जितम् ।
प्रवाहिकेति तत्ख्यातं यत्फेनाभं प्रवर्तते ॥ ११७ ॥

प्रवाहिकायां बिल्वादिलेहः ।

बालबिल्वं गुडं तैलं पिप्पलीविश्वभेषजम् ।
लिह्याद्वाते प्रतिहते सशूलः सप्रवाहिकः ॥ ११८ ॥

प्रवाहिकायां पिप्पल्यादिकल्कयोगः ।

पयसा पिप्पलीकल्कः पीतो वा मरिचोद्भवः ।
त्र्यहान्निर्वाहिकां हन्याच्चिरकालानुबन्धिनीम् ॥ ११९ ॥
यथा यथा सतैलः स्याद्वातशान्तिस्तथा तथा ।
प्रशान्ते मारुते चापि शान्तिं याति प्रवाहिका ।
तस्मात्प्रवाहिकारोगे मारुतं शमयेद्भिषक् ॥ १२० ॥

प्रवाहिकायां द्वितीयो बिल्वादिलेहः ।

बिल्वपेशीगुडं रोध्रं तैलं मारिचयोजितम् ।
लीढ्वा निर्वाहिकाक्रान्तः क्षिप्रं सुखमवाप्नुयात् ॥ १२१ ॥

प्रवाहिकायामाहारकल्पना ।

दध्ना ससारेण समाक्षिकेण
भुञ्जीत निस्सारकपीडितस्तु ।

सुतसक्तुप्यैरुथितेन वापि
क्षीरेण शीतेन मधुप्लुतेन ॥ १२२ ॥

नवातिसारे वटजटायोगः।

गव्येन तक्रेण सह प्रपिष्य
न्यग्रोधपादाः परिपीयमानाः।
नवोद्भवं घ्नन्त्यतिसारमाशु
यथा तमिस्राणि नवोंऽशुमाली ॥ १२३ ॥

अतिसारे बब्बूलपल्लवयोगः।

बब्बूलपल्लवचयं सलिलेन सार्धं
संपिष्य यः पिबति तस्य कुतोऽतिसारः।
पिष्टोदकेन वननादजटा तु हन्ति
तं रक्तयुक्तमपि माक्षिकशर्कराभ्याम् ॥ १२४ ॥

सर्वातिसारे मुस्तादिचूर्णम्।

मुस्तमोचरसरोध्रधातकी-
पुष्पबिल्वगिरिमल्लिजैः फलैः।
चूर्णितैः सगुडतक्रसेवितै-
र्निम्नगाजलरयोऽपि रुध्यते ॥ १२५ ॥

सर्वातिसारेऽजमोदादिचूर्णम्।

अजमोदा मोचरसं सशृङ्गबेरं च धातकीकुसुमम्।
गोमथितसंप्रयुक्तं गङ्गामपि वाहिनीं रुन्ध्यात् ॥ १२६ ॥

सर्वातिसारे मुस्तकक्वाथः।

क्वाथश्च मुस्तककृतः समधुः सुशीतः
पीतः प्रवृद्धमतिसारगदं निहन्ति।

पक्वातिसारे कुटजादिलेहः।

पक्वातिसारमथ कौटजकल्कलेहः
साम्बष्ठकादिमधुकादियुतः द्रवो वा ॥ १२७ ॥

१ कुप्यं लोहादिधातु।

श्लेष्मातिसारे वचाद्यं चूर्णम्

वचा त्रिकटुकं पाठा कुष्ठं च कटुरोहिणी।
एतत्सोष्णजलं चूर्णं पिबेच्छ्लेष्मातिसारजित्॥ १२८॥

अतिसारे दाडिमादिकल्कः।

दाडिमीधातकीमूलकण्टारीकुटजत्वचः।
रोध्रं तण्डुलतोयेन प्रपिष्टमतिसारजित्॥ १२९॥

गुददाहप्रपाकयोः परिषेकः।

गुददाहे प्रपाके वा पटोलमधुकाम्बुना।
सेकादिकं प्रशंसन्ति छागेण पयसाऽथवा॥ १३०॥

गुदनिःसरणप्रतिकारः।

स्वेदोऽथ मौपकैर्मांसैर्गोवसाभिश्च म्रक्षणम्।
गुदनिःसरणे शस्तं चाङ्गेरीघृतमुत्तमम्॥ १३१॥

अतिसारोपद्रवचिकित्सा।

शोफादीनविरोधाच साधयेत्स्वैश्चिकित्सितैः।
शोफं शूलं ज्वरं तृष्णां श्वासं कासमरोचकम्॥१३२॥
छर्दिं मूर्च्छां च हिक्कां च दृष्ट्वाऽतीसारिणं त्यजेत्।

अतिसारे वर्ज्यानि।

स्नानाभ्यङ्गावगाहांश्च गुरुस्निग्धादिभोजनम्।
व्यायाममग्निसन्तापमतीसारी विवर्जयेत्॥ १३३॥

इति वैद्यवरश्रीसोढलप्रथिते गदनिग्रहे द्वितीये कायचिकित्साखण्डेऽतीसाराधिकारो द्वितीयः।

---

## अथ ग्रहणीरोगाधिकारस्तृतीयः।

ग्रहणीसंप्राप्तिः।

अतीसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः।
भूयः संदूषितो वह्निर्ग्रहणीमभिदूषयेत्॥ १॥
ग्रहण्या बलमग्निर्हि स चापि ग्रहणीश्रितः।
तस्मात्संदूषिते वह्नौ ग्रहणी संप्रपद्यते॥ २॥

एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितैः ।
सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति ॥ ३ ॥
पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम् ।
ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः ॥ ४ ॥

ग्रहणीपूर्वरूपम् ।

पूर्वरूपं तु तस्येदं तृष्णाऽऽलस्यं बलक्षयः ।
विदाहोऽन्नस्य पाकश्च चिरात्, कायस्य गौरवम् ॥ ५ ॥

वातिकग्रहण्या निदानादिपूर्वकं लक्षणम् ।

कटुतिक्तकषायातिरूक्षशीतालपभोजनैः ।
प्रमितानशनात्यध्ववेगनिग्रहमैथुनैः ॥ ६ ॥
मारुतः कुपितो वह्निं संछाद्य कुरुते गदान् ।
तस्यान्नं पच्यते दुःखं शुक्तपाकं खराङ्गता ॥ ७ ॥
कण्ठास्यशोषक्षुत्तृष्णातिमिरं कर्णयोः स्वनः ।
पार्श्वोरुवङ्क्षणग्रीवारुगभीक्ष्णं विषूचिका ॥ ८ ॥
हृत्पीडाकार्श्यदौर्बल्यं वैरस्यं परिकर्तिका ।
गृद्धिः सर्वरसानां तु मनसः सदनं तथा ॥ ९ ॥
जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यमुपैति च ।
स वातगुल्महृद्रोगप्लीहाशङ्की च मानवः ॥ १० ॥
चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत् ।
पुनः पुनः सृजेद्वर्चः कासश्वासार्दितोऽनिलात् ॥ ११ ॥

पैत्तिकग्रहण्या निदानादिपूर्वकं लक्षणम् ।

कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्बणम् ।
आप्लावयद्धन्त्यनिलं जलं तप्तमिवानलम् ॥ १२ ॥
सोऽजीर्णं नीलपीताभं पीताभः सार्यते द्रवम् ।
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दितः ॥ १३ ॥

श्लैष्मिकग्रहण्या निदानादिपूर्वकं लक्षणम् ।

गुर्वतिस्निग्धशीतादिभोजनादतिभोजनात् ।
भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितः कफः ॥ १४ ॥

तस्यान्नं पच्यते दुःखं हृल्लासश्छर्द्यरोचकौ ।
आस्योपदेहमाधुर्यं कासष्ठीवनपीनसाः ॥ १५ ॥
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ।
दुष्टो मधुर उद्गारः सदनं स्त्रीष्वहर्षणम् ॥ १६ ॥
भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्तनम् ।
अकृशस्यापि दौर्बल्यमालस्यं च कफात्मके ॥ १७ ॥

त्रिदोषजग्रहण्या लिङ्गम् ।

पृथग्वातादिनिर्दिष्टहेतुलिङ्गसमागमे ।
त्रिदोषं निर्दिशेदेवं तेषां वक्ष्यामि भेषजम् ॥ १८ ॥

ग्रहण्या असाध्यलक्षणानि ।

संसृष्टा व्याधयो यस्य प्रतिलोमाविलोमगाः ।
आपन्नग्रहणीरोगः सोऽर्धमासं न जीवति ॥ १९ ॥

संग्रहग्रहणीलक्षणम् ।

अन्त्रकूजनमालस्यं दौर्बल्यं सदनं भवेत् ।
द्रवं घनं सितं स्निग्धं सकटीवेदनं शकृत् ॥ २० ॥
आमं बहु सपैच्छिल्यं सशब्दं मन्दवेदनम् ।
पक्षान्मासाद्दशाहाद्वा नित्यं वाऽप्यथ मुञ्चति ॥ २१ ॥
दिवा प्रकोपो भवति रात्रौ शान्तिं व्रजत्यपि ।
दुर्विज्ञेया दुर्निवारा चिरकालानुबन्धिनी ॥ २२ ॥
सा भवेदामवातेन सङ्ग्रहग्रहणी परा ।

घटीयन्त्रग्रहणीलिङ्गम् ।

संसृष्टा व्याधयो यस्य गलज्जलघटीध्वनिः ।
तं वदन्ति घटीयन्त्रमसाध्यं ग्रहणीगदम् ॥ २३ ॥

इति ग्रहणीनीदानम् ।

## अथातो ग्रहणीरोगचिकित्सितं व्याख्यास्यामः

ग्रहण्याः सामान्यलक्षणम् ।

भ्रमस्तृष्णाऽरुचिश्छर्दिर्मुखं च विरसं स्रुतिः ।
सनादा चेति सामान्यं ग्रहणीलक्षणं भवेत् ॥ २४ ॥
मुहुर्मुञ्चति गृह्णाति विमुञ्चति मुहुर्मुहुः ।
ग्रहणी सेति विज्ञेया वातपित्तादिदोषजा ॥ २५ ॥

वातिकग्रहणीलक्षणम् ।

हस्तयोः पादयोः कम्पस्तालुशोषः शिरोव्यथा ।
श्वासो मूर्च्छा गुदे कुर्क्षा जठरे चातिवेदना ॥ २६ ॥
मलः सामः सफेनश्च जायते च पुनः पुनः ।
वातोत्थग्रहणीचिह्नमिदमूचुर्विचक्षणाः ॥ २७ ॥

वातिकग्रहण्यां रिङ्गिण्यादिचूर्णम् ।

रिङ्गिणी बृहती कृष्णा काकोलीन्द्रयवौ वचा ।
कर्चूरः सैन्धवं पाठा काचादिविडपूर्वकम् ॥ २८ ॥
लवणं चित्रकश्चूर्णमेषां सौवर्चलान्वितम् ।
तदाशु वातजां हन्ति ग्रहणीं वारिणा युतम् ॥ २९ ॥

पैत्तिकग्रहणीलक्षणम् ।

नीलः पीतोऽथ दुर्गन्धो मलः पीडा गुदे हृदि ।
दाहोऽरुचिस्तृषा चिह्नं पित्तग्रहणिकोद्भवम् ॥ ३० ॥

पैत्तिकग्रहण्यां कटुकादिकल्कः ।

कटुकेन्द्रयवौ पाठां कुटजत्वग्रसाञ्जनम् ।
धातक्यतिविषे शुण्ठीं मुस्तां पिष्ट्वा च वारिणा ॥ ३१ ॥
विष्टम्भमरुचिं रक्तं दाहं च गुदवेदनाम् ।
पित्तोत्थग्रहणीं हन्ति मधुना सह भक्षितः ॥ ३२ ॥

पैत्तिकग्रहण्यां कुटजादिचूर्णम् ।

कुटजोऽतिविषा शुण्ठी मधुकं धातकीफलम् ।
शाल्मलीशुष्कनिर्यासः कणा मुस्ता समांशतः ॥ ३३ ॥

सुश्लक्ष्णं चूर्णमेतेषां मधुना सह भक्षितम् ।
हन्त्यामरक्तपित्तोत्थां ग्रहणीमतिवेगतः ॥ ३४ ॥

श्लैष्मिकसान्निपातिकग्रहणीलिङ्गम् ।

श्वासोऽरुचिर्जलं वक्त्रे रोमाञ्चोऽथ गुरूदरम् ।
श्लेष्मग्रहणिकाचिह्नं, मिश्रं चेत्सा त्रिदोषजा ॥ ३५ ॥

श्लैष्मिकग्रहण्यामभयादिचूर्णम् ।

अभयाऽतिविषा शुण्ठी वचा मुस्तं कणाशिफा ।
विडादिलवणं वह्निः कुष्ठं दारु समांशतः ॥ ३६ ॥
सुश्लक्ष्णचूर्णमेतेषां भक्षितं तप्तवारिणा ।
श्लेष्मजां ग्रहणीं हन्ति पक्वामामां सदाऽचिरात् ॥ ३७॥

ग्रहण्यां सामान्यचिकित्सा ।

ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत् ।
अतीसारोक्तविधिना तस्यामं च विपाचरेत् ॥ ३८ ॥

ग्रहण्यामाहारकल्पना ।

कपित्थबिल्वचाङ्गेरीतक्रदाडिमसाधिता ।
यवागूः पाचयत्यामं शकृत्संवर्तयत्यपि ॥ ३९ ॥
लघुना पञ्चमूलेन पञ्चकोलेन पाठया ।
अन्नानि कल्पयेद्विद्वान् बिल्ववृक्षाम्लदाडिमैः ॥ ४० ॥
ग्रहणीदोषिणां तक्रं दीपनं ग्राहि लाघवात् ।
पथ्यं मधुरपाकित्वान्न च पित्तप्रदूषणम् ॥ ४१ ॥
कषायोष्णविकाशित्वाद्रूक्षत्वाच्च कफे हितम् ।
वाते स्वाद्वम्लसान्द्रत्वात्सद्यस्कमविदाहि तत् ॥ ४२ ॥

सामग्रहण्यां शुण्ठ्यादिक्वाथः ।

शुण्ठीं समुस्तातिविषां गुडूचीं
पिबेज्जलेन क्वथितां समांशाम् ।
मन्दानलत्वे सततामतायां-
मामानुबन्धे ग्रहणीगदे च ॥ ४३ ॥

ग्रहण्यां धान्यकाद्यो दीपनपाचनः क्वाथः ।

धान्यकातिविषोदीच्ययवानीमुस्तनागरम् ।
बला द्विपर्णी बिल्वं च दद्याद्दीपनपाचनम् ॥ ४४ ॥

ग्रहण्यां हरीतकीयोगः ।

शुण्ठीघनवचामाद्रीबिल्वकालिङ्गहिङ्गुभिः ।
आरनालेन सुस्विन्ना मधुना च परिप्लुता ॥ ४५ ॥
लीढा निहन्त्यतीसारं ग्रहणीं च हरीतकी ।

ग्रहण्यां बिल्वशलाटुयोगौ ।

श्रीफलशलाटुकल्को नागरचूर्णेन मिश्रितः सगुडः ॥
ग्रहणीगदमत्युग्रं तक्रभुजां संमतो जयति ॥ ४७ ॥
जम्बुदाडिमशृङ्गाटपाठाकञ्चटपल्लवैः ।
पक्वं पर्युषितं बालबिल्वं सगुडनागरम् ।
हन्ति सर्वानतीसारान् ग्रहणीमतिदुस्तराम् ॥ ४८ ॥

ग्रहण्यां नागरादिकषायः ।

नागरातिविषामुस्ताक्वाथः स्यादामपाचनः ।
चूर्णं हिङ्ग्वष्टकं वाऽपि वातिके योजितं शुभम् ॥४९॥
नागरातिविषामुस्तं धातकीत्यादिना चूर्णाधिकारे प्रोक्तं
नागादिचूर्णं ग्रहण्यां तण्डुलोदकानुपानेन योज्यम् ।

तण्डुलोदकपरिभाषा ।

जलमष्टगुणं दत्त्वा पलं कण्डिततण्डुलात् ।
भावयित्वा ततो देयं तण्डुलोदककर्मणि ॥ ५० ॥

श्लैष्मिकग्रहण्याः सामान्यचिकित्सा ।

ग्रहण्यां श्लेष्मदुष्टायां वमितस्य यथाविधि ।
कट्वम्ललवणक्षारैस्तिक्तैश्चाग्निं विवर्धयेत् ।
सर्वजायां ग्रहण्यां तु सामान्यो विधिरिष्यते ॥ ५१ ॥

ग्रहण्यां मसूराद्यं घृतम्

मसूरस्य कषायेण बिल्वगर्भं पचेद्घृतम् ।
हन्ति कुक्ष्यामयान् सर्वान् ग्रहणीं पाण्डुकामले ॥५२॥

व्रीहिपिण्याकयोः क्वाथं क्षुपितं दोपलं विदुः ।
मसूराणां तुलाक्वाथे बिल्वगर्भं पचेद्घृतम् ।
भिन्नविट्के प्रशंसन्ति मसूरघृतमुत्तमम् ॥ ५३ ॥

वातग्रहण्यां काकजङ्घाद्यं चूर्णम्

स्यात्काकजङ्घा लवणानि पञ्च
पाठा यवक्षारकचित्रकौ च ।
कर्चूरकं पिप्पलिका बृहत्यौ
साध्मानवातग्रहणीषु चूर्णम् ॥ ५४ ॥

ग्रहण्यां विश्वाद्यं चूर्णम् ।

विश्वावचाचित्रकदेवदारु-
विडङ्गकुष्ठातिविषं च पथ्या ।
सपिप्पलीमूलमिदं समुस्त-
मुष्णाम्बुपीतं ग्रहणीगदघ्नम् ॥ ५५ ॥

ग्रहण्यां पाठाद्यं चूर्णम्

चूर्णाधिकारे यत्प्रोक्तं पाठाद्यं चूर्णमुत्तमम् ।
गुडशीताम्बुना पीतं सद्यो दीपनपाचनम् ।
अतीसारग्रहण्यर्शोहृद्रोगज्वरगुल्मनुत् ॥ ५६ ॥

ग्रहण्यां भूनिम्बाद्यं चूर्णम् ।

भूनिम्बकौटजकटुत्रिकमुस्ततिक्ताः
कर्षांशकाः सशिखिमूलपिचुद्वयाः स्युः ।
त्वक्कौटजी पलचतुष्कमिता गुडाम्भः-
पीतं नृणामिह हरेद्ग्रहणीविकारम् ॥ ५७ ॥

ग्रहण्यां ग्रन्थिकाद्यं चूर्णम् ।

सग्रन्थिकं त्रिकटुकं लवणत्रयं च
क्षारद्वयं सचविकं च सचित्रकं च ।
साजाजीदीप्यमिशिहिङ्गु विधाय चूर्णं
सद्बीजपूरकरसप्लुतमेतदेपाम् ॥ ५८ ॥

ग्रहण्यां चित्रकाद्योऽरिष्टः।

चित्रकत्रिफलापाठाचव्यानां ग्रन्थिकस्य च।
विडङ्गदेवकाष्ठस्य भागान् कुर्याच्चतुष्पलान् ॥ ७५ ॥
कुष्ठभल्लातकैल्वालुवचानां मरिचस्य च।
पिप्पलीकटुकेन्द्राह्वामुस्तानां स्युस्त्रयस्त्रयः ॥ ७६ ॥
पक्त्वाऽवशेषिताष्टांशे रसे तस्मिन्स्रुते पुनः।
पूते दद्यान्मधुप्रस्थं गुडसार्धतुलामपि ॥ ७७ ॥
पञ्चकोलं समरिचं त्रिफलां च पलार्धकम्।
संचूर्ण्य दद्यात्पत्रैलात्वङ्गागानां तथा पलम् ॥ ७८ ॥
मासार्धं घृतकुम्भेऽयं जातोऽरिष्टः प्रयोजितः।
चित्रकाद्य इति ख्यातो ग्रहणीदोषहा परम् ॥ ७९ ॥
पाण्डुरोगोदरप्लीहगुल्मशोफार्शसां मतः।
रोचनो दीपनश्चाग्नेः स्रोतसां च विशोधनः ॥ ८० ॥

ग्रहण्यां भल्लातकाद्यः क्षारः।

भल्लातकं त्रिकटुकं त्रिफलां लवणत्रयम्।
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत् ॥ ८१ ॥
स क्षारः सर्पिषा पीतो भोज्ये वाऽप्यवचूर्णितः।
हृद्रोगपाण्डुग्रहणीगुल्मोदावर्तशूलनुत् ॥ ८२ ॥

ग्रहण्यां त्रिफलाद्यः क्षारः।

त्रिफला कटभी चव्यं बिल्वमध्यमयोरजः।
रोहिणी कटुका मुस्तं कुष्ठं पाठा च हिङ्गु च ॥ ८३ ॥
मधुकं हि मुष्ककयवक्षारं त्रिकटुकं वचा।
विडङ्गपिप्पलीमूलं सर्जिका निम्बचित्रकौ ॥ ८४ ॥
मूर्वाजमोदेन्द्रयवगुडूच्यो देवदारु च।
कार्षिकं लवणानां च पञ्चानां पलिकान् पृथक् ॥ ८५ ॥
भागान् दधित्थकुडवं घृततैलेन मूर्च्छितान्।
अन्तर्धूमं शनैर्दग्ध्वा तस्मात्पाणितलं पिबेत् ॥ ८६ ॥

सर्पिषा कफवातार्शोग्रहणीपाण्डुरोगवान् ।
प्लीहमूत्रग्रहश्वासहिक्काकासकृमिज्वरान् ॥ ८७ ॥
शोफातिसारश्वयथुप्रमेहानाहहृद्ग्रहान् ।
हन्यात्सर्वविषाणां च क्षारोऽयं शमनो वरः ॥ ८८ ॥

ग्रहण्या असाध्यलक्षणम् ।

लिङ्गैरसाध्यो ग्रहणीविकारो
यैस्तैरतीसारगदो न सिध्येत् ।
वृद्धस्य नूनं ग्रहणीविकारो
हत्वा तनुं नैव निवर्तते च ॥ ८९ ॥

इति वैद्यवरश्रीशोढलक्षणमथिते गदनिग्रहे ग्रहणीरोगाधिकारस्तृतीयः ।

---

## अथार्शोधिकारश्चतुर्थः ।

अथातोऽर्शसां निदानं व्याख्यास्यामः ।

संप्राप्तिपूर्वकमर्शःस्वरूपम् ।

पृथग्दोषैः समस्तैश्च शोणितात्सहजानि च ।
अर्शांसि षट् प्रकाराणि विद्याद्गुदवलित्रये ॥ १ ॥
दोषास्त्वङ्मांसमेदांसि संदूष्य विविधाकृतीन् ।
मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि तान् जगुः ॥ २ ॥

वातजार्शसां हेतुः ।

कषायकटुतिक्तानि रूक्षशीतलघूनि च ।
प्रमिताल्पाशनं तीक्ष्णं मद्यं मैथुनसेवनम् ॥ ३ ॥
लङ्घनं देशकालौ च शीतौ व्यायामकर्म च ।
शोको वातातपस्पर्शो हेतुर्वातार्शसां मतः ॥ ४ ॥
कट्वम्ललवणोष्णानि व्यायामाग्न्यातपप्रभाः ।
देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ॥ ५ ॥
विदाहि तीक्ष्णमुष्णं च सर्वं पानान्नभेषजम् ।
पित्तोल्बणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ॥ ६ ॥

ग्रहण्यां चित्रकाद्योऽरिष्टः ।

चित्रकत्रिफलापाठाचव्यानां ग्रन्थिकस्य च ।
विडङ्गदेवकाष्ठस्य भागान् कुर्याच्चतुष्पलान् ॥ ७५ ॥
कुष्ठभल्लातकैल्वालुवधानां मरिचस्य च ।
पिप्पलीकटुकेन्द्राह्वामुस्तानां स्युस्त्रिपलाः ॥ ७६ ॥
पक्त्वाऽष्टशेषिताष्टांशे रसे तस्मिन्द्रवे पुनः ।
पूते दद्यान्मधुप्रस्थं गुडस्यार्धतुलामपि ॥ ७७ ॥
पञ्चकोलं समरिचं त्रिफलां च पलार्धकम् ।
संचूर्ण्य दद्यात्पत्रैलात्वङ्नागानां तथा पलम् ॥ ७८ ॥
मासार्धे घृतकुम्भेऽयं जातोऽरिष्टः प्रयोजितः ।
चित्रकाद्य इति ख्यातो ग्रहणीदोषहा परम् ॥ ७९ ॥
पाण्डुरोगोदरप्लीहगुल्मशोफार्शसां मतः ।
रोचनो दीपनश्चाग्नेः स्रोतसां च विशोधनः ॥ ८० ॥

ग्रहण्यां भल्लातकाद्यः क्षारः ।

भल्लातकं त्रिकटुकं त्रिफलां लवणत्रयम् ।
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत् ॥ ८१ ॥
स क्षारः सर्पिषा पीतो भोज्ये चाऽप्यवचूर्णितः ।
हृद्रोगपाण्डुग्रहणीगुल्मोदावर्तशूलनुत् ॥ ८२ ॥

ग्रहण्यां त्रिफलाद्यः क्षारः ।

त्रिफला कटभी चव्यं बिल्वमध्यमयोरजः ।
रोहिणी कटुका मुस्तं कुष्ठं पाठा च हिङ्गु च ॥ ८३ ॥
मधुकं हि मुष्ककयवक्षारं त्रिकटुकं वचा ।
विडङ्गपिप्पलीमूलं स्वर्जिका निम्बचित्रकौ ॥ ८४ ॥
मूर्वाजमोदेन्द्रयवगुडूच्यो देवदारु च ।
कार्षिकं लवणानां च पञ्चानां पलिकान् पृथक् ॥ ८५ ॥
भागान् दधित्थकुडवं घृततैलेन मूर्च्छितान् ।
अन्तर्धूमं शनैर्दग्ध्वा तस्मात्पाणितलं पिबेत् ॥ ८६ ॥

सर्पिषा कफवातार्शोग्रहणीपाण्डुरोगवान्।
प्लीहमूत्रग्रहश्वासहिक्काकासकृमिज्वरान्॥ ८७॥
शोषातिसारश्वयथुप्रमेहानाहहृद्ग्रहान्।
हन्यात्सर्वविषाणां च क्षारोऽयं शमनो वरः॥ ८८॥

ग्रहण्या असाध्यलक्षणम्।

लिङ्गैरसाध्यो ग्रहणीविकारो
यैस्तैरतीसारगदो न सिध्येत्।
वृद्धस्य नूनं ग्रहणीविकारो
हत्वा तनुं नैव निवर्तते च॥ ८९॥

इति वैद्यवरश्रीशोढलक्षणमथिते गदनिग्रहे ग्रहणीरोगाधिकारस्तृतीयः।

---

## अथार्शोधिकारश्चतुर्थः।

अथातोऽर्शसां निदानं व्याख्यास्यामः।

संप्राप्तिपूर्वकमर्शःस्वरूपम्।

पृथग्दोषैः समस्तैश्च शोणितात्सहजानि च।
अर्शांसि षट् प्रकाराणि विद्याद्गुदवलित्रये॥ १॥
दोषास्त्वङ्मांसमेदांसि संदूष्य विविधाकृतीन्।
मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि तान् जगुः॥ २॥

वातजादर्शसां हेतुः।

कषायकटुतिक्तानि रूक्षशीतलघूनि च।
प्रमिताल्पाशनं तीक्ष्णं मद्यं मैथुनसेवनम्॥ ३॥
लङ्घनं देशकालौ च शीतौ व्यायामकर्म च।
शोको वातातपस्पर्शो हेतुर्वातार्शसां मतः॥ ४॥
कट्वम्ललवणोष्णानि व्यायामाग्न्यातपप्रभाः।
देशकालावशिशिरौ क्रोधो मद्यमसूयनम्॥ ५॥
विदाहि तीक्ष्णमुष्णं च सर्वं पानान्नभेषजम्।
पित्तोल्बणानां विज्ञेयः प्रकोपे हेतुरर्शसाम्॥ ६॥

मधुरस्निग्धशीतानि लवणाम्लगुरूणि च।
अव्यायामदिवास्वप्नशय्यासनसुखे रतिः॥ ७॥
प्राग्वातसेवा शीतौ च देशकालावचिन्तनम्।
श्लैष्मिकाणां समुद्दिष्टमेतत्कारणमर्शसाम्॥ ८॥
हेतुलक्षणसंसर्गाद्विद्याद्द्वन्द्वोल्बणानि च।
सर्वोहेतुस्त्रिदोषाणां सहजैर्लक्षणं समम्॥ ९॥

अर्शसां पूर्वरूपम्।

जङ्घायां पीड्यते नित्यमरुचिर्बहुमूत्रता।
हृदये छलिच्छलिः स्यात् पूर्वरूपेऽर्शसां भृशम्॥ १०॥
विष्टम्भोऽङ्गस्य दौर्बल्यं कुक्षेराटोप एव च।
कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता॥ ११॥
ग्रहणीरोगपाण्डुर्तेराशङ्का चोदरस्य च।
पूर्वरूपाणि निर्दिष्टान्यर्शसामभिवृद्धये॥ १२॥

वातार्शोलक्षणम्।

गुदाङ्कुरा बह्वनिला शुष्काश्चिमिचिमान्विताः।
म्लानाः श्यावारुणाः स्तब्धा विषमाः परुषाः खराः १३
मिथो विसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः।
बिम्बीकर्कन्धुखर्जूरकार्पासिफलसन्निभाः॥ १४॥
केचित्कदम्बपुष्पाभाः केचित्सिद्धार्थकोपमाः।
शिरःपार्श्वांसकट्यूरुवङ्क्षणाद्यधिकरुग्व्यथाः॥ १५॥
क्षवथूद्गारविष्टम्भहृद्ग्रहारोचकप्रदाः।
कासश्वासाग्निवैषम्यकर्णनादभ्रमावहाः॥ १६॥
कृष्णत्वङ्नखविण्मूत्रनेत्रवक्त्रश्च जायते।
तैरार्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम्॥ १७॥
रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते।
गुल्मदाहोदराष्ठीलासंभवस्तत एव च॥ १८॥

पित्तार्शोलक्षणम्।

पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः।
तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथाः॥ १९॥
शुकजिह्वायकृत्खण्डजलौकोवक्त्रसन्निभाः।
दाहपाकज्वरकरास्तृण्मूर्च्छारतिमोहदाः॥ २०॥
सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चसः।
यवमध्या हरित्पीतहारिद्रत्वङ्नखादयः॥ २१॥

श्लेष्मार्शोलक्षणम्।

श्लेष्मोल्बणा महामूला घना मन्दरुजः सिताः।
उच्छूनोपचितास्निग्धास्तथा वृत्तगुरुस्थिराः॥ २२॥
पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः स्पर्शनप्रियाः।
करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः॥ २३॥
वङ्क्षणानाहिनः पायुबस्तिनाभिविकर्तिनः।
सकासश्वासहृल्लासप्रसेकारुचिपीनसाः॥ २४॥
मेहकृच्छ्रशिरोजाड्यशिशिरज्वरकारिणः।
क्लैब्याग्निमार्दवच्छर्दिरामप्रायविकारदाः॥ २५॥
वसाभाः सकफप्राज्यपुरीषाः सप्रवाहिकाः।
न स्रवन्ति न भिद्यन्ते पाण्डुस्निग्धनखादयः॥ २६॥

संसर्गसन्निपातजार्शोलक्षणम्।

संसृष्टलिङ्गाः संसर्गान्निचयात्सर्वलक्षणाः।
सर्वैः सर्वात्मकान्याहुर्लक्षणैः सहजानि च॥ २७॥

रक्तार्शोलक्षणम्।

रक्तोल्बणा गुदे कीलाः पित्ताकृतिसमन्विताः।
वटप्ररोहसदृशा गुञ्जाविद्रुमसन्निभाः॥ २८॥
तेऽत्यर्थं दुष्टमुष्णं च गाढविट्कप्रपीडिताः।
स्रवन्ति सहसा रक्तं तस्य चातिप्रवर्तितः॥ २९॥

भेकाभः पीड्यते दुःखैः शोणितक्षयसंभवैः ।
हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः ॥ ३० ॥
विट् श्यावं कठिनं रूक्षमधो वायुर्न वर्तते ।
तनु चारुणवर्णं च फेनिलं चासृगर्शसाम् ॥ ३१ ॥
कट्यूरुगुदशूलं च दौर्बल्यं यदि चाधिकम् ।
तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणम् ॥ ३२ ॥
शिथिलं श्वेतपीतं च विट् स्निग्धं गुरु शीतलम् ।
यद्यर्शसां घनं चासृक् तन्तुमत्पाण्डु पिच्छिलम् ॥ ३३ ॥
गुदं सपिच्छं स्तिमितं गुरु स्निग्धं च कारणम् ।
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ॥ ३४ ॥

अर्शसां दुःसाध्यत्वे हेतुः ।

पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रयम् ।
सर्व एव प्रकुप्यन्ति गुदजानां तु संभवे ॥ ३५ ॥
तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च ।
सर्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च ॥ ३६ ॥

अर्शसां सुखसाध्यत्वादिलक्षणम् ।

बाह्यायां तु वलौ जातान्येकदोषोल्बणानि तु ।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥ ३७ ॥
द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥ ३८ ॥
सहजानि त्रिदोषाणि यानि चाभ्यन्तरां वलिम् ।
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्दिशेत् ॥ ३९ ॥
शेषत्वादायुषस्तानि चतुष्पादसमन्विते ।
याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा ॥ ४० ॥
हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा ।
शोफो हृत्पार्श्वशूलं च यस्यासाध्योऽर्शसो हि सः ॥ ४१ ॥

हृत्पार्श्वशूलसंमोहारुच्छर्दिरक्तस्य रुग्ज्वरः ।
तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम् ॥ ४२ ॥
तृष्णारोचकशूलार्तमतिप्रस्रुतशोणितम् ।
शोफातीसारसंयुक्तमर्शोव्याधिर्विनाशयेत् ॥ ४३ ॥

मेढ्रादिजानामर्शसां स्वरूपम् ।

मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं नाभिजानि तु ।
गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च ॥ ४४ ॥

चर्मकीललक्षणम् ।

व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः ।
कीलोपमं स्थिरखरं चर्मकीलं तु तं विदुः ॥ ४५ ॥
वातेन तोदः पारुष्यं पित्तादसितरक्तता ।
श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता ॥ ४६ ॥

इति गदनिग्रहेऽर्शोनिदानम् ।

---

अथातोऽर्शसां चिकित्सितं व्याख्यास्यामः ।

अर्शश्चिकित्सायामन्तरग्नेर्बलरक्षणावश्यकता ।

त्रयो विकारा प्रायेण ये परस्परहेतवः ।
अर्शांसि चातिसारश्च ग्रहणीदोष एव च ॥ ४७ ॥
तेषामग्निबले हीने वृद्धिर्वृद्धे परिक्षयः ।
तस्मादग्निं सदा रक्षेद्दुर्बलेषु विशेषतः ॥ ४८ ॥

अर्शसां चतुर्धा साधनविधानम् ।

दुर्नाम्नां साधनोपायश्चतुर्धा परिकीर्तितः ।
भेषजक्षारशस्त्राग्निसाध्यत्वादाद्य उच्यते ॥ ४९ ॥

वातार्शःस्वर्कपत्रादिलवणम् ।

लवणं ह्यर्कपत्राणि करीरतरुजान्यपि ।
मधैरम्लैश्च युक्तानि युक्त्या क्षारं दहेत्पुटे ॥ ५० ॥
सुखोदकेन मद्यैर्वा रसैरम्लैश्च पाययेत् ।
पीतः क्षारो ह्ययं हन्याद्वातार्शांस्यचिरेण तु ॥ ५१ ॥

अर्शोरोगिभिः सेव्यमन्नपानौषधम् ।

यद्वायोरानुलोम्याय यदग्निबलवृद्धये ।
अन्नपानौषधं सर्वं तत्सेव्यं नित्यमर्शसैः ॥ ५२ ॥

भिन्नवर्चसां गाढवर्चसां च अर्शसां चिकित्सा ।

वातातिसारवद्भिन्नवर्चोस्यर्शांस्युपाचरेत् ।
उदावर्तविधानेन गाढविट्कानि चासकृत् ॥ ५३ ॥
प्रवृत्तबहुलास्राणि पित्तशोणितनाशनैः ।

अर्शःसु तक्रोपयोगः ।

विड्विबन्धे हितं तक्रं यवानीबिडसंयुतम् ॥ ५४ ॥
न विरोहन्ति गुदजाः पुनस्तक्रसमाहताः ।
स्रोतःसु तक्रशुद्धेषु रसः सम्यगुपैति यः ॥ ५५ ॥
तेन पुष्टिर्बलं वर्णः प्रहर्षश्चोपजायते ।
वातश्लेष्मविकाराणां शतं च विनिवर्तयेत् ॥ ५६ ॥

अर्शःसु हरीतकीयोगः ।

सगुडां पिप्पलीयुक्तामभयां घृतभर्जिताम् ।
त्रिवृद्दन्तीयुतां वाऽपि भक्षयेदानुलोमिकाम् ॥ ५७ ॥

अर्शःसु भल्लातकयोगौ ।

तिलारुष्करसंयोगं भक्षयेदग्निवर्धनम् ।
कुष्ठरोगहरं श्रेष्ठमर्शसां नाशनं परम् ॥ ५८ ॥
तिलभल्लातकं पथ्या गुडश्चेति समांशकम् ।
दुर्नामश्वासकासघ्नं प्लीहपाण्डुज्वरापहम् ॥ ५९ ॥

अर्शःसु सूरणयोगः ।

मृल्लिप्तं सौरणं कन्दं पक्त्वाऽग्नौ पुटपाकवत् ।
अद्यात्सतैललवणं दुर्नामविनिवृत्तये ॥ ६० ॥

अर्शःसु कृष्णतिलयोगः ।

असितानां तिलानां प्राक् प्रकुञ्चं शीतवारिणा ।
खादतोऽर्शांसि शाम्यन्ति द्विजदार्ढ्याङ्गपुष्टिदम् ॥ ६१ ॥

अर्शःसु वार्ताकफलयोगः।

स्विन्नं वार्ताकफलं घोषायाः क्षारजेन सलिलेन।
तद्धृतभृष्टं युक्तं गुडेन चाऽऽतृप्तितो योऽत्ति ॥ ६२ ॥
पिबति च तक्रं नूनं तस्याश्वेवातिवृद्धगुदजानि।
यान्ति च नाशं पुंसः सहजान्यपि सप्तरात्रेण ॥ ६३ ॥

अर्शःसु गुडाभयायोगः।

पित्तश्लेष्मप्रशमनी कच्छूकण्डूरुजापहा।
गुदजान्नाशयत्याशु योजिता सगुडाऽभया ॥ ६४ ॥

अर्शःसु चित्रकतक्रम्।

त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भे प्रलेपयेत्।
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ॥ ६५ ॥

अर्शःसु कल्याणकं लवणम्

भल्लातकानि त्रिफला दन्ती चित्रकसूरणम्।
समभागानि सर्वाणि सैन्धवं द्विगुणं भवेत् ॥ ६६ ॥
कपालघटपक्वं तु मृदुना गोमयाग्निना।
कल्याणं नाम लवणं श्रेष्ठमर्शोविकारिणाम् ॥ ६७ ॥

अर्शःसु पीलुरसायनम्।

पीलून्याद्रोणि सेवेत पक्षं पक्षार्धमेव वा।
न चान्नं शीलयेत्किंचित्तेभ्यः सौख्यमवाप्नुयात् ॥ ६८ ॥
एतदर्शांसि शमयेच्छ्रेष्ठं पीलुरसायनम्।
ग्रहणीकृमिदोषाणां गुल्मिनाममृतोपमम् ॥ ६९ ॥

पित्तार्शःसु शिरीषमूलादिकल्कः।

शिरीषमूलं पुष्पं च शाल्मलेस्तिनिशस्य च।
निर्यासश्च पलाशस्य बदर्याः ककुभस्य च ॥ ७० ॥
रोध्रं शाल्मलिनिर्यासः कङ्कुस्तण्डुलीयकः।
मधुकार्जुनपुष्पाणि धातकीरोध्रयोरपि ॥ ७१ ॥

शोभाञ्जनं शङ्खनाभी कङ्कुकाः पष्टिकास्तथा ।
एषां कल्कं मधुयुतं पाययेत्तण्डुलाम्बुना ॥ ७२ ॥
अर्शांसि शमयत्येष पीतः पित्तात्मकानि तु ।
रक्तपित्तमतीसारं रक्तार्शांसि च नाशयेत् ॥ ७३ ॥

पित्तार्शःसु हरिद्रादिकषायः ।

पलानि पञ्च कुर्वीत रजन्यास्तु प्रमाणतः ।
कौटजस्याथ वल्कस्य द्विपलं सूक्ष्मकुट्टितम् ॥ ७४ ॥
द्व्याढके वारिणः साध्यमष्टभागावशेषितम् ।
तत्कषायं पिबेद्युक्त्या शीतं माक्षिकसंयुतम् ॥ ७५ ॥
एतेन पित्तजातानि रक्तजान्यपि सर्वशः ।
रक्तातिसारश्च तथा रक्तपित्तं च शाम्यति ॥ ७६ ॥

पित्तार्शसि वालकादिकल्कः ।

वालकं शृङ्गवेरं च पाययेत्तण्डुलाम्बुना ।
मधुयुक्तं प्रशमयेदर्शः पित्तसमुद्भवम् ॥ ७७ ॥

पित्तार्शसि त्रपुषादियोगः ।

त्रपुसैर्वारुबीजानि हरिद्रे दारुसाह्वयम् ।
तण्डुलोदकपीतं च हन्यादर्शो हि पित्तजम् ॥ ७८ ॥

श्लैष्मिकार्शश्चिकित्सा ।

श्लैष्मिकेष्वपि चार्शस्सु नित्यं शोधनमाचरेत् ।
पिप्पलीवर्धमानं वाऽप्यभयां वाऽपि शीलयेत् ॥ ७९ ॥

श्लेष्मार्शसि हरीतकीयोगः ।

गोमूत्रद्रोणसंयुक्ते विपचेदभयाशतम् ।
क्षीणे मूत्रे हरीतक्यौ खादेद्द्वे मधुना सह ॥ ८० ॥
एष प्रयोगः शमयेदर्शः श्लेष्मसमुत्थितम् ।
ग्रहणीकृमिदोषांश्च पाण्डुत्वं श्वयथूनपि ॥ ८१ ॥

श्लेष्मार्शसि पारिभद्रादिक्षारः ।

पारिभद्रं सुधां दन्तीं ककुभं समयूरकम् ।
गवाश्वमहिषाणां च मूत्राण्यथ समाहरेत् ॥ ८२ ॥

भसीकृत्य च तं क्षारं युक्त्या मद्येन पाययेत्।
श्लेष्मार्शांसि प्रशमयेच्छ्वयथुं पाण्डुतामपि॥ ८३॥
रक्तजेष्वपि चाशस्सु क्षीरेणाजेन शस्यते।
ऋतुं चाप्ययनं वाऽपि पिबेन्मासमथापि वा॥ ८४॥

रक्तार्शसि लाक्षादियोगः।

लाक्षा हरिद्रा मञ्जिष्ठा मधुकं नीलमुत्पलम्।
अजाक्षीरेण पीतानि रक्तजानां विनाशनम्॥ ८५॥

रक्तार्शसि चन्दनादिक्वाथः।

चन्दनकिराततिक्तकधन्वयवासाः सनागराः कथिताः।
रक्तार्शसां प्रशमना दार्वीत्वगुशीरनिम्बाश्च॥ ८६॥

रक्तार्शसि कतिपययोगाः।

नवनीततिलाभ्यासात्केसरनवनीतशर्कराभ्यासात्।
दधिसरमथिताभ्यासाद्गुदजाः शाम्यन्ति रक्तवहाः॥ ८७॥

रक्तार्शसि कुटजादिघृतम्।

कुटजफलवल्ककेसरनीलोत्पलरोध्रधातकीकल्कैः।
सिद्धं घृतं विधेयं शूले रक्तार्शसां भिषजा॥ ८८॥

अर्शःसु पिप्पल्यादिपेया।

पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली।
शृङ्गवेरमजाजी च कारवी धान्यतुम्बरु॥ ८९॥
बिल्वकर्कटिकापाठाः पिष्ट्वा पेयां विपाचयेत्।
फलाम्लां यमके भृष्टां तां दद्याद्गुदजापहाम्॥ ९०॥
एभिश्चैव वटान् कुर्यादेभिश्चैव पचेज्जलम्।
एतैश्चैव घृतं साध्यमर्शसां विनिवृत्तये॥ ९१॥

अर्शसि त्र्यूषणाद्यं चूर्णम्।

त्र्यूषणं पिप्पलीमूलं पाठां हिङ्गु सचित्रकम्।
सौवर्चलं पुष्कराख्यमजाजीं बिल्वपेशिकाम्॥ ९२॥

विडं यवानीं हपुषां विडङ्गं सैन्धवं वचाम् ।
तिन्तिडीकं च मण्डेन मद्येनोष्णोदकेन वा ॥ ९३ ॥
तथाऽर्शोग्रहणीदोषशूलानाहाच्च मुच्यते ।

अर्शसि पाठायोगः ।

दुस्पर्शकेन बिल्वेन यवान्या नागरेण वा ॥ ९४ ॥
एकैकेनापि संयुक्ता पाठा हन्त्यर्शसां रुजः ।

शुष्कार्शःसु स्वेदः ।

रास्नावचाशताह्वानां हपुषाकृष्णगन्धयोः ॥ ९५ ॥
शुष्कमूलकसक्तूनां शिग्रोर्गृञ्जनकस्य च ।
एषामेकैकशः पिण्डैरुष्णैस्तैलघृतान्वितैः ॥ ९६ ॥
सुधान्वितैस्तु सभ्यक्ताः स्वेद्याः शुष्कगुदोद्भवाः ।

अर्शसि रास्नाद्युपनाहः ।

रास्नामेरण्डमूलं च मधुकं देवदारु च ॥ ९७ ॥
यवचूर्णेन युक्तानि क्षीरेणालोड्य साधयेत् ।
तेनोपनाहं कुर्वीत स्वेदयेच्च पुनः पुनः ॥ ९८ ॥
तेनार्शांसि शमं यान्ति वेदना विनिवर्तते ।

अर्शसि वृषादिकाथस्वेदः ।

वृषार्कनक्तमालानां काश्मर्यैरण्डयोस्तथा ॥ ९९ ॥
पत्रकाथैः स्वेदयेच्च तत्र चैवोपवेशयेत् ।

अर्शसां प्रक्षालनार्थे करवीरादिकषायः ।

करवीरोऽनवद्यश्च मालती स्वर्णयूथिका ॥ १०० ॥
प्रक्षालनकषायोऽयमर्शसां हितमुच्यते ।

अर्शसि अनुपानयोगः ।

व्याघ्रीधान्यकशुण्ठीभिरम्बु वा शृतशीतलम् ॥ १०१ ॥
पञ्चकोलकषायं वाऽप्यनुपानं प्रशस्यते ।

अर्शसि गुडार्द्रकयोगः ।

गुडार्द्रकं भक्षयित्वा मदिरातर्पणं पिबेत् ॥ १०२ ॥

सस्नेहैः सक्तुभिर्युक्तं यद्वविदङ्गजातुरः ।

अर्शःसु संशोधनार्थमेरण्डतैलयोगः ।

एरण्डतैलं त्रिफलारसेन च विशोधनम् ॥ १०३ ॥
विट्पित्तश्लेष्मवातानुलोमनाद्गुदजापहम् ।

अर्शोनाशार्थं नाभिप्रलेपौ ।

शिरीषस्य तु मूलानि लाङ्गलक्यास्तथैव च ॥ १०४ ॥
एतेन नाभिलेपेन सर्वतश्चतुरङ्गुलात् ।
सिद्धोऽर्शसां प्रयोगोऽयं न तु भूयो भवन्ति हि ॥ १०५॥
उलूकास्थिगृध्रलिण्डं मानुषास्थि तथैव च ।
एतेन नाभिलेपेन सर्वतश्चतुरङ्गुलात् ॥ १०६ ॥
गुदजानि विनश्यन्ति न तु भूयो भवन्ति हि ।

अर्शःपातनार्थं कुलीरशृङ्ग्यादिलेपः ।

कुलीरशृङ्गी हस्त्यस्थि वचा लाङ्गलिका शुभा ।
हिङ्गु कुष्ठं च तुत्थं च बिल्वं भल्लातकानि च ॥ १०७ ॥
अर्शसां पातनो लेपः सप्तरात्रात्प्रयोजितः ।

अर्शोविनाशार्थं शिरीषबीजादिलेपः ।

शिरीषबीजं द्वौ क्षारौ लाङ्गली सैन्धवं तथा ॥ १०८ ॥
स्नुहीक्षीरेण पिष्टानि गवां पित्तेन भावयेत् ।
अर्शांसि लेपयेत्तेन सप्तरात्रं पुनः पुनः ॥ १०९ ॥
एतेन लिप्तान्यर्शांसि विनश्यन्ति न संशयः ।

अर्शसां पातनार्थं सुवर्चिकाद्यो लेपः ।

सुवर्चिका विडं दन्ती भल्लातकमथो वचा ॥ ११० ॥
चित्रकोऽर्कस्त्रिकटुकं स्नुहीक्षीरेण पेषयेत् ।
एतदालेपनं श्रेष्ठमर्शसां क्षारसंमितम् ॥ १११ ॥
दह्यते सप्तरात्रेण पुंस्त्वं च न विनश्यति ।

अर्शसां पातनार्थमर्कक्षीरादिलेपः ।

आर्कं पयः सुधाकाण्डं कटुकालाबुपल्लवाः ॥ ११२ ॥

करञ्जो वस्तमूत्रं च लेपनं श्रेष्ठमर्शसाम्।

अर्शसां पातनार्थं कटुतुम्ब्याद्या वर्तिः।

कटुतुम्ब्यास्तथा दन्त्याः शकृतः कुक्कुटस्य च ॥ १

मुशल्याश्वगन्धायाश्चित्रकस्य च यत्नतः।
मूलैस्तुल्यैः कृतं चूर्णमर्कक्षीरेण भावयेत् ॥ ११४ ॥
स्नुहीक्षीरेण वा सम्यग्वारिणा परिपेषयेत्।
वस्त्रवर्तिं बुधस्तेन समालिप्य समन्ततः ॥ ११५ ॥
गुदे विनिःक्षिपेद्यत्नात् प्रातः सायं च बुद्धिमान्।
वेदना च भवेत्तीव्रा वह्निना स्वेदयेद्गुदम् ॥ ११६ ॥
नोपशाम्येद्यदा तेन तदा चैवोष्णवारिणा।
विनिवेश्य गुदं तिष्ठेद्वेदनाशमकारणात् ॥ ११७ ॥
अद्याद्रूप्यमथान्नं च शिशिरं जलमापिबेत्।
गुदजानां विनाशाय सप्ताहं तु समाहितः ॥ ११८
विधिमेनं प्रकुर्वीत गतशङ्कस्तु मानवः।

अर्शोनाशार्थं शिरीषबीजादिलेपः।

शिरीषबीजसंमिश्रां लाङ्गलीं परिपेषिताम्।
सम्यगालेपने दद्यादर्शसामुपघातिनीम् ॥ ११९ ॥

अर्शःशातनार्थं देवदार्वाद्या गुटिका।

गुटिका कृता गुदे सा सुरदार्व्यमीन्द्रवारुणीमूलैः।
अर्शःशातनमन्तः फलमथवा शक्रवारुण्याः ॥ १२

श्रवणादिजातामर्शसां पातनार्थं सैन्धवादिप्रतिसारणम्।

प्रतिसारणेन सैन्धवनिशायुगक्षारधूमकासीसैः।
श्रवणगलनाभिनासामेहनगुदजानि शातयति ॥ १

अर्शांसि हिङ्ग्वाद्यं चूर्णम्।

हिङ्गुसौवर्चलव्योषपुष्कराजाजिचित्रकैः।
यवानीहपुषाचव्यविडङ्गविडसैन्धवैः ॥ १२२ ॥

पिबेन्मद्येन कोलाम्लैर्ग्रहणीगुदजातुरः।
पतन्तमिव यः पायुं स सौख्यं मन्यते नरः॥ १२३॥

अर्शसि काकोदुम्बरिकायोगः।

काकोदुम्बरिकायास्तु क्षीरेण परिलेपिताः।
गुदजा घृतपानेन निपतन्त्याशु देहिनाम्॥ १२४॥

अर्शसि करञ्जमूलयोगः।

तक्रभुङ्क्तमालस्य गोमूत्रपरिपेषितम्।
अर्शसां नाशनं मूलमापिबेद्दिवसत्रयम्॥ १२५॥

अर्शसि मुशल्यादियोगः।

तक्रेणार्शांसि निघ्नन्ति मुशलीकुटजाग्निकाः।
पीता वा कुटजाब्दाग्निमञ्जिष्ठाः सपुनर्नवाः॥ १२६॥

अर्शसि चिरविल्वाद्यं चूर्णम्।

चिरविल्वाग्निसिन्धूत्थनागरेन्द्रयवारलु।
तक्रेण पिबतोऽर्शांसि निपतन्त्यसृजा सह॥ १२७॥

अर्शसि कृष्णसर्पादिवसाभ्यञ्जनं धूपनं च।

कृष्णसर्पवराहोष्ट्रजम्बूकवृषदंशकात्।
वसामभ्यञ्जने दद्याद्धूपनं चार्शसां हितम्॥ १२८॥

अर्शसि नृकेशादिधूपः।

नृकेशा सर्पनिर्मोको वृषदंशस्य चर्म च।
अर्कमूलं शमीपत्रमर्शोभ्यो धूपनं हितम्॥ १२९॥

अर्शसि अजशृङ्गीजटायोगः।

अजशृङ्गीजटाकल्कमजामूत्रेण यः पिबेत्।
गुडवार्ताकभुक् तस्य नश्यन्त्याशु गुदाङ्कुराः॥ १३०॥

अर्शसि सैन्धवाद्यं चूर्णम्।

लवणोत्तमवह्निकलिङ्गयवान्
चिरविल्वमहापिचुमन्दयुतान्।
पिब सप्तदिनं मथितालुलितान्
यदि मर्दितुमिच्छसि पायुगदान्॥ १३१॥

अर्शसि चित्रकाद्यं तैलम्।

चित्रकाग्निकसिन्धूत्थैर्बीजैस्तु सुरसोद्भवैः।
कण्टकारीसमायुक्तैरर्कक्षीरसमन्वितैः॥ १३२॥
चविकासहितैस्तुल्यैर्गोमूत्रपरिपेषितैः।
घ्राणोत्थानि हरेत्तैलमर्शांसि च प्रसाधितम्॥ १३३॥
अर्शांसि घ्राणजातानि तैलमभ्यञ्जनाद्धरेत्।

अर्शसि सुमुखाद्यं तैलम्।

पक्वं सुमुखगण्डीरवाकुचीव्योषधान्यकैः॥ १३४॥
चव्यक्षारयवक्षारवह्निक्षारैस्तु साधितम्।
घ्राणजानि हरेत्तैलमर्शांसि प्रक्षणाद्ध्रुवम्॥ १३५॥

अर्शःसु प्रधानान्यौषधानि।

शुष्केषु भल्लातकमग्र्यमुक्तं भैषज्यमार्द्रेषु च वत्सकत्वक्।
सर्वेषु सर्वर्तुषु कालशेयमर्शस्सु बल्यं च रसायनं च॥१३६
अजस्रविस्रस्रवदस्रबिन्दुसंदोहसंदेहितजीविताशाम्।
अर्शोर्तिमुग्रां जयति प्रयुक्तं पुंसां अग्रे सैन्धवतक्रपानम्१३७

अर्शसि शारुकाद्यं तैलम्।

शुकनासकवह्निसुरेन्द्रयवाश्विरबिल्वसुसैन्धवशुण्ठिकणाः।
पिब सप्तदिनं खलु तक्रयुताश्चिरजातमथापि पतेद्गुदजम्१३८

अर्शःसु क्षारपातनविधिः।

प्रशस्तेऽहनि नक्षत्रे मुहूर्ते करणे शुभे।
प्रणम्य देवदेवेशमश्विनौ च भिषग्वरौ॥ १३९॥
धन्वन्तरिं तथा चैव विप्रेभ्यो न्यस्य दक्षिणाम्।
विसृष्टानिलविण्मूत्रं स्वभ्यक्तमवगाहितम्॥ १४०॥
समाश्वासितमुत्तानं कृतचङ्क्रमणं नरम्।
उत्तानं च समावेश्य यन्त्रितं शयने शुभे॥ १४१॥

---

१ 'हरेत्' ख.। २ कालशेयं तक्रम्। ३ 'मलापहं' ख.।

घृतेन गुदमभ्यज्य शनैर्यन्त्रं प्रवेशयेत् ।
यन्त्रान्तरस्थांस्तान् दृष्ट्वा स्थूलसूक्ष्मांस्तथाऽपि वा ॥१४२॥
अतिप्रमाणानल्पाल्पं दहेत्क्षारेण योगवित् ।
एकाह्नाद्दहतो मृत्युं रक्तस्रावप्रवर्तनम् ॥ १४३ ॥
श्वयथुर्वेदनाऽऽनाहस्तस्मादल्पाल्पमाचरेत् ।
छत्राकारं तु यद्रूपमधः सूक्ष्मं प्रदृश्यते ॥ १४४ ॥
क्षारसूत्रेण तं धृत्वा दहेन्निरवशेषतः ।
जातमूलं महद्रूपं बडिशेन समुद्धृतम् ॥ १४५ ॥
निष्कृष्य मण्डलाग्रेण पश्चात्क्षारं निपातयेत् ।
यद्रूपं कठिनीभूतं कर्कशं मशकोपमम् ॥ १४६ ॥
हस्त्यश्वपृष्ठैः संघृष्टं शीघ्रं तदुपनाहयेत् ।
समुद्रफेनैः पत्रैर्वा कर्कशैर्गोमयेन वा ॥ १४७ ॥
निघृष्य पातयेत्क्षारं जातमूले पुनः पुनः ।
एवं यन्त्रान्तरस्थेषु क्षारं दद्याच्छलाकया ॥ १४८ ॥
प्रमृज्य पिचुना मात्रां यावत्स्याद्दग्धलक्षणम् ।
ततो निर्वापयेत्क्षारमम्लैः सौवीरकादिभिः ॥ १४९ ॥
निकृष्य यन्त्रं च पुनः शूलार्तं वेदनान्वितम् ।
धान्याम्लकोष्ठे त्वासीनमुष्णाम्लेऽथावगाहितम् ॥ १५० ॥
सर्पिषा शतधौतेन यष्टीयुक्तेन लेपयेत् ।
व्रणप्रक्लेदनार्थाय त्वभिष्यन्दीनि भोजयेत् ॥ १५१ ॥

---

१ अर्शोयन्त्रलक्षणं वाग्भटे एवं पठ्यते—"अर्शसां गोस्तनाकारं यन्त्रं स्याच्चतुरङ्गुलम् । नाहे पञ्चाङ्गुलं पुंसां प्रमदानां षडङ्गुलम् ॥ द्विच्छिद्रं दर्शने व्याधेरेकच्छिद्रं तु कर्मणि । मध्येऽस्य त्र्यङ्गुले छिद्रमङ्गुष्ठोदरविस्तृतम् ॥ अर्धाङ्गुलोच्छ्रितोद्वृत्तकर्णिकं तु तदूर्ध्वतः" इति (वा. सू. स्था. अ. २५)। २ बडिशः सुश्रुतादावुक्तो यन्त्रविशेषः (Hooks)। ३ "मण्डलाग्रं फले तेषां तर्जन्यन्तर्नखाकृति । लेखने छेदने योज्यं पोथकी शुण्डिकादिषु" (वा. सू. स्था. अ. २६) मण्डलाग्रं 'Spoon स्पून' इत्याख्यया व्यवह्रियते आङ्ग्लवैद्यके ।

शैथिल्यार्थे च विट्कस्य त्रिवृच्छाकं सवास्तुकम् ।
उपोदकीं चञ्चुपर्णीं दद्यात्पथ्यमतः परम् ॥ १५२ ॥
शोधनानि प्रलेपाश्च कषायास्तैलबस्तयः ।
व्रणाधिकारे यच्चोक्तं तदत्रापि प्रयोजयेत् ॥ १५३ ॥

सम्यग्दग्धार्शोलक्षणम् ।

यदा मृदुसमस्पर्शं पक्वजाम्बवसन्निभम् ।
ईषत्स्फुटितताम्राग्रं सम्यग्दग्धस्य लक्षणम् ॥ १५४ ॥

दुर्दग्धार्शोलक्षणम् ।

शरदम्बरसंकाशमाध्मातोद्धतकर्कशम् ।
शोफरागरुजानाहैर्जुष्टं दुर्दग्धमादिशेत् ॥ १५५ ॥

अतिदग्धार्शोलक्षणम् ।

अतिदग्धे तृषामोहौ दाहरागावतिभ्रमः ।
विसर्पक्लेदहृन्मूर्च्छाः शूलं च रतिसंक्षयः ॥ १५६ ॥

क्षारविभ्रमचिकित्सा ।

यथा हुतवहः कक्षमादीप्तो दहति क्षणात् ।
तथा देहं दहत्याशु दुर्योगात्क्षारविभ्रमः ॥ १५७ ॥
तस्य प्रशमनार्थाय पाययेत्ससितं दधि ।
गुडं दधिसरस्तैलं पिबेत्ससितशर्करम् ॥ १५८ ॥
ज्वरातीसारमूर्च्छार्तिशमनं क्षारविभ्रमे ।
स्वरसस्य कपित्थाम्लादाडिमामलकात्तथा ॥ १५९ ॥
द्वौ प्रस्थौ सर्पिषः प्रस्थं पचेत्क्षारार्तिरुग्घरम् ।
अम्लैर्वा विविधैः पक्वं त्रपुषैर्वोरुकैः समैः ॥ १६० ॥
घृतं शंसन्ति शूलार्तिशमनं क्षारविभ्रमे ।

अतिदग्धमन्ददग्धयोः प्रतीकारः ।

अतिदग्धे पुनः शीतं मन्ददग्धे पुनर्दहेत् ॥ १६१ ॥

सम्यग्दग्धलक्षणम्।

प्रसन्नस्वरवर्णत्वं सर्वेन्द्रियविशुद्धता।
स्वादुता भोज्यभक्ष्याणां सम्यग्दग्धे तु लक्षणम् ॥ १६२॥

कृतक्षारविधेरपथ्यानि।

यानं पानं दिवा स्वप्नं गुर्वन्नमतिभोजनम्।
व्यवायं कलहं चैव कृतक्षारविधिस्त्यजेत् ॥ १६३ ॥
एतेन विधिना नृणां दुर्नाम कफवातजम्।
क्षारेण वह्निना वाऽपि दहेन्निरवशेषतः ॥ १६४ ॥
यथा पित्तार्शसां प्रोक्तं विधानं क्षारकर्मणि।
तथा रक्तार्शसां कार्यं सर्वं निरवशेषतः ॥ १६५ ॥

नासार्शःसु क्षारपातनविधिः।

नासिकायां तु कुर्वीत क्षारेण प्रतिसारणम्।
नासास्रोतःप्रमाणं च यन्त्रं सौवर्णराजतम् ॥ १६६ ॥
त्र्यङ्गुलं कर्णिकोपेतमर्धाङ्गुलमथायतम्।
उत्तानस्य शनैः क्षारं दद्यात्पिचुशलाकया ॥ १६७ ॥
निर्वापणं च पूर्वोक्तं भोज्यं कुर्यात्तथैव च।
यथादोषहरं नस्यं स्नेहधूमांश्च योजयेत् ॥ १६८ ॥

क्षारकरणयोग्यसमयः।

ग्रीष्मे शरदि वा द्रव्यं कृत्तिकासु समाहरेत्।
भगवाननयो ऋत्वोर्वृक्षेष्वेव हुताशनः ॥ १६९ ॥
तस्मात्प्रशस्तकर्माणि तत्प्रमेयगुणो हि सः।
क्षारो भवति चाग्नेय एवं युक्तगुणाष्टकः[१] ॥ १७० ॥

क्षारपाकविधिः।

वने निवाते सुदिने बलिं कृत्वा दिशो दश।
प्रणम्य ज्वलनं चैव सम्यग्धुत्वा तथाऽऽहुतीः ॥ १७१ ॥

---

१ "नैवातितीक्ष्णो न मृदुः शुक्लः श्लक्ष्णोऽथ पिच्छिलः। अविष्यन्दी शिवः शीघ्रः क्षारो ह्यष्टगुणः स्मृतः ॥ (सु. सू. स्था. अ. ११)।

विल्वालमदीप्ताग्नौ सुदग्धं भस्म माक्षिकम् ।
त्रिःसप्तकृत्वो विस्राव्य चतुर्द्रोणजलप्लुतम् ॥ १७२ ॥
अयःपात्रे पचेत्पादशिष्टं दद्याच्च चूर्णितम् ।
सुधां सुवर्जिकां वंडं माक्षिकक्षीक्षारशर्कराः ॥ १७३ ॥
प्रलेपितं निदग्धं च शीतं लौहे निधापयेत् ।
भगन्दरार्शःश्विवशाः क्षारोऽयं सर्वरोगहा ॥ १७४ ॥
विडयुक्तो माक्षिकक्षारो हितः सर्वार्शसामिति ।
मागधी मरिचं शुण्ठी वह्निः सूरणकन्दकम् ॥ १७५ ॥
एकद्वित्रिचतुरष्टषोडशक्रमयोजितैः ।
भागैस्तु गुटिका कार्या गुडेनाक्षप्रमाणिका ॥ १७६ ॥
भक्षिता प्रसमं हन्ति गुदजानि न संशयः ।

अर्शोविनाशार्थं वर्तिद्वयम् ।

जालिनीबीजचूर्णस्य वर्तिर्वा गुडसैन्धवैः ॥ १७७ ॥
बज्रीदुग्धेन संलिप्ता निशालेपेन वा ध्रुवम् ।
निम्बेन्द्रवारुणीदेवदालीबीजगुडैः कृता ॥ १७८ ॥
वर्तिर्गुदे विनिःक्षिप्ता अर्शो हन्ति समूलतः ।

अर्शसि कटुतुम्बीयोगः ।

अम्लकाञ्जिकसंपिष्टा सबीजा कटुतुम्बिका ॥ १७९ ॥
सगुडा हन्ति लेपेन अर्शांस्यामूलतो द्रुतम् ।

अर्शःसु शिरीषबीजाद्यं लेपत्रयम् ।

शिरीषबीजकुष्ठार्कक्षीरपिप्पलिसैन्धवैः ॥ १८० ॥
लाङ्गलीमूलगोमूत्रस्वर्जिकादन्तिचित्रकैः ।
चरणायुधविड्गुञ्जानिशाकृष्णाभिरुत्तमम् ॥ १८१ ॥
लेपत्रयमिदं योज्यं शीघ्रमर्शोविनाशकृत् ।

इति श्रीवोढलप्रथिते गदनिग्रहेऽर्शोरोगाधिकारश्चतुर्थः ॥

---

## अथाजीर्णविषूचिकालसकविलम्बिकाधिकारः पञ्चमः।

अथातोऽजीर्णविषूचिकालसकविलम्बिकानिदानं व्याख्यास्यामः

जठरानलभेदाः ।

मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः ।
कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनलः ॥ १ ॥
विषमो वातजान् रोगान् तीक्ष्णः पित्तसमुद्भवान् ।
करोत्यग्निस्तथा मन्दो विकारान् कफसंभवान् ॥ २ ॥

समाग्न्यादीनां लक्षणम् ।

समा समाग्नेरशिता मात्रा सम्यग्विपच्यते ।
स्वल्पापि नैव मन्दाग्नेर्विषमाग्नेस्तु देहिनः ॥ ३ ॥
कदाचित्पच्यते सम्यक्कदाचिन्नैव पच्यते ।
मात्राऽतिमात्राऽप्यशिता सुखं यस्य विपच्यते ।
तीक्ष्णाग्निरिति तं विद्यात्समाग्निः श्रेष्ठ उच्यते ॥ ४ ॥
अग्निरूपं निरूप्याथ यथावद्दोषकारणम् ।
मन्दाग्नौ तु समुद्भूतं तच्चाजीर्णं प्रवक्ष्यते ॥ ५ ॥

अजीर्णभेदाः ।

आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः ॥ ६ ॥
अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ।
अजीर्णं पञ्चमं केचिन्निर्दोषं दिनपाकि च ॥ ७ ॥
वदन्ति षष्ठं चाजीर्णं प्राकृतं प्रतिवासरम् ।
अजीर्णाज्जायते रोगस्तस्माद्रक्षेदजीर्णतः ॥ ८ ॥

अजीर्णनिदानम् ।

अत्यम्बुपानाद्विषमाशनाच्च
सन्धारणात्स्वप्नविपर्ययाच्च ।
कालेऽपि सात्म्यं लघु चापि भुक्त-
मन्नं न पाकं भजते नरस्य ॥ ९ ॥

मात्रया चाभ्यवहृतं पथ्यं चान्नं न जीर्यति ।
चिन्ताशोकभयक्रोधदुःखशय्याप्रजागरैः ॥ १० ॥
चिन्ताभयक्रोधपरिप्लुतेन लुब्धेन रुग्दैन्यनिपीडितेन ।
प्रद्वेषयुक्तेन च सेव्यमानमन्नं न पाकं भजते नरस्य ॥११॥

आमाजीर्णलक्षणम् ।

तत्रामे गुरुतोत्क्लेदः शोफो गण्डाक्षिकूटजः ।
उद्गारश्च यथाभुक्तमविदग्धः प्रवर्तते ॥ १२ ॥

विष्टब्धाजीर्णलक्षणम् ।

विष्टब्धे शूलमाध्मानं विविधा वातवेदनाः ।
मलवाताप्रवृत्तिश्च स्तम्भो मोहोऽङ्गपीडनम् ॥ १३ ॥

विदग्धाजीर्णलक्षणम् ।

विदग्धे भ्रमतृण्मूर्च्छाः पित्ताच्च विविधा रुजः ।
उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते ॥ १४ ॥
रसशेषेऽन्नविद्वेषो हृदयाशुद्धिगौरवे ।

अजीर्णोपद्रवाः ।

मूर्च्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः ॥ १५ ॥
उपद्रवा भवन्त्येते मरणं चाप्यजीर्णतः ।

केषामजीर्णं भवति ? ।

अनात्मवन्तः पशुवद्भुञ्जते येऽप्रमाणतः ॥ १६ ॥
रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि

अजीर्णाद्विषूच्यादिसम्भवः ।

अजीर्णमामं विष्टब्धं विदग्धं च यदीरितम् ।
विषूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका ॥ १७ ॥

विषूचिकालक्षणम् ।

सूचीभिरिव गात्राणि तुदन् सन्तिष्ठतेऽनिलः ।
यस्याजीर्णेन सा वैद्यैर्विषूचीति निगद्यते ॥ १८ ॥

न तां परिमिताहारा लभन्ते विदितागमाः ।
मूढास्तामजितात्मानो लभन्तेऽशनलोलुपाः १९ ॥
मूर्च्छातिसारौ वमथुः पिपासा शूलभ्रमोद्वेष्टनजृम्भदाहाः ।
वैवर्ण्यकम्पौ हृदये रुजश्च भवन्ति तस्यां शिरसश्च भेदः ॥२०

अलसकलक्षणम् ।

कुक्षिरानह्यतेऽत्यर्थं प्रताम्येत्परिकूजति ।
निरुद्धो मारुतश्चैव कुक्षावुपरिधावति ॥ २१ ॥
वातवर्चोनिरोधश्च यस्यात्यर्थं भवेदपि ।
तस्यालसकमाचष्टे तृष्णोद्गारौ तु यस्य च ॥ २२ ॥

विलम्बिकालक्षणम् ।

दुष्टं तु भुक्तं कफमारुताभ्यां प्रवर्तते नोर्ध्वमधश्च यस्य ।
विलम्बिकां तां भृशदुश्चिकित्स्यामाचक्षते शास्त्रविदः पुराणाः॥

आमस्वार्थम् ।

यत्रस्थमामं विरुजेत्तमेव देशं विशेषेण विकारजातैः ।
दोषेण येनावततं शरीरं तल्लक्षणैरामसमुद्भवैश्च ॥ २४ ॥
स्वल्पं यदा दोषविबद्धमामं लीनं न तेजःपथमावृणोति ।
भवत्यजीर्णेऽपि तदा बुभुक्षा सा मन्दबुद्धिं विषवन्निहन्ति २५
प्रायेणाहारवैषम्यादजीर्णं जायते नृणाम् ।
तन्मूलो रोगसङ्घातस्तद्विनाशाद्विनश्यति ॥ २६ ॥

अजीर्णिनोऽसाध्यलक्षणम् ।

यः श्यावदन्तौष्ठनखोऽल्पसंज्ञो
वम्यर्दितोऽभ्यन्तरयातनेत्रः ।
क्षामस्वरः सर्वविमुक्तसन्धि-
र्यायान्नरोऽसौ पुनरागमाय ॥ २७ ॥

विषूचिकोपद्रवाः ।

अग्निनाशोऽरुचिः कम्पो मूत्राघातो विसंज्ञिता ।
अमी उपद्रवा घोरा विषूच्यां पञ्च दारुणाः ॥ २८ ॥

लिहन्ति ये मन्दहुताशना नरा
भवन्ति ते वाडवतुल्यवह्नयः ॥ ४६ ॥

विषूचिकालसकयोः काञ्जिकयोगः।

कुञ्जराशननवीनपल्लवै राजिकाभिरपि संयुतं शृतम्।
काञ्जिकं सलवणं विषूचिकां नाशयत्यलसकं च वेगतः॥४७॥

अजीर्णे हरीतकीयोगः।

हरीतकी धान्यतुषोदसिद्धा सपिप्पलीसैन्धवहिङ्गुचूर्णा।
सोद्गारधूमं भृशमप्यजीर्णं विजित्य सद्यो जनयेत्क्षुधां च॥४८॥

आमाजीर्णे वचादिवमनम्।

वचालवणतोयेन वान्तिरामे प्रशस्यते।

विदग्धाजीर्णे शीताम्बुयोगः।

अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति।
तद्यस्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात् ४९

विष्टब्धाजीर्णप्रतिकारः।

विष्टब्धे स्वेदनं कार्यं पेयं च लवणोदकम्।

रसाजीर्णचिकित्सा।

रसशेषे दिवास्वप्नं लङ्घनं वातवर्जनम् ॥ ५० ॥
आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः।
दिवास्वप्नं प्रकुर्वीत सर्वाजीर्णविनाशनम् ॥ ५१ ॥

दिवास्वापयोग्या नराः।

व्यायामप्रमदाध्ववाहनरतक्लान्तानतीसारिणः
शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीडितान्।
क्षीणान्क्षीणकफाञ्शिशून्मदहतान्वृद्धान्रसाजीर्णिनो
रात्रौ जागरिताद्धराश्चिरशनान्कामं दिवा स्वापयेत् ५२

अजीर्णे पथ्यार्थं चूर्णम्।

दद्यात् सौवर्चलं चूर्णं पथ्यापिप्पलिसंयुतम्।
मस्तुनोष्णोदकेनापि बुद्ध्वा दोषगतिं भिषक् ॥ ५३ ॥

चतुर्विधमजीर्णं तु मन्दानलमथारुचिम्।
आध्मानं वातगुल्मं च शूलं चाशु नियच्छति ॥ ५४ ॥

अजीर्णे वृहत्पथ्यायं चूर्णम्।

पथ्यावचाहिङ्गुकलिङ्गशुण्ठीसौवर्चलैः सातिविषैश्च चूर्णम्।
सुखाम्बुपीतं विनिहन्त्यजीर्णं शूलं विषूचीमरुचिं च सद्यः ५५

अजीर्णे रुचकाद्यं चूर्णम्।

चूर्णं समं रुचकहिङ्गुमहौषधाना-
मुष्णाम्बुना कफसमीरणसंभवासु।
हृत्पार्श्वपृष्ठजठरार्तिविषूचिकासु
पेयं तथा यवरसेन च विड्विबन्धे ॥ ५६ ॥

अजीर्णशङ्कायां शुण्ठ्यभयायोगः।

भवेदजीर्णं प्रति यस्य शङ्का स्निग्धस्य जन्तोर्बलिनोऽन्नकाले।
पूर्वं सशुण्ठीमभयामशङ्को भुञ्जीत संप्राश्य हितं हिताशी ॥५७

विदग्धाजीर्णे अभयादियोगः।

विदह्यते यस्य तु भुक्तमात्रं दह्येत हृत्कोष्ठगलं च यस्य।
द्राक्षासितामाक्षिकसंप्रयुक्तां लीढ्वाऽभयां वै स सुखं लभेत ५८

विषूचीप्रतिकारः।

विषूच्याः पूर्वरूपाणि दृष्ट्वैव तु चिकित्सकः।
वमनं कारयेत्क्षिप्रमुष्णेन लवणाम्भसा ॥ ५९ ॥
यावत्सन्तिष्ठते ह्यस्य दुष्टो ह्यन्नरसो हृदि।
तावन्मर्माणि भिद्यन्ते विषं पीतवतो यथा ॥ ६० ॥
सुवामितं साधु विरेचितं वा सुलङ्घितं वा मनुजं विदित्वा।
पेयादिभिर्दीपनपाचनीयैः सम्यक्क्षुधार्तं समुपक्रमेत ॥ ६१ ॥

विषूचिकायाममृतादिकषायः।

पिबेद्विपक्वं त्वमृताकषायं कदम्बनिम्बार्जुनवृक्षकाणाम्।
क्वाथं सुखोष्णं लवणप्रगाढं विषूचिकाजीर्णविषापमर्दम् ॥६२॥

विपूच्यां शूले मिश्यार्यं तैलम्।

मिशिं मधूच्छिष्टमरुष्करं च ससैन्धवं क्षारमथाम्लवृक्षम्।
तैलं विपक्वं मधुशुक्तयुक्तं खल्लीं मरुद्धां शमयेद्धि सद्यः ॥६३॥

विपूच्यां कुष्ठादिमर्दनम्।

कुष्ठसैन्धवयोः कल्कं चुक्रतैलसमन्वितम्।
विपूच्यां मर्दनं कोष्णं खल्लीशूलनिवारणम् ॥ ६४ ॥

विपूच्यां चित्रकाद्यं तैलम्।

चित्रकं तिलपिण्याकं कुष्ठं भल्लातकानि च।
द्वौ क्षारौ सैन्धवं चैभिस्तैलं शुक्ते विपाचयेत् ॥ ६५ ॥
एतेनोन्मर्दनं कार्यं प्रदेहश्चैव शस्यते।
अतिप्रवृद्धं शूलं च क्षणादेव नाशयेत् ॥ ६६ ॥

अविरुद्धविपूचीनिरुत्यर्थं पार्ष्णिदेशे दाहयोगः।

विपूच्यामविरुद्धायां पार्ष्ण्योर्दाहः प्रशस्यते ॥ ६७ ॥

विपूच्यां करञ्जाद्या वमनकषायाः।

कारञ्जश्च कषायः स्यादथवाऽर्जुनसार्षपः।
पीतः कषायो वमनात् सद्यो हन्ति विपूचिकाम् ॥ ६८ ॥
करञ्जनिम्बशिखरीगुडूच्यर्जुनवत्सकैः।
पीतः कषायो वमनाद्धोरां हन्ति विपूचिकाम् ॥ ६९ ॥

विपूच्यां रास्नाद्यङ्गमर्दनम्।

रास्ना पत्रागुरू मांसी कुष्ठं शिग्रुत्वचो वचा।
श्रेष्ठमम्लेन संपिष्टं विपूच्यामङ्गमर्दनम् ॥ ७० ॥

विपूच्यां त्वगाद्युद्वर्तनम्।

त्वक्पत्ररास्नागुरुशिग्रुकुष्ठैरम्लप्रपिष्टैः सवचाशताह्वैः।
उद्वर्तनं खल्लिविपूचिकाघ्नं तैलं विपक्वं च तदर्थकारि ॥ ७१ ॥

विपूच्यामञ्जनार्थं व्योषाद्या गुटिका।

व्योषं करञ्जस्य फलं हरिद्रे मूलं समं चाप्यथ मातुलुङ्ग्याः।
छायाविशुष्का गुटिकाः कृतास्ता हन्युर्विपूचीं नयनाञ्जनेन ७२

विपूच्यामुत्सादनार्थं बृहत्यादो योगः।

बृहत्यौ कट्फलं चैव मुस्तं पत्रमथोऽगुरुः।
गुग्गुल्वतिविषा रास्ना मुस्तं व्याघ्रनखं वचा॥ ७३॥
एतैरुत्सादनं कुर्यात् प्रदेहश्चैव शस्यते।
नस्यं प्रधमनं चैव विपूची तेन शाम्यति॥ ७४॥

विपूच्यामञ्जनार्थं शिवावर्तिः।

भल्लातकं त्रिकटुकं भूतीकं क्षवको वचा।
फणिज्जो लशुनं कुष्ठं करञ्जस्य फलानि च॥ ७५॥
वर्तिमेभिः शिवां नाम बस्तमूत्रेण पेषयेत्।
विपूच्यामञ्जनमिदं सद्यो वेगं नियच्छति॥ ७६॥

विपूच्यां पिपासाप्रतिकारः।

पिपासायामनुत्क्लेशे लवङ्गस्याम्बु शस्यते।
जातीफलस्य वा शीतं शृतं भद्रघनस्य वा॥ ७७॥

विपूच्यामाध्मानचिकित्सा।

सरुक् चानद्धमुदरमम्लपिष्टैः प्रलेपयेत्।
दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः॥ ७८॥

इति वैद्यवरश्रीसोढलप्रथिते गदनिग्रहेऽजीर्णविपूचिकालसकविलम्बिकाधिकारः पञ्चमः॥ ५॥

## अथ क्रिमिरोगाधिकारः षष्ठः।

अथातः क्रिमिनिदानं व्याख्यास्यामः।

क्रिमिभेदाः।

क्रिमयस्तु द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः।
बहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः॥ १॥
नामतो विंशतिविधा

बाह्यक्रिमिलक्षणम्।

बाह्यास्तत्र मलोद्भवाः।
तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः॥ २॥

बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः ।
द्विधा ते कोठपिडकाकण्डूगण्डान् प्रकुर्वते ॥ ३ ॥

क्रिमिनिदानम् ।

अजीर्णभोजी मधुराम्लनित्यो द्रवप्रियः पिष्टगुडोपभोक्ता ।
व्यायामवर्जी च दिवाशयश्च विरुद्धभुक् संलभते क्रिमींस्तु॥४॥
माषपिष्टान्नलवणगुडशाकैः पुरीषजाः ।
मांसमाषगुडक्षीरदधिशुक्तैः कफोद्भवाः ।
विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि ॥ ५ ॥

क्रिमीणां सामान्यलक्षणम् ।

ज्वरो विवर्णता शूलं हृद्रोगश्छर्दनं भ्रमः ।
भक्तद्वेषोऽतिसारश्च सञ्जातक्रिमिलक्षणम् ॥ ६ ॥
अकस्मात्पतितो भूम्यां चक्षुर्भ्यां न च पश्यति ।
मुखे लाला भवेद्यस्य संजातक्रिमिलक्षणम् ॥ ७ ॥

कफजक्रिमीणां लक्षणम् ।

कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः ।
पृथुब्रध्ननिभाः केचित्केचिद्गण्डूपदोपमाः ॥ ८ ॥
रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाऽणवः ।
श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते ॥ ९ ॥
अन्त्रादा उदरावेष्टा हृदयादा महागुदाः ।
चुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्वते ॥ १० ॥
हृल्लासमास्यस्रवणमविपाकमरोचकम् ।
मूर्च्छाच्छर्दिभ्रमानाहकार्श्यक्षवथुपीनसान् ॥ ११ ॥

रक्तजक्रिमीणां लक्षणम् ।

रक्तवाहिशिरास्थानरक्तजा जन्तवोऽणवः ।
अपादवृत्तास्ताम्राश्च सौक्ष्म्यात् केचिददर्शनाः ॥ १२ ॥

केशादा लोमविध्वंसा लोमद्वीपा उदुम्बराः।
षट् ते कुष्ठैककर्माणः सहसौरसमातरः॥ १३॥

पुरीषजक्रिमीणां लक्षणम्।

पक्काशये पुरीषोत्था जायन्तेऽधोविसर्पिणः।
वृद्धास्ते स्युर्भवेयुश्च ते यदाऽऽमाशयोन्मुखाः॥ १४॥
तदाऽस्योद्गारनिःश्वासविड्गन्धानुविधायिनः।
पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः॥ १५॥
ते पञ्च नाम्ना क्रिमयः ककेरुकमकेरुकाः।
सौसुरादाः सशूलाख्या लेलिहा जनयन्ति च॥ १६॥
विड्भेदशूलविष्टम्भकार्श्यपारुष्यपाण्डुताः।
रोमहर्षाग्निसदनगुदकण्डूर्विमार्गगाः॥ १७॥
भ्रमः शूलं तथा छर्दिर्हृदयज्वलनं ज्वरः।
वैवर्ण्यमतिसारः स्यादरुचिः क्रिमिलक्षणम्॥ १८॥

इति क्रिमिनिदानम्।

---

अथातः क्रिमिचिकित्सितम्।

क्रिमिपातनार्थं पारसीययवानीयोगः।

पारसीययवानी पीता पर्युषितवारिणा प्रातः।
गुडयुक्ता क्रिमिजालं कोष्ठगतं पातयत्याशु॥ १९॥

क्रिमिरोगे निम्बपत्राद्यं योगपञ्चकम्।

पारिभद्रकपत्रोत्थं रसं क्षौद्रयुतं पिबेत्।
केबुकस्य रसं वाऽपि पत्तूरस्य च वा रसम्॥ २०॥
दीपनीयान्नमण्डं वा विडङ्गव्योषसंयुतम्।
पाययेत् क्रिमिनाशार्थमग्निं च कुरुते भृशम्।
लिह्यात्क्षौद्रेण वैडङ्गं चूर्णं क्रिमिहरं परम्॥ २१॥

क्रिमिनाशार्थं विडङ्गाद्या यवागूः ।

विडङ्गतण्डुलव्योषशिग्रुभिर्मरिचैः सह ।
तक्रसृता यवागूः स्यात् क्रिमिघ्नी ससुवर्चिका ॥ २२ ॥

क्रिमिरोगे मुस्तादिकषायः ।

मुस्ताखुपर्णीसुरदारुशिग्रु-
क्काथः सकृष्णाक्रिमिशत्रुकल्कः ।
मार्गद्वयेनापि चिरप्रवृत्तान्
क्रिमीन्निहन्ति क्रिमिजांश्च रोगान् ॥ २३ ॥

क्रिमिरोगे शोभाञ्जनाद्यं चूर्णम् ।

शोभाञ्जनः सर्षपराजिकार्करसोनसिन्धूत्थकणाग्निविश्वाः ।
एतैः कृतं चूर्णमिदं निहन्ति शतं क्रिमीणां च तुषोदकेन ॥२४॥

क्रिमिरोगे मुस्ताद्यं चूर्णम् ।

मुस्ताखुपर्णिसुरदारुकणाविशाला-
श्रीसिन्दुवाररविमूलनिशाद्वयं च ।
शिग्रुः पलाशबलिवेल्लवचाग्निमन्थ-
सौवर्चलं क्रिमिशतं शमयेत् सहिङ्गु ॥ २५ ॥

क्रिमिरोगे भूनिम्बादिक्काथः ।

भूनिम्बदन्तीत्रिफलाविशालात्रिवृन्निशायुग्मविडङ्गचित्राः ।
कृतः कषायः कफवातहन्ता क्रिमिज्वरच्छर्दिनिवारणोऽयम् २६

क्रिमिरोगे विष्णुप्रियादिक्काथः ।

विष्णुप्रियारात्रिफणिज्जकार्ककुठेरकासारिकसिन्दुवारैः ।
कृतः कषायः क्रिमिनाशनाय पलाशबीजप्रतिवापयोगात्॥२७

क्रिमिरोगे सुवर्चिकाद्यं चूर्णम् ।

सुवर्चिकारामठपत्रिकाह्वाविडङ्गवाह्लीककणाग्निविश्वाः ।
यवानिकाग्रन्थिकभद्रमुस्तास्तक्रेण चूर्णं क्रिमिकोटिहारि॥ २८॥

क्रिमिरोगे फञ्ज्यादिकषायः ।

फञ्जीफणिज्जकफलत्रितयाखुपर्णी-
क्काथः क्रिमिघ्नमगधाशिखिशिग्रुयुक्तः ।

पीतः क्रिमीनपहरेत् क्रिमिजा रुजश्च
जन्तोर्जयेदथ कणाक्रिमिजित्कषायः ॥ २९ ॥

कृमिरोगे शठ्यादिकषायः ।

शठ्याखुपर्णी क्रिमिहा विशाला ह्रीवेरनिम्बौ सुरदारु शिग्रुः ।
कैरातवासे कुटजोऽश्वगन्धा निशाद्वयं तिक्तकरोहिणी च॥३०॥
कषाय एषां क्रिमिहा विचूर्णितः
सातसन्निपातज्वरमाशु हन्ति ॥ ३१ ॥

कृमिरोगे खदिराद्यं चूर्णम् ।

खदिरं कुटजं पिचुमन्दवचा-
त्रिकटुत्रिफलात्रिवृतासहितम् ।
पशुमूत्रयुतं पिब सप्त दिनं
क्रिमिकोटिशतान्यपि पातयति ॥ ३२ ॥

क्रिमिरोगे पूपकयोगः ।

आखुपर्णीदलैः पिष्टैः पिष्टकेन च पूपकान् ।
पक्त्वा सौवीरकं चानुपिबेत् क्रिमिहरं परम् ॥ ३३ ॥

क्रिमिरोगे छोहाराद्यं चूर्णम् ।

छोहारचित्रकविडङ्गपलाशबीजैः
सव्योपवारिदगदाभयमद्यगन्धैः ।
बाह्लीकमागधिजटाजरणाजगन्धै-
श्चूर्णं त्रिवृद्द्विगुणितं क्रिमिजित्वराणाम् ॥ ३४ ॥

कृमिरोगे पलाशबीजयोगः ।

पलाशबीजस्वरसं पिबेद्वा क्षौद्रसंयुतम् ।
पिबेत्तद्बीजकल्कं वा तक्रेण क्रिमिनाशनम् ॥ ३५ ॥

क्रिमिरोगे निर्गुण्ड्यादिकषायः ।

निर्गुण्डिशिग्रुयुतकट्फलजः कषायः
कृष्णाक्रिमिघ्नफलकल्कयुतः प्रपीतः ।

कायात् क्रिमीनपहरेत् क्रिमिजांश्च रोगान्
काथः क्रिमिघ्नसुरसार्जकजोऽथ पीतः ॥ ३६ ॥

क्रिमिरोगे शिग्रुत्वगादिक्वाथः।

शिग्रुत्वचित्रफलाभ्यां तु कृतः क्वाथो निषेवितः।
जठरस्थान् क्रिमीन् क्षिप्रमुद्धरत्यविचारतः ॥ ३७ ॥

बालानां क्रिमिपातनार्थं सक्तुयोगः।

सक्तुभिः कटुतैलाक्तैर्गुदे सम्यक्प्रवेशितैः।
शिशोरपि प्रणश्यन्ति गुदजाः क्रिमयः क्षणात् ॥ ३८ ॥

क्रिमिरोगे भल्लातकादियोगः।

भल्लातकास्थिस्वरसं विडङ्गार्धेन संयुतम्।
मूर्चितं लिहेद्युक्त्या सिद्धं क्रिमिविनाशनम् ॥ ३९ ॥

क्रिमिरोगे कम्पिल्लकाद्यो योगः।

कम्पिल्लको हरीतक्यः क्षारः सैन्धवमेव च।
पिष्टं तक्रेण पातव्यं नित्यं क्रिमिविनाशनम् ॥ ४० ॥

क्रिमिरोगे निम्बीघृतम्।

क्रिमीनामाशयगतान् पक्वाशयगतानपि।
पीतं निम्बीघृतं हन्ति तरुमिन्द्राशनिर्यथा ॥ ४१ ॥

क्रमिरोगे त्रिफलाद्यं घृतम्।

त्रिफला त्रिवृता दन्ती वचा कम्पिल्लकस्तथा।
सिद्धमेभिर्गवां मूत्रे सर्पिः क्रिमिविनाशनम् ॥ ४२ ॥

क्रमिरोगे पूतिकरञ्जाद्योऽवपीडः।

फलं पूतिकरञ्जानां पिप्पल्यो मरिचानि च।
अवपीडं क्रिमिहरं कुर्याच्छीर्षविरेचनम् ॥ ४३ ॥
एतैरेवाक्षमात्रैस्तु घृतप्रस्थं विपाचयेत्।
त्रिगुणे तु गवां मूत्रे तन्नस्यं क्रिमिसूदनम् ॥ ४४ ॥

शिरःक्रिमिषु अपामार्गबीजादिचूर्णम्।

बीजं मयूरकशिरीषकरञ्जशिग्रो-
रश्मन्तकत्रिकटुकक्षवकं विडङ्गम्।

दन्तीफणिज्झकयुतं सह सैन्धवेन
स्वाहुग्धिकाकनकदुग्धिरसेन मिश्रम् ॥ ४५ ॥
चूर्णं शिरःक्रिमिहरं वमनप्रयोगा-
त्तैलं पिबेद्द्विगुणमेपकमूत्रसिद्धम् ॥ ४६ ॥
अयोरजःप्रयोगश्च गोमूत्रस्य च शोधनम् ।
यत्रान्न नित्यसेवी च क्रिमिदोषं नियच्छति ॥ ४७ ॥

क्रिमिरोगेऽपथ्यानि ।

दधिगुडेक्षुरसाम्लफलान्यलं
पिशितदुग्धगुडान् मधुरान् रसान् ।
सदलशाकयुताशनपानकं
परिहरेत् क्रिमिभिः परिपीडितः ॥ ४८ ॥

इति वैद्यवरश्रीसोढलग्रथिते गदनिग्रहे क्रिमिरोगाधिकारः षष्ठः ।

---

## अथ पाण्डुरोगकामलाकुम्भकामलाहलीमकाधिकारः सप्तमः ।

अथातः पाण्डुकामलाहलीमकनिदानं व्याख्यास्यामः ।

पाण्डुरोगभेदाः ।

निरूपितेषु क्रिमिषु वैवर्ण्यं वृद्धिमागतम् ।
तच्च पाण्डुष्वपि ततस्तेषामाद्द निदानकम् ॥ १ ॥
पाण्डुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः ।
चतुर्थः सन्निपातेन पञ्चमो भक्षणान्मृदः ॥ २ ॥

पाण्डुरोगनिदानम् ।

व्यायाममम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीव रूक्षम् ।
निषेवमाणस्य समेत्य रक्तं दोषास्त्वचं पाण्डुरतां नयन्ति ॥ ३॥

पाण्डुरोगपूर्वरूपाणि ।

त्वक्पादनष्ठीवनगात्रसादमृद्भक्षणप्रेक्षणकूटशोफाः ।
विण्मूत्रपीतत्वमथाविपाको भविष्यतस्तस्य पुरो भवन्ति ॥ ४ ॥

वातादिभेदेन पाण्डुरोगलक्षणानि ।

त्वङ्मूत्रनयनादीनां रूक्षकृष्णारुणाभता: ।
वातपाण्ड्वामये कम्पतोदानाहभ्रमादयः ॥ ५ ॥
पीतमूत्रशकृन्नेत्रो दाहतृष्णाज्वरान्वितः ।
भिन्नविण्मूत्रपीताभः पित्तपाण्ड्वामयी नरः ॥ ६ ॥
कफप्रसेकश्वयथुतन्द्रालस्यातिगौरवैः ।
पाण्डुरोगी कफाच्छुक्लैस्त्वङ्मूत्रनयनाननैः ॥ ७ ॥
ज्वरारोचकहृल्लासच्छर्दितृष्णाश्रमान्वितः ।
पाण्डुरोगी त्रिभिर्दोषैस्त्याज्यः क्षीणो हतेन्द्रियः ॥ ८ ॥

मृत्पाण्डुरोगस्य संप्राप्तिपूर्वकं लक्षणम् ।

मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः ।
कषाया मारुतं पित्तमूषरा मधुरा कफम् ॥ ९ ॥
कोपयेन्मृद्रसादींश्च रौक्ष्याद्भुक्तं विरूक्षयेत् ।
पूरयत्यविपक्वैव स्रोतांसि निरुणद्ध्यपि ॥ १० ॥
इन्द्रियाणां बलं हत्वा तेजो वीर्यौजसी तथा ।
पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम् ॥ ११ ॥
शूनाक्षिकूटगण्डभ्रूः शूनपान्नाभिमेहनः ।
क्रिमिकोष्ठोऽतिसार्येत मलं सासृक्कफान्वितम् ॥ १२ ॥

पाण्डुरोगस्यासाध्यलक्षणम् ।

पाण्डुरोगश्चिरोत्पन्नः खरीभूतो न सिध्यति ।
कालप्रकर्षाच्छूनानां यो वा पीतानि पश्यति ॥ १३ ॥
बद्धल्पं विट् सहरितं सकफं योऽतिसार्यते ।
दीनः श्वेतातिदिग्धाङ्गश्छर्दिमूर्च्छातृडन्वितः ॥ १४ ॥
सततास्त्रक्षयाद्यश्च पाण्डुः श्वेतत्वमाप्नुयात् ।
पाण्डुदन्तनखो यश्च पाण्डुनेत्रश्च यो भवेत् ।
पाण्डुसंघातदर्शी च पाण्डुरोगी विनश्यति ॥ १५ ॥

पाण्डुरोगे मधुयष्टीयोगः।

पाण्डुरोगहरं लिह्याच्चूर्णं क्षौद्रविमिश्रितम्।
यष्ट्याह्वस्य प्रयत्नेन तत्क्वाथं वा पिबेन्नरः॥ ३३॥

पाण्डुरोगे गोमयरसादियोगः।

गोमयस्य रसं सर्पिर्गुडं तण्डुलवारि च।
पाण्डुरोगविनाशाय पाययेद्भिषगातुरम्॥ ३४॥

पाण्डुरोगे मण्डूरयोगः।

शतवर्षं समादाय लोहसिङ्घाणकं शुभम्।
पलानि पञ्च तच्चूर्णं तुल्यक्षौद्रसमन्वितम्॥ ३५॥
भल्लातकास्थ्यष्टशतं विनिक्षिप्य विदाहयेत्।
तदक्षमात्रं तक्रेण पीत्वा जीर्णे च तक्रभुक्।
एवं लभेत सप्ताहात् पाण्डुरोगी सुखं परम्॥ ३६॥

पाण्डुरोगे लोहाद्यो मोदकः।

अयस्तिलत्र्यूषणकोलभागैः सर्वैः समं माक्षिकधातुचूर्णम्।
तैर्मोदकः क्षौद्रयुतोऽनुतक्रं पाण्ड्वामये दूरगतेऽपि शस्तः॥ ३७

पाण्डुरोगे मण्डूरयोगः।

अयोमलं तु सन्तप्तं भूयो गोमूत्रसेचितम्।
मधुसर्पिर्युतं चूर्णं सह भक्तेन योजयेत्॥ ३८॥
दीपनं चाग्निजननं शोफपाण्ड्वामयापहम्।

मृत्पाण्डुरोगे व्योषाद्यं घृतम्।

व्योषं बिल्वं द्विरजनी त्रिफला द्विपुनर्नवम्॥ ३९॥
मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च।
वृश्चिकाली च भार्गी च सक्षारैस्तैः शृतं घृतम्॥ ४०॥
सर्वान् प्रशमयत्येतद्विकारान् मृत्तिकाकृतान्॥ ४१॥

सोपद्रवे पाण्डुरोगे पुनर्नवादिकषायः।

पुनर्नवानिम्बपटोलशुण्ठीतिक्तामृतादार्व्यभयाकषायः।
सर्वाङ्गशोफोदरकासशूलश्वासान्वितं पाण्डुगदं निहन्ति॥४२॥

हलीमकलक्षणम् ।

यदा तु पाण्डोर्वर्णः स्याद्धरितः श्यावपीतकः ।
बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्वं मृदुज्वरः ॥ २५ ॥
स्त्रीष्वहर्षोऽङ्गमर्दश्च सादस्तृष्णारुचिभ्रमः ।
हलीमकं तदा तस्य विद्यादनिलपित्ततः ॥ २६ ॥

इति पाण्डुरोगहारिद्रककामलाकुम्भकामलाहलीमकनिदानम् ।

---

अथातः पाण्डुरोगहारिद्रककामलाकुम्भकामलाहलीमक-
चिकित्सितं व्याख्यास्यामः ।

पाण्डुरोगे सामान्यचिकित्सा ।

साध्यं तु पाण्ड्वामयिनं समीक्ष्य स्निग्धं घृतेनोर्ध्वमधश्च शुद्धम् ।
संपादयेत्क्षौद्रघृतप्रगाढैर्हरीतकीचूर्णमयैः प्रयोगैः ॥ २७ ॥
पिबेद्घृतं वा रजनीविपक्वं यत्त्रैफलं तैल्वकमेव वापि ।
विरेचनद्रव्ययुतं पिबेद्वा योगांश्च वैरेचनिकान् घृतेन ॥ २८ ॥

दोषविशेषेण पाण्डुरोगचिकित्साविधिः ।

विधिः स्निग्धोऽथ वातोत्थे तिक्तशीतस्तु पैत्तिके ।
श्लैष्मिके कटुरूक्षोष्णः कार्यो मिश्रस्तु मिश्रके ।
द्विशर्करं त्रिवृच्चूर्णं पलार्धं पैत्तिके पिबेत् ॥ २९ ॥

कफाधिके पाण्डुरोगे दशमूलीकषायः ।

द्विपञ्चमूलीकथितं सविश्वं कफाधिके पाण्डुगदे पिबेत्तु ।
ज्वरातिसारश्वयथौ ग्रहण्यां श्वासेऽरुचौ कण्ठहृदामयेषु ॥३०॥

पाण्डुरोगे फलत्रिकाद्यः क्वाथः ।

फलत्रिकामृतावासातिक्ताभूनिम्बनिम्बजः ।
क्वाथः क्षौद्रयुतो हन्यात् पाण्डुरोगं सकामलम् ॥ ३१ ॥

पाण्डुरोगे मूर्वाद्यं चूर्णम्

मूर्वाबलान्वितं चूर्णं चित्रकस्योष्णवारिणा ।
पाण्डुरोगविनाशाय प्रातरुत्थाय संपिबेत् ॥ ३२ ॥

पाण्डुरोगे मधुयष्टीयोगः ।

पाण्डुरोगहरं लिह्याच्चूर्णं क्षौद्रविमिश्रितम् ।
यष्ट्याह्वस्य प्रयत्नेन तत्क्वाथं वा पिबेन्नरः ॥ ३३ ॥

पाण्डुरोगे गोमयरसादियोगः ।

गोमयस्य रसं सर्पिर्गुडं तण्डुलवारि च ।
पाण्डुरोगविनाशाय पाययेद्भिषगातुरम् ॥ ३४ ॥

पाण्डुरोगे मण्डूरयोगः ।

शतवर्षं समादाय लोहसिङ्घाणकं शुभम् ।
पलानि पञ्च तच्चूर्णं तुल्यक्षौद्रसमन्वितम् ॥ ३५ ॥
भल्लातकास्थ्यष्टशतं विनिक्षिप्य विदाहयेत् ।
तदक्षमात्रं तक्रेण पीत्वा जीर्णे च तक्रभुक् ।
एवं लभेत सप्ताहात् पाण्डुरोगी सुखं परम् ॥ ३६ ॥

पाण्डुरोगे लोहाद्यो मोदकः ।

अयस्तिलत्र्यूषणकोलभागैः सर्वैः समं माक्षिकधातुचूर्णम् ।
तैर्मोदकः क्षौद्रयुतोऽनुतक्रं पाण्ड्वामये दूरगतेऽपि शस्तः ॥ ३७

पाण्डुरोगे मण्डूरयोगः ।

अयोमलं तु सन्तप्तं भूयो गोमूत्रसेचितम् ।
मधुसर्पिर्युतं चूर्णं सह भक्तेन योजयेत् ॥ ३८ ॥
दीपनं चाग्निजननं शोफपाण्ड्वामयापहम् ।

मृज्जपाण्डुरोगे व्योषाद्यं घृतम् ।

व्योषं बिल्वं द्विरजनी त्रिफला द्विपुनर्नवम् ॥ ३९ ॥
मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च ।
वृश्चिकाली च भार्गी च सक्षारैस्तैः शृतं घृतम् ॥ ४० ॥
सर्वान् प्रशमयत्येतद्विकारान् मृत्तिकाकृतान् ॥ ४१ ॥

सोपद्रवे पाण्डुरोगे पुनर्नवादिकषायः ।

पुनर्नवानिम्बपटोलशुण्ठीतिक्तामृतादार्व्यभयाकषायः ।
सर्वाङ्गशोफोदरकासशूलश्वासान्वितं पाण्डुगदं निहन्ति ॥४२॥

पाण्डुरोगे बिभीतकाद्यो वटकः ।

बिभीतकायोमलनागराणां चूर्णं तिलानां च गुडश्च मुख्यः ।
तक्रानुपानो वटकः प्रयोज्यः क्षिणोति घोरानपि पाण्डुरोगान् ॥

हारिद्रके द्राक्षादिपाचनम् ।

द्राक्षापर्पटधान्याककैरातोशीरवालकैः ।
गुडूचीकटुकायुक्तैर्हारिद्रज्वरपाचनम् ॥ ४४ ॥

हारिद्रके त्रायन्तिकादिकाथः ।

त्रायन्तिकामधुकपिप्पलीमूलमुस्ता-
वासागुडूचिपिचुमन्दकिरातजातम् ।
शीतीकृतं मधुयुतं पिबतः कषायं
हारिद्रकज्वरमसौ विनिहन्ति शीघ्रम् ॥ ४५ ॥

कामलायां योगचतुष्टयम् ।

त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसम् ।
प्रातर्मधुयुतं वैद्यः कामलार्ताय योजयेत् ॥ ४६ ॥

कामलायां हरिद्राद्यं घृतम् ।

हरिद्रात्रिफलानिम्बबलामधुकसाधितम् ।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम् ॥ ४७ ॥

कामलायां दार्व्याद्यं चूर्णम् ।

दार्वी सत्रिफला व्योषं सविडङ्गमयोरजः ।
मधुसर्पिर्युतं लिह्यात् कामलापाण्डुरोगवान् ॥ ४८ ॥

कामलायां धात्र्याद्योऽवलेहः ।

धात्रीलोहरजोव्योषनिशाक्षौद्राज्यशर्कराः ।
लेहो निवारयत्याशु कामलामुद्धतामपि ॥ ४९ ॥

कामलायां त्रिफलाद्यो लेहः ।

त्रिफला द्वे हरिद्रे च कटुरोहिण्ययोरजः ।
चूर्णितं मधुसर्पिर्भ्यां लेहयेत् कामलापहम् ॥ ५० ॥

कामलायामञ्जनयोगाः।

अञ्जने कामलार्तानां द्रोणपुष्पीरसं शुभम्।
निशागैरिकधात्रीणां चूर्णं वा संप्रकल्पयेत्॥ ५१॥

कामलायां नस्ययोगः।

नस्यं कर्कोटमूलं स्याच्छ्रेष्ठं वा जालिनीफलम्।
कामलार्तस्य वैडङ्गं पिप्पल्यो नावनाञ्जने॥ ५२॥

कुम्भकामलायां शिलाजत्वादियोगत्रयम्।

गोमूत्रेण पिबेत् कुम्भकामलायां शिलाजतु।
मासं माक्षिकधातुं वा किट्टं वाऽथ हिरण्यजम्॥ ५३॥

कुम्भकामलायां मण्डूरयोगः।

दग्ध्वाऽक्षकाष्ठैर्मलमायसं तु गोमूत्रनिर्वापितसप्तरात्रम्।
विचूर्ण्य लीढं मधुनाऽचिरेण कुम्भाह्वयं पाण्डुगदं निहन्यात्॥५४॥

पाण्डुरोगादौ विशालाद्यं चूर्णम्।

विशालाकटुकामुस्ताकुष्ठदारुकलिङ्गकाः।
कर्षांशा द्विपिचुर्मूर्वा कर्षांशार्धा घुणप्रिया॥ ५५॥
पीत्वा तच्चूर्णमम्भोभिः सुखं लिह्यात्ततो मधु।
पाण्डुरोगं ज्वरं दाहं कासं श्वासमरोचकम्।
गुल्मानाहामवातांश्च रक्तपित्तं च तज्जयेत्॥ ५६॥

पाण्डुरोगे मण्डूराद्यवलेहः।

मण्डूरलोहाग्निविडङ्गपथ्याव्योषांशकः सर्वसमानताप्यः।
मूत्रसृतोऽयं मधुनाऽवलेहो पाण्ड्वामयं हन्त्यचिरेण घोरम्॥५७

पाण्डुरोगे लवणमण्डूरम्।

सिन्धूद्भवं चाग्निसमं तु कृत्वा सिक्त्वा च मूत्रे सकृदेव तच्च।
लौहं च किट्टं बहुशश्च तप्तं निषेचयेद्गोसलिले तथैव॥ ५८॥
एकीकृतं गोजलपिष्टमेतदेकध्यमावाप्य पचेदुपायाम्।
यथा न दह्येत तथा विशुष्कं चूर्णीकृतं पेयमुदश्विता तत्।
तक्रौदनाशी विनिहन्ति रोगं पाण्डुं तथा दीपनरोचनं च ५९

पाण्डुरोगे क्षीरयोगः ।

लोहपात्रे शृतं क्षीरं सप्ताहं पथ्यभोजनः ।
पिबेत् पाण्ड्वामयी शोषी ग्रहणीदोषपीडितः ॥ ६० ॥

पाण्डुरोगे पश्चिमयोगाः ।

क्षीरमूत्रं पिबेत् पक्वं गव्यं माहिषमेव वा ।
पाण्डुर्गोमूत्रयुक्तं वा सप्ताहं त्रिफलारसम् ॥ ६१ ॥
सप्तरात्रं गवां मूत्रे भावितं वाऽप्ययोरजः ।
पाण्डुरोगप्रशान्त्यर्थं पयसा प्रपिबेन्नरः ॥ ६२ ॥

पाण्डुरोगे गुडादिका गुटिका ।

गुडनागरमण्डूरतिलांशान्मानतः समान् ।
पिप्पलीं द्विगुणां दद्याद्गुटिका पाण्डुरोगिणे ॥ ६३ ॥

पाण्डुरोगे हरिद्राद्यवलेहः ।

हरिद्रा त्रिफला दन्ती व्योषं चित्रक आकुली ।
कटुका रोहिणी श्यामा पिप्पलीमूलमेव च ॥ ६४ ॥
वचा विडङ्गं त्रिफला त्रिवृता हस्तिपिप्पली ।
चूर्णान्येषां तु तुल्यानि द्विगुणं स्यादयोरजः ॥ ६५ ॥
तानि क्षीरानुपानानि लेहयेन्मधुसर्पिषा ।
पाण्डुरोगं जुदत्येष क्षयरुं चापकर्षति ॥ ६६ ॥

मृज्जपाण्डुरोगे बलादिघृतम् ।

बलया मधुकेनापि पिप्पल्युत्पलकेसरैः ।
पूर्ववत्साधितं सर्पिर्मृद्दोषानपकर्षति ॥ ६७ ॥

हलीमके गुडूचीघृतम् ।

गुडूचीस्वरसे सर्पिः सक्षीरं माहिषं शृतम् ।
चतुर्गुणेन पयसा पाययेत्तद्धलीमके ॥ ६८ ॥

हलीमके विरेचनम् ।

रसेनामलकानां तु त्रिवृतां युक्तितः पिबेत् ।
विरिक्तं भोजयेच्चैनं भूयिष्ठं मधुरान् रसान् ॥ ६९ ॥

हलीमके रसायनप्रयोगः ।

बलानागबलाभ्यां च पिप्पल्यां मधुकस्य च ।
रसायनानि सेवेत यथालाभं हलीमके ॥ ७० ॥

पाण्डुरोगादौ भोजनव्यवस्था ।

यवगोधूमशाल्यन्नैः रसैर्जाङ्गलजैः शुभैः ।
मुद्गाढकीमसूराद्यैस्तयोर्भोजनमिष्यते ॥ ७१ ॥

इति वैद्यरत्नश्रीमाधवविरचिते माधवनिदाने पाण्डुरोगहलीमककामला-
कुम्भकामलादिनिदानाधिकारः सप्तमः ॥ ७ ॥

---

## अथ रक्तपित्ताधिकारोऽष्टमः ।

अथातो रक्तपित्तनिदानं व्याख्यास्यामः ॥

रक्तपित्तनिदानम् ।

घर्मव्यायामशोकाध्वव्यवायैरतिसेवितैः ।
तीक्ष्णोष्णक्षारलवणैरम्लैः कटुभिरेव च ॥ १ ॥
पित्तं विदग्धं स्वगुणैर्विदहत्याशु शोणितम् ।
ततः प्रवर्तते रक्तमूर्ध्वं चाधो द्विधाऽपि वा ॥ २ ॥
ऊर्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ।
कुपितं रोमकूपैस्तु समस्तैस्तत् प्रवर्तते ॥ ३ ॥

रक्तपित्तपूर्वरूपम् ।

सदनं शीतकामित्वं कण्ठधूमायनं वमिः ।
लोहगन्धिश्च निःश्वासो भवत्यस्मिन् भविष्यति ॥ ४ ॥

श्लेष्मिकादिभेदेन रक्तपित्तलक्षणानि ।

सान्द्रं सपाण्डु सस्नेहं पिच्छिलं च कफान्वितम् ।
श्यावारुणं सफेनं च तनु रूक्षं च वातिकम् ॥ ५ ॥
रक्तं पीतं कषायाभं कृष्णं गोमूत्रसन्निभम् ।
मेचकागारधूमाभमञ्जनाभं च पैत्तिकम् ॥ ६ ॥

संसृष्टलिङ्गं संसर्गात्रिलिङ्गं सान्निपातिकम् ।

रक्तपित्तस्य संसर्गविशेषेण मार्गभेदः ।

ऊर्ध्वगं कफसंसृष्टमधोगं पवनानुगम् ॥ ७ ॥
द्विमार्गं कफवाताभ्यामुभाभ्यामनुवर्तते ।

रक्तपित्तस्य साध्यासाध्यत्वलक्षणम् ।

ऊर्ध्वं साध्यमधो याप्यमसाध्यं युगपद्गतम् ॥ ८ ॥
एकमार्गं बलवतो नातिवेगं नवोत्थितम् ।
रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम् ॥ ९ ॥
एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते ।
यत्त्रिदोषमसाध्यं स्यान्मन्दाग्नेरतिवेगवत् ।
व्याधिभिः क्षीणदेहस्य वृद्धस्यानशनस्य यत् ॥ १० ॥

रक्तपित्तोपद्रवाः ।

दौर्बल्यश्वासकासज्वरवमथुमदाः पाण्डुतादाहमूर्च्छा
भुक्ते घोरो विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीडा ।
तृष्णा कोष्ठस्य भेदः शिरसि च तपनं पूतिनिष्ठीवनं च
भक्तद्वेषाविपाकौ विकृतिरपि भवेद्रक्तपित्तोपसर्गाः ॥ ११ ॥

रक्तपित्तस्यासाध्यलक्षणानि ।

मांसप्रक्षालनाभं कथितमिव यत्कर्दमाम्भोनिभं वा
मेदःपूयास्रकल्पं यकृदिव यदि वा पक्वजम्बूफलाभम् ।
यत्कृष्णं यच्च नीलं भृशमतिकुणपं यत्र चोक्ता विकारा-
स्तद्वर्ज्यं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं विभाति ॥ १२ ॥
येन चोपहतो रक्तं रक्तपित्तेन मानवः ।
पश्येद्दृश्यं वियच्चैव तच्चासाध्यमसंशयम् ॥ १३ ॥
लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः ।
लोहितोद्गारदर्शी च म्रियते रक्तपित्तकः ॥ १४ ॥

इति रक्तपित्तनिदानम् ।

अथातस्तच्चिकित्सितं व्याख्यास्यामः ।

रक्तपित्तेऽपतर्पणम् ।

ऊर्ध्वप्रवृत्तदोषस्य पूर्वं लोहितपित्तिनः ।
अक्षीणबलमांसाग्नेः कर्तव्यमपतर्पणम् ॥ १५ ॥

रक्तपित्ते भोजनव्यवस्था ।

पथ्यं सतीनयूषेण सुशीतैर्लाजसक्तुभिः ।
यच्च पित्तज्वरे प्रोक्तं बहिरन्तश्च भेषजम् ॥ १६ ॥
रक्तपित्ते हितं तच्च क्षीणक्षतहितं च यत् ।
शालिषष्टिकनीवारा वनमुद्गमसूरकाः ।
पटोलनिम्बवेत्राग्रतण्डुलीयादयो हिताः ॥ १७ ॥
पटोलशेलुसुनिषण्णयूथिकावटातिमुक्ताजरसिन्दुवारजम् ।
हितं च शाकं घृतसंस्कृतं सदा तथैव धात्रीफलदाडिमान्वितम् ॥
रसाश्च पारावतकूर्मजास्तथा यवौदनश्चापि हितो घृतोत्तरः ॥१९

रक्तपित्ते संशोधनम् ।

ऊर्ध्वगे रेचनं पूर्वमधोगे वमनं हितम् ।
रक्तातिसारहन्ता च योज्यो विधिरशेषतः ॥ २० ॥

रक्तपित्ते मुस्तादिवमनम् ।

मुस्तेन्द्रयवयष्ट्याह्वमदनाढ्यं पयो मधु ।
शिशिरं वमनं योज्यं रक्तपित्तहरं परम् ॥ २१ ॥

रक्तपित्ते स्तम्भनयोग्यावस्था ।

क्षीणमांसबलं बालं वृद्धं शोषानुबन्धिनम् ।
अवाम्यमविरेच्यं च स्तम्भनैः समुपाचरेत् ॥ २२ ॥

रक्तपित्तेऽटरूषयोगाः ।

वृषपत्राणि निष्पीड्य रसं समधुशर्करम् ।
पिबेदाशु शमं याति रक्तपित्तं सुदारुणम् ॥ २३ ॥
पलानि पञ्च वासाया क्वाथ्यमष्टावशेषितम् ।
पिप्पल्यर्जकसंयोगाद्धरेद्रक्तं सुदारुणम् ॥ २४ ॥

आटरूपकनिर्यूहे प्रियङ्गुं मृत्तिकाञ्जने।
विनीय रोध्रं सक्षौद्रं रक्तपित्तहरं पिबेत् ॥ २५ ॥

रक्तपित्ते वासादिक्वाथः।

आटरूपकमृद्वीकापथ्याक्वाथः सशर्करः।
क्षौद्राढ्यः कसनश्वासरक्तपित्तनिबर्हणः ॥ २६ ॥

रक्तपित्ते कतिपययोगाः।

छागं पयः स्यात्परमं प्रयोगे गव्यं शृतं पञ्चगुणे जले वा।
सशर्करं माक्षिकसंप्रयुक्तं विदारिगन्धादिगणे शृतं वा ॥ २७ ॥
पक्वोदुम्बरकाश्मर्यपथ्याखर्जूरगोस्तनाः।
मधुना घ्नन्ति संलीढा रक्तपित्तं पृथक् पृथक् ॥ २८ ॥

रक्तपित्ते खदिरादिपुष्पयोगः।

खदिरस्य प्रियङ्गूनां कोविदारस्य शाल्मलेः।
पुष्पचूर्णानि मधुना लिह्याद्वा रक्तपित्तनुत् ॥ २९ ॥

रक्तपित्ते हरीतकीपिप्पल्योर्योगौ।

वासकस्वरसे पथ्या सप्तधा परिभाविता।
कृष्णा वा मधुना लीढा रक्तपित्तं द्रुतं जयेत् ॥ ३० ॥

भावनाविधिः।

द्रवेण यावता द्रव्यमेकीभूत्वाऽऽर्द्रतां व्रजेत्।
तावत्प्रमाणं निर्दिष्टं भिषग्भिर्भावनाविधौ ॥ ३१ ॥

रक्तपित्तेऽभयायोगः।

अभया मधुसंयुक्ता दीपनी पाचनी मता।
श्लेष्माणं रक्तपित्तं च हन्ति शूलातिसारनुत् ॥ ३२ ॥

रक्तपित्तावस्थायां पृथ्वीकायोगः।

लोहगन्धिनि निश्वासे उद्गारे धूमगन्धिनि।
पृथ्वीकां शाणमात्रां तु खादेद्विगुणशर्कराम् ॥ ३३ ॥

रक्तपित्ते उशीरादियोगः।

उशीरकालीयकरोध्रपद्मकाः प्रियङ्गुकाः कट्फलशङ्खगैरिकाः
पृथक् पृथक् चन्दनतुल्यभागिकाः सशर्करास्तण्डुलधावनप्लु

रक्तं सपित्तं तमकं पिपासां दाहं च पीताः शमयन्ति सद्यः।

रक्तपित्ते मुद्गादिशीतकषायः।

मुद्गाः सलाजाः सयवाः सकृष्णाः सोशीरमुस्ताः सह चन्दनेन॥
बलाजले पर्युषितः कषायः स रक्तपित्तं शमयत्युदीर्णम्॥ ३५

रक्तपित्ते द्वितीय उशीरादियोगः।

उशीरपद्मोत्पलचन्दनानां पक्वस्य लोष्टस्य च यः प्रसादः।
सशर्करः क्षौद्रयुतः सुशीतो रक्तातियोगप्रशमाय देयः॥ ३६॥

रक्तपित्ते प्रियङ्ग्वादियोगः।

प्रियङ्गुकाचन्दनरोध्रसारिवामधूकमुस्ताभयधातकीजलम्।
समृत्प्रसादं सह षष्टिकाम्बुना सशर्करं रक्तनिबर्हणं परम्॥३७

मूत्रमार्गप्रवृत्ते रक्तपित्ते शतावर्यादियोगः।

शतावरीगोक्षुरके शृतं वा शृतं पयो वाऽप्यथ पर्णिनीभिः।
रक्तं निहन्त्याशु विशेषतस्तु यन्मूत्रमार्गात्सरुजं प्रयाति॥२८

गुदप्रवृत्तरक्तप्रतीकारः।

विशेषतो विट्पथसंप्रवृत्ते पयो हितं मोचरसेन सिद्धम्।
वटावरोहैर्वटशुङ्गकैर्वा ह्रीवेरनीलोत्पलनागरैर्वा॥ ३९॥

रक्तपित्ते नीलोत्पलादियोगः।

नीलोत्पलं शर्करा च पद्मकं पद्मकेसरम्।
तण्डुलोदकसंयुक्तं प्रशस्तं रक्तपित्तिनाम्॥ ४०॥

रक्तपित्ते वासायोगः।

न वृषेण समं किञ्चिदौषधं रक्तपित्तिनाम्।
सिद्धः कषायः क्षुण्णो वा सर्पिर्वा वृषसाधितम्॥ ४१॥
वासायां विद्यमानायामाशायां जीवितस्य च।
रक्तपित्ती क्षयी श्वासी कासी किमवसीदति॥ ४२॥

रक्तपित्ते पलाशवृन्तयोगः।

पलाशवृन्तस्वरसं प्रपीड्य विधिवच्छृतम्॥ ४३॥

तल्लिह्यान्मधुसंयुक्तं रक्तपित्तनिवारणम् ।

रक्तपित्ते इक्षुकाण्डादिकषायः ।

इक्षूणां मध्यकाण्डानि सकोण्डं नीलमुत्पलम् ॥ ४४ ॥
केसरं पुण्डरीकस्य मोचं मधुकपद्मके ।
वटप्ररोहशृङ्गाश्च द्राक्षा काश्मर्यमेव च ॥ ४५ ॥
एतानि समभागानि कषायमुपसाधयेत् ।
व्युषितं मधुसंयुक्तं पाययेच्छर्करायुतम् ॥ ४६ ॥
सप्रमेहं रक्तपित्तं क्षिप्रमेव नियच्छति ।

रक्तपित्ते प्रियङ्ग्वादिचूर्णम् ।

घृपस्य स्वरसं कृत्वा द्रव्यैरेभिश्च योजयेत् ॥ ४७ ॥
प्रियङ्गुमृत्तिकारोध्रमञ्जनं चावचूर्णयेत् ।
तच्चूर्णं योजयेत्तत्र रसक्षौद्रसमन्वितम् ॥ ४८ ॥
नासिकामुखपायुभ्यो योनिमेढ्राच्च वेगितम् ।
प्रस्रवद्रक्तपित्तं च स्थापयत्येष योगराट् ॥ ४९ ॥
यच्च शस्त्रक्षते रक्तं न तिष्ठेद्दिक्षतं पुनः ।
तदप्यनेन योगेन तिष्ठत्याश्ववचूर्णितम् ॥ ५० ॥

ग्रथितरक्तचिकित्सा ।

ग्रथितं यस्य रुधिरं हृत्कण्ठे सन्निरुध्यति ।
तस्य पद्मोत्पलादीनां पुष्पपत्राणि दाहयेत् ॥ ५१ ॥
पूर्वेण विधिना क्षारं शुक्तिमात्रं पिबेन्नरः ।
हिंस्राधवपलाशानां सर्वेषां क्षीरिणामपि ॥ ५२ ॥
अनेन विलयं याति ग्रथितो रक्तसंचयः ।
कुमुदोत्पलपद्मानि सनालान्यग्निना दहेत् ॥ ५३ ॥
ग्रथिते सकफे रक्ते तल्लिह्यान्मधुसर्पिषा ।

रक्तपित्ते मुस्तादो लेहः ।

मुस्ताशृङ्गाटकद्राक्षालाजखर्जूरगैरिकाः ॥ ५४ ॥

---

१ 'सकन्दं' ख. ।

रक्तपित्तहरा लीढाः क्षौद्रेणैकद्विसर्वशः ।

नासातो रक्तप्रवृत्तौ शृङ्गादिनावनयोगाः ।

शृङ्गगैरिकयोः कल्कं धातक्या मधुकस्य वा ॥ ५५ ॥
घ्राणस्रुतेऽसृजि प्रोक्तं योषित्क्षीरेण नावनम् ।
नस्यं दाडिमपुष्पोत्थो रसो दूर्वाभवोऽथवा ।
आम्रास्थि च पलाण्डुर्वा नासिकाच्युतरक्तजित् ॥ ५६ ॥

नासारक्ते मातुलुङ्गमूलादियोगः ।

मूलानि पुष्पाणि च मातुलुङ्ग्याः समं पिबेत्तण्डुलधावनेन ।
घ्राणप्रवृत्ते जलमाशु देयं सशर्करं नासिकयोः पयो वा ॥५७॥

नासारक्ते उदुम्बरफलयोगः ।

उदुम्बराणि पक्वानि गुडेन मधुनाऽपि वा ।
उपयुक्तानि निघ्नन्ति नासारक्तं नृणां ध्रुवम् ॥ ५८ ॥

नासारक्ते दाडिमपुष्परसादिनस्यम् ।

रसो दाडिमपुष्पस्य दूर्वारससमन्वितः ।
सालक्तकरसोपेतः पथ्यारससमन्वितः ॥ ५९ ॥
योजितो नस्यतः क्षिप्रं त्रिदोषमपि देहिनाम् ।
नासारक्तं प्रवृत्तं तु हन्यादिवि किमद्भुतम् ॥ ६० ॥

रक्तपित्ते नस्यार्थमनन्तादिघृतम् ।

अनन्ता सारिवा रोध्रं पद्मकं कमलोत्पलम् ।
कल्कैरेषां पचेत्सर्पिः सक्षीरं नावनं परम् ॥ ६१ ॥

नासारक्ते हरीतक्यादिनस्यम् ।

हरीतकीदाडिमपुष्पदूर्वालाक्षारसो नस्यविधानयोगात् ।
निवारयत्येव चिरप्रवृत्तमप्याशु नासान्तरशोणितौघम् ॥६२॥

रक्तपित्ते द्राक्षाहरीतकीयोगः ।

अपहरति रक्तपित्तं कण्डूं गुल्मं च पैत्तिकं सद्यः ।
जीर्णज्वरं च शमयति मृद्वीकासंयुता पथ्या ॥ ६३ ॥

---

१ 'दाह-' ख. ।

रक्तपित्ते मदयन्तिकामूलकषायः ।

मदयन्तिकमूलस्य कषायः पूतशीतलः ।
शर्करामधुसंयुक्तो रक्तपित्तप्रणाशनः ॥ ६४ ॥

रक्तपित्ते वासाघृतम् ।

वासाकषायसंयुक्तं घृतं तत्पत्रकल्कितम् ।
सक्षौद्रं रक्तपित्तघ्नं श्वासकासज्वरापहम् ॥ ६५ ॥

ऊर्ध्वगे रक्तपित्ते विष्णुक्रान्तायोगः ।

क्षीरान्नभुक् पिबेद्यत्नाद्विष्णुक्रान्तां सशर्कराम् ।
ऊर्ध्वरक्तार्दितः सम्यग्गव्येन पयसा सह ॥ ६६ ॥

ऊर्ध्वगे रक्तपित्ते कुङ्कुमयोगः ।

शृतेनाजेन दुग्धेन सुपिष्टं कुङ्कुमं पिबेत् ।
ऊर्ध्वरक्तविनाशाय तेनैवाजेन भोजनम् ॥ ६७ ॥

ऊर्ध्वगे रक्तपित्ते कुटजादियोगः ।

कुटजत्वक्समायुक्तैर्धातकीरोध्रवालकैः ।
चूर्णमुत्पलसंमिश्रैः कृतमिन्द्रयवान्वितैः ॥ ६८ ॥
वासारसेन संमिश्रैरवश्यायस्थितं पिबेत् ।
मधुना योजितं ह्येतदूर्ध्वरक्तहरं परम् ॥ ६९ ॥

रक्तपित्ते यष्ट्यादिक्षीरम् ।

यष्टीमधुसमायुक्तं क्षीरं संक्वाथ्य शीतलम् ।
शर्करामधुसंमिश्रं रक्तपित्तापहं पिबेत् ॥ ७० ॥

रक्तपित्ते मधुकादियोगः ।

मधुकोत्पलरास्नाभिर्युक्तमुत्पलकन्दकम् ।
पीतं तण्डुलतोयेन समिश्रं रक्तपित्तजित् ॥ ७१ ॥

रक्तपित्ते वासादियोगः ।

वासाकषायोत्पलमृत्प्रियङ्गुरोध्राञ्जनाम्भोरुहकेसराणि ।
पीत्वा सिताक्षौद्रयुतानि हन्यात्पित्तासृजो वेगमुदीर्णवेगम् ॥७२

रक्तपित्ते भोजनव्यवस्था ।

लङ्घितस्य ततः पेयां विदध्यात्स्वल्पतण्डुलाम् ।
पाचनं तर्पणं स्नेहाः सर्पींषि विविधानि च ॥ ७३ ॥
ह्रीवेरचन्दनोशीरमुस्तपर्पटकैः शृतम् ।
केवलं शृतशीतं वा दद्यात्तोयं पिपासवे ॥ ७४ ॥
पद्मकोत्पलकिञ्जल्कपृश्निपर्णीप्रियङ्गुभिः ।
जले साध्या रसे तस्मिन् पेया स्याद्रक्तपित्तिनाम् ॥ ७५ ॥

इति श्रीसोढलप्रथिते गदनिग्रहे रक्तपित्ताधिकारोऽष्टमः ।

---

## अथ राजयक्ष्मक्षतक्षीणशोषाधिकारो नवमः ।

अथातो राजयक्ष्मक्षतक्षीणशोषनिदानं व्याख्यास्यामः ।

राजयक्ष्मणो निदानपूर्विका संप्राप्तिः ।

वेगरोधात् क्षयाच्चैव साहसाद्विषमाशनात् ।
त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥ १ ॥
कफप्रधानैर्दोषैस्तु रुद्धेषु रसवर्त्मसु ।
अतिव्यवायिनो वाऽपि क्षीणे रेतस्यनन्तरे ॥ २ ॥
क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः ।

शोषपूर्वरूपाणि ।

श्वासाङ्गसादकफसंस्रवतालुशोष-
च्छर्द्यग्निसादमदपीनसकासनिद्राः ।
शोषे भविष्यति भवन्ति स चापि जन्तुः
शुक्लेक्षणो भवति मांसपरो रिरंसुः ॥ ३ ॥
स्वप्नेषु काकशुकशल्लकनीलकण्ठ-
गृध्रास्तथैव कपयः कृकलासकाश्च ।
तं वाहयन्ति स नदीर्विजलाश्च पश्ये-
च्छुष्कांस्तरून् पवनधूमदवार्दितांश्च ॥ ४ ॥

राजयक्ष्मलक्षणम् ।

अंसपार्श्वाभितापश्च सन्तापः करपादयोः ।
ज्वरः सर्वाङ्गगश्चेति लक्षणं राजयक्ष्मणः ॥ ५ ॥

राजयक्ष्मिणः साध्यासाध्यविचारः ।

स्वरभेदोऽनिलाच्छूलं संकोचश्चांसपार्श्वयोः ।
ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः ॥ ६ ॥
शिरसः परिपूर्णत्वमभक्तच्छन्द एव च ।
कासः कण्ठस्य चोद्ध्वंसो विज्ञेयः कफकोपतः ॥ ७ ॥
एकादशभिरेभिर्वा षड्भिर्वाऽपि समन्वितम् ।
कासातिसारपार्श्वार्तिस्वरभेदारुचिज्वरैः ॥ ८ ॥
त्रिभिर्वा पीडितं लिङ्गैः कासश्वासासृगामयैः ।
जह्याच्छोषार्दितं तूर्णमिच्छन् सुविपुलं यशः ॥ ९ ॥
सर्वैरर्धैस्त्रिभिर्वापि लिङ्गैर्मांसबलक्षये ।
युक्तो वर्ज्यश्चिकित्स्यस्तु सर्वरूपोऽप्यतोऽन्यथा ॥ १० ॥
महाशनं क्षीयमाणमतीसारनिपीडितम् ।
शूनमुष्कोदरं चैव यक्ष्मिणं परिवर्जयेत् ॥ ११ ॥
उपक्रमेदात्मवन्तं दीप्ताग्निमकृशं नरम् ।
शुक्राक्षमनद्दद्धारमूर्ध्वश्वासनिपीडितम् ॥ १२ ॥
कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम् ।

व्यवायशोषादीनां लक्षणानि ।

व्यवायशोकवार्धक्यव्यायामाध्वप्रशोषितान् ॥ १३ ॥
व्रणोरःक्षतसंज्ञौ च शोषिणौ लक्षणैः शृणु ।
व्यवायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुतः ॥ १४ ॥
पाण्डुदेहो यथापूर्वं क्षीयन्ते चास्य धातवः ।
प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः ॥ १५ ॥
विना शुक्रक्षयकृतैर्विकारैरभिलक्षितः ।
जराशोषी कृशो मन्दः स्वल्पबुद्धिबलेन्द्रियः ॥ १६ ॥

कम्पनोऽरुचिमान् भिन्नकांस्यपात्रहतस्वरः।
ष्ठीवति श्लेष्मणा हीनं गौरवारतिपीडितः॥ १७॥
संप्रसुतास्यनासाक्षः शुष्करूक्षमलच्छविः।
अध्वप्रशोषी स्रस्ताङ्गः संभ्रष्टपरुषच्छविः॥ १८॥
प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः।
व्यायामशोषी भूयिष्ठमेभिरेव समन्वितः॥ १९॥
लिङ्गैरुरःक्षतकृतैः संयुक्तश्च क्षतं विना।
रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात्॥ २०॥
व्रणितस्य भवेच्छोषः स चासाध्यतमो मतः।

उरःक्षतलक्षणम्।

धनुषाऽऽयस्यतोऽत्यर्थं भारमुद्वहतो गुरुम्॥ २१॥
युध्यमानस्य बलिभिः पततो विषमोच्चतः।
वृषं हयं वा धावन्तं दम्यं चान्यं निगृह्णतः॥ २२॥
शिलाकाष्ठाश्मनिर्घातान् क्षिपतो निघ्नतः परान्।
अधीयानस्य वात्युच्चैर्दूरं वा व्रजतो द्रुतम्॥ २३॥
महानदीं वा तरतो हयैर्वा सह धावतः।
सहसोत्पततो दूरं तूर्णं वाऽतिप्रनृत्यतः॥ २४॥
तथाऽन्यैः कर्मभिः क्रूरैर्भृशमभ्याहतस्य च।
विक्षते वक्षसि व्याधिर्बलवान् समुदीर्यते॥ २५॥
स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः।
उरो विरुज्यतेऽत्यर्थं भिद्यतेऽथ विभज्यते॥ २६॥
प्रपीड्यते ततः पार्श्वे शुष्यत्यङ्गं प्रवेपते।
क्रमाद्वीर्यं बलं वर्णो रुचिरग्निश्च हीयते॥ २७॥
ज्वरो व्यथा मनोदैन्यं विड्भेदाग्निवधावपि।
दुष्टः श्यावः सदुर्गन्धः पीतो विग्रथितो बहुः॥ २८॥

कासमानस्य चाभीक्ष्णं कफः सास्रः प्रवर्तते ।
शुष्यतः क्षीयतेऽत्यर्थं तथा शुक्रौजसोः क्षयात् ॥ २९ ॥
अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतम् ।
उरोरुक् शोणितच्छर्दिः कासो वैशेषिकः क्षते ॥ ३० ॥
क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटीग्रहः ।
अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः ॥ ३१ ॥
परिसंवत्सरो याप्यः सर्वलिङ्गं तु वर्जयेत् ।

राजयक्ष्मिण आयुष्यमर्यादा ।

परं दिनसहस्रं तु यदि जीवति मानवः ॥ ३२ ॥
सुभिषग्भिरुपक्रान्तस्तरुणः शोषपीडितः ॥ ३३ ॥

राजयक्ष्मिणोऽपरमसाध्यलक्षणम् ।

कासः कुक्षिशिरोव्यथान्वितवपुश्छर्दिर्ज्वरोऽरोचकः
पीतं पूयनिभं सरक्तहरितं नीलं च निष्ठीवनम् ।
हानिः स्याद्बलमांसयोरनुदिनं श्वासेन कष्टं तथा
यस्यास्तस्य न जातु वैद्यकवरैः कार्योपचारक्रिया ॥३४॥

प्रकारान्तरेण राजयक्ष्मलक्षणानि ।

चक्रे विगन्धं स्वरभङ्गयुक्तं तुच्छः स्वरः पाणिपदेषु दाहः ।
रक्तान्वितश्छर्द्यतिसारयुक्तः प्रोक्तं तदन्यत्क्षयलक्षणं च ॥३५॥
शोफाग्निमान्द्यमरुचिः श्वासः स्वरभङ्गकासतनुजाड्यम् ।
छर्दिस्तदिदं गदितं लक्षणमन्यत्क्षये जन्तोः ॥ ३६ ॥

इति राजयक्ष्मक्षतक्षीणशोषनिदानम् ।

---

अथातस्तच्चिकित्सितम् ।

राजयक्ष्मणि संशोधनम् ।

स्थिरादिवर्गसिद्धेन घृतेनाजाविकेन च ।
स्निग्धस्य मृदु कर्तव्यमूर्ध्वं चाधश्च शोधनम् ॥ ३७ ॥

आस्थापनं तथा कार्यं शिरसश्च विरेचनम् ।

राजयक्ष्मणि भोजनव्यवस्था ।

यवगोधूमशालीनां रसैर्भुञ्जीत शोधितः ॥ ३८ ॥
दृढेऽग्नौ बृंहयेच्चापि निवृत्तोपद्रवं नरम् ।
शालिषष्टिकगोधूमयवमुद्गादयः शुभाः ॥ ३९ ॥
मद्यानि जाङ्गलाः पक्षिमृगाः शस्ता विशुष्यतः ।
सपिप्पलीकं सयवं सकुलत्थं सनागरम् ॥ ४० ॥
दाडिमामलकोपेतं स्निग्धमाजं रसं पिबेत् ।
तेन षड्विनिवर्तन्ते विकाराः पीनसादयः ॥ ४१ ॥
द्रव्यतो द्विगुणं मांसं सर्वतोऽष्टगुणं जलम् ।
पादस्थं सुकृतं चाम्लैः षडङ्गो यूष उच्यते ॥ ४२ ॥
व्यञ्जनं क्षारहिङ्ग्वग्ररहितं घृतपाचितम् ।
अजाजिमरिचैलाभिः संस्कृतं नो विदाहिभिः ॥ ४३ ॥

क्षयेऽपथ्यानि ।

वृन्ताकं कारवेल्लं च तैलं बिल्वं च राजिकाम् ।
मैथुनं घननिद्रां च क्षयी कोपं च वर्जयेत् ॥ ४४ ॥

क्षये गलमलविशुद्ध्यर्थं सामुद्रादियोगः ।

सामुद्रकं च संचूर्ण्य भानुदुग्धेन भावितम् ।
पाययेद्गव्यदुग्धेन गले मलविशुद्धये ॥ ४५ ॥

क्षये कासविष्टम्भशान्त्यर्थं मार्कण्डीपत्रगुटिका ।

मार्कण्डीपत्रचूर्णस्य गुटिकां मधुना कृताम् ।
धारयेत्सततं वक्त्रे कासविष्टम्भशान्तये ॥ ४६ ॥

क्षतक्षये बलादियोगः ।

बला विदारी श्रीपर्णी बहुपुत्री पुनर्नवा ।
पयसा नित्यमभ्यस्ताः शमयन्ति क्षतक्षयम् ॥ ४७ ॥

यवाग्वा वा पिबेन्मात्रां लिह्याद्वा मधुना सह।
सिद्धानां सर्पिषामेषामद्यादन्नेन वा सह।
शुष्यतामेष निर्दिष्टो विधिराभ्यवहारिकः ॥ ८६ ॥
बहिःस्पर्शनमाश्रित्य प्रवक्ष्याम्यपरं विधिम्।

क्षयेऽभ्यङ्गादिबाह्योपचारः।

स्नेहक्षीराम्बुकोष्ठे तं स्वभ्यक्तमवगाहयेत् ॥ ८७ ॥
स्रोतोविबन्धमोक्षार्थं बलपुष्ट्यर्थमेव च ॥ ८८ ॥
उत्तीर्णं मिश्रकैः स्नेहैः पुनरक्तं सुखैः करैः।
मृद्नीयात्सुखमासीनं सुखं चोत्सादयेन्नरम् ॥ ८९ ॥

क्षये उत्सादनार्थं जीवन्त्याद्यं चूर्णम्।

जीवन्तीं शतवीर्यां च विकसां सपुनर्नवाम्।
अश्वगन्धामपामार्गं तर्कारीं मधुकं बलाम् ॥ ९० ॥
विदारीं सर्षपान् कुष्ठं तण्डुलानतसीफलम्।
माषांस्तिलान् सकिण्वं च सर्वमेकत्र चूर्णयेत् ॥ ९१ ॥
यवचूर्णं च द्विगुणं दध्ना युक्तं समाक्षिकम्।
एतदुत्सादनं कार्यं पुष्टिवर्णबलप्रदम् ॥ ९२ ॥

क्षये विहारव्यवस्था।

गौरसर्षपकल्केन गन्धैश्चापि सुगन्धिभिः।
स्नायादृतुसुखैस्तोयैर्जीवनीयौषधशृतैः ॥ ९३ ॥
गन्धैः समाल्यैर्वासोभिर्भूषणैश्च सुभूषितः।
स्पर्शान् संस्पृश्य संपूज्य देवताः सभिषग्द्विजाः ॥ ९४ ॥
इष्टवर्णरसस्पर्शं गन्धवत्पानभोजनम्।
इष्टमिष्टैरुपहितं हितमद्यात्सुखप्रदम् ॥ ९५ ॥
समातीतानि धान्यानि कल्पनीयानि शुष्यताम्।
लघून्यहीनवीर्याणि तानि पथ्यतमानि च ॥ ९६ ॥
यच्चोपदेक्ष्यते किंचित्क्षतक्षीणचिकित्सिते।
यक्ष्मिणस्तत्प्रयोक्तव्यं बलमांसाभिवृद्धये ॥ ९७ ॥

अभ्यङ्गोत्सादनस्नानैरवगाहैर्विमार्जनैः ।
वस्तिभिः क्षीरसर्पिर्भिर्मांसैर्मांसरसौदनैः ॥ ९८ ॥
इष्टैर्मद्यैर्मनोज्ञानां गन्धानामुपसेवनैः ।
यथर्तुविहितैः स्नानैर्वासोभिश्च हितैः प्रियैः ॥ ९९ ॥
सुहृदां रमणीयानां प्रमदानां च दर्शनैः ।
गीतवादित्रशब्दैश्च प्रियश्रुतिभिरेव च ॥ १०० ॥
हर्षणाश्वासनैर्नित्यं गुरूणां समुपासनैः ।
ब्रह्मचर्येण दानेन तपसा देवतार्चनैः ॥ १०१ ॥
सत्येनाचारयोगेन मङ्गलैरविहिंसया ।
वैद्यविप्रार्चनाच्चैव रोगराजो निवर्तते ॥ १०२ ॥

क्षये पिप्पलीमूलाद्योऽरिष्टः ।

समूला पिप्पली शृङ्गी बृहती ह्यश्मभेदकः ।
पाटला देवकाष्ठं च श्वदंष्ट्रा ह्यभया तथा ॥ १०३ ॥
एकैकात्षोडशपलं कोलानामाढकं तथा ।
दन्तीचित्रकमूलानां पञ्चविंशपलं पृथक् ॥ १०४ ॥
चतुर्गुणे जलद्रोणे पचेदर्धावशेषितम् ।
शीतं समावपेद्भाण्डे प्रलिप्ते मधुसर्पिषा ॥ १०५ ॥
खण्डस्य द्वे शते शुद्धे तद्वल्लोहं समावपेत् ।
पत्रीकृतं तिलोत्सेधं सूक्ष्मचूर्णान्यमूनि च ॥ १०६ ॥
प्रियङ्गुं पिप्पलीं रोध्रं मृद्वीकां सैलवालुकम् ।
क्रमुकं शतपुष्पां च निम्बं तेजोवतीमपि ॥ १०७ ॥
पालिकान् देवदारुं च खदिरस्य चतुःपलम् ।
क्षौद्रप्रस्थद्वयं चापि समासिच्य घटे शुभे ॥ १०८ ॥
सौम्ये पुष्ये तथा हस्ते रोहिण्यामुत्तरासु च ।
दशरात्रस्थितः पेयोऽरिष्ट आत्रेयपूजितः ॥ १०९ ॥
अश्विभ्यां कथितं पूर्वं रसायनमिदं शुभम् ।
यथाग्निबलमात्रां तु पिबेदस्य हिताशनः ॥ ११० ॥

धन्यं पुष्टिकरं मेध्यं वलीपलितनाशनम् ।
क्षयकासज्वरप्लीहकृच्छ्रगुल्माग्निमार्दवे ॥ १११ ॥
श्वित्रेऽश्मर्यां तथोदर्दे विद्रध्यामश्वयादिषु ।
पाण्डुरोगोदरस्तन्यरोगदोषे च शस्यते ॥ ११२ ॥
नाडीपिडिकयोर्दोषे भूतापस्मारसङ्करे ।

इति श्रीशोढलविरचिते गदनिग्रहे कायचिकित्साखण्डे राजयक्ष्मक्षतक्षीणशोषाधिकारो नवमः ।

## अथ कासाधिकारो दशमः ।

अथातः कासनिदानं व्याख्यास्यामः ।

कासस्य निदानपूर्विका संप्राप्तिः ।

क्षयायोपेक्षिताः कासा इति शोषनिदानताम् ।
कासस्याहुरतः कासस्तदनन्तरमुच्यते ॥ १ ॥
धूमोपघाताद्रजसस्तथैव व्यायामरूक्षान्ननिषेवणाच्च ।
विमार्गगत्वादपि भोजनस्य वेगावरोधात्क्षवथोस्तथैव ॥ २ ॥
प्राणो ह्युदानानुगतः प्रदुष्टः संभिन्नकांस्यस्वनतुल्यघोषः ।
निरेति वक्त्रात्सहसा सदोषो मनीषिभिः कास इति प्रदिष्टः ३
पञ्च कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः ।
क्षयायोपेक्षिताः सर्वे बलिनश्च यथोत्तरम् ॥ ४ ॥

कासपूर्वरूपम् ।

पूर्वरूपं भवेत्तेषां शूकपूर्णगलास्यता ।
कण्ठे कण्डूश्च भोज्यानामवरोधश्च जायते ॥ ५ ॥

वातजादिभेदेन कासलक्षणानि ।

हृच्छङ्खमूर्धोदरपार्श्वशूली क्षामाननः क्षीणबलस्वरौजाः ।
प्रसक्तवेगस्तु समीरणेन भिन्नस्वरः कासति शुष्कमेव ॥ ६ ॥
उरोविदाहज्वरवक्त्रशोषैरभ्यर्दितस्तिक्तमुखस्तृषार्तः ।
पित्तेन पीतानि वमेत्कटूनि कासेत्सपाण्डुः परिदह्यमानः ॥७

प्रलिप्यमानेन मुखेन सीदन् शिरोरुजार्तः कफपूर्णदेहः।
अभक्तरुग्गौरवकण्डुयुक्तः कासेद्भृशं सान्द्रकफः कफेन ॥ ८ ॥

क्षतकासलक्षणम्।

अतिव्यवायभाराध्वयुद्धाश्वगजविग्रहैः।
रूक्षस्योरः क्षतं वायुर्गृहीत्वा कासमाचरेत् ॥ ९ ॥
स पूर्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम्।
कण्ठेन रुजताऽत्यर्थं विभिन्नेनेव चोरसा ॥ १० ॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना।
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना ॥ ११ ॥
पर्वभेदज्वरश्वासतृष्णावैस्वर्यपीडितः।
पारावत इवाकूजन् कासवेगात्क्षतोद्भवात् ॥ १२ ॥

क्षयजकासलक्षणम्।

विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात्।
घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः ॥ १३ ॥
कुपिताः क्षयजं कासं कुर्युर्देहक्षयप्रदम् ॥ १४ ॥
सगात्रशूलज्वरदाहमोहान् प्राणक्षयं चोपलभेत कासी।
शुष्यन्विनिष्ठीवति दुर्बलस्तु प्रक्षीणमांसो रुधिरं सपूयम्।
तं सर्वलिङ्गं भृशदुश्चिकित्स्यं चिकित्सितज्ञाः क्षयजं वदन्ति १५

कासानां साध्यासाध्यविचारः।

इत्येष क्षयजः कासः क्षीणानां देहनाशनः।
साध्यो बलवतां वा स्याद्याप्यस्त्वेवं क्षतोद्भवः ॥ १६ ॥
नवौ कदाचित्सिध्येतामपि पादगुणान्वितौ।
स्थविराणां जराकासः सर्वो याप्यः प्रकीर्तितः।
त्रीन् पूर्वान् साधयेत्साध्यान् पथ्यैर्याप्यांस्तु यापयेत् ॥१७
पञ्चैव कासान् प्रपठन्ति तेषु साध्यं तथासाध्यमथापि याप्यम्।
क्षीणेष्वतीसारयुतेष्वसाध्यं साध्यं बलिष्ठेष्वबलेषु याप्यम्॥१८॥

प्रकारान्तरेण कासलक्षणानि।

शिरसि हृदयवक्षोदन्दकुक्षिप्रदेशे
भवति विपुलशूलं शुष्ककासस्तथा च।
स्वरपदगतिभङ्गः ष्ठीवनं स्वल्पशुष्कं
सततमखिलमेतद्वातकासस्य लिङ्गम् ॥ १९ ॥
निष्ठीवनं पीतसदाहतिक्तं छर्दिस्तथा लोहितपीतवर्णः।
तृष्णा भ्रमः सव्यथकासभावस्तल्लक्षणं पित्तजकास उक्तम्॥२०
हृदये जायते जाड्यं देहे रोमाञ्चकञ्चुकम्।
लक्षणं श्लेष्मकासस्य बहु स्निग्धं च थूत्कृतम् ॥ २१ ॥

---

अथातः कासचिकित्सितं व्याख्यास्यामः।

वातकासे पञ्चमूलीकषायः।

पञ्चमूलीकृतः क्वाथः पिप्पलीचूर्णसंयुतः।
रसान्नमश्नतो नित्यं वातकासमुदस्यति ॥ २२ ॥

वातकासे भार्ग्यादिलेहः।

भार्गीद्राक्षाशठीशृङ्गीपिप्पलीविश्वभेषजैः।
गुडतैलयुतो लेहो हितो मारुतकासिनाम् ॥ २३ ॥

वातकासे शुण्ठ्यादिलेहः।

चूर्णिता विश्वदुःस्पर्शाशृङ्गीद्राक्षाशठीसिताः।
लीढ्वा तैलेन वातोत्थं कासं जयति दुस्तरम् ॥ २४ ॥

वातकासे दुरालभादिलेहौ।

दुरालभां शृङ्गवेरं शठीं द्राक्षां सितोपलाम्।
लिह्यात् कर्कटशृङ्गीं च कासे तैलेन वातजे ॥ २५ ॥
दुरालभा शठी कृष्णा मधुकं सितशर्करा।
लीढं निहन्ति वातोत्थं कासं क्षौद्रेण योजितम् ॥ २६ ॥

वातकासे कण्टकार्यादिघृतम्।

कण्टकारीगुडूचीभ्यां पृथग्दशपलाद्रसे।
प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः ॥ २७ ॥

कासे शृङ्ग्यादिचूर्णम्।

शृङ्गीवचाकट्फलकत्तृणाब्दधान्याभयाभार्ग्यमराह्वविश्वम्।
उष्णाम्बुना हिङ्गुयुतं च पीत्वा यद्वासमप्याशु जहाति कासम्॥

वातजे कफजे च कासे कट्फलादिक्वाथः।

कट्फलं कत्तृणं भार्गी मुस्ता धान्यं वचाऽभया।
शुण्ठी पर्पटकं शृङ्गी सुराह्वं च जले शृतम्॥ २९॥
मधुहिङ्गुयुतं पेयं कासे वातकफात्मके।
कण्ठरोगे मुखस्तम्भे श्वासे हिक्काज्वरेषु च॥ ३०॥

पित्तकासे बलादिक्वाथः।

बलाद्विबृहतीवासाद्राक्षाभिः क्वथितं जलम्।
पित्तकासापहं पेयं शर्करामधुयोजितम्॥ ३१॥

पित्तकासे पञ्चमूल्यादिक्षीरम्।

स्थिरादिपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा।
कषायेण शृतं क्षीरं पिबेत्समधुशर्करम्॥ ३२॥

पित्तकासे द्राक्षादिलेहः।

द्राक्षामलकखर्जूरं पिप्पलीमरिचान्वितम्।
पित्तकासहरं ह्येतल्लिह्यान्माक्षिकसर्पिषा॥ ३३॥

पित्तकासे खर्जूरादिलेहः।

खर्जूरपिप्पलीद्राक्षासितालाजाः समांशकाः।
मधुसर्पिर्युतो लेहः पित्तकासहरः परः॥ ३४॥

पित्तकासे पञ्चबीजयोगः।

चूर्णं तु पञ्चबीजानां मधुना संप्रयोजितम्।
पित्तकासार्दितो लिह्यात्स्वास्थ्यं स लभते क्षणात्॥ ३५॥

पित्तकासे वासाघृतम्।

वासाकषायकल्काभ्यां घृतं समधुशर्करम्।
सिद्धं तत्पित्तकासघ्नं सर्वपित्तविकारनुत्॥ ३६॥

पित्तकासे द्विमेदादिलेहः ।

उभे मेदे तुगाक्षीरी पिप्पली सितशर्करा ।
घृतक्षौद्रं च लेहोऽयं कासं जयति पैत्तिकम् ॥ ३७ ॥

पित्तकासे पिप्पल्यादिलेहः ।

पिप्पल्यामलकं द्राक्षा खर्जूरं शर्करा मधु ।
लेहोऽयं सघृतो लीढः पित्तक्षतजकासनुत् ॥ ३८ ॥

क्षतकासे लाक्षाद्योऽवलेहः ।

लाक्षा भृङ्गी बला द्राक्षा व्याघ्री यष्टी शतावरी ।
पिप्पली चेति तुल्यानि शर्करा च चतुर्गुणा ॥ ३९ ॥
त्वक्क्षीरीं द्विगुणां दत्त्वा लेहयेन्मधुसर्पिषा ।
क्षतकासं जयत्येष लेहः पित्तोल्बणं तथा ॥ ४० ॥

कफकासे नवाङ्गयूषः ।

मुद्गामलाभ्यां यवदाडिमाभ्यां कर्कन्धुना मूलकशुण्ठकेन ।
शुण्ठीकणाभ्यां च कुलत्थकेन यूषो नवाङ्गः कफकासहन्ता ४१

कफजकासे पुष्करादिक्वाथः ।

भार्गीविश्वापिप्पलिभिर्वासापुष्करकट्फलैः ।
पिबेत्क्वाथं कफोद्रेके कासे श्वासे च हृद्ग्रहे ॥ ४२ ॥

कासे शृङ्गवेरयोगः ।

स्वरसं शृङ्गवेरस्य माक्षिकेण समन्वितम् ।
पाययेच्छ्वासकासघ्नं प्रतिश्यायकफापहम् ॥ ४३ ॥

कफकासे दशमूलीक्वाथः ।

पार्श्वशूले ज्वरे श्वासे कासे श्लेष्मसमुद्भवे ।
पिप्पलीचूर्णसंयुक्तं दशमूलीजलं पिबेत् ॥ ४४ ॥

कफकासे विडङ्गादिचूर्णम् ।

विडङ्गं सैन्धवं रास्ना शटी क्षारौ महौषधम् ।
श्लेष्मकासे हितं चूर्णं लेहोऽयं मधुना सह ॥ ४५ ॥

कफकासे देवदार्वादिलेहः।

देवदारुशठीरास्नाशृङ्गीधन्वयवासकम्।
तैलक्षौद्रयुतं हन्याच्छ्लेष्मकासं सुदारुणम्॥ ४६॥

कफकासे पिप्पल्यादियोगः।

तैलभृष्टं च पिप्पल्याः कल्कस्यार्धं सशर्करम्।
पिबेद्वा कफकासघ्नं कुलत्थसलिलप्लुतम्॥ ४७॥

श्लेष्मकासे कुष्ठादिचूर्णम्।

कुष्ठं तामलकी भार्गी शठी क्षारौ हरीतकी।
कोलं चोष्णाम्भसा चूर्णं श्लेष्मकासान्वितः पिबेत्॥ ४८॥

सर्वकासे पद्मकादिलेहः।

पद्मकं त्रिफला व्योषं विडङ्गं सुरदारु च।
बला रास्ना च तुल्यानि सूक्ष्मचूर्णानि कारयेत्॥ ४९॥
सर्वैरेभिः समैर्भागैः पृथक् क्षौद्रं घृतं सिता।
लिह्याल्लेहं विमथ्यैतत्सर्वकासहरं शिवम्॥ ५०॥

कासे धूमयोग्यावस्था।

ताम्यमानस्य कासेन नासास्रावे स्वरे जडे।
क्षवथौ घ्राणनाशे च धूमनाडीं प्रयोजयेत्॥ ५१॥

कासे विविधा धूमपानयोगाः।

क्षौमगर्भां पिबेद्वर्तिं हरितालं मनःशिलाम्।
तालीसपत्रकैडर्यं गुडान्नं चैव भोजयेत्॥ ५२॥
धूमवर्तिर्बला चोरं हरितालं मनःशिलाम्।
अनुपानं शृतं चापि प्रशस्तं काञ्जिकोदनम्॥ ५३॥
मनःशिलालमधुकमांसीमुस्तेङ्गुदैः पिबेत्।
धूमं तस्यानु च पयः सुखोष्णं सगुडं पिबेत्॥ ५४॥
एष कासान् पृथग्द्वन्द्वसन्निपातसमुद्भवान्।
शतैरपि प्रयोगाणां साधयेदप्रसाधितान्॥ ५५॥

मधुकं चाजमोदा च जीवन्त्यगरुसर्जकौ ।
एरण्डमूला कासघ्ना धूमवर्तिरियं शुभा ॥ ५६ ॥
क्षौमं हिङ्गु वचा भूर्जं ग्रन्थिश्चैव घृतान्वितः ।
धूमः कासहरः पीतः सर्वगन्धमयोऽपि वा ॥ ५७ ॥
मनःशिलासमालिप्तैर्बादरैः परिशोषितैः ।
त्र्यहं पत्रैः कृतं धूमं पिबेत्कासनिवारणम् ॥ ५८ ॥
जात्युत्तरशिफाधूमं शिलागुग्गुलुमिश्रितम् ।
गात्रस्य बदराङ्गारैः कारयेत्कासशान्तये ॥ ५९ ॥
जातेरुत्तरदिङ्मूलशिलालैर्गुग्गुलुं समम् ।
अजामूत्रेण पिष्टोऽयं धूमः कासहरः परः ॥ ६० ॥
मूलेन शरपुङ्खाया धूमः कासहरः परः ।
अर्कच्छिशिले तुल्ये ततोऽर्धेन कटुत्रिकम् ॥ ६१ ॥
चूर्णितं वह्निनिक्षिप्तं पिबेद्धूमं प्रयोगवित् ।
भक्षयेदथ ताम्बूलं पिबेद्दुग्धमथापि च ।
कासाः पञ्चविधा यान्ति शान्तिमाशु न संशयः ॥ ६२ ॥

सर्वकासे मरिचाद्या वर्तिः ।

कर्षः कर्षोऽर्धपलं पलद्वयं स्यात्तथाऽर्धकर्षश्च ।
मरिचस्य पिप्पलीनां दाडिमगुडयावशूकानाम् ॥ ६३ ॥
सर्वौषधैरसाध्या ये कासाः सर्ववैद्यनिर्मुक्ताः ।
अपि पूयं छर्दयतां तेषामिदमौषधं परमम् ॥ ६४ ॥

क्षयकासे पिप्पल्यादिलेहः ।

पिप्पली पद्मकं लाक्षा सेवकं बृहतीफलम् ।
घृतक्षौद्रयुतो लेहः क्षयकासनिबर्हणः ॥ ६५ ॥

क्षतकासे मधुकादिचूर्णम् ।

मधुकं पिप्पली द्राक्षा शठी शृङ्गी शतावरी ।
द्विगुणा च तुगाक्षीरी सिता सर्वैश्चतुर्गुणा ॥ ६६ ॥

प्रलिह्यान्मधुसर्पिर्भ्यां क्षतकासनिवृत्तये ।

काले पिप्पल्याद्यं चूर्णम् ।

पिप्पली पिप्पलीमूलं नागरं सविभीतकम् ॥ ६७ ॥
लीढं मधुयुतं चूर्णं कासरोगनिवारणम् ।

कासे पिप्पल्यादिलेहः ।

पिप्पल्यामलकं द्राक्षा तुगाक्षीर्यथ शर्करा ॥ ६८ ॥
लाक्षा घृतं माक्षिकं च लेहः कासविनाशनः ।

श्वासकासे मधुपञ्चाननगुटिका ।

पथ्या पञ्चाननः कृष्णा द्राक्षा क्षौद्रयुतो ह्ययम् ।
मधुपञ्चाननः श्वासकासामार्तिरुजापहः ॥ ६९ ॥

कासादौ व्योषान्तिका गुटिका ।

तालीसवह्निदीप्यमुस्ताचविकाम्लवेतसव्योषैः ।
तुल्यैस्त्रिसुगन्धियुतैर्गुडेन गुटिका प्रकर्तव्या ॥ ७० ॥
कासश्वासारोचकपीनसहृत्कण्ठवाग्विरोधेषु ।
ग्रहणीगुदोद्भवेषु च शस्ता व्योषान्तिकानाम ॥ ७१ ॥

कासे आटरूषकादिकषायः ।

आटरूषकलघुकण्टकारिकादेवदारु च विभीतनागरम् ।
पक्वमाद्यमिदमेव पिप्पलीकुष्ठचूर्णसहितं च कासजित्॥७२॥

सर्वकासे मुस्ताद्यं चूर्णम् ।

मुस्ताटरूषसुरदारुशिरीषकाक-
जङ्घाविडङ्गकटुकत्रयपद्मकानि ।
भार्गी फलत्रयमिदं सकलं हि चूर्णं
मध्वन्वितं हरति पञ्चविधं च कासम् ॥ ६३ ॥

कासे विभीतकयोगः ।

गुडस्य द्विगुणं चूर्णं विभीतकफलस्य च ।
शेषं घृतेन तत्पक्वं कासश्वासहरं परम् ॥ ७४ ॥

कासे एरण्डमूलाद्यं चूर्णम् ।

एरण्डमूलं बृहती च वांशी कटुत्रयं कर्कटशृङ्गिका च ।
फलत्रयं च लवणानि पञ्च चूर्णं हरत्युष्णजलेन कासम् ॥ ७५ ॥
विभीतकं हिङ्गु हरीतकी च सौवर्चलं सामलकं सखण्डम् ।
तन्मातुलुङ्गस्वरसेन लीढं मध्वन्वितं पित्तजकासहारि ॥ ७६ ॥

सर्वकासे मूर्वाद्यं चूर्णम् ।

मूर्वामागधचव्यचित्रकवचापाठाशिरीषं तथा
भार्गीमागधमूलमुस्तमरिचं शुण्ठी विडङ्गानि च ।
एला सेन्द्रयवानिका सकटुका स्वाजीरकं रेणुका
चैतत्साविविषं सहिङ्गु कफजे कासे हितं चूर्णितम् ॥ ७७ ॥

क्षयकासे रसाञ्जनादिचूर्णम् ।

रसाञ्जनं हरिद्रा च पिप्पली लोहचूर्णकम् ।
मूर्वाचित्रकमञ्जिष्ठाः पाठा च क्षयकासजित् ॥ ७८ ॥

क्षयकासे श्रीखण्डादिकषायः ।

[श्री]खण्डयष्टीमधुशालिपर्णीपाठापटोलेन्द्रयवा बृहत्यौ ।
[ग]र्वीगुडूचीकटुकाकषायः क्षयोत्थकासे च सपिप्पलीकः ॥ ७९ ॥

सर्वकासे भूधात्रिकादिकषायः ।

भूधात्रिकासुतकरीन्दुवधूवृषाख्य-
कन्यारिकण्टकयतीद्विजयष्टिकानाम् ।
क्वाथो युतोऽथ कणया घुनिशोर्विरामे
पीतः प्रणाशयति पञ्चविधं च कासम् ॥ ८० ॥

कासे बिभीतकयोगः ।

बिभीतकं घृताभ्यक्तं गोशकृत्परिवेष्टितम् ।
स्विन्नमग्नौ हरेत्कासं ध्रुवमास्ये विधारितम् ॥ ८१ ॥

कासे दाडिमादिचूर्णम् ।

द्वे पले दाडिमादष्टौ गुडाद्व्योषात्पलत्रयम् ।

1 'सभार्गी' ख. ।

त्रिसुगन्धिपलं चैकं चूर्णमेकत्र कारयेत् ।
रोचनं दीपनं स्वर्यं पीनसश्वासकासजित् ॥ ८२ ॥

क्षतकासे लाक्षादिक्षीरम् ।

लाक्षा सर्पिर्मधूच्छिष्टं जीवनीयं गणं सिताम् ।
त्वक्क्षीरीसंयुतां क्षीरे पक्त्वा दीप्तानलः पिबेत् ॥ ८३ ॥

क्षतकासे इक्षुन्वालिकादिक्षीरम् ।

इक्ष्वालिकाबिसग्रन्थिपद्मकेसरचन्दनैः ।
शृतं पयो मधुयुतं सन्धानार्थं पिबेत्क्षतः ॥ ८४ ॥

कासे यवादियोगः ।

यवानां चूर्णमामानां क्षीरसिद्धं घृतप्लुतम् ।
ज्वरदाहे सिताक्षौद्रसक्तुमत् पयसा पिबेत् ॥ ८५ ॥

कासे मधुकादिचूर्णम् ।

कासी पर्वास्थिशूली च लिह्यात्सघृतमाक्षिकम् ।
मधूकं मधुकद्राक्षात्वक्क्षीरीपिप्पलीबलाः ॥ ८६ ॥

सरक्ते कासे पुनर्नवादियोगः ।

चूर्णं पुनर्नवारक्तशालितण्डुलशर्करम् ।
रक्तष्ठीवी पिबेत्सिद्धं द्राक्षारसपयोघृतैः ॥ ८७ ॥

उरःक्षते न्यग्रोधादिघृतम् ।

न्यग्रोधोदुम्बराश्वत्थप्लक्षशालप्रियङ्गुभिः ।
तालमस्तकजम्बूत्वक्प्रियालैश्च सपद्मकैः ॥ ८८ ॥
साश्वगन्धैः शृतात्क्षीराद्दयाज्जातेन सर्पिषा ।
शाल्योदनं क्षतोरस्कः क्षीणशुक्रश्च मानवः ॥ ८९ ॥

क्षतकासे यष्ट्यादिघृतम् ।

यष्ट्याह्वनागबलयोः क्वाथे क्षीरसमे घृतम् ।
पयस्यापिप्पलीवांशीकल्कसिद्धं क्षते हितम् ॥ ९० ॥

कासे बदरीफलादिघृतम् ।

कोलर्लाक्षारसे[1] तद्वत्क्षीराष्टगुणसाधितम् ।
कल्कैः कटुङ्गदार्वीत्वग्वत्सकत्वक्फलैर्घृतम् ॥ ९१ ॥

---

1 'कोलद्राक्षारसे' ख.।

गम्भीराहिक्कालक्षणम्।

नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी।
अनेकोपद्रवयुता गम्भीरा नाम सा स्मृता ॥ १० ॥

महाहिक्कालक्षणम्।

मर्माण्युत्पीडयन्तीव सततं या प्रवर्तते।
महाहिक्केति सा ज्ञेया सर्वगात्रविकम्पिनी ॥ ११ ॥

हिक्कानां साध्यासाध्यविचारः।

आयम्यते हिक्कतो यस्य देहो
दृष्टिश्चोर्ध्वं ताम्यते यस्य नित्यम्।
क्षीणोऽन्नद्विट् क्षौति यश्चातिमात्रं
तौ द्वौ चान्त्यौ वर्जयेद्धिक्कमानौ ॥ १२ ॥

अतिसंचितदोषस्य भक्तच्छेदकृशस्य च।
व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः ॥ १३ ॥
एषां या सा समुत्पन्ना हिक्का हन्त्याशु जीवितम्।
यमिका च प्रलापार्तिमोहतृष्णासमन्विता ॥ १४ ॥
अक्षीणश्चाप्यदीनश्च क्षीणधात्विन्द्रियश्च यः।
तस्य साधयितुं शक्या यमिका हन्त्यतोऽन्यथा ॥ १५ ॥

श्वासभेदाः।

निरूपितायां हिक्कायां श्वासः पश्चान्निरूप्यते।
तयोस्तुल्यनिदानत्वादिति सन्निधिसंगतिः ॥ १६ ॥
महोर्ध्वच्छिन्नतमकक्षुद्रभेदैस्तु पञ्चधा।
भिद्यते स महाव्याधिः श्वास एको विशेषतः ॥ १७ ॥

श्वासपूर्वरूपम्।

प्राग्रूपं तस्य हृत्पीडा शूलमाध्मानमेव च।
आनाहो वक्त्रवैरस्यं शङ्खनिस्तोद एव च ॥ १८ ॥

श्वाससंप्राप्तिः।

यदा स्रोतांसि संरुध्य मारुतः कफपूर्वकः।
विष्वग्व्रजति संरुद्धस्तदा श्वासान् करोति सः ॥ १९ ॥

महाश्वासलक्षणम् ।

उद्धूयमानवातो यः शब्दवद्दुःखितो नरः ।
उच्चैः श्वसिति संरुद्धो मत्तर्षभ इवानिशम् ॥ २० ॥
प्रनष्टज्ञानविज्ञानस्तथा विभ्रान्तलोचनः ।
विवृताक्ष्याननो बद्धमूत्रवर्चा विशीर्णवाक् ॥ २१ ॥
दीर्घं प्रश्वसितं चास्य दूराद्विज्ञायते भृशम् ।
महाश्वासोपसृष्टः स क्षिप्रमेव विपद्यते ॥ २२ ॥

ऊर्ध्वश्वासलक्षणम् ।

ऊर्ध्वं श्वसिति योऽत्यर्थं न च प्रत्याहरत्यधः ।
श्लेष्मावृतमुखस्रोताः क्रुद्धगन्धवहार्दितः ॥ २३ ॥
ऊर्ध्वदृष्टिर्विपश्यंस्तु विभ्रान्ताक्ष्याननस्तथा ।
प्रमुह्यन् वेदनार्तश्च शुष्कास्योऽरतिपीडितः ॥ २४ ॥
ऊर्ध्वश्वासे प्रकुपिते ह्यधःश्वासो निरुध्यते ।
मुह्यतस्ताम्यतश्चोर्ध्वं श्वासस्तस्यैव हन्त्यसून् ॥ २५ ॥

छिन्नश्वासलक्षणम् ।

यस्तु श्वसिति विच्छिन्नं सर्वप्राणेन पीडितः ।
न वा श्वसिति दुःखार्तो मर्मच्छेदरुगर्दितः ॥ २६ ॥
आनाहस्वेदमूर्च्छार्तो दह्यमान इवाग्निना ।
विप्लुताक्षः परिक्षीणः श्वसन् रक्तैकलोचनः ॥ २७ ॥
विचेताः परिशुष्कास्यो विवर्णः प्रलपन्नरः ।
छिन्नश्वासेन विच्छिन्नः स शीघ्रं विजहात्यसून् ॥ २८ ॥

तमकश्वासलक्षणम् ।

प्रतिलोमं यदा वायुः स्रोतांसि प्रतिपद्यते ।
ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य च ॥ २९ ॥
करोति पीनसं तेन रुद्धो घुर्घुरकं तथा ।
अतीव तीव्रवेगं च श्वासं प्राणप्रपीडकम् ॥ ३० ॥

प्रताम्यति स वेगेन त्रस्यते सन्निरुध्यते ।
प्रमोहं कासमानश्च स गच्छति मुहुर्मुहुः ॥ ३१ ॥
श्लेष्मण्यमुच्यमाने तु भृशं भवति दुःखितः ।
तस्यैव च विमोक्षान्ते मुहूर्तं लभते सुखम् ॥ ३२ ॥
तथाऽस्योद्ध्वंसते कण्ठः कृच्छ्राच्छक्नोति भाषितुम् ।
न चापि निद्रां लभते शयानः श्वासपीडितः ॥ ३३ ॥
पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः ।
आसीनो लभते सौख्यमुष्णं चैवाभिनन्दति ॥ ३४ ॥
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमार्तिमान् ।
विशुष्कास्यो मुहुः श्वासो मुहुश्चैवावधम्यते ॥ ३५ ॥
मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्धते ।
स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः ॥३६॥
ज्वरमूर्च्छापरीतस्य विद्यात् प्रतमकं तु तम् ।
उदावर्तरजोजीर्णक्लिन्नकायनिरोधजः ॥ ३७ ॥
तमसा वर्धतेऽत्यर्थं शीतैश्चाशु प्रशाम्यति ।
मज्जतस्तमसीवास्य विद्यात् संतमकं तु तम् ॥ ३८ ॥

क्षुद्रश्वासलक्षणम् ।

रूक्षायासोद्भवः कोष्ठे क्षुद्रो वात उदीरयन् ।
क्षुद्रश्वासो न सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः ॥ ३९ ॥
हिनस्ति न स गात्राणि न च दुःखो यथेतरे ।
न च भोजनपानानां निरुणद्ध्युचितां गतिम् ॥ ४० ॥
नेन्द्रियाणां व्यथां चापि कांचिदापादयेद्रुजम् ।
स साध्य उक्तो बलिनः सर्वे चाव्यक्तलक्षणाः ॥ ४१ ॥

श्वासानां साध्यासाध्यविचारः ।

क्षुद्रः साध्यतमस्तेषां तमकः कृच्छ्र उच्यते ।
त्रयः श्वासा न सिध्यन्ति तमको दुर्बलस्य च ॥ ४२ ॥

कामं प्राणहरा रोगा बहवो न तु ते तथा ।
यथा श्वासश्च हिक्का च हरतः प्राणमाशु वै ॥ ४३ ॥

इति गदनिग्रहे हिक्काश्वासनिदानम् ।

---

अथातो हिक्काश्वासचिकित्सितं व्याख्यास्यामः ।

हिक्काश्वासयोः सामान्यचिकित्सा ।

हिक्काश्वासातुरे पूर्वं तैलाक्ते स्वेद इष्यते ।
नाडीस्वेदेन मृदुना शङ्करप्रस्तरेण वा ॥ ४४ ॥
खिन्नं विमुञ्चति श्लेष्मा ग्रन्थिश्च प्रविलीयते ।
वातः प्रगुणतां याति वेदना च निवर्तते ॥ ४५ ॥
ऊर्ध्वाधःशोधनं शक्ते दुर्बले शमनं मतम् ।
सहसा हर्षणक्रोधत्रासनैः क्रूरदर्शनैः ॥ ४६ ॥
द्रुतशीताम्बुपानैश्च हिक्काश्वासौ शमं नयेत् ।
प्राणावरोधतर्जनविस्मापनशीतवारिसेकैश्च ॥ ४७ ॥
चित्रैः कथाप्रयोगैः शमयति हिक्कां मनोविघातैश्च ।

हिक्काघ्नाः षड्लेहाः ।

कोलमज्जाऽञ्जनं लाजा, तिक्ता काञ्चनगैरिकम् ॥ ४८ ॥
कृष्णा धात्री सिता शुण्ठी, कासीसं दधिनाम च ।
पाटल्याः सफलं पुष्पं, कृष्णाखर्जूरमुस्तकम् ॥ ४९ ॥
षडेते पादिका लेहा हिक्काघ्ना मधुसंयुताः ।

हिक्कायां नस्ययोगाः ।

मधुकं मधुसंयुक्तं, पिप्पली शर्करान्विता ॥ ५० ॥
नागरं गुडसंयुक्तं, हिक्काघ्नं नावनत्रयम् ।
स्तन्येन मक्षिकाविष्ठा नस्यं वाऽलक्तकाम्बुना ॥ ५१ ॥
योज्यं हिक्काभिभूताय स्तन्यं वा चन्दनान्वितम् ।

हिक्कायां लेहयोगाः ।

मधुसौवर्चलोपेतं मातुलुङ्गरसं लिहेत् ॥ ५२ ॥

हिक्कार्तो मधुना लिह्याच्छुण्ठीं धात्रीकणान्विताम् ।
कृष्णामलकशुण्ठीनां चूर्णं मधुसितायुतम् ॥ ५३ ॥
मुहुर्मुहुः प्रयोक्तव्यं हिक्काश्वासनिवारणम् ।
हिक्काश्वासी पिबेद्भार्गीं सविश्वामुष्णवारिणा ॥ ५४ ॥
नागरं वा सिताभार्गीसौवर्चलसमन्वितम् ।
कपित्थस्वरसं वाऽपि रसमामलकस्य वा ॥ ५५ ॥
पिप्पलीक्षौद्रसंयुक्तं हिक्काश्वासनिवारणम् ।
खर्जूरं पिप्पली द्राक्षा शर्करा चेति तत्समम् ॥ ५६ ॥
मधुसर्पिर्युतो लेह्यो हिक्काश्वासनिवारणः ।

श्वासादिष्वभयादिघृतम् ।

कासे श्वासे च हिक्कायां हृद्रोगे चापि पूजितम् ॥ ५७ ॥
घृतं पुराणं संसिद्धमभयाबिडरामठैः ।

श्वासे सौवर्चलादिघृतम् ।

सौवर्चलयवक्षारकटुकाव्योषचित्रकैः ॥ ५८ ॥
वचाविडङ्गैश्च घृतं साधितं श्वासशान्तये ।

श्वासे हरिद्रादिलेहः ।

हरिद्रां मरिचं द्राक्षां गुडं रास्नां कणां शठीम् ॥ ५९ ॥
जह्यात्तैलेन विलिहन् श्वासान् प्राणहरानपि ।

श्वासे गुडसर्षपतैलयोगः ।

गुडं कटुकतैलेन मिश्रयित्वा समं लिहेत् ॥ ६० ॥
त्रिसप्ताहमयोगेण श्वासं निर्मूलतो जयेत् ।

श्वासे मर्कटीबीजयोगः ।

मार्कटानां तु बीजानां चूर्णं माक्षिकसर्पिषा ॥ ६१ ॥
प्रलिह्यात् प्रातरुत्थाय श्वासार्तः स्वास्थ्यमाप्नुयात् ।

हिक्कायां धूमयोगाः ।

नेपाल्या गोविषाणस्य कुष्ठात्सर्जरसस्य च ॥ ६२ ॥

धूमं कुशस्य वा साज्यं पिबेद्धिक्कोपशान्तये ।

हिक्काश्वासयोस्तृषोपद्रवचिकित्सा ।

तृषितो दशमूलस्य क्वाथं वा देवदारुजम् ॥ ६३ ॥
मदिरां वा पिबेद्युक्त्या हिक्काश्वासनिवृत्तये ।

श्वासादौ शृङ्ग्यादिचूर्णम् ।

शृङ्गीकटुत्रिकफलत्रयकण्टकारी-
भार्ग्यः सपुष्करजटा लवणानि पञ्च ।
चूर्णं पिबेदशिशिरेण जलेन हिक्का-
श्वासोर्ध्ववातकसनारुचिपीनसेषु ॥ ६४ ॥

हिक्काश्वासयोर्यवागूयोगाः ।

हिङ्गुसौवर्चलाजाजीविडपुष्करचित्रकैः ।
सिद्धा कर्कटशृङ्ग्या च यवागूः श्वासहिक्किनाम् ॥ ६५ ॥
कणाग्निदाडिमाजाजीनिशाबिल्वाम्लवेतसैः ।
यवागूः साधिता साधु विडहिङ्गुयुतैः कृता ॥ ६६ ॥
श्वासकासहरा हृद्या हिक्काशूलार्तिनाशिनी ।
दीपनी ग्रहणीगुल्महरा वातानुलोमनी ॥ ६७ ॥
दशमूलीशठीरास्नागुडूचीबिल्वशुण्ठकाः ।
पिप्पल्यः पौष्करं मूलं चित्रकान्मूलमेव च ॥ ६८ ॥
कषायं तं पिबेद्युक्त्या यवागूं वापि साधिताम् ।
हिक्काश्वासे च कासे च पार्श्वशूले सविड्ग्रहे ॥ ६९ ॥

हिक्काश्वासयोर्यूषयोगाः ।

कासमर्दाग्रपत्राणां यूषः शोभाञ्जनस्य च ।
शुष्कमूलकयूषस्तु हिक्काश्वासनिवारणः ॥ ७० ॥

हिक्कादौ मागध्यादि चूर्णम् ।

मागधिकात्रिफलाकृतचूर्णं यो मधुना सह भोजनकाले ।
खादति तस्य विनश्यति हिक्का श्वासकफज्वरपीनसपीडा ॥७१

श्वासे शृङ्ग्यादिचूर्णम् ।

शृङ्गीमहौषधकणाघनपुष्कराणां
चूर्णं शठीमरिचकर्कटिकासमेतम् ।
क्वाथेन पीतममृतावृषपञ्चमूल्याः
श्वासं त्र्यहेण विजयेदतिघोररूपम् ॥ ७२ ॥

श्वासादौ शुण्ठ्याद्यं चूर्णम् ।

शुण्ठीकणामरिचनागदलत्वगेला-
चूर्णं तथा क्रमविवर्धितमूर्ध्वमन्त्यात् ।
खादेदिदं समसितं गुदजाग्निमान्द्य-
गुल्मारुचिश्वसनकण्ठहृदामयेषु ॥ ७३ ॥

श्वासे मागधिकादिलेहः ।

मागधिका तन्मूलं नागरबिभीतकं च संचूर्ण्य ।
क्षौद्रयुतोऽवलेहः शमयति कासं त्रिरात्रेण ॥ ७४ ॥

श्वासे निदिग्धिकादियोगः ।

निदिग्धिकां चामलकप्रमाणां हिङ्ग्वर्धयुक्तां मधुना विमिश्राम् ।
लिहन्नरः श्वासनिपीडितोऽपि श्वासं जयत्येष बलात्त्र्यहेण ॥७५॥

हिक्काश्वासयोर्मनःशिलाद्या धूमवर्तिः ।

मनःशिलाले नलदं सैन्धवं देवदारु च ।
वर्धमानकबीजं च हरिद्रार्पणसंयुतम् ॥ ७६ ॥
धूमवर्तिं पिबेत् कृत्वा मुखं मल्लकसंपुटे ।
हिक्काश्वासनिवृत्त्यर्थं दोषश्लेष्मप्रमोचनीम् ॥ ७७ ॥

हिक्काश्वासयो नस्ययोगाः ।

शर्करा शृङ्गबेरं च, गैरिकं मूत्रमाविकम् ।
गुडार्द्रकं च, पादोक्तं हिक्काघ्नं नावनत्रयम् ॥ ७८ ॥

हिक्कायां सुवर्णगैरिकादिलेहः ।

सुवर्णगैरिकं मार्गी शालिलाजा निदिग्धिका ।
हिक्कासु देयं लेह्यो घृतमाक्षिकसंयुतः ॥ ७९ ॥

हिक्काश्वासयोर्द्विक्षारादिचूर्णम्।

द्वौ क्षारौ सहरीतक्यौ भल्लातकफलानि च।
घृतभृष्टमिदं सर्वं हिक्काश्वासनिवारणम् ॥ ८० ॥

श्वासादौ भार्ग्यभयावलेहः।

द्विपञ्चमूलीतुलया समेतं शतं प्रकल्प्यं द्विजयष्टिकायाः।
हरीतकीनां च शतं जलस्य द्रोणद्वयेन प्रपचेद्बुधाग्रे ॥ ८१ ॥
काथेन तेनैव हरीतकीस्ताः स्विन्नाः समेतास्तुलया गुडस्य।
पक्त्वाऽवलेहे शिशिरे च तस्मिन् क्षौद्रं क्षिपेदष्टपलप्रमाणम् ॥
पलत्रयं च त्रिकटोर्विचूर्ण्य पलं चतुर्जातकभेषजानाम्।
इत्याश्विनो भार्ग्यभयावलेहः प्रयुक्तमात्रस्त्विह चादरेण ॥ ८३
श्वासं जयेत्पञ्चविधं सकासं शोषं पडेकादशरूपमुग्रम्।
हिक्कां कफच्छर्दिमुरोविकारमरोचकं मेहमपस्मृतिं च ॥ ८४ ॥

हिक्कायां मातुलुङ्गरसादियोगः।

मातुलुङ्गरसे सर्जसैन्धवं घृतपाचितम्।
हृदुःखदायिनी हिक्का तस्मिन् भुक्ते निवर्तते ॥ ८५ ॥

हिक्कायां कतिपययोगाः।

श्वासावरोधिनो हिक्का शमं यात्यविवेगतः।
चुलुकैर्वा जले पीते धृत्वा श्वासं निवर्तते ॥ ८६ ॥
मधुना कटुकीचूर्णं लीढं हिक्कानिवारणम्।
शिलाधूमस्य पानं वा नलिकायन्त्रयोगतः ॥ ८७ ॥

इति श्रीबोढलमथिते गदनिग्रहे कायचिकित्साखण्डे हिक्काश्वासाधिकार एकादशः।

---

## अथ स्वरभङ्गाधिकारो द्वादशः।

### अथ स्वरभङ्गनिदानम्।

स्वरभङ्गसंप्राप्तिः।

अत्युच्चभाषणविषाध्ययनाभिघात-
संदूषणैः प्रकुपिताः पवनादयस्तु।

स्रोतःसु ते स्वरवहेषु गताः प्रविष्टा
हन्युः स्वरं, भवति चापि हि षड्विधः सः ॥ १ ॥

स्वरभङ्गस्य वातजादिभेदेन लक्षणानि ।

वातेन कृष्णनयनाननमूत्रवर्चा
भिन्नं शनैर्वदति गर्दभवत् स्वरं च ।
पित्तेन पीतनयनाननमूत्रवर्चा
ब्रूयाद्गलेन च सदाहसमन्वितेन ॥ २ ॥
ब्रूयात्कफेन सततं कफरुद्धकण्ठः
स्वल्पं शनैर्वदति चापि दिवा विशेषात् ।
सर्वात्मके भवति सर्वविकारसंप-
त्तं चाप्यसाध्यमृषयः स्वरभेदमाहुः ॥ ३ ॥
धूमायते क्षयकृते क्षयमाप्नुयाच्च
वागेप चापि हतवाक्परिवर्जनीयः ।
अन्तर्गतस्वरमलक्ष्यपदं चिरेण
मेदोन्वयाद्वदति दिग्धगलस्तृषार्तः ॥ ४ ॥

स्वरभेदस्यासाध्यलक्षणम् ।

क्षीणस्य वृद्धस्य कृशस्य चापि
चिरोत्थितो यश्च सहोपजातः ।
मेदस्विनः सर्वसमुद्भवश्च
स्वरामयो यो न स सिद्धिमेति ॥ ५ ॥

इति स्वरभङ्गनिदानम् ।

---

अथातः स्वरभङ्गचिकित्सितं व्याख्यास्यामः ।

आद्ये कोष्णजलं पेयं जग्ध्वा घृतगुडौदनम् ।

स्वरभङ्गे यवक्षारादिघृतम् ।

पीतं घृतं हन्त्यनिलं सिद्धं मार्कवजे रसे ॥ ६ ॥

यवक्षाराजमोदाभ्यां चित्रकामलकेषु च।

स्वरभेदे घृतयोगः।

स्वरोपघातेऽनिलजे भक्तोपरि घृतं पिबेत् ॥ ७ ॥

पैत्तिकस्वरभङ्गे कासमर्दादिघृतम्।

कासमर्दकवार्ताकमार्कवस्वरसैर्युतम्।
क्षीरानुपानं पैत्तेषु पिबेत्सर्पिरतन्द्रितः ॥ ८ ॥
अश्नीयाद्वा ससर्पिष्कं यष्टीमधुकपायसम्।

कफजस्वरभेदे पिप्पल्यादियोगः।

पिप्पली पिप्पलीमूलं मरिचं विश्वभेषजम् ॥ ९ ॥
पिबेन्मूत्रेण मतिमान् कफजे स्वरसंक्षये।

मेदोजक्षयजसर्वजस्वरभेदप्रतीकारः।

मेदोजे स्वरभङ्गे तु कफवद्विधिरिष्यते ॥ १० ॥
क्षयजे सर्वजे चापि प्रत्याख्याय चरेत् क्रियाम्।

उच्चभाषणजन्यस्वरभेदचिकित्सा।

शर्करामधुमिश्राणि घृतानि मधुरैः सह ॥ ११ ॥
पिबेत्पयांसि यस्योच्चैर्वदतोऽभिहतः स्वरः।

स्वरभेदे व्याघ्र्यादिघृतम्।

व्याघ्रीस्वरसविपक्वं रास्नावाट्यालगोक्षुरव्योषैः।
सर्पिः स्वरोपघातं हन्यात् कासं च पञ्चविधम् ॥ १२ ॥
शुष्कद्रव्यमुपादाय स्वरसानामसंभवे।
वारिण्यष्टगुणे साध्यं ग्राह्यमष्टावशेषकम् ॥ १३ ॥

स्वरभङ्गे कतिपययोगाः।

निदिग्धिकाव्यूषणबालबिल्वकल्कं च लिह्यान्मधुना समेतम्।
फलत्रिकव्यूषणयावशूकचूर्णं च लिह्यात्स्वरभेदहन्तृ ॥ १४ ॥
विहितमसृणचूर्णान्यारनालेन सार्धं
कलितवरफलकृष्णासैन्धवानि प्रलिह्यात्।

अभिलषति विजेतुं यः स्वरस्य प्रणाशं
स पिबतु सह दुग्धेनामलक्याः फलं वा ॥ १४ ॥

पैत्तिकस्वरभेदे जीवनीयघृतम् ।

जीवनीयोपसिद्धं वा पिबेत् क्षीरं सशर्करम् ।
शीतं माक्षिकसंयुक्तं पैत्तिकस्वरबोधनम् ॥ १५ ॥

कफजस्वरभेदे कतिपययोगाः ।

पिबेत् कटूनि मूत्रेण कफजे स्वरसंक्षये ।
लिह्याद्वा मधुतैलाभ्यां भुक्त्वा खादेत् कटूनि च ॥ १६ ॥
कट्फलामलकव्योषं लिह्यात्तैलमधुप्लुतम् ।

स्वरभेदे व्योषाद्यं नावनं घृतम् ।

[illegible] ॥ १७ ॥
[illegible] ।
सिद्धं सलवणं सर्पिर्नस्यं स्वर्यमनुत्तमम् ॥ १८ ॥
प्रपौण्डरीकं मधुकं पिप्पलीं बृहतीं बलाम् ।
साधितं क्षीरसर्पिश्च तत्स्वर्यं नावनं परम् ॥ १९ ॥

स्वरभेदे दशमूलादिघृतम् ।

दशमूलीशृतात् क्षीरात् सर्पिर्यदुदियान्नवम् ।
सपिप्पलीकं सक्षौद्रं तत् परं स्वरबोधनम् ॥ २० ॥

स्वरभेदे व्योषादिचूर्णम् ।

व्योषं हरीतकी क्षारश्चव्यं भार्गी सचित्रका ।
लिह्याच्चूर्णं च मधुना मद्यं तीक्ष्णं च शीलयेत् ॥ २१ ॥

इति श्रीसोढलग्रन्थिते गदनिग्रहे कायचिकित्साखण्डे स्वरभङ्गाधिकारो द्वादशः ।

---

अथारोचकाधिकारस्त्रयोदशः ।

अथातोऽरोचकनिदानं व्याख्यास्यामः ।

अरोचकनिदानम् ।

अरोचका निरूप्यन्ते स्वरभेदे निरूपिते ।
दोषस्थानविभेदानां तुल्यत्वादुभयोरपि ॥ १ ॥

पृथग्दोषैः समस्तैश्च तथाऽप्यागन्तवो हि ये ।
भवन्त्यरोचकाः पञ्च तेषां लक्षणमुच्यते ॥ २ ॥
वातादिभिः शोकभयातिलोभक्रोधैर्मनोघ्राशनरूपगन्धैः ।
अरोचकाः स्युः,

वातजादिभेदेनारोचकलक्षणानि ।

परिहृष्टदन्तः कषायवक्त्रस्तु मतोऽनिलेन ॥ ३ ॥
कट्वम्लमुष्णं विरसं च पूति पित्तेन विद्याल्लवणं च वक्त्रम् ।
माधुर्यपैच्छिल्यगुरुत्वशैत्यविबद्धसंबन्धयुतं कफेन ॥ ४ ॥
अरोचके शोकभयातिलोभक्रोधाद्यहृद्याशुचिगन्धजे स्यात् ।
स्वाभाविकं चास्यमथारुचिश्च त्रिदोषजे नैकरसं भवेत्तु ॥ ५ ॥

हृच्छूलपीडनयुतं पवनेन, पित्ता-
तृड्दाहचोषबहुलं, सकफप्रसेकम् ।
श्लेष्मात्मकं, बहुरुजं बहुभिश्च विद्या-
द्वैगुण्यमोहजडताभिरथापरं च ॥ ६ ॥

इत्यरोचकनिदानम् ।

अथातोऽरोचकचिकित्सितं व्याख्यास्यामः ।

अरोचके सामान्यचिकित्सितम् ।

विचित्रमन्नमरुचौ हितैरुपहितं हितम् ।
बहिरन्तर्मृजा चित्तनिर्वाणं हृद्यमौषधम् ॥ ७ ॥

वातजारोचके कृष्णादिचूर्णम् ।

वाते वचाम्बुवमनं कृतवान् पिबेत्तु
स्नेहैः सुराभिरथवोष्णजलेन चूर्णम् ।
कृष्णाविडङ्गयवभस्महरेणुभार्गी-
रास्नैलहिङ्गुलवणोत्तम...

पैत्तिकारोचकचिकित्सा ।

पित्ते गुडाम्बुमधुकैर्वमनं प्रशस्तं
लेहः ससैन्धवसितामधुसर्पिरिष्टः ।

श्लैष्मिकारोचकचिकित्सा ।

निम्बाम्बुवामितवतः कफजेऽनुपानं
राजद्रुमाम्बु मधुना तु सदीप्यकं स्यात् ॥ ९ ॥

चूर्णं यदुक्तमथवाऽनिलजे तदेव
सर्वेश्च सर्वकृतमेवमुपक्रमेत ।

त्रिविधारोचकप्रतीकारः ।

बस्तिं समीरणे पित्ते विरेको वमनं कफे ।
कुर्याद्धृद्यानुकूलानि हर्षणं च मनोभवे ॥ १० ॥

इच्छाभिघातभयशोकहतेऽन्तरग्नौ
भावान् भवाय वितरेत् खलु शक्यरूपान् ।
अर्थेषु चाप्यपचितेषु पुनर्भवाय
पौराणिकैः श्रुतिपथैरनुसान्त्वयेच ॥ ११ ॥

पित्तजायामरुचौ अजाज्यादिचूर्णम् ।

अजाज्यौ मरिचं कुष्ठं बिडं सौवर्चलं तथा ।
मधुकं शर्करा तैलं वातिके मुखधावनम् ॥ १२ ॥

पित्तजायामरुचौ पिप्पल्यादिचूर्णम् ।

पिप्पल्यामलकं मूर्वा चन्दनं कमलोत्पलम् ।
उशीरं पद्मकं रोध्रमेला लामज्जकं तथा ॥ १३ ॥
एतानि समभागानि क्षौद्रेण सह संसृजेत् ।
द्विगुणां शर्करां दत्त्वा पित्तजायामथारुचौ ॥ १४ ॥

श्लेष्मजायामरुचौ पिप्पल्याद्यं चूर्णम् ।

पिप्पली पिप्पलीमूलं मरिचानि हरीतकी ।
शृङ्गवेरं यवक्षारो रोध्रं तेजोवती तथा ॥ १५ ॥

एतानि समभागानि मधुना सह लेहयेत् ।
अरोचके श्लेष्मभवे प्रधानं मुखधावनम् ॥ १६ ॥

सर्वारोचके जम्बुपल्लवादिकषायः ।

जम्ब्वाम्रपल्लवं रोध्रं त्रिफला चव्यचित्रकौ ।
पटोलं नक्तमालं च शिरीषः खदिरासनौ ॥ १७ ॥
दार्वी हरिद्रा मुस्ता च तेजोह्वा मधुकं बला ।
एतानि समभागानि कषायमुपकल्पयेत् ॥ १८ ॥
कवलग्रह इत्येष कर्तव्यो मधुसंयुतः ।
सर्वेषां मुखरोगाणामरुचीनां च नाशनः ॥ १९ ॥

अरोचकेषु कपित्थादिषाडवः ।

षाडवश्च कपित्थानां सव्योषमधुशर्करः ।
अरोचकेषु सर्वेषु प्रशस्तो धारितो मुखे ॥ २० ॥

सर्वारोचकेषु द्राक्षाषाडवः ।

अजाज्यौ मरिचं द्राक्षा तिन्तिडीकं सदाडिमम् ।
सौवर्चलं कारवी च गुडमाक्षिकसंयुतः ॥ २१ ॥
द्राक्षाषाडव इत्येष ख्यातो मुखविशोधनः ।
अरोचकानां सर्वेषां प्रशस्तः षाडवोत्तमः ॥ २२ ॥
आरनालं च शुक्तं च मार्द्वीकमदिरासवौ ।
अनुपानान्तरे धार्यास्तथैव कवलग्रहाः ॥ २३ ॥

अरुचौ दाडिमरसादिकवलग्रहः ।

दाडिमोत्थस्तु निर्यासस्त्वजाजीशर्करान्वितः ।
मधुतैलयुतो हन्यादरुचिं कवलीकृतः ॥ २४ ॥

सर्वारोचके कारव्यादियोगः ।

[illegible] अजाजी [illegible] म् ।
सौव[illegible]र्द्रं सर्वारोचकनाशनम् ॥ २५ ॥

अरुचावम्लिकादिकवलग्रहः ।

अम्लिकागुडतोयं च त्वगेलामरिचान्वितम् ।
अभक्तच्छन्दरोगेषु शस्तं कवलधारणम् ॥ २६ ॥

वातजादिष्वरोचकेषु चत्वारः कवलयोगाः ।

धान्यसौवर्चलाजाजीशर्करामरिचं विडम् ।
धात्र्येलापद्मकोशीरं पिप्पली चन्दनोत्पलम् ॥ २७ ॥
रोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम् ।
आर्द्रदाडिमनिर्यासस्त्वजाजीशर्करायुतः ॥ २८ ॥
सतैलमाक्षिकाश्चैते चत्वारः कवलग्रहाः ।
चतुरोऽरोचकान् हन्युर्वाताद्येकजसर्वजान् ॥ २९ ॥

अरुचौ मुखधावनार्थं त्र्यूषणादिचूर्णम् ।

त्रीण्यूषणानि त्रिफला रजनीद्वयं च
चूर्णीकृतानि यवशूकविमिश्रितानि ।
क्षौद्रान्वितानि वितरेन्मुखधावनार्थ-
मन्यानि तिक्तकटुकानि च भेषजानि ॥ ३० ॥

अरुचौ वरप्रयोगाः ।

कवलो धूमपानं तु चूर्णानि मुखधावनम् ।
कारञ्जं दन्तकाष्ठं च विधेयमरुचौ सदा ॥ ३१ ॥

अरुचौ तालीसादिवटिका ।

तालीसचूर्णवटकाः सकर्पूरसितोपलाः ।
शशाङ्ककिरणाख्याश्च भक्ष्या रुचिकराः परम् ॥ ३२ ॥

अरुचौ विड्लवणयोगः ।

विडचूर्णसमायुक्तं मधु मात्रासमन्वितम् ।
असाध्यामपि संहन्यादरुचिं वक्त्रधारितम् ॥ ३३ ॥

इति श्रीसोढलवैद्यप्रथिते गदनिग्रहे कायचिकित्साखण्डेऽरोचका-
धिकारस्त्रयोदशः ॥ १३ ॥

---

## अथ छर्द्यधिकारश्चतुर्दशः ।

अथातश्छर्दिनिदानं व्याख्यास्यामः ।

छर्दिभेदाः ।

अरोचके भुज्यमानं छर्दयत्येव सत्वरम् ।
तस्मादरोचकात् पश्चाच्छर्दीनां प्रतिपादनम् ॥ १ ॥
दुष्टैर्दोषैः पृथक्सर्वैर्बीभत्सालोकनादिभिः ।
छर्दयः पञ्च विज्ञेयास्तासां लक्षणमुच्यते ॥ २ ॥

छर्दिनिदानं संप्राप्तिश्च ।

अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरति ।
अकाले चातिमात्रैश्च तथाऽसात्म्यैश्च भोजनैः ॥ ३ ॥
श्रमाद्भयात्तथोद्वेगादजीर्णात् कृमिदोषतः ।
नार्याश्चापन्नसत्त्वायास्तथाऽतिद्रुतमश्नतः ॥ ४ ॥
(अत्यन्तामपरीतस्य छर्द्या वै संभवो ध्रुवम् ।)
बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् ॥ ५ ॥
छर्दयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः ।
निरुच्यते छर्दिरिति दोषो वक्त्राद्विनिःसरन् ॥ ६ ॥

छर्दिपूर्वरूपम् ।

हृल्लासोद्गाररोधौ च प्रसेको लवणाम्भसः ।
द्वेषोऽन्नपानेषु भृशं वमीनां पूर्वलक्षणम् ॥ ७ ॥

वातजादिभेदेन छर्दीनां लक्षणानि ।

हृत्पार्श्वपीडामुखशोषशीर्षनाभ्यर्तिकासस्वरभेदतोदैः ।
उद्गारशब्दप्रबलं सफेनं विच्छिन्नकृष्णं तनुकं कषायम् ॥ ८
कृच्छ्रेण चाल्पं महता च वेगेनार्तोऽनिलाच्छर्दयतीह दुःखम्
मूर्च्छापिपासामुखशोषमूर्धताल्वक्षिसंतापतमोभ्रमार्तः ॥ ९ ।
पीतं भृशोष्णं हरितं सतिक्तं धूम्रं च पित्तेन वमेत्सदाहम् ।
तन्द्रास्यमाधुर्यकफप्रसेकसंतोषनिद्रारुचिगौरवार्तः ॥ १० ॥

स्निग्धं घनं स्वादु कफाद्विशुद्धं सरोमहर्षोऽल्परुजं वमेत्तु ।
अभक्तरुग्गौरवसादयुक्तो भुक्तं वमेत्सा कफकोपजा स्यात्॥११
शूलाविपाकारुचिदाहतृष्णाश्वासप्रमोहप्रबलं प्रसक्तम् ।
छर्दिस्त्रिदोषाल्लवणाम्लनीलसान्द्रोष्णरक्तं वमतां नृणां स्यात्१२
विट्स्वेदमूत्राम्बुवहानि वायुः स्रोतांसि संरुध्य यदोर्ध्वमेति ।
उत्सन्नदोषस्य समाचितं तं दोषं समुद्धूय नरस्य कोष्ठात्॥१३॥
विण्मूत्रयोस्तत्समगन्धवर्णं तृट्श्वासहिक्कार्तियुतं प्रसक्तम् ।
प्रच्छर्दयेद्दुष्टमिहातिवेगात्तयाऽर्दितश्चाशु विनाशमेति ॥ १४ ॥
बीभत्सजा दौहृदजाऽऽमजा च असात्म्यजा च कृमिजा च या हि।
सा पञ्चमी तां च विभावयेच्च दोषोच्छ्रयेणैव यथोक्तमादौ १५
शूलहृल्लासबहुला कृमिजा च विशेषतः ।
कृमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ॥ १६ ॥

छर्दीनामसाध्यलक्षणानि ।

क्षीणस्य या छर्दिरतिप्रसक्ता सोपद्रवा शोणितपूययुक्ता ।
सचन्द्रिकां तां प्रवदेदसाध्यां, साध्यां चिकित्सेन्निरुपद्रवां च॥

प्रकारान्तरेण वातजादिच्छर्दिलक्षणानि ।

ईषदुष्णा सफेनाऽथ सशूला च पुनः पुनः ।
छर्दिर्भवति लक्ष्मैतद्वातच्छर्देः प्रकीर्तितम् ॥ १८ ॥
सदाहा लोहिता पीता हरितोष्णाऽथवा भवेत् ।
छर्दिरित्युच्यते लक्ष्म पित्तच्छर्देरसंशयम् ॥ १९ ॥
कफाविला सहृद्दाहा मुहुर्मुहुः सघुर्घुरा ।
सलालजम्बालयुता श्लेष्मच्छर्दिः प्रकीर्तिता ॥ २० ॥

इति छर्दिनिदानम् ।

---

अथातश्छर्दिचिकित्सितं व्याख्यास्यामः ।

छर्द्यां लङ्घनविधानम् ।

आमाशयोत्क्लेशभवा हि सर्वाश्छर्द्यो मता लङ्घनमेव तस्मात् ।
प्राक्कारयेन्मारुतजां विहाय संशोधनं वा कफपित्तहारि ॥२१॥

वातच्छर्द्यां कतिपययोगाः ।

हन्यात्क्षारोदकं पीतं छर्दिं पवनसंभवाम् ।
ससैन्धवं पिबेत्सर्पिर्वातच्छर्दिनिवारणम् ॥ २२ ॥
मुद्गामलकयूषं वा ससर्पिष्कं ससैन्धवम् ।
यवागूं मधुमिश्रां वा पञ्चमूलीकृतां पिबेत् ॥ २३ ॥

वातच्छर्द्यां धान्यकादिलेहः ।

कुस्तुम्बरुमक्षिकाशकृच्छिखिबर्हं बदरास्थिमज्जकाम् ।
द्राक्षां मधुना च लेहयेदनिलच्छर्दिनिवृत्तये पुनः ॥ २४॥

वातच्छर्द्यां बीजपूरकादिलेहः ।

निष्पीड्य च बीजपूरकाद्रसमेलार्द्रकनागरायुतम् ।
लेहो मधुशर्करायुतो वमथुं वातकृतां नियच्छति ॥ २५ ॥

पैत्तिकच्छर्द्यां विरेचनम् ।

पित्तात्मिकायामनुलोमनार्थं द्राक्षाविदारीक्षुरसैस्त्रिवृत्स्यात् ।

पैत्तिकच्छर्द्यां वमनम् ।

कफाशयस्थं त्वतिमात्रवृद्धं पित्तं हरेत्स्वादुभिरूर्ध्वमेव ॥ २६ ॥

पैत्तिकच्छर्द्यामन्नव्यवस्था ।

शुद्धस्य काले मधुशर्कराभ्यां लाजैश्च मन्थं यदि वापि पेयाम् ।
प्रदापयेन्मुद्गरसेन वापि शाल्योदनं जाङ्गलजै रसैर्वा ॥ २७ ॥

छर्द्यां जातीपत्ररसादियोगः ।

जातीपत्ररसं कृष्णा मरिचं शर्करान्वितम् ।
एतानि मधुयुक्तानि हन्युश्छर्दिं चिरोद्भवाम् ॥ २८ ॥

पैत्तिकच्छर्द्यां लाजादियोगः ।

लाजा बदरास्थिचन्द्रकं ह्रीबेरं मधुमक्षिकाशकृत् ।
लेपन्मरिचं सशर्करं छर्दिं पित्तसमुत्थितां जयेत् ॥ २९ ॥

पैत्तिकच्छर्द्यां दूर्वादियोगः ।

पित्तच्छर्दिर्व्रजेद्दूर्वातण्डुलोदकपानतः ।
धात्रीरसेन वा पीता सिता लाजा च हन्ति ताम् ॥ ३० ॥

पैत्तिकच्छर्द्यां त्रुट्यादियोगः ।

त्रुटिरिकचन्दनाञ्जनं किञ्जल्कं कुमुदोत्पलस्य च ।
प्रपिबेन्मधुशर्करायुतं पित्तच्छर्दिनिवृत्तये नरः ॥ ३१ ॥

पैत्तिकच्छर्द्यां चन्दनादियोगः ।

चन्दनस्याक्षमात्रेण संयोज्यामलकीरसम् ।
पिबेन्माक्षिकसंयुक्तं छर्दिस्तेन निवर्तते ॥ ३२ ॥

छर्द्यां भृष्टमुद्गादिकषायः ।

कषायो भृष्टमुद्गस्य सलाजमधुशर्करः ।
छर्द्यतीसारदाहघ्नो ज्वरघ्नः संप्रकाशितः ॥ ३३ ॥

कफच्छर्द्यां वमनयोगः ।

कफात्मिकायां वमनं प्रशस्तं सपिप्पलीसर्षपनिम्बतोयैः ।
पिण्डीतकैः सैन्धवसंप्रयुक्तैश्छर्द्यां कफामाशयशोधनार्थम् ॥३४

श्लेष्मजायां वम्यां विडङ्गादिचूर्णम् ।

विडङ्गत्रिफलाविश्वचूर्णं मधुयुतं जयेत् ।
विडङ्गप्लवशुण्ठीनामथवा श्लेष्मजां वमिम् ॥ ३५ ॥

श्लैष्मिकच्छर्द्यां व्योषादिचूर्णम् ।

व्योषं त्रिफला दुरालभा जम्ब्वाम्रास्थि यवाग्रजं त्रिवृत् ।
लीढ्वा मधुना निवारयेच्छर्दिं श्लेष्मविकारजां नरः ॥३६॥

श्लैष्मिकच्छर्द्यां कतिपययोगाः ।

खादेदभयां समाक्षिकां व्योषं वा सकपित्थशर्करम् ।
छर्दिं कफसंभवां जयेद्वमनैर्वा बलकालदोषवित् ॥ ३७ ॥
सजाम्बवं वा बदरस्य चूर्णं मुस्तायुतां कर्कटकस्य शृङ्गीम् ।
दुरालभां वा मधुसंप्रयुक्तां लिह्यात्कफच्छर्दिविनिग्रहार्थम् ३८
श्रीफलस्य गुडूच्या वा कषायं मधुसंयुतम् ।
पिबेच्छर्दित्रये शीतं, दूर्वां वा तण्डुलाम्बुना ॥ ३९ ॥

छर्द्यां जम्ब्वाम्रपल्लवादियोगः।

जम्ब्वाम्रपल्लवगवेधुकधान्यसेव्य-
ह्रीबेरवारि मधुना पिबतोऽल्पमल्पम्।
छर्दिः प्रयाति शमनं त्रिसुगन्धियुक्तं,
लीढा निहन्ति मधुनाऽथ दुरालभा वा ॥ ४० ॥

छर्द्यां धात्रीरसादियोगः।

धात्र्या रसः कपित्थस्य पिप्पली मरिचानि च।
युक्तोऽयं मधुना लेहः श्रेष्ठश्छर्दिनिवारणः ॥ ४१ ॥
क्षौद्रेण युक्तः शमयेल्लेहोऽयं छर्दिमुल्बणाम्।

छर्दिनाशनाः षड्लेहाः।

सौवर्चलमजाजी च, शर्करा मरिचानि च ॥ ४२ ॥
कोलमज्जा कणा धात्री, लाजा विश्वं फलत्रिकम्।
श्यामाञ्जनाब्दकोलास्थि, मक्षिकाविट् सितायुता ॥ ४३ ॥
कणोषणकपित्थाम्बु, त्वगेलापत्रकं समम्।
सक्षौद्राः पादिका लेहाः षडेते छर्दिनाशनाः ॥ ४४ ॥

छर्द्यां कोलमज्जादिलेहः।

कोलामलकमज्जानो मक्षिकाविट् सिता मधु।
सकृष्णातण्डुलो लेहः श्रेष्ठश्छर्दिनिवारणः ॥ ४५ ॥

वम्यां त्रयो लेहाः।

लाजाकपित्थमधुमागधिकोषणानां,
क्षौद्राभयात्रिकटुधान्यकजीरकाणाम्।
पथ्यासितामरिचमाक्षिकपिप्पलीनां,
लेहास्त्रयः सकलवम्यरुचिप्रशान्त्यै ॥ ४६ ॥

वातच्छर्द्यां सैन्धवादियोगः।

सैन्धवं सर्पिषा पीतं वातच्छर्दिविनाशनम्।
किंवा यवानिकाचूर्णं भक्षितं तां विनाशयेत् ॥ ४७ ॥

सर्वच्छर्द्यामेलादिचूर्णम् ।

एलालवङ्गदलकेसरकोलमज्जा-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम् ।
चूर्णानि माक्षिकसितासहितानि लीढ्वा
छर्दिं निहन्ति कफमारुतपित्तजां वै ॥ ४८ ॥

त्रिदोषजच्छर्द्यां धात्र्यादियोगः ।

पिष्ट्वा धात्रीफलं लाक्षां शर्करां च पलोन्मिताम् ।
दत्त्वा मधुपलं चात्र कुडवं सलिलस्य च ।
वाससा गालितं पीतं हन्ति छर्दिं त्रिदोषजाम् ॥ ४९ ॥

छर्द्यां सारिवादिक्वाथः ।

सारिवोशीरमधुकं कुस्तुम्बरुफलानि च ।
युक्त्या क्वाथ्य जलं पेयं मधुना छर्दिनाशनम् ॥ ५० ॥

छर्द्यां हरीतकीयोगः ।

हरीतकीनां चूर्णं तु लिह्यान्माक्षिकसंयुतम् ।
अधोभागीकृते दोषे छर्दिस्तेन निवर्तते ॥ ५१ ॥

छर्द्यां वातहरक्रियाया आवश्यकता ।

छर्दिप्रसङ्गात् पवनो ह्यवश्यं धातुक्षयाद्वृद्धिमुपैति तस्मात् ।
चिरप्रवृत्तास्वनिलापहानि कार्याण्युपस्तम्भनबृंहणानि ॥ ५२ ॥

चिरोत्थच्छर्दिप्रतीकारः ।

सर्पिर्गुडः क्षीरविधिर्घृतानि कल्याणकत्र्यूषणजीवनानि ।
वृष्यास्तथा मांसरसाः सलेहाश्छर्दिं चिरोत्थां प्रशमं नयन्ति ५३

विविधच्छर्दिचिकित्सा ।

बीभत्सजां हृद्यतमैर्दौहृदीं काङ्क्षितैः फलैः ।

---

१ सर्पिर्गुडः गदनिग्रह एव प्रयोगखण्डे २२७ पृष्ठे उक्तः । २ कल्याणकं घृतं प्रयोगखण्डे २१९–२२० पृष्ठयोरुक्तम् । त्र्यूषणाद्यं घृतं प्रयोगखण्डे १९ पृष्ठे प्रोक्तम् । जीवनं घृतं जीवनीयगणसिद्धं घृतमित्यर्थः ।

लङ्घनैर्वमनैश्चामां सात्म्यैश्चासात्म्यकोपजाम् ।
कृमिहृद्रोगवच्चापि साधयेत् कृमिजां वमिम् ॥ ५४ ॥

छर्द्यां कतिपययोगाः ।

क्वाथं गुडूच्याः शृतशीतलं यो मध्वन्वितं शीतरसाधितं वा ।
दूर्वां पिबेत्तण्डुलवारिणा वा तस्य प्रशान्तिं समुपैति वान्तिः॥५५

कफच्छर्द्यामन्नव्यवस्था ।

आरक्तशालिभक्तं गोदधिशर्कराविमिश्रं च ।
कुर्याद्भोजनमेतद्य कफच्छर्दिच्छिदे जन्तुः ॥ ५६ ॥

उत्कारिकाचिकित्सा ।

शमीत्वक्कासमश्वत्थफलं क्वाथोऽतिशीतलः ।
उत्कारीं हन्ति पानेन जन्तुदोषसमुद्भवाम् ॥ ५७ ॥
पथ्याक्षधात्रीमगधोपणानां चूर्णं सलाजाञ्जनकोलमज्जम् ।
छर्दिं छिनत्त्याशु समाक्षिकं तु सत्र्यूषणं वापि कपित्थमध्यम् ॥

प्रवृद्धच्छर्द्यां मनःशिलादिचूर्णम् ।

मनःशिलामागधिकोपणानां चूर्णं कपित्थाम्लरसेन युक्तम् ।
लाजैः समांशैर्मधुनावलीढं छर्दिं प्रवृद्धामपि हन्ति शीघ्र॥५९॥

छर्द्यां जम्ब्वाम्रपल्लवादिकाः कतिपययोगाः ।

जम्ब्वाम्रपल्लवोशीरवटाश्वत्थावरोहजः ।
क्वाथः शीतो मधुयुतः पीतश्छर्दिनिवारणः ॥ ६० ॥
गृहाकारं मृदो गोलं किंवा जम्बूदलोद्भवम् ।
तस्योदके धृतं तत्तु पानादुत्कारिनाशनम् ॥ ६१ ॥
बीजपूररसो लाजा हरिद्रापिप्पली मधु ।
हरन्त्येतानि भुक्तानि वान्तिं वातसमुद्भवाम् ॥ ६२ ॥
कपित्थं मरिचं बिल्वं कणा लाजा सिता समम् ।
एलारसेन भुक्तानि वमनं वारयन्ति ते ॥ ६३ ॥

वातच्छर्द्यां सौवर्चलादिचूर्णम् ।

सौवर्चलं विडङ्गानि सैन्धवं कटुकत्रयम् ।
वातच्छर्दिहरं चूर्णमेतेषां मधुनाऽशितम् ॥ ६४ ॥

पित्तच्छर्द्यां विडङ्गादिचूर्णम् ।

विडङ्गं त्रिफला शुण्ठी चूर्णमेषां समासतः ।
मधुना भक्षितं हन्ति पित्तच्छर्दिमसंशयम् ॥ ६५ ॥

छर्द्यां परूषकादियोगः ।

परूषकाणि मृद्वीकां मधुकं शर्करां बलाम् ।
मधूकपुष्पं पद्मं च मुस्तामामलकानि च ॥ ६६ ॥
आपोथ्य तानि सर्वाणि प्रक्षिपेत्तण्डुलोदके ।
शर्करार्द्रसंयुक्तं पिबेच्छर्दितृषापहम् ॥ ६७ ॥

इति श्रीरोढलमथिते गदनिग्रहे कायचिकित्साखण्डे छर्द्यधिकार-
श्चतुर्दशः ॥ १४ ॥

---

## अथ तृष्णाधिकारः पञ्चदशः ।

अथातस्तृष्णानिदानं व्याख्यास्यामः ।

पिपासासंप्राप्तिः ।

वातपित्ते प्रकुप्येते यान्तस्य क्षपिते कफे ।
ततस्तृष्णा प्रजायेत तेन तृष्णा निरूप्यते ॥ १ ॥
भयश्रमाभ्यां बलसंक्षयाद्वा ऊर्ध्वं चितं पित्तविवर्धनैश्च ।
पित्तं सवातं कुपितं नराणां तालुप्रपन्नं जनयेत्पिपासाम् ॥२॥
स्रोतःस्वपांवाहिषु दूषितेषु दोषैश्च तृट् संभवतीह जन्तोः ।
तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथा ह्यामसमुद्भवा च
भक्तोद्भवा सप्तमिकेति तासां निबोध लिङ्गान्यनुपूर्वशश्च ॥३॥

तृष्णायाः सामान्यलक्षणम् ।

सततं यः पिबेत्तोयं न तृप्तिमधिगच्छति ।
पुनः काङ्क्षति तोयं च तं तृष्णार्दितमादिशेत् ॥ ४ ॥

वातजादिक्रमेण तृष्णालक्षणानि।

शुष्कास्यता मारुतसंभवायां तोदस्तथा शङ्खशिरःसु चापि ॥५॥
स्रोतोनिरोधो विरसं च वक्त्रं शीताभिरद्भिश्च विवृद्धिमेति।
मूर्च्छान्नविद्वेषविलापदाहा रक्तेक्षणत्वं प्रततश्च शोषः ॥ ६ ॥
शीताभिनन्दा मुखतिक्तता च पित्तात्मिकायां परिदूयनं च।
बाष्पावरोधात्कफसंवृतेऽग्नौ तृष्णा बलासेन भवेत्तथा तु ॥७॥
निद्रा गुरुत्वं मधुरास्यता च तृष्णार्दितः शुष्यति चातिमात्रम्।
क्षतस्य रुक्शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु॥
रसक्षयाद्या क्षयसंभवा सा तयाऽभिभूतश्च निशादिनेषु।
पेपीयतेऽम्भः स सुखं न याति तां सन्निपातादिति केचिदाहुः॥
रसक्षयोक्तानि च लक्षणानि तस्यामशेषेण भिषग्व्यवस्येत्।
त्रिदोषलिङ्गाऽऽमसमुद्भवा च हृच्छूलनिष्ठीवनसादकर्त्री।
स्निग्धं तथाऽम्लं लवणं च भुक्तं गुर्वन्नमेवाशु तृषां करोति १०

तृष्णाया असाध्यलक्षणानि।

दीनस्वरः प्रताम्यन् दीनः संशुष्कवक्त्रगलतालुः।
भवति खलु योपसर्गात्तृष्णा सा शोषिणी कष्टा ॥ ११ ॥
ज्वरमोहक्षयकासश्वासाद्युपसृष्टदेहानाम्।
सर्वास्त्वतिप्रसक्ता रोगकृशानां वमिप्रसक्तानाम्।
घोरोपद्रवयुक्तास्तृष्णा मरणाय विज्ञेयाः ॥ १२॥

इति तृष्णानिदानम्।

---

अथातस्तृष्णाचिकित्सितं व्याख्यास्यामः।

तृष्णायां जलदानविधानम्।

तृष्णा गरीयसी घोरा सद्यः प्राणविनाशिनी।
तस्माद्देयं तृषार्ताय पानीयं प्राणधारणम्।
शक्यते जीवमानस्य भेषजं कर्तुमन्यथा ॥ १३ ॥

तृष्णायां वमनयोगः ।

तृष्णाविवृद्धावुदरे च पूर्णे संछर्दयेन्मागधिकोदकेन ।
विलोडनं चात्र हितं वदन्ति यद्दाडिमाम्रातकमातुलुङ्गैः ॥१४॥

वातजतृष्णाचिकित्सा ।

पञ्चाह्वकाः पञ्चगणा य उक्तास्तेष्वम्बु सिद्धं प्रथमे गणे वा ।
पिबेत्सुखोष्णं मनुजोऽल्पशश्च तृषो विमुच्येत हि वातजायाः ॥

पित्तजतृष्णाचिकित्सा ।

पित्तोत्थितां पित्तहरैर्विपक्वं निहन्ति तोयं पय एव वाऽपि ।
संसारिवादौ तृणपञ्चमूले तथोत्पलादौ मधुरे गणे च ।
कुर्यात्कषायं च तथैव कल्कं मधूकपुष्पादिषु चापरेषु ॥ १६ ॥

काश्मर्यशर्करायुक्तचन्दनोशीरपद्मकैः ।
मधुकक्षौद्रसंयुक्तं पित्ततर्षे जलं पिबेत् ॥ १७ ॥

कफजतृष्णाचिकित्सा ।

बिल्वाढकीधातकीपञ्चकोलदर्भैस्तु सिद्धं कफजां निहन्ति ।
हितं भवेच्छर्दनमेव चात्र तप्तेन निम्बप्रसवोदकेन ॥ १८ ॥

---

१ पञ्चाह्वकाः पञ्चगणाः बृहत्पञ्चमूल-लघुपञ्चमूल-वल्लीपञ्चमूल-कण्टकपञ्च-मूल-तृणपञ्चमूलाख्याः। ते च क्रमशो यथा-बिल्वाग्निमन्थश्योणाकपाटलाः काश्मर्यं चेति महत्पञ्चमूलं, त्रिकण्टकबृहतीद्वयपृथक्पर्ण्यो विदारिगन्धा चेति कनीयः-पञ्चमूलं, विदारीसारिवारजनीगुडूच्योऽजशृङ्गी चेति वल्लीपञ्चमूलं, करमर्दत्रि-कण्टकसैरीयकशतावरीगृध्रनख्य इति कण्टकपञ्चमूलं, कुशकाशनलदर्भकाण्डे-क्षुका इति तृणपञ्चमूलम्। २ प्रथमो गणो विदारिगन्धादिः, यथा-विदारिगन्धा विदारी सहदेवा विश्वदेवा श्वदंष्ट्रा पृथक्पर्णी शतावरी सारिवा कृष्णसारिवा जीवकर्षभको महासहा बृहत्यौ पुनर्नवैरण्डौ हंसपादी वृश्चिकाल्यृषभी चेति विदारि-गन्धादिः । ३ 'सारिवामधुकचन्दनकुचन्दनपद्मककाश्मरीफलमधूकपुष्पाण्यु-शीरं च' इति सारिवादिगणः। तृणपञ्चमूलं पूर्वमत्रैवोक्तम् । 'उत्पलरक्तोत्पल-कुमुदसौगन्धिककुवलयपुण्डरीकाणि मधुकं च' इत्युत्पलादिः। मधुरो गणः काकोल्यादिः, यथा-काकोलीक्षीरकाकोलीजीवकर्षभकमुद्गपर्णीमेदामहामेदा-च्छिन्नरुहाकर्कटशृङ्गीतुगाक्षीरीपद्मकप्रपौण्डरीकर्द्धि वृद्धिमृद्वीकाजीवन्त्यो मधुकं च' इति। ४ मधूकपुष्पादिषु मधूकपुष्पद्राक्षाकाश्मर्यखर्जूरेषु चतुर्षु।

सजीरकाण्यार्द्रकशृङ्गवेरसौवर्चलान्यर्धजलप्लुतानि ।
मद्यानि हृद्यानि च गन्धवन्ति पीतानि सद्यः शमयन्ति तृष्णाम्

विविधतृष्णाचिकित्सा ।

क्षतोद्भवां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः ।
क्षयोत्थितां क्षीरजलं निहन्यान्मांसोदकं वाऽथ मधूदकं वा ।
गुर्वन्नजामुल्लिखनैर्जयेच्च क्षयादृते सर्वकृताश्च तृष्णाः ॥ २० ॥

तृष्णायां लाजोदकयोगः ।

लाजोदकं मधुयुतं शीतं गुडविमिश्रितम् ।
काश्मीरशर्करायुक्तं पिबेत्तृष्णार्दितो नरः ॥ २१ ॥

तृष्णायामाम्रादिकषायः ।

आम्रजम्बूकषायं वा पिबेन्माक्षिकसंयुतम् ।
छर्दिं सर्वां प्रणुदति तृष्णां चैवापकर्षति ॥ २२ ॥

तृष्णायां द्राक्षादियोगः ।

गोस्तनीक्षुरसक्षीरयष्टीमधुमधूत्पलैः ।
नियतं नस्यतः पीतैस्तृष्णा शाम्यति दारुणा ॥ २३ ॥

तृष्णायां गण्डूषयोगः ।

क्षीरेक्षुरसमृद्वीकाक्षौद्रसीधुगुडोदकैः ।
वृक्षाम्लैर्मातुलुङ्गैश्च गण्डूषस्तालुशोषजित् ॥ २४ ॥
वैशद्यं जनयेच्चास्ये संदधाति मुखे व्रणान् ।
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम् ॥ २५ ॥

तृष्णायामपरो वमनयोगः ।

वारि शीतं मधुयुतमाकण्ठाद्वा पिपासितम् ।
पाययेद्वामयेच्चापि तेन तृष्णा प्रशाम्यति ॥ २६ ॥

तृष्णायामावस्थिकी चिकित्सा ।

अतिरूक्षदुर्बलानां तर्षं शमयेन्नृणामिहाशु पयः ।
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः ।
स्निग्धेऽन्ने भुक्ते या तृष्णा स्यात्तां गुडाम्बुना शमयेत् २७

तृष्णायां वटशुङ्गादियोगः ।

वटशुङ्गसितारोध्रं दाडिमं मधुकं मधु ।
पिबेत्तण्डुलतोयेन छर्दितृष्णानिवारणम् ॥ २८ ॥

तालुशोषप्रतीकारः ।

तालुशोषे पिबेत्सर्पिर्घृतमण्डमथापि वा ।
धान्याम्लमास्यवैरस्यमुखदौर्गन्ध्यनाशनम् ।
तदेवालवणं पीतं मुखशोषहरं परम् ॥ २९ ॥

तृष्णायां पद्माम्लको मुखालेपः ।

कोलदाडिमवृक्षाम्लचुक्रिकाचुक्रिकारसः ।
पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति ॥ ३० ॥

तृष्णायां वटप्ररोहाद्या वटिका ।

वटप्ररोहं मधु कुष्ठमुत्पलं सलाजचूर्णं गुटिकां प्रकल्पयेत् ।
गुसंहिता सा वदने विधारिता तृष्णां प्रवृद्धामपि हन्ति सत्वरम्

तृष्णायामन्नपानव्यवस्था ।

ओदनं रक्तशालीनां शीतं माक्षिकसंयुतम् ।
भोजयेत्तेन शाम्येते छर्दितृष्णे चिरोत्थिते ॥ ३२ ॥
अथोदकं निषेवेत माक्षिकेणाथवा पयः ।
तृष्णाच्छर्दिप्रशमनं जाङ्गलं रसमेव वा ॥ ३३ ॥
मूर्च्छाच्छर्दितृषादाहमद्यस्त्रीभारकर्शिताः ।
पिबेयुः शीतलं तोयं रक्तपित्तमदात्यये ॥ ३४ ॥
तृष्णामूर्च्छाभयक्षीणो न लभेत जलं यदि ।
मरणं दीर्घरोगं वा प्राप्नुयात्त्वरितं नरः ॥ ३५ ॥
तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति ।
तस्मात् सर्वास्ववस्थासु न कचिद्वारि वार्यते ॥ ३६ ॥
सात्म्यान्नपानभैषज्यैस्तृष्णां तस्य जयेत्पुरा ।
तस्यां जितायामन्योऽपि शक्यो व्याधिश्चिकित्सितुम्॥३७॥

१ 'शाल्यन्न-' ख. ।

तृष्णायां चन्दनाद्यः शिरोलेपः।

अरुणचन्दनचन्दनवालकै-
र्नलदपद्मकतुल्यकृतांशकैः।
शिरसि लेपनमाचरतां नृणां
तृडुपयात्युपशान्तिमसंशयम् ॥ ३८ ॥

तृष्णायां नीलाब्जाद्या गुटिका।

नीलाब्जकुष्ठमधुलाजवटप्ररोहैः
श्लक्ष्णीकृतैर्विरचिता गुटिका मुखस्था।
तृष्णां निवारयति तत्क्षणमेव तीव्रा-
मर्थस्पृहामिव यतेः परमात्मचिन्ता॥ ३९ ॥

तृष्णायां सुवर्णादिनिर्वापितजलोपयोगः।

सुवर्णरूप्यादिभिरग्नितप्तैर्लोष्टैः कृतं वा सिकतोपलैर्वा।
जलं सुखोष्णं शमयेत्तु तृष्णां सशर्करं क्षौद्रयुतं हितं वा॥४०॥
लोष्टप्रतप्ततोयं तु शर्करामधुयोजितम्।
लाक्षाचूर्णसमायुक्तं पीतं तृड्दाहनाशनम् ॥ ४१ ॥

तृष्णायां क्षीरादिगण्डूषयोगः।

क्षीरेक्षुरसगुडोदकसितोपलाक्षौद्रसीधुमार्द्वीकैः।
वृक्षाम्लमातुलुङ्गैर्गण्डूषास्तालुशोषघ्नाः ॥ ४२ ॥

इति श्रीवैद्यसोढलप्रथिते गदनिग्रहे कायचिकित्साखण्डे तृष्णाधिकारः पञ्चदशः ॥ १५ ॥

---

## अथ मूर्च्छाधिकारः षोडशः।

अथातो मूर्च्छानिदानं व्याख्यास्यामः।

मूर्च्छासंप्राप्तिः।

तृष्णाभङ्गे ध्रुवं मूर्च्छा भवेदिति भिषङ्मतम्।
अतस्तृष्णां निरूप्यैव मूर्च्छालक्षणमुच्यते ॥ १ ॥
क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः।
वेगाघातादभीघाताद्धीनसत्त्वस्य वा पुनः ॥ २ ॥

करणायतनेषूग्रा बाह्येष्वाभ्यन्तरेषु च।
निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः॥ ३॥
संज्ञावहासु नाडीषु पिहितास्वनिलादिभिः।
तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत्॥ ४॥
सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत्।
मोहो मूर्च्छेति तामाहुः षड्विधा सा प्रकीर्तिता॥ ५॥
वातादिभिः शोणितेन मद्येन च विषेण च।
षट्स्वप्येतासु पित्तं तु प्रभुत्वेनावतिष्ठते॥ ६॥

मूर्च्छायाः पूर्वरूपाणि।

हृत्पीडा जृम्भणं ग्लानिः संज्ञादौर्बल्यमेव च।
सर्वासां पूर्वरूपाणि यथास्वं ता विभावयेत्॥ ७॥

वातजादिभेदेन मूर्च्छालक्षणानि।

नीलं वा यदि वा कृष्णमाकाशमथवाऽरुणम्।
पश्यंस्तमः प्रविशति शिराच्च प्रतिबुध्यते॥ ८॥
वेपथुश्चाङ्गमर्दश्च प्रपीडा हृदयस्य च।
कार्श्यं श्यावाऽरुणा छाया मूर्च्छाये वातसंभवे॥ ९॥
रक्तं हरितवर्णं वा वियत् पीतमथापि वा।
पश्यंस्तमः प्रविशति सस्वेदश्च प्रबुध्यते॥ १०॥
सपिपासः ससंतापो रक्तपीताकुलेक्षणः।
संभिन्नवर्चाः पीताभो मूर्च्छाये पित्तसंभवे॥ ११॥
मेघसंकाशमाकाशमावृतं वा तमोघनैः।
पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते॥ १२॥
गुरुभिः प्रावृतैरङ्गैर्यथैवार्द्रेण चर्मणा।
सप्रसेकः सहृल्लासो मूर्च्छाये कफसंभवे॥ १३॥
सर्वाकृतिः सन्निपातादपस्मार इवागतः।
स जन्तुं पातयत्याशु विना बीभत्सचेष्टितैः॥ १४॥

पृथिव्यापस्तमोरूपं रक्तगन्धस्तदन्वयः।
तस्माद्रक्तस्य गन्धेन मूर्च्छन्ति भुवि मानवाः॥ १५॥
द्रव्यस्वभाव इत्येके दृष्ट्वा यदभिमुह्यति।
गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययोः॥ १६॥
त एव तस्मात्ताभ्यां तु मोहौ स्यातां यथेरितौ।
स्तब्धाङ्गदृष्टिस्त्वसृजा गूढोच्छ्वासश्च मूर्च्छितः॥ १७॥
मद्येन विलपंश्शेते नष्टविभ्रान्तमानसः।
गात्राणि विक्षिपन् भूमौ जरां यावन्न याति तत्॥ १८॥
वेपथुस्वप्नतृष्णाः स्युस्तमश्च विषमूर्च्छिते।
वेदितव्यं तीव्रतरं यथास्वं विषलक्षणैः॥ १९॥

मूर्च्छादौ प्रधानदोषाः।

मूर्च्छा पित्ततमःप्राया रजःपित्तानिलाद्भ्रमः।
तमोवातकफात्तन्द्रा निद्रा श्लेष्मतमोभवा॥ २०॥

तन्द्रालक्षणम्।

इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः।
निद्रार्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत्॥ २१॥

संन्यासलक्षणम्।

दोषेषु मदमूर्च्छायाः कृतवेगेषु देहिनाम्।
स्वयमेवोपशाम्यन्ति संन्यासो नौषधैर्विना॥ २२॥
वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः।
संन्यस्यन्त्यबलं जन्तुं प्राणायतनमाश्रिताः॥ २३॥
स ना संन्याससंन्यस्तः काष्ठीभूतोमृतोपमः।
प्राणैर्वियुज्यते शीघ्रं मुक्त्वा सद्यःफलां क्रियाम्॥ २४॥

मूर्च्छानिदानोपसंहारः।

मूर्च्छा मोहो द्विधा स प्रभवति सहजागन्तुभेदेन भिन्न-
स्तत्रागन्तुस्त्रिधा स्याद्रुधिरविषसुराजन्यभेदाद्विभिन्नः।

मद्यगुणाः ।

ये विषस्य गुणाः प्रोक्तास्तेऽपि मद्ये प्रतिष्ठिताः ।
तेन मिथ्योपयुक्तेन भवत्युग्रो मदात्ययः ॥ २ ॥
किंतु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम् ।
अयुक्तियुक्तं रोगाय युक्तियुक्तं यथाऽमृतम् ॥ ३ ॥
प्राणाः प्राणभृतामन्नं तदयुक्त्या निहन्त्यसून् ।
विषं प्राणहरं तच्च युक्तियुक्तं रसायनम् ॥ ४ ॥
विधिना मात्रया काले हितैरन्नैर्यथाबलम् ।
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतोपमम् ॥ ५ ॥
स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितम् ।
भवेदायुःप्रकर्षाय बलायोपचयाय च ॥ ६ ॥
काम्यता मनसस्तुष्टिस्तेजो विक्रम एव च ।
विधिवत्सेव्यमाने हि मद्ये सन्निहिता गुणाः ॥ ७ ॥
(मद्यं कर्षमितं पेयं दिनान्ते नृपपुङ्गवैः ।
साज्यभोज्यैः समं सम्यग्बलारोग्यविवर्धनम् ॥ ८ ॥)

प्रथमादिमदलक्षणानि ।

बुद्धिस्मृतिप्रीतिकरः सुखश्च पानान्ननिद्रारतिवर्धनश्च ।
संपाठगीतस्वरवर्धनश्च प्रोक्तोऽतिरम्यः प्रथमो मदो हि ॥ ९
अव्यक्तबुद्धिस्मृतिवाग्विचेष्टः सोन्मत्तलीलाकृतिरप्रशान्तः ।
आलस्यनिद्राभिहतो मुहुश्च मध्येन मत्तः पुरुषो मदेन ॥ १०
गच्छेदगम्यान्न गुरूंश्च मन्येत्खादेदभक्ष्याणि च नष्टसंज्ञः ।
ब्रूयाच्च गुह्यानि हृदि स्थितानि मदे तृतीये पुरुषोऽस्वतन्त्रः ॥ १

चतुर्थे तु मदे मूढो भिन्नदार्विव निष्क्रियः ।
कार्याकार्यविभागज्ञो मृतादप्यपरो मृतः ॥ १२ ॥
को मदं तादृशं गच्छेदुन्मादमिव चापरम् ।
बहुदोषमिवामूढः कान्तारं स्ववशः कृती ॥ १३ ॥

मदात्ययादीनां निदानं संप्राप्तिश्च।

निर्भक्तमेकान्तत एव मद्यं निषेव्यमाणं पुरुषेण नित्यम्।
आपादयेत्कष्टतमान्विकारानापादयेच्चापि शरीरभेदम्॥ १४॥
क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन।
व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि॥ १५॥
अत्यम्लभक्ष्यावततोदरेण साजीर्णभुक्तेन तथाऽबलेन।
उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान्विकारान्१६

पानात्ययं परमदं पानाजीर्णमथापि च।
पानविभ्रममुग्रं च तेषां वक्ष्यामि लक्षणम्॥ १७॥

वातजादिभेदेन मदात्ययलक्षणानि।

हिक्काश्वासशिरःकम्पपार्श्वशूलप्रजागरैः।
विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम्॥ १८॥
तृष्णादाहज्वरस्वेदमोहातिसारविभ्रमैः।
विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम्॥ १९॥
छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः।
विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम्॥ २०॥
ज्ञेयस्त्रिदोषजश्चापि सर्वलिङ्गैर्मदात्ययः।
द्विदोषसंभवैर्लिङ्गैर्विज्ञेयस्तु द्विदोषजः॥ २१॥

परमदलक्षणम्।

श्लेष्मोच्छ्रयोऽङ्गगुरुता विरसास्यता च
विण्मूत्रसक्तिरथ तन्द्रिररोचकश्च।
लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञा-
स्तृष्णा रुजः शिरसि सन्धिषु चापि भेदः॥ २२॥

पानाजीर्णलक्षणम्।

आध्मानमुग्रमथवोद्गिरणं विदाहः
पानेऽजरां समुपगच्छति लक्षणानि।

पानविभ्रमलक्षणम्।

: ॥ २३ ॥

द्वेषः सुरान्नविकृतेष्वपि तेषु तेषु
तं पानविभ्रममुग्रन्त्यखिलेन धीराः।

पानहतस्यासाध्यलक्षणम्।

हीनोत्तरौष्ठमतिशीतममन्ददाहं
तैलप्रभास्यमपि पानहतं त्यजेत्तु ॥ २४ ॥
जिह्वाग्रदन्तमसितं त्वथवापि नीलं
पीते च यस्य नयने रुधिरप्रभे वा।

पानहतोपद्रवाः।

हिक्काज्वरौ वमथुवेपथुपार्श्वशूलाः
कासभ्रमावपि च पानहतं भजन्ते ॥ २५ ॥

इति मदात्ययादिनिदानम्।

अथातो मदात्ययादिचिकित्सितं व्याख्यास्यामः।

पानात्यये मद्ययोगः।

येन मद्येन संजातो नृणां पानात्ययो भवेत्।
तदेवार्धोदकं पीतं पानात्ययमपोहति ॥ २६ ॥

मद्यविकारे खर्जूरादिमन्थः।

मन्थः खर्जूरमृद्वीकावृक्षाम्लाम्लीकदाडिमैः।
परूषकैः सामलकैर्युक्तो मद्यविकारनुत् ॥ २७ ॥

मदात्यये तर्पणादिकल्पना।

सर्वानमुद्गमिश्रान् वा दाडिमामलकान्वितान्।
द्राक्षामलकखर्जूरपरूषकरसेन वा ॥ २८ ॥

कल्पयेत्तर्पणान् यूपान् रसांश्च विविधात्मकान् ।

मूर्च्छायां घृतयोगाः ।

पथ्याक्वाथेन संसिद्धं घृतं धात्रीरसेन वा ॥ २९ ॥
सर्पिः कल्याणकं वाऽपि मदमूर्च्छापहं पिबेत् ।

पूगीफलमदप्रतिकारः ।

समूर्च्छाच्छर्दतीसारं मदं पूगफलोद्भवम् ॥ ३० ॥
सद्यः प्रशमयेत्पीतमात्रमेवारि शीतलम् ।
गव्यकरीषघ्राणाज्जलपानाल्लवणभक्षणाद्वाऽपि ।
शाम्यति पूगीफलमदश्चूर्णरजःशर्कराकवलात् ॥ ३१ ॥
शान्ति श्रमो व्रजति पूगफलोपयोग-
जातो जलेन चुलुकैरुपयोजितेन ।
शुष्केण नावनसमाहृतगोमयेन
घ्रातेन तस्य सहसैव भवेत् प्रणाशः ॥ ३२ ॥

कोद्रवधत्तूरमदप्रतीकारः ।

गुडेन कूष्माण्डफलाम्बु पीतं स्यात्कोद्रवोत्थभ्रमनाशहेतुः ।
मोहेऽथ धत्तूरकखादनोत्थे सशर्करं क्षीरमुशन्ति वैद्याः ॥३३॥

वातपानात्ययचिकित्सा ।

मद्यं सौवर्चलव्योपयुक्तं किंचिज्जलान्वितम् ।
जीर्णमद्याय दातव्यं वातपानात्ययापहम् ॥ ३४ ॥

पित्तपानात्ययचिकित्सा ।

मुद्गयूपः सितायुक्तः स्वादुर्वा पिशितो रसः ।
पित्तपानात्यये योज्यः, सर्वतश्च हिमाः क्रियाः ॥ ३५ ॥
त्रिफलात्वङ्मधूकानि पद्मकं पद्मकेसरम् ।
नीलोत्पलं मृणालानि नलदं चन्दनं बला ॥ ३६ ॥
सिद्धं कषायं शीतं तु शर्करामधुसंयुतम् ।
किंचिन्मद्येन संयुक्तं पित्तपानात्यये पिबेत् ॥ ३७ ॥

दुःस्पर्शकेन मुस्तेन मुस्तपर्पटकेन वा ।
जलं मुस्तैः शृतं वाऽथ दद्याद्दोषविपाचनम् ॥ ३८ ॥

कफपानात्ययचिकित्सा ।

पानरोगे कफोद्भूते यथास्वं च विभावयेत् ।
दीपनीयौषधोपेतं पिबेन्मद्यं समाहितः ॥ ३९ ॥

सर्वजपानात्ययचिकित्सा ।

सर्वजे सर्वमेवेदं प्रयोक्तव्यं चिकित्सितम् ।

मदात्यये क्षीरयोगः ।

आभिः क्रियाभिः सिद्धाभिः शान्तिं याति मदात्ययः॥४०
न चेन्मद्यक्रमं मुक्त्वा क्षीरमस्य प्रयोजयेत् ।
लङ्घनाद्यैः कफे क्षीणे जाते दौर्बल्यलाघवे ॥ ४१ ॥
ओजस्तुल्यगुणं क्षीरं विपरीतं च मद्यतः ।
क्षीरप्रयोगं मद्यं च क्रमेणाल्पाल्पमाचरेत् ॥ ४२ ॥

मदात्यये पुनर्नवादिघृतम् ।

पयःपुनर्नवाक्वाथयष्टीकल्कप्रसाधितम् ।
घृतं पुष्टिकरं पानान्मद्यपानाद्धतौजसाम् ॥ ४३ ॥

कफमदात्ययेऽष्टाङ्गलवणम् ।

सौवर्चलमजाजी च वृक्षाम्लं साम्लवेतसम् ।
त्वगेलामरिचार्धांशं शर्कराभागयोजितम् ॥ ४४ ॥
एतल्लवणमष्टाङ्गमग्निसंदीपनं परम् ।
मदात्यये कफप्राये दद्यात् स्रोतोविशोधनम् ॥ ४५ ॥

मदात्यये चव्याद्यं चूर्णम् ।

चव्यं सौवर्चलं हिङ्गु पूरकं विश्वदीप्यकम् ।
चूर्णं मद्येन दातव्यं पानात्ययरुजापहम् ॥ ४६ ॥

वातमदात्यये मद्ययोगः ।

सौवर्चलव्योषयुक्तं मद्यं माक्षिकसंयुतम् ।
चुक्रदाडिमसंमिश्रं वातपानात्यये हितम् ॥ ४७ ॥

वातमदात्यये तर्पणयोगः ।

तोयं मद्यं च शुक्तं च दधि मस्त्वम्लकाञ्जिकम् ।
समाक्षिकस्तर्पणोऽयं वातपानात्यये हितः ॥ ४८ ॥

कफमदात्ययचिकित्सा ।

उल्लेखनोपवासाभ्यां जयेत्कफमदात्ययम् ।
तृष्यते सलिलं चास्मै दद्याद्धीवेरसाधितम् ॥ ४९ ॥

मदात्यये कर्कन्ध्वादिपानकम् ।

कर्कन्धुबदराणां च प्रस्थं कुर्यात् सुकुट्टितम् ।
द्विप्रस्थे गालयेत्तोये सप्तकृत्वः पुनः पुनः ॥ ५० ॥
अथैनं मृण्मये भाण्डे सुगुप्तं विनिधारयेत् ।
द्वे च दद्याद्गुडपले शर्करायाः पलं तथा ॥ ५१ ॥
सूक्ष्मं च मरिचात्कर्षं चतुर्थं केसरस्य च ।
त्वक्पत्रधरणे द्वे च सूक्ष्मैला कर्षमेव च ॥ ५२ ॥
मृणालादर्धकर्षं च सूक्ष्मचूर्णानि कारयेत् ।
जातीवाससमायुक्तं पानकं पानविभ्रमम् ॥ ५३ ॥
नाशयत्याशु पानेन छिन्नाभ्राणीव मारुतः ।
एतच्छर्दिं तृषां दाहमतीसारं प्रवाहिकाम् ॥ ५४ ॥
अरुचिं मूत्रकृच्छ्रं च हन्यात्पानात्ययं नृणाम् ।
अहानि सप्त चाष्टौ च नृणां पानात्ययः स्मृतः ।
पानं हि भजतेऽजीर्णमत ऊर्ध्वं विमार्गगम् ॥ ५५ ॥

सुरासेवनविधिः ।

जलप्लुतश्चन्दनभूषिताङ्गः स्रग्वी सभक्तां पिशितोपदंशाम् ।
पिबेत्सुरां नैव लभेत रोगान् मनोमतिघ्नं च मदं न याति ॥
लीढ्वा घृतं शर्करया समेतं निषेवते यो मदिरां प्रकामम् ।
उद्दामदर्पाऽपि न तस्य सा स्यान्मदस्य हेतुः परिपीयमाना ५७

दुःस्पर्शकेन मुस्तेन मुस्तपर्पटकेन वा ।
जलं मुस्तैः शृतं वाऽथ दद्याद्दोषविपाचनम् ॥ ३८ ॥

कफपानात्ययचिकित्सा ।

पानरोगे कफोद्भूते यथास्वं च विभावयेत् ।
दीपनीयौषधोपेतं पिबेन्मद्यं समाहितः ॥ ३९ ॥

सर्वजपानात्ययचिकित्सा ।

सर्वजे सर्वमेवेदं प्रयोक्तव्यं चिकित्सितम् ।

मदात्यये क्षीरयोगः ।

आभिः क्रियाभिः सिद्धाभिः शान्तिं याति मदात्ययः॥४०
न चेन्मद्यक्रमं मुक्त्वा क्षीरमस्य प्रयोजयेत् ।
लङ्घनाद्यैः कफे क्षीणे जाते दौर्बल्यलाघवे ॥ ४१ ॥
ओजस्तुल्यगुणं क्षीरं विपरीतं च मद्यतः ।
क्षीरप्रयोगं मद्यं च क्रमेणाल्पाल्पमाचरेत् ॥ ४२ ॥

मदात्यये पुनर्नवादिघृतम् ।

पयःपुनर्नवाक्राथयष्टीकल्कप्रसाधितम् ।
घृतं पुष्टिकरं पानान्मद्यपानाद्धतौजसाम् ॥ ४३ ॥

कफमदात्ययेऽष्टाङ्गलवणम् ।

सौवर्चलमजाजी च वृक्षाम्लं साम्लवेतसम् ।
त्वगेलामरिचार्धांशं शर्कराभागयोजितम् ॥ ४४ ॥
एतल्लवणमष्टाङ्गमग्निसंदीपनं परम् ।
मदात्यये कफप्राये दद्यात् स्रोतोविशोधनम् ॥ ४५ ॥

मदात्यये चव्याद्यं चूर्णम् ।

चव्यं सौवर्चलं हिङ्गु पूरकं विश्वदीप्यकम् ।
चूर्णं मद्येन दातव्यं पानात्ययरुजापहम् ॥ ४६ ॥

वातमदात्यये मद्ययोगः ।

सौवर्चलव्योषयुक्तं मद्यं माक्षिकसंयुतम् ।
चुक्रदाडिमसंमिश्रं वातपानात्यये हितम् ॥ ४७ ॥

वातमदात्यये तर्पणयोगः।

तोयं मद्यं च शुक्तं च दधि मस्त्वम्लकाञ्जिकम्।
समाक्षिकस्तर्पणोऽयं वातपानात्यये हितः॥ ४८॥

कफमदात्ययचिकित्सा।

उल्लेखनोपवासाभ्यां जयेत्कफमदात्ययम्।
तृष्यते सलिलं चास्मै दद्याद्धीवेरसाधितम्॥ ४९॥

मदात्यये कर्कन्ध्वादिपानकम्।

कर्कन्धुबदराणां च प्रस्थं कुर्यात् सुकुट्टितम्।
द्विप्रस्थे गालयेत्तोये सप्तकृत्वः पुनः पुनः॥ ५०॥
अथैनं मृण्मये भाण्डे सुगुप्तं विनिधारयेत्।
द्वे च दद्याद्गुडपले शर्करायाः पलं तथा॥ ५१॥
सूक्ष्मं च मरिचात्कर्षं चतुर्थं केसरस्य च।
त्वक्पत्रधरणे द्वे च सूक्ष्मैला कर्षमेव च॥ ५२॥
मृणालादर्धकर्षं च सूक्ष्मचूर्णानि कारयेत्।
जातीवाससमायुक्तं पानकं पानविभ्रमम्॥ ५३॥
नाशयत्याशु पानेन छिन्नाभ्राणीव मारुतः।
एतच्छर्दिं तृषां दाहमतीसारं प्रवाहिकाम्॥ ५४॥
अरुचिं मूत्रकृच्छ्रं च हन्यात्पानात्ययं नृणाम्।
अहानि सप्त चाष्टौ च नृणां पानात्ययः स्मृतः।
पानं हि मज्जतेऽजीर्णमत ऊर्ध्वं विमार्गगम्॥ ५५॥

सुरासेवनविधिः।

जलप्लुतश्चन्दनभूषिताङ्गः स्रग्वी सभक्तां पिशितोपदंशाम्।
पिबेत्सुरां नैव लभेत रोगान् मनोमतिघ्नं च मदं न याति॥
लीढ्वा घृतं शर्करया समेतं निषेवते यो मदिरां प्रकामम्।
उद्दामदर्पाऽपि न तस्य सा स्यान्मदस्य हेतुः परिपीयमाना ५७

पूगमदप्रतीकारः ।

पूगान्मदं प्रशमयत्यचिरेण जन्तु-
राघ्राय शङ्खरजसः प्रबलं हि गन्धम् ।
पानेन वा शिशिरपुष्करिणीजलस्य
संसेवितैरुपहिमैर्व्यजनानिलैर्वा ॥ ५८ ॥

कोद्रवधत्तूरमदप्रतीकारः ।

कुष्माण्डरसः सगुडः शमयति मदमाशु कोद्रवजम् ।
धत्तूरजं च दुग्धं सशर्करं पानयोगेन ॥ ५९ ॥

इति वैद्यवरश्रीसोढलप्रथिते गदनिग्रहे कायचिकित्साखण्डे मदात्ययाधिकारः सप्तदशः ॥ १७ ॥

---

## अथ दाहाधिकारोऽष्टादशः ।

अथातो दाहनिदानं व्याख्यास्यामः ।

दाहसंप्राप्तिः ।

तीक्ष्णमुष्णं पिबन्मद्यं दाहं प्राप्नोति मानवः ।
दाहः सप्तविधो ज्ञेयो वैद्यशास्त्रे प्रकाशितः ॥ १ ॥
त्वचं प्राप्तः स पानोष्मा पित्तरक्ताभिमूर्च्छितः ।
दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥ २ ॥

रक्तजादिभेदेन दाहलक्षणानि ।

कृत्स्नदेहानुगं रक्तमुद्रिक्तं दहति ध्रुवम् ।
स उष्यते तृष्यते च ताम्राभस्ताम्रलोचनः ॥ ३ ॥
लोहगन्धाङ्गवदनो वह्निनेवावकीर्यते ।
पित्तज्वरसमः पित्तात्स चाप्यस्य विधिः स्मृतः ॥ ४ ॥
तृष्णानिरोधादब्धातौ क्षीणे तेजः समुद्धतम् ।
सबाह्याभ्यन्तरं देहं प्रदहेन्मन्दचेतसः ॥ ५ ॥
संशुष्कगलताल्वोष्ठो जिह्वां निष्कृष्य वेपते ।
असृजः पूर्णकोष्ठस्य दाहोऽन्यः स्यात्सुदुस्तरः ॥ ६ ॥

धातुक्षयोत्थो यो दाहस्तेन मूर्च्छातृडर्दितः ।
क्षामस्वरः क्रियाहीनः स सीदेद्भृशपीडितः ॥ ७ ॥
मर्माभिघातजोऽप्यस्ति सोऽसाध्यः सप्तमो मतः ।
सर्व एव हि वर्ज्याः स्युः शीतगात्रस्य देहिनः ॥ ८ ॥
क्षतजोऽनश्नतश्चान्यः शोचतश्चाऽप्यनेकधा ।
तेनान्तर्दह्यतेऽत्यर्थं तृष्णामूर्च्छाप्रलापवान् ॥ ९ ॥
सप्तैव दाहाः कथिता भिषग्भी रक्तेन पित्तेन च तृण्निरोधात् ।
तथाऽसृजा पूरितकोष्ठकस्य धातुक्षयान्मर्मरुजः क्षताच्च ।
सोपद्रवान् तान् प्रवदन्ति कष्टान्, शीतेषु देहेषु विवर्जनीयाः ॥

इति दाहनिदानम्

अथातो दाहचिकित्सितं व्याख्यास्यामः

दाहे कतिपययोगाः ।

शतधौतघृताभ्यक्तं दिहेद्वा यवसक्तुभिः ।
कोलामलकसंयुक्तैर्धान्याम्लैरपि बुद्धिमान् ॥ ११ ॥
छादयेत्तस्य सर्वाङ्गमारनालार्द्रवाससा ।
लामज्जेनाथ शुक्तेन चन्दनेनानुलेपयेत् ॥ १२ ॥
चन्दनाम्बुकणास्यन्दितालवृन्तोपजीवितः ।
सुप्याद्दाहार्दितोऽम्भोजकदलीदलसंस्तरे ॥ १३ ॥
परिषेकावगाहेषु व्यजनानां च सेचने ।
शस्यते शिशिरं तोयं तृष्णादाहोपशान्तये ॥ १४ ॥
क्षीरैः क्षीरिकषायैश्च सुशीतैश्चन्दनान्वितैः ।
अन्तर्दाहं प्रशमयेत्तैश्चान्यैश्च सुशीतलैः ॥ १५ ॥

दाहे कुशाद्यं तैलं घृतं च ।

कुशादिशालिपर्णीभिर्जीवकाद्यैश्च साधितम् ।
तैलं घृतं वा दाहघ्नं वातपित्तविनाशनम् ॥ १६ ॥

दाहे लेपयोगाः ।

श्लक्ष्णशुष्कघनो लेपश्चन्दनस्यापि दाहकृत् ।
पित्तज्वरहरं यच्च दाहे तत्सर्वमिष्यते ॥ १७ ॥
फलिनीरोध्रसेव्याम्बु हेमपत्रं कुटन्नटम् ।
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् ॥ १८ ॥
बदरीपल्लवोत्थश्च यश्चैवारिष्टकोद्भवः ।
फेनिलायाश्च यः फेनस्तैर्दाहे लेपनं हितम् ॥ १९ ॥

दाहे अवगाहकल्पना ।

ह्रीबेरचन्दनोशीरपद्मकक्षौद्रवारिणा ।
संपूर्णामवगाहेत द्रोणीं दाहार्दितो नरः ॥ २० ॥

इति श्रीवैद्यवरसोढलप्रथिते गदनिग्रहे कायचिकित्साखण्डे दाहाधिकारोऽष्टादशः ॥ १८ ॥

---

## अथ वातरोगाधिकार एकोनविंशतितमः ।

अथातो वातव्याधिनिदानं व्याख्यास्यामः ।

वातरोगाणां निदानं संप्राप्तिश्च ।

प्रसक्तानुप्रसक्तयाऽथ ज्वरादौ प्रतिपादिते ।
सर्वव्याधिनिदानत्वाद्वातव्याधिर्निरूप्यते ॥ १ ॥
रूक्षशीताल्पलघ्वन्नव्यवायातिप्रजागरैः ।
विषमादुपचाराच्च दोषासृक्स्रवणादति ॥ २ ॥
लङ्घनप्लवनात्यध्वव्यायामातिविचेष्टितैः ।
धातूनां संक्षयाच्चिन्ताशोकरोगातिकर्षणात् ॥ ३ ॥
वेगसंधारणादामादभिघातादभोजनात् ।
मर्माघाताद्गजोष्ट्राश्वशीघ्रयानापतंसनात् ॥ ४ ॥
देहे स्रोतांसि रिक्तानि पूरयित्वाऽनिलो बली ।
करोति विविधान् व्याधीन् सर्वाङ्गैकाङ्गसंश्रयान् ॥ ५ ॥

अव्यक्तं लक्षणं तेषां पूर्वरूपमिति स्मृतम् ।
आत्मरूपं तु यद्व्यक्तमपायो लघुता पुनः ॥ ६ ॥

कुपितवातलक्षणम्।

संकोचः पर्वणां स्तम्भो भङ्गोऽस्थ्नां पर्वणामपि ।
लोमहर्षः प्रलापश्च पाणिपृष्ठशिरोग्रहः ॥ ७ ॥
खाञ्ज्यपाङ्गुल्यकुब्जत्वं शोषोऽङ्गानामनिद्रता ।
गर्भशुक्ररजोनाशः स्पन्दनं गात्रसुप्तता ॥ ८ ॥
शिरोनासाक्षिजत्रूणां ग्रीवायाश्चापि हुण्डनम् ।
भेदस्तोदोऽर्तिराक्षेपो मोहश्चायास एव च ॥ ९ ॥
एवंविधानि रूपाणि करोति कुपितोऽनिलः ।
हेतुस्थानविशेषाच्च भवेद्रोगविशेषकृत् ॥ १० ॥

स्थानभेदेन कुपितवातलक्षणानि।

तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्चसोः ।
बध्मेहृद्रोगगुल्मार्शः पार्श्वशूलं च मारुते ॥ ११ ॥
सर्वाङ्गकुपिते वाते गात्रस्फुरणभञ्जनम् ।
वेदनाभिः परीतस्य स्फुटन्तीवास्य संधयः ॥ १२ ॥
ग्रहो विण्मूत्रवातानां शूलाध्मानाश्मशर्कराः ।
जङ्घोरुत्रिकपात्पृष्ठरोगशोषौ गुदस्थिते ॥ १३ ॥
रुक्पार्श्वोदरहृन्नाभेस्तृष्णोद्गारविषूचिकाः ।
कासः कण्ठास्यशोषश्च श्वासश्चामाशये स्थिते ॥ १४ ॥
(वायुरामाशये क्रुद्धश्छर्द्यादीन् कुरुते गदान् ।)
पक्वाशयस्थोऽन्त्रकूजं शूलाटोपौ करोति च ।
कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ॥ १५ ॥
श्रोत्रादिष्विन्द्रियवधं कुर्यात् क्रुद्धः समीरणः ।
त्वग्रूक्षा स्फुटिता सुप्ता कृशा कृष्णा च तुद्यते ॥ १६ ॥
आतन्यते सरागा च पर्वरुक् त्वग्गतेऽनिले ।
रुजस्तीव्राः ससंतापा वैवर्ण्यं कृशताऽरुचिः ॥ १७ ॥

गात्रे चाल्पेऽपि शुक्रस्य स्तम्भश्चास्थिगतेऽनिले ।
गुर्वङ्गं तुद्यतेऽत्यर्थं दण्डमुष्टिहतं यथा ॥ १८ ॥
सरुक् श्रमितमत्यर्थं मांसमेदोगतेऽनिले ।
मेदोऽस्थिपर्वणां सन्धिशूलं मांसबलक्षयः ॥ १९ ॥
अस्वप्नः संतता रुक् च मज्जास्थिकुपितेऽनिले ।
क्षिप्रं मुञ्चति बध्नाति शुक्रं गर्भमथापि वा ॥ २० ॥
विकृतिं जनयेच्चापि शुक्रस्थः कुपितोऽनिलः ।
कुर्याच्छिरागतः शूलं शिराकुञ्चनपूरणम् ॥ २१ ॥
बाह्याभ्यन्तरमायामं खल्लीं कुब्जत्वमेव वा ।
सर्वाङ्गैकाङ्गरोगांश्च कुर्यात्स्नायुगतोऽनिलः ॥ २२ ॥
हन्ति सन्धिगतः सन्धीन् शूलशोफौ करोति च ।

दोषावृतवातानां लक्षणानि ।

प्राणोदानौ समानश्च व्यानश्चापान एव च ॥ २३ ॥
स्थानस्था मारुताः पञ्च यापयन्ति शरीरिणम् ।
हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले ॥ २४ ॥
उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः ।
प्राणे पित्तावृते छर्दिर्दाहश्चैवोपजायते ॥ २५ ॥
दौर्बल्यं सदनं तन्द्रा वैरस्यं च कफावृते ।
उदाने पित्तसंयुक्ते दाहो मूर्च्छा भ्रमः क्लमः ॥ २६ ॥
अस्वेदहर्षौ मन्दोऽग्निः शीतता च कफावृते ।
स्वेददाहौष्ण्यमूर्च्छाः स्युः समाने पित्तसंयुते ॥ २७ ॥
कफेन सक्ते विण्मूत्रे गात्रहर्षश्च जायते ।
व्याने पित्तावृते दाहो गात्रविक्षेपणं क्लमः ॥ २८ ॥
स्तम्भता दण्डकश्चापि शूलशोफौ कफावृते ।
अपाने पित्तयुक्ते तु दाहौष्ण्यं मूत्ररक्तता ॥ २९ ॥

अधःकायगुरुत्वं च शीतता च कफावृते ।

आक्षेपकलक्षणम् ।

यदा तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः॥ ३० ॥
तदा क्षिपत्याशु मुहुर्मुहुर्देहं मुहुश्चरः ।
मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृतः ॥ ३१ ॥

अपतन्त्रकलक्षणम् ।

क्रुद्धः स्वैः कोपनैर्वायुः स्थानादूर्ध्वं प्रपद्यते ।
पीडयन् हृदयं गत्वा शिरःशङ्खौ च पीडयन् ॥ ३२ ॥
धनुर्वन्नमयेद्गात्राण्याक्षिपेन्मोहयेत्तथा ।
स कृच्छ्रादुच्छ्वसेचापि स्तब्धाक्षोऽथ निमीलकः ॥ ३३ ॥
कपोत इव कूजेच्च निःसंज्ञः सोऽपतन्त्रकः ।
दृष्टिं संस्तभ्य संज्ञां च हृत्वा कण्ठेन कूजति ॥ ३४ ॥
हृदि मुक्ते नरः स्वास्थ्यं याति मोहं वृते पुनः ।
वायुना दारुणं प्राहुरेके तमपतानकम् ॥ ३५ ॥

अपतानकभेदानां लक्षणानि ।

कफावृतो भृशं वायुस्तास्वेव यदि तिष्ठति ।
दण्डवत्स्तम्भयेद्देहं स तु दण्डापतानकः ॥ ३६ ॥
धनुस्तुल्यं नमेद्यस्तु स धनुःस्तम्भसंज्ञकः ।
अङ्गुलीगुल्फजठरहृद्वक्षोगलसंश्रितः ॥ ३७ ॥
स्नायुप्रतानमनिलो यदाऽऽक्षिपति वेगवान् ।
विष्टब्धाक्षस्तब्धहनुर्भग्नपार्श्वः कफं वमन् ॥ ३८ ॥
अभ्यन्तरं धनुरिव यदा नमति मानवः ।
तदाऽस्याभ्यन्तरायामं कुरुते मारुतो बली ॥ ३९ ॥
बाह्यस्नायुप्रतानस्थो बाह्यायामं करोति च ।
तमसाध्यं बुधाः प्राहुर्वक्षःकट्यूरुभञ्जनम् ॥ ४० ॥
कफपित्तान्वितो वायुर्वायुरेव च केवलः ।
कुर्यादाक्षेपकं त्वन्यं चतुर्थमभिघातजम् ॥ ४१ ॥

गर्भपातसमुत्थश्च शोणितातिस्रवाच्च यः ।
अभिघातनिमित्तश्च न सिध्यत्यपतानकः ॥ ४२ ॥

पक्षाघातलक्षणम् ।

गृहीत्वाऽर्धं तनोर्वायुः शिराः स्नायुर्विशोष्य च ।
पक्षमन्यतरं हन्ति सन्धिबन्धान् विमोक्षयन् ॥ ४३ ॥
कृत्स्नोऽर्धकायस्तस्य स्यादकर्मण्यो विचेतनः ।
एकाङ्गरोगं तं केचिदन्ये पक्षवधं विदुः ॥ ४४ ॥
सर्वाङ्गरोगस्तद्वच्च सर्वकायाश्रितेऽनिले ।
दाहसंतापमूर्च्छाः स्युर्वायौ पित्तसमन्विते ॥ ४५ ॥
शैत्यशोफगुरुत्वानि तस्मिन्नेव कफान्विते ।
शुद्धवातहतं पक्षं कृच्छ्रसाध्यतमं विदुः ॥ ४६ ॥
साध्यमन्येन संयुक्तमसाध्यं क्षयहेतुकम् ।

अर्दितलक्षणम् ।

उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि वा ॥ ४७ ॥
हसतो जृम्भतो भाराद्विषमाच्छयनादपि ।
शिरोनासौष्ठचिबुकललाटेक्षणसन्धिगः ॥ ४८ ॥
अर्दयत्यनिलो वक्त्रमर्दितं जनयत्यतः ।
वक्रीभवति वक्त्रार्धं ग्रीवा चाप्यपवर्तते ॥ ४९ ॥
शिरश्चलति वाक्सङ्गो नेत्रादीनां च वैकृतम् ।
ग्रीवाचिबुकदन्तानां तस्मिन् पार्श्वे च वेदना ॥ ५० ॥
यस्याग्रजो रोमहर्षो वेपथुर्नेत्रमाविलम् ।
वायुरूर्ध्वं त्वचि स्वापस्तोदो मन्याहनुग्रहः ॥ ५१ ॥
तमर्दितमिति प्राहुर्व्याधिं व्याधिविचक्षणाः ।
वातात्पित्तात्कफाच्चैव त्रिविधः स्यात्समासतः ॥ ५२ ॥
लालातिप्रस्रवः कम्पः स्फुरणं हनुसंग्रहः ।
ओष्ठयोः श्वयथुः शूलमर्दिते वातजे भवेत् ॥ ५३ ॥

पीतमङ्गं ज्वरस्तृष्णा पित्तजे मोहधूपने।
गण्डे शिरसि मन्यायां शोफः स्तम्भः कफात्मजे॥ ५४॥
भाविनो लक्षणं तस्य वेपथुर्नेत्रमाविलम्।
क्षीणस्यानिमिषाक्षस्य प्रसक्ताव्यक्तभाषिणः॥ ५५॥
न सिध्यत्यर्दितं गाढं त्रिवर्षं वेपनस्य च।
गते वेगे भवेत्स्वास्थ्यं सर्वेष्वाक्षेपकादिषु॥ ५६॥

हनुग्रहलक्षणम्।

जिह्वानिर्लेखनाच्छुष्कभक्षणादभिघाततः।
कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनुम्॥ ५७॥
करोति विवृतास्यत्वमथवा संवृतास्यताम्।
हनुग्रहः स तेन स्यात्कृच्छ्राच्चर्वणभाषणम्॥ ५८॥

मन्यास्तम्भलक्षणम्।

दिवास्वप्नासमस्थानविवृतोर्ध्वनिरीक्षणैः।
मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणावृतः॥ ५९॥

जिह्वास्तम्भलक्षणम्।

वाग्वाहिनीशिरासंस्थो जिह्वां स्तम्भयतेऽनिलः।
जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता॥ ६०॥

शिराग्रहलक्षणम्।

रक्तमाश्रित्य पवनः कुर्यान्मूर्धधराः शिराः।
रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्याच्छिराग्रहः॥६१॥

गृध्रसीलक्षणम्।

स्फिक्पूर्वा कटिपृष्ठोरुजानुजङ्घापदं क्रमात्।
गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः॥ ६२॥
वाताद्वातकफात्तन्द्रागौरवारोचकान्विता।
वातजायां भवेत्तोदो देहस्यापि प्रवक्रता॥ ६३॥
जानुकट्यूरुसन्धीनां स्फुरणं स्तब्धता भृशम्।
वातश्लेष्मोद्भवायां तु स्तैमित्यं वह्निमार्दवम्॥ ६४॥

गर्भपातसमुत्थश्च शोणितातिस्रवाच्च यः।
अभिघातनिमित्तश्च न सिध्यत्यपतानकः ॥ ४२ ॥

पक्षाघातलक्षणम्।

गृहीत्वाऽर्धं तनोर्वायुः शिराः स्नायुर्विशोष्य च।
पक्षमन्यतरं हन्ति सन्धिबन्धान् विमोक्षयन् ॥ ४३ ॥
कृत्स्नोऽर्धकायस्तस्य स्यादकर्मण्यो विचेतनः।
एकाङ्गरोगं तं केचिदन्ये पक्षवधं विदुः ॥ ४४ ॥
सर्वाङ्गरोगस्तद्वच्च सर्वकायाश्रितेऽनिले।
दाहसंतापमूर्च्छाः स्युर्वायौ पित्तसमन्विते ॥ ४५ ॥
शैत्यशोफगुरुत्वानि तस्मिन्नेव कफान्विते।
शुद्धवातहतं पक्षं कृच्छ्रसाध्यतमं विदुः ॥ ४६ ॥
साध्यमन्येन संयुक्तमसाध्यं क्षयहेतुकम्।

अर्दितलक्षणम्।

उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि वा ॥ ४७ ॥
हसतो जृम्भतो भाराद्विषमाच्छयनादपि।
शिरोनासौष्ठचिबुकललाटेक्षणसन्धिगः ॥ ४८ ॥
अर्दयत्यनिलो वक्त्रमर्दितं जनयत्यतः।
वक्रीभवति वक्त्रार्धं ग्रीवा चाप्यपवर्तते ॥ ४९ ॥
शिरश्चलति वाक्सङ्गो नेत्रादीनां च वैकृतम्।
ग्रीवाचिबुकदन्तानां तस्मिन् पार्श्वे च वेदना ॥ ५० ॥
यस्याग्रजो रोमहर्षो वेपथुर्नेत्रमाविलम्।
वायुरूर्ध्वं त्वचि स्वापस्तोदो मन्याहनुग्रहः ॥ ५१ ॥
तमर्दितमिति प्राहुर्व्याधिं व्याधिविचक्षणाः।
वातात्पित्तात्कफाच्चैव त्रिविधः स्यात्समासतः ॥ ५२ ॥
लालातिप्रस्रवः कम्पः स्फुरणं हनुसंग्रहः।
ओष्ठयोः श्वयथुः शूलमर्दिते वातजे भवेत् ॥ ५३ ॥

पीतमङ्गं ज्वरस्तृष्णा पित्तजे मोहधूपने ।
गण्डे शिरसि मन्यायां शोफः स्तम्भः कफात्मजे ॥ ५४ ॥
भाविनो लक्षणं तस्य वेपथुर्नेत्रमाविलम् ।
क्षीणस्यानिमिषाक्षस्य प्रसक्ताव्यक्तभाषिणः ॥ ५५ ॥
न सिध्यत्यर्दितं गाढं त्रिवर्षं वेपनस्य च ।
गते वेगे भवेत्स्वास्थ्यं सर्वेष्वाक्षेपकादिषु ॥ ५६ ॥

हनुग्रहलक्षणम् ।

जिह्वानिर्लेखनाच्छुष्कभक्षणादभिघाततः ।
कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनुम् ॥ ५७ ॥
करोति विवृतास्यत्वमथवा संवृतास्यताम् ।
हनुग्रहः स तेन स्यात्कृच्छ्राच्चर्वणभाषणम् ॥ ५८ ॥

मन्यास्तम्भलक्षणम् ।

दिवास्वप्नासमस्थानविवृतोर्ध्वनिरीक्षणैः ।
मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणावृतः ॥ ५९ ॥

जिह्वास्तम्भलक्षणम् ।

वाग्वाहिनीशिरासंस्थो जिह्वां स्तम्भयतेऽनिलः ।
जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता ॥ ६० ॥

शिराग्रहलक्षणम् ।

रक्तमाश्रित्य पवनः कुर्यान्मूर्धधराः शिराः ।
रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्याच्छिराग्रहः ॥ ६१ ॥

गृध्रसीलक्षणम् ।

स्फिक्पूर्वा कटिपृष्ठोरुजानुजङ्घापदं क्रमात् ।
गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः ॥ ६२ ॥
वाताद्वातकफात्तन्द्रागौरवारोचकान्विता ।
वातजायां भवेत्तोदो देहस्यापि प्रवक्रता ॥ ६३ ॥
जानुकट्यूरुसन्धीनां स्फुरणं स्तब्धता भृशम् ।
वातश्लेष्मोद्भवायां तु स्तैमित्यं वह्निमार्दवम् ॥ ६४ ॥

तन्द्रा मुखप्रसेकश्च भक्तद्वेषस्तथैव च।

विश्वाचीलक्षणम्।

तलं प्रत्यङ्गुलीनां या कण्डरा बाहुपृष्ठतः॥ ६५॥
बाह्वोः कर्मक्षयकरी विश्वाचीति हि सोच्यते।

क्रोष्टुकशीर्षलक्षणम्।

वातशोणितजः शोफो जानुमध्ये महारुजः॥ ६६॥
ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलः क्रोष्टुकशीर्षवत्।

खञ्जपङ्गुलक्षणम्।

वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदा॥ ६७॥
खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात्।
प्रक्रामन् वेपते यस्तु खञ्जन्निव च गच्छति॥ ६८॥
कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम्।

वातकण्टकलक्षणम्।

रुक् पादे विषमे न्यस्ते श्रमाद्वा जायते यदा॥ ६९॥
वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम्।

पाददाहलक्षणम्।

पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः॥ ७०॥
विशेषतश्चङ्क्रमतः पाददाहं तमादिशेत्।

पादहर्षलक्षणम्।

हृष्येते चरणौ यस्य भवेतां च प्रसुप्तकौ॥ ७१॥
पादहर्षः स विज्ञेयः कफवातप्रकोपजः।

अवबाहुकलक्षणम्।

असंदेशस्थितो वायुः शोषयत्वांसबन्धनम्॥ ७२॥
शिराश्चाकुञ्च्य तत्रस्थो जनयत्यवबाहुकम्।

मूकादिलक्षणम्।

आवृत्य वायुः सकफो धमनीः शब्दवाहिनीः॥ ७३॥
नरान् करोत्यक्रियकान्मूकमिन्मिणगद्गदान्।

तूनीलक्षणम्।

अधो या वेदना याति वर्चोमूत्राशयोत्थिता॥ ७४॥

भिन्दतीव गुदोपस्थं सा तूनी नाम नामतः।
गुदोपस्थोत्थिता सैव प्रतिलोमं प्रधाविता।
वेगैः पक्काशयं याति प्रतितूनीति सोच्यते॥ ७५॥

आध्मानलक्षणम्।

साटोपमत्युग्ररुजमाध्मातमुदरं भृशम्।
आध्मानमिति जानीयाद्धोरं वातनिरोधजम्॥ ७६॥
विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम्।
प्रत्याध्मानं विजानीयात्कफव्याकुलितानिलम्॥ ७७॥

वाताष्ठीलालक्षणम्।

नाभेरधस्तात्संजातः संचारि यदि वाऽचलः।
अष्ठीलावद्घनो ग्रन्थिरूर्ध्वमायत उन्नतः॥ ७८॥
वाताष्ठीलां विजानीयात्कफव्याकुलितानिलाम्।
एतामेव रुजोपेतां वातविण्मूत्ररोधिनीम्॥ ७९॥
प्रत्यष्ठीलामिति वदेज्जठरे तिर्यगुत्थिताम्।
मारुतेऽविगुणे वस्तौ मूत्रं सम्यक् प्रवर्तते॥ ८०॥
विकारा विविधाश्चापि प्रतिलोमे भवन्ति हि।

वेपथुलक्षणम्।

सर्वाङ्गकम्पः शिरसो वायुर्वेपथुसंज्ञितः॥ ८१॥

खल्लीवातलक्षणम्।

खल्ली तु पादजङ्घोरुकरमूलावमोटनी।

अनुक्तवातरोगसंग्रहः।

स्थाननामानुरूपैस्तु लिङ्गैः शेषान् विनिर्दिशेत्॥ ८२॥
सर्वेष्वेतेषु संसर्गं पित्ताद्यैरुपलक्षयेत्।

वातरोगाणां साध्यासाध्यविचारः।

हनुस्तम्भार्दिताक्षेपपक्षाघातापतानकाः॥ ८३॥
कालेन महताऽऽढ्यानां यत्नात्सिध्यन्ति वा न वा।
नवान् बलवतस्त्वेतान् साधयेन्निरुपद्रवान्॥ ८४॥

विसर्पदाहरुक्सङ्गमूर्च्छारुच्यग्निमार्दवैः ।
क्षीणमांसबलं वाता घ्नन्ति पक्षवधादयः ॥ ८५ ॥
शूनं सुप्तत्वचं भग्नं कम्पाध्माननिपीडितम् ।
रुजार्तिमन्तं च नरं वातव्याधिर्विनाशयेत् ॥ ८६ ॥

प्रकृतिस्थवातकार्यम् ।

अव्याहतगतिर्यस्य स्थानस्थः प्रकृतौ स्थितः ।
वायुः स्यात्सोऽधिकं जीवेद्वीतरोगः समाः शतम् ॥ ८७ ॥
स्वतन्त्रात्मा देवः प्रथमभयमेकस्त्रिभुवने
ततो भेदैः पञ्च स्फुटमविकृतास्ते सुखकराः ।
ततः श्लेष्मा पित्तं रुधिरमिति सङ्गाद्बहुविधान्
विकारानारभ्य व्यथयति जनान् मारयति च ॥ ८८ ॥

इति वातव्याधिनिदानम् ।

---

अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः ।

वातरोगे सामान्यचिकित्सा ।

अभ्यङ्गः स्वेदनं बस्तिर्नस्यं स्नेहविरेचनम् ।
स्निग्धाम्ललवणस्वादुवृष्यं वातामयापहम् ॥ ८९ ॥
पटोलफलकैर्यूषो दृष्यो वातहरो लघुः ।
वाट्यालकक्कृतो यूषः परं वातविनाशनः ॥ ९० ॥
पञ्चमूलीबलासिद्धं क्षीरं वातामये हितम् ।
शीतोष्णस्निग्धरूक्षाद्यैर्वातजो यो न शाम्यति ॥ ९१ ॥
विकारस्तत्र विज्ञेयं दुष्टमेवात्रशोणितम् ।
वाजिगन्धा बलास्तिस्रो दशमूली महौषधम् ।
द्वे गृध्रनख्यौ रास्ना च गणो मारुतनाशनः ॥ ९२ ॥

वातरोगे उपनाहस्वेदविधानम् ।

आनूपमत्स्यामिषवेषवारैरुष्णैः प्रदेहः पवनापहः स्यात् ।
स्नेहैश्चतुर्भिर्दशमूलमिश्रैर्गन्धौषधैश्चानिलहा प्रदेहः ॥९३॥

निरस्थिपिशितं पिष्टं स्विन्नं गुडघृतान्वितम्।
कृष्णामरीचसंयुक्तं वेपवार इति स्मृतः॥ ९४॥
काकोल्यादिः सवातघ्नः सर्वाम्लद्रव्यसंयुतः।
सानूपौदकमांसस्तु सर्वस्नेहसमन्वितः॥ ९५॥
सुखोष्णः स्पष्टलवणः साल्वणः परिकीर्तितः॥ ९६॥
तेनोपनाहं कुर्वीत सर्वदा वातरोगिणः।
काकोल्यादिर्गणो ग्राह्यो नाष्टवर्गकसंज्ञकः।
वातघ्नो भद्रदार्वादिर्वर्गोऽम्लो दाडिमादिकः॥ ९७॥
सर्वस्नेहाश्चतुःस्नेहा लवणं सैन्धवादिकम्।
अम्लादिभिश्च संस्कार्यं काकोल्यादित्रयं त्रिभिः॥ ९८॥

पङ्गुधरणयोगः।

आमाशयगते वाते छर्दिताय यथाबलम्।
देयः पङ्गुधरणो योगः सप्तरात्रं सुखाम्बुना॥ ९९॥
चित्रकेन्द्रयवाः पाठाकटुकातिविषाभयाः।
वातव्याधिप्रशमनो योगः पङ्गुधरणः स्मृतः॥ १००॥

सर्ववातरोगे रास्नादिक्वाथः।

रास्ना गुडूची देवाह्वमेरण्डमभया शठी।
बला चारग्वधः शुण्ठी शतपुष्पा पुनर्नवा॥ १०१॥
पञ्चमूली विषा मुण्डी सैरेयकदुरालभे।
यवानी पौष्करं मूलं वाजिगन्धा प्रसारणी॥ १०२॥
गोक्षुरश्चाटरूपश्च हपुषा वृद्धदारुकम्।
शतावरी समङ्गा च गुग्गुलुर्गैरिजं तथा॥ १०३॥
समभागैरिमैः सर्वैः कषायमुपकल्पयेत्।
पिबेत्सर्वाङ्गगे वाते सामे सन्ध्यस्थिमज्जगे॥ १०४॥
वातरोगेषु सर्वेषु कम्पे शोफेऽपतानके।
मन्यास्तम्भे च हृद्रोगे पक्षाघातेऽपतन्त्रके॥ १०५॥

अर्दितोक्षेपके कुब्जे हनुग्रहशिरोग्रहे ।
गृध्रस्यां जानुरोगे च गुल्मे शूले कटिग्रहे ॥ १०६ ॥
सामे चैव निरामे च सप्तधातुगतेऽनिले ।
आवृतेऽनावृते चैव वातरक्ते विशेषतः ।
एष द्वात्रिंशकः क्वाथः कृष्णात्रेयेण पूजितः ॥ १०७ ॥

धातुगतवातचिकित्सा ।

अभ्यञ्जनपरिषेकप्रलेपनैर्मर्दनोपनाहैश्च ।
त्वग्गतमनिलं हन्याद्धितैर्विहारान्नपानैश्च ॥ १०८ ॥
लङ्घनपाचनयोगैराहारैः स्नेहस्वेदनलघूष्णैः ।
रूक्षोष्णशोधनैरपि रसगतमनिलं जयेत् क्रमशः ॥ १०९ ॥
पक्वाशयगते वाते हितं स्नेहविरेचनम् ॥ ११० ॥
बस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः ।
कार्यो बस्तिगते चापि विधिर्बस्तिविशोधनः ॥ १११ ॥
श्रोत्रादिकुपिते वाते कार्यश्चानिलहा क्रमः ।
स्नेहाभ्यङ्गोपनाहांश्च मर्दनालेपनानि च ॥ ११२ ॥
त्वङ्मांसासृक्शिराप्राप्ते कुर्याच्चासृग्विमोक्षणम् ।
स्वेदोपनाहाग्निकर्म बन्धनोन्मर्दनानि च ॥ ११३ ॥
स्नायुसंध्यस्थिसंप्राप्ते कुर्याद्वाते विचक्षणः ।
निगूढेऽस्थिगते वायौ पाणिमन्थेन दारिते ॥ ११४ ॥
नाडीं दत्त्वाऽस्थनि भिषक् चूषयेत्पवनं बली ।
शुक्रप्राप्तेऽनिले कार्यं शुक्रदोषचिकित्सितम् ॥ ११५ ॥
वक्षस्त्रिकस्कन्धगतं वायुं मन्यागतं तथा ।
वमनं हन्ति नस्यं च कुशलेन प्रयोजितम् ॥ ११६ ॥

पक्षवधादौ माषबलादिकाथः ।

माषबलाशुकशिम्बीकत्तृणरास्नाश्वगन्धोरुबूकाणाम् ।
क्वाथो नस्यनिपीतो रामठलवणान्वितः कोष्णः ॥ ११७ ॥

अपहरति पक्षवातं मन्यास्तम्भं सकर्णनादरुजम्।
दुर्जयमर्दितवातं सप्ताहाज्जयति चावश्यम्॥ ११८॥

पक्षाघाते लघुमाषादिक्वाथः।

माषात्मगुप्तकैरण्डवाट्यालकशृतं पिबेत्।
हिङ्गुसैन्धवसंयुक्तं पक्षाघातनिवारणम्॥ ११९॥

अर्दितादिवातरोगे लघुलशुनपिण्डः।

पलमर्धपलं वापि रसोनस्य सुकुट्टितम्।
हिङ्गुजीरकसिन्धूत्थैः सौवर्चलकटुत्रयैः॥ १२०॥
चूर्णितैर्माषकोन्मानैरवचूर्ण्य विमर्दितम्।
यथाग्निभक्षितं प्रातः रुबुक्वाथानुपानतः॥ १२१॥
दिने दिने प्रयोक्तव्यं मासमेकं निरन्तरम्
वातरोगान्निहन्त्याशु अर्दितं चापतन्त्रकम्॥ १२२॥
एकाङ्गरोगिणे चैव तथा सर्वाङ्गरोगिणे।
ऊरुस्तम्भे च गृध्रस्यां कृमिदोषे विशेषतः॥ १२३॥
कटिपृष्ठामयं हन्याज्जठरं च विशेषतः।
माषपिष्टकृतिं जग्ध्वा नवनीतेन सोऽर्दिती।
क्षीरमांसरसैर्भुक्त्वा दशमूलीशृतं पिबेत्॥ १२४॥
स्नेहाभ्यङ्गशिरोधूमबस्तिनस्यपरायणः।
अर्दितं स जयेत्सर्पिः पिबेदुत्तरभक्तकम्॥ १२५॥

अववाहुकप्रतीकारः।

मूलं बलायास्त्वथ पारिभद्रात्तथाऽऽत्मगुप्तास्वरसं पिबेद्वा।
नस्यं तु यो माषरसेन दद्यान्मासादसौ वज्रसमानबाहुः १२६

मन्यास्तम्भप्रतीकारः।

पञ्चमूलीकृतः क्वाथो दशमूलीकृतोऽथवा।
रूक्षः स्वेदस्तथा नस्यं मन्यास्तम्भे प्रशस्यते॥ १२७॥

बाहुशोषचिकित्सा।

बाहुशोषे पिबेद्भुक्त्वा सर्पिः कल्याणकं महत्।

**कुब्जवातलक्षणं चिकित्सा च ।**

हृदयं यदि पृष्ठं वा उन्नतं क्रमशः सरुक् ॥ १२८ ॥
क्रुद्धो वायुर्यदा कुर्यात्तदा तं कुब्जमादिशेत् ।
वातघ्नैर्दशमूलाद्यैश्च नवं कुब्जमुपाचरेत् ॥ १२९ ॥
स्नेहमांसरसैर्वापि, प्रवृद्धं तं विवर्जयेत् ।

**तूनीप्रतितूनीचिकित्सा ।**

पिप्पल्यादिरजस्तूनीप्रतितून्योः सुखाम्बुना ॥ १३०
पिबेद्वा स्नेहलवणं सघृतं क्षारहिङ्गु वा ।

**आध्मानप्रत्याध्मानचिकित्सा ।**

आध्माने लङ्घनं पाणितापश्च फलवर्तयः ॥ १३१ ॥
दीपनं पाचनं चैव वस्तिश्चाप्यत्र शोधनः ।
प्रत्याध्माने तु वमनं लङ्घनं दीपनं तथा ॥ १३२

**अष्ठीलाचिकित्सा ।**

प्रत्यष्ठीलाष्ठीलिकयोरन्तर्विद्रधिवत्क्रिया ।
चूर्णं हिङ्ग्वादिकं चात्र शस्यते च विशेषतः ॥ १३३

**विविधवातरोगप्रतीकारः**

विश्वाच्यां खञ्जपङ्ग्वोश्च दाहे हर्षे च पादयोः ।
क्रोष्टुशीर्षविकारे च विकारे वातकण्टके ॥ १३४ ॥
शिरां यथोक्तां[1] निर्विध्य चिकित्सा वातरोगजित् ।
जिह्वास्तम्भे क्रिया श्रेष्ठा सामान्योक्ता तथाऽर्दिते ॥१३
शिराग्रहे तु कर्तव्या शिरामारुतवत्क्रिया ।

**गृध्रस्यादिवातरोगे कल्याणको लेहः ।**

सहरिद्रा वचा कुष्ठं पिप्पली विश्वभेषजम् ॥ १३६ ॥
अजाजी चाजमोदा च यष्टीमधुकसैन्धवम् ।
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥ १३७ ।
तच्चूर्णं सर्पिषाऽऽलोड्य प्रत्यहं भक्षयेन्नरः ।

---

१ सुश्रुतसंहितायां शारीरस्थाने शिराव्यधविध्यध्यायोक्तानि द्रष्टव्यानि ।

एकविंशतिरात्रेण भवेच्छ्रुतधरः पुमान् ॥ १३८ ॥
मेघदुन्दुभिनिर्घोषो मत्तकोकिलनिःस्वनः।
जाड्यं गद्गदमूकत्वं लेहः कल्याणको जयेत् ॥ १३९ ॥

क्रोष्टुकशीर्षचिकित्सा।

गुग्गुलुं क्रोष्टुशीर्षे च गुडूचीत्रिफलाम्भसा।
क्षीरेणैरण्डतैलं वा पिबेद्वा वृद्धदारुकम् ॥ १४० ॥
श्यामासमालम्बुपाद्यं कार्यं वा वातरक्तवत्।
हृते रक्तेऽनिलहरो विधिः कृत्स्नः प्रशस्यते ॥ १४१ ॥

गृध्रस्यादौ दशमूलादियोगः।

दशमूली बला रास्ना गुडूची विश्वभेषजम्।
पिबेदेरण्डतैलेन गृध्रसीखञ्जपङ्गुषु ॥ १४२ ॥

कटिशूलगृध्रस्योरेरण्डबीजपायसः।

संशोध्यैरण्डबीजानि पिष्ट्वा क्षीरे विपाचयेत्।
पायसः स कटीशूले गृध्रस्यां परमौषधम् ॥ १४३ ॥

गृध्रस्यादौ पञ्चमूलीयोगः।

पञ्चमूलीकषायं तु रुबुतैलत्रिवृद्युतम्।
त्रिवृतैवाथवा युक्तं गृध्रसीगुल्मशूलनुत् ॥ १४४ ॥
तैलं घृतं चार्द्रकमातुलुङ्गीरसं सचुक्रं सगुडं पिबेद्वा।
कट्यूरुपृष्ठत्रिकगुल्मशूलगृध्रस्युदावर्तहरः प्रदिष्टः ॥१४५॥

गृध्रस्यां रास्नागुग्गुलुः।

रास्नायास्तु पलं चैकं कर्षान् पञ्च च गुग्गुलोः।
सर्पिषा वटकान् कृत्वा खादेद्वा गृध्रसीहरान् ॥ १४६ ॥

कटीशूलगृध्रस्योः शुण्ठ्यादिः पायसः।

शुण्ठीगन्धर्वबीजाभ्यां पिष्टाभ्यां पायसः कृतः।
भक्षितस्तु कटीशूलं गृध्रसीं हन्त्यसंशयम् ॥ १४७ ॥

गृध्रसीचिकित्सा।

गृध्रसार्तं नरं सम्यग्यावकाद्यैर्विशोधितम्।

ज्ञात्वा निरामं दीप्ताग्निं वस्तिभिः समुपाचरेत् ॥ १४८ ॥
नादौ वस्तिविधिं कुर्याद्यावदूर्ध्वं न शुध्यति।
स्नेहो निरर्थकस्तत्र भस्मन्येवाहुतिर्यथा ॥ १४९ ॥
गृध्रस्यार्तस्य जङ्घायां स्नेहस्वेदे कृते भृशम्।
पद्भ्यामुद्वर्तितायां च सूक्ष्ममार्गेण गृध्रसीम् ॥ १५० ॥
अवतार्याङ्गुलैः सम्यक्कनिष्ठायां शनैः शनैः।
ज्ञात्वा समुन्नतं ग्रन्थिं कण्डरायां व्यवस्थितम् ॥ १५१ ॥
तं शस्त्रेण विदार्याशु प्रवालाङ्कुरसन्निभम्।
समुद्धृत्याग्निना दग्ध्वा लिम्पेद्यष्ट्यम्बुचन्दनैः ॥ १५२ ॥
विध्येच्छिरामिन्द्रवस्तेरधस्ताच्चतुरङ्गुले।
यदि नोपशमं गच्छेद्दहेत्पादकनिष्ठिकाम् ॥ १५३ ॥
तैलमेरण्डजं वापि गोमूत्रेण पिबेन्नरः।
मासमेकं प्रयोगोऽयं गृध्रस्यूरुग्रहापहः ॥ १५४ ॥

वातकण्टकचिकित्सा।

रक्तावसेचनं कुर्यादभीक्ष्णं वातकण्टके।
पिबेदेरण्डतैलं वा दहेत्सूचिभिरेव वा ॥ १५५ ॥

कटिशूले एरण्डतैलयोगः।

दशमूलीकषायेण पिबेद्वा नागराम्भसा।
कटिशूलेषु सर्वेषु तैलमेरण्डसंभवम् ॥ १५६ ॥

सन्ध्यादिगतवाते गुग्गुलुवटकः।

पृथक्पलांशा त्रिफला पिप्पली च विचूर्णितम्।
दशमूलाम्बुना भाव्यं त्वगेलार्धपलान्वितम् ॥ १५७ ॥
दत्त्वा पलानि पञ्चैव गुग्गुलोर्वटकीकृतः।
एष मांसरसाभ्यासाद्वातरोगानशेषतः ॥ १५८ ॥
हन्ति संध्यस्थिमज्जस्थान् वृक्षमिन्द्राशनिर्यथा।
लेहवद्द्विगुणेनायमालोड्यालोड्य चातपे ॥ १५९ ॥

१ 'पार्ष्णिं प्रति जङ्घयामिन्द्रवस्तिर्नाम' इति सुश्रुतोक्तमर्मविशेषः।

दशमूलाम्बुना शोष्यः सप्तवारांस्तु गुग्गुलुः।

कटिग्रहलक्षणम्।

वायुः कट्याश्रितः शुद्धः सामो वा जनयेद्रुजम्।
कटिग्रहः स विज्ञेयः पङ्गुः सक्थिद्वयाश्रितः॥ १६०॥

कटिग्रहादौ त्रयोदशाङ्गो गुग्गुलुः।

आभाश्वगन्धाहपुषागुडूचीशतावरीगोक्षुरकं च रास्ना।
श्यामा शठी घोषवती यवानी सनागरा चेति समैश्च चूर्णम्॥
तुल्यो भवेत्कौशिक अत्र मध्ये देयं तथा सर्पिरथार्धभागम्।
अर्धाक्षमात्रं तु ततः प्रयोज्यं कृत्वानुपानं सुरयाऽथ यूषैः १६२
मद्येन वा कोष्णजलेन वाऽथ क्षीरेण वा मांसरसेन वाऽपि।
कटिग्रहे गृध्रसिबाहुपृष्ठहनुग्रहे जानुनि पादयुग्मे॥ १६३॥
रोगाञ्जयेद्वातकफानुविद्धान्वातेरितान् हृद्ग्रहयोनिदोषान्।
भग्नास्थिविद्धेषु च खञ्जवाते त्रयोदशाङ्गं प्रवदन्ति सिद्धाः १६४

वातरोगे अश्वगन्धाघृतम्।

अश्वगन्धाकषायेण कल्कैः क्षीरचतुर्गुणम्।
घृतं पक्वं तु वातघ्नं वृष्यं मांसविवर्धनम्॥ १६५॥

सर्ववातरोगे बलाशैरेययोस्तैलम्।

बलानिःक्वाथकल्काभ्यां तैलं पक्वं पयोन्वितम्।
सर्ववातविकारघ्नमेवं शैरेयसाधितम्॥ १६६॥

सर्ववातरोगे नारायणं तैलम्।

बिल्वोऽग्निमन्थः श्योनाकः पाटला पारिभद्रकः।
प्रसारण्यश्वगन्धा च बृहती कण्टकारिका॥ १६७॥
बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा।
एषां दशपलान् भागान् चतुर्द्रोणेऽम्भसः पचेत्॥१६८॥
पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत्।
शतपुष्पा देवदारु मांसी शैलेयकं वचा॥ १६९॥
चन्दनं तगरं कुष्ठमेला पर्णीचतुष्टयम्।

रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवम् ॥ १७० ॥
एषां द्विपलिकान् भागान् पेषयित्वा विनिःक्षिपेत् ।
शतावरीरसं चैव तैलतुल्यं प्रदापयेत् ॥ १७१ ॥
आजं वा यदि वा गव्यं क्षीरं दद्याच्चतुर्गुणम् ।
पाने बस्तौ तथाऽभ्यङ्गे भोज्ये चैव प्रशस्यते ॥ १७२ ॥
अश्वो वा वातसंभग्नो गजो वा यदि वा नरः ।
पङ्गुलः पीठसर्पी च तैलेनानेन सिध्यति ॥ १७३ ॥
अधोभागे च ये वाता शिरामध्यगताश्च ये ।
ग्रीवास्तम्भे हनुस्तम्भे दन्तरोगे गलग्रहे ॥ १७४ ॥
यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला ।
क्षीणेन्द्रिया नष्टशुक्रा ज्वरक्षीणाश्च ये नराः ॥ १७५ ॥
बधिरा लुप्तजिह्वाश्च मन्दमेधस एव च ।
अल्पप्रजा च या नारी या च गर्भं न विन्दति ॥ १७६ ॥
वातार्तौ वृषणौ येषामन्त्रवृद्धिश्च दारुणा ।
एतत्तैलवरं तेषां नाम्ना नारायणं स्मृतम् ॥ १७७ ॥

वातरोगे वाजिगन्धाद्यं तैलम् ।

वाजिगन्धाबलाविश्वदशमूल्यम्बुकल्कितम् ।
गृध्रस्यां तैलमेरण्डं पाने बस्तिषु शस्यते ॥ १७८ ॥

वातरोगे माषतैलम् ।

तैलं संकुचितेऽभ्यङ्गो माषसैन्धवसाधितम् ।
बाहुशीर्षगदे नस्यं पानं चोत्तरभक्तकम् ॥ १७९ ॥

पक्षाघाते द्वितीयं माषतैलम् ।

माषात्मगुप्तातिबलोरुबूकरास्नाशताह्वालवणैः सुपिष्टैः ।
चतुर्गुणे माषबलाकषाये तैलं शृतं हन्ति हि पक्षघातम् ॥१८०॥

अस्थिगतवाते केतकीमूलाद्यं तैलम् ।

केतकिमूलबलातिबलानां यद्धलेन रसेन विपक्वम् ।
तैलमनल्पतुषोदकसिद्धं मारुतमस्थिगतं च निहन्ति ॥१८१॥

वातरोगे रसोनतैलम्।

रसोनकल्कस्वरसेन पक्वं तैलं पिबेद्यस्त्वनिलामयार्तः।
तस्याशु नश्यन्ति च वातरोगा ग्रन्था विशाला इव दुर्गृहीताः॥

वातरोगे सामान्यचिकित्सा।

सर्पिस्तैलं वसा मज्जा पानाभ्यञ्जनबस्तयः।
स्वेदाः स्निग्धा निवातं च स्थानं प्रावरणानि च॥ १८३॥
रसाः पयांसि भोज्यानि स्वाद्वम्ललवणानि च।
बृंहणं यच्च तत्सर्वं प्रशस्तं वातरोगिणाम्॥ १८४॥
शतपुष्पादेवदारुनागरैरण्डसैन्धवैः।
अम्लपिष्टैः समैः कोष्णैर्लेपो वातार्तिनाशनः॥ १८५॥
क्षुद्यमानं रुजार्तं वा गात्रं स्तब्धमथापि वा।
गाढपट्टैर्निबध्नीयात्क्षौमकार्पासिकौर्णिकैः॥ १८६॥

वातरोगे कोलादिप्रदेहः।

कोलं कुलत्थाः सुरदारु रास्ना माषातसीतैलफलानि कुष्ठम्।
वचा शताह्वा यवचूर्णमम्लमुष्णानि वातामयिनां प्रदेहः॥१८७

अपतन्त्रके सौवर्चलादियोगः।

सौवर्चलं दाडिमं च तथा हिङ्ग्वम्लवेतसौ।
महौषधं च पीतानि नाशयन्त्यपतन्त्रकम्॥ १८८॥

अपतन्त्रके हिङ्ग्वादियोगः।

हिङ्गु पुष्करमूलं च तुम्बरूणि हरीतकी।
यवक्वाथोदकेनैतद्दातव्यं लवणैस्त्रिभिः॥ १८९॥
हृद्रोगं पार्श्वशूलं च प्रवृद्धं चापतन्त्रकम्।
योगोऽयं नाशयत्याशु शूलं गुल्मं च वातिकम्॥ १९०॥

अपतन्त्रके पिप्पल्यादिनस्यम्।

पिप्पल्योऽथ विडङ्गानि शिग्रूणि मरिचानि च।
एतानि सूक्ष्मपिष्टानि कुर्याच्छीर्षविरेचनम्॥ १९१॥

अपतन्त्रे वल्लभकं घृतम् ।

शतार्धमभयानां च सौवर्चलपलद्वयम् ।
पचेत्कल्कैर्घृतप्रस्थं दत्त्वा क्षीरं चतुर्गुणम् ।
घृतं वल्लभकं नाम श्रेष्ठं स्यादपतन्त्रके ॥ १९२ ॥

ऊरुस्तम्भे भल्लातकादियोगः ।

भल्लातकपलं पिष्ट्वा पिप्पलीमूलसंयुतम् ।
ऊरुस्तम्भविनाशाय पिबेन्मधुसमन्वितम् ॥ १९३ ॥

ऊरुस्तम्भे पिचुमन्दमूलाद्युद्वर्तनम् ।

पिचुमन्दस्य मूलानि चित्रको हस्तिपिप्पलली ।
त्वक्पत्रफलमूलानि करञ्जात्सर्षपात्तथा ॥ १९४ ॥
तुल्यानि तानि सर्वाणि वल्मीकस्य च मृत्तिका ।
गवां मूत्रेण पिष्टानि सूक्ष्माण्युद्वर्तनं परम् ॥ १९५ ॥

गृध्रस्यां महानिम्बयोगः ।

बृहन्निम्बतरोर्मूलं वारिणा परिपेपितम् ।
तत् पीतं नाशयेत्क्षिप्रमसाध्यामपि गृध्रसीम् ॥ १९६ ॥
परमौपधमपवाहुकमन्यास्तम्भोर्ध्वजत्रुवातानाम् ।
शीतलजलेन नावनमुपशमयति जिङ्गिणीखपुरः ॥ १९७ ॥

वातरोगे वृद्धदारुकयोगः ।

मद्यारनालगोजलसलिलस्नेहैस्तथा रसैर्यूषैः ।
नानावस्थं शमयेदुपयुक्तो वृद्धदारुकः पवनम् ॥ १९८ ॥

वातरोगे तैलयोगः ।

न तैलसदृशः स्नेहो मारुतस्य निबर्हणः ।
न हि वायुश्च तैलं च चिरं गात्रेषु तिष्ठतः ॥ १९९ ॥

वातरोगे तिलयोगः ।

बृंहणार्थं तिला मुख्या वातरोगविनाशनाः ।
गुडमिश्रान् तिलान् खादेत् पललं वा गुडान्वितम् ॥२००॥

सर्वाङ्गवाते वल्लीतर्वादिगुटिका।

वल्लीतरुः पुष्करमूलशुण्ठी कुष्ठं गुडूची सुरदारु रास्ना।
सात्सैन्धवं तद्द्विगुणो गुडश्च सर्वाङ्गवाते गुटिका च सेव्याः॥

वातरोगे शतावर्यादिद्वादशाङ्गः कषायः।

शतावरीपुष्करमूलमुस्तापथ्यामृताः सातिविषाः सरास्नाः।
वराटरूपः सुरदारु शुण्ठी दुरालभा वातहरः कषायः॥२०२॥

सर्वाङ्गवाते रक्तचन्दनादिचूर्णम्।

आरक्तकं चन्दनमुस्तशालिपर्ण्यस्तथा लाङ्गलिकाऽजमोदा।
पाठाऽश्वगन्धा च शतावरी च कङ्कोलकं मागधिदेवदारु २०३
एला यवानी शतपुष्पिका च मूलं वचा सैन्धवपद्मकं च।
कुष्ठंसमङ्गा सुरदारु भव्यं रास्नाऽरलुर्नागरकं गुडूची॥२०४॥
श्लोकद्वये चूर्णकमेतदुक्तं कर्षार्धमात्रं घृतसंप्रयुक्तम्।
तक्रान्वितं सोष्णजलानुपानं निहन्ति सर्वाङ्गमरुद्विकारम् २०५

सर्वाङ्गवाते शिग्रुत्वचादिवटिका।

शिग्रुत्वचा पुष्करमूलशुण्ठ्यौ गोकण्टकः पिप्पलिका गुडूची।
रास्ना शठी सैन्धवचित्रकौ च सर्वाङ्गवाते गुटिका विधेया२०६

वातरोगे मरिचादिकषायः।

पिबति कषायं जन्तुर्मरिचमहादारुनागराणां यः।
तैलेनापि च मिश्रं स भवति वातेन निर्मुक्तः॥ २०७॥

वातरोगे विश्वादिद्वादशाङ्गकाथः।

विश्वैरण्डशिफादारुवचाः शुण्ठी दुरालभा।
अभयाऽतिविषा मुस्ता शतमूली वृषोऽमृता॥ २०८॥
अमीषां क्वाथपानेन मांसामश्लेषसन्धिगः।
मज्जास्थिस्नायुसर्वाङ्गवायुर्नश्यति निश्चितम्॥ २०९॥

सर्ववातरोगे शृङ्ग्यादिचतुःषष्टिकः कषायः।

शृङ्गीरामठरामसेनरजनीरुग्रेणुकारोहिणी-
रास्नैरण्डरसोनदारुरजनीराजद्रुराजीफलैः।

त्रायन्तीत्रिवृताद्रुवाशननतानन्ताभृतागुग्रवा-
दन्तीतुम्बरुचित्रतण्डुलत्रुटित्वचित्रकनक्तंचरैः ॥२१०॥
वासवासवबीजयासवपुरावल्यावरीवल्लिज-
ब्राह्मीब्राह्मणयष्टिवारणकणाविश्वावयस्थाविषैः ।
मूर्वामालविकासमूलमगधामुस्ताजमोदाद्वयै-
र्मिश्रेयामरचन्दनेन्द्रचविकास्फोटामृताकट्फलैः ॥२११॥
इत्येवं दशमूलपुङ्गिगदितः क्वाथश्चतुःषष्टिकः
शृङ्ग्यादिस्त्वथ नारसिंहभिषजा सर्वामयोन्मूलने ।
पुंसामष्टविधज्वरातिशमने सन्नाग्निसंधुक्षणे
सर्वाङ्गीणसमीरणद्विपघटाशार्दूलविक्रीडिते ॥ २१२ ॥

स्वगादिगतवाते रास्नाद्य चूर्णम् ।

रास्ना शतावरी दारु कङ्कोलं लाङ्गली कणा ।
रक्तचन्दनमञ्जिष्ठावृद्धिसैन्धवपद्मकम् ॥ २१३ ॥
अश्वगन्धाऽमृता पाठा मुसली शालिपर्णिका ।
शतपुष्पाऽजमोदा च शुण्ठी कुष्ठं समांशतः ॥ २१४ ॥
सघृतं चूर्णमेतेषां भक्षितं तप्तवारिणा ।
त्वगस्थिस्नायुसन्धिस्थं मारुतं हन्ति वेगतः ॥ २१५ ॥

कुपितवाते शृङ्गबेरादियोगः ।

यवानीचूर्णसंमिश्रशृङ्गबेररसस्तनोः ।
मर्दनाचस्रवो हन्ति कुपितं मारुतं द्रुतम् ॥ २१६ ॥

वातरोगिणामवगाहार्थं तैलम् ।

रास्नाऽश्वगन्धा लशुनं सारिणी च शतावरी ।
प्रत्येकं तैलमेतासामवगाहनतो द्रुतम् ॥ २१७ ॥
हनुस्तम्भं धनुर्वातं पक्षाघातं च पङ्गुताम् ।
ऊरुपृष्ठकटिस्तम्भमर्दितं वातजाञ्जयेत् ॥ २१८ ॥

---

१. 'मथनादिसिंहभिषजा' ख. ।

वातरोगे वरुणादिस्वेदः।

वरुणैरण्डवातारीमुण्ड्यः शिग्रुः शतावरी।
गोक्षुरः सर्षपश्चैषां स्वेदो वातगदापहः॥ २१९॥

वातरोगे वृद्धदार्वादिलेपः।

वृद्धदारुसुरदारुशताह्वासालिकोचजटिलाहयगन्धाः।
कुष्ठसर्षपसिलालकमेथीपीतिकाह्वयमुमायवपिष्टम्॥ २२०॥
राजिकोरुबुजटापुरमेभिश्चूर्णितैर्द्विपलिकैः सरसोनैः।
तैलकैरनिलशत्रुसमुत्थैर्गोजलेन सहितैरुपनाहः॥ २२१॥
स्फोटनोदरगदार्दितपक्षाघातसन्धिगतमारुततन्द्राः।
कम्पमूलपवनोत्थविकारान् स्वेदनाद्धि सहसा प्रणिहन्ति २२२

अर्दिते माषेण्डरीयोगः।

नवनीतेन संयुक्तां खादेन्माषेण्डरीं नरः।
दुर्वारमर्दितं हन्ति सप्ताहान्नात्र संशयः॥ २२३॥

गृध्रसीप्रतीकारः।

शेफालिकादलैः क्वाथो मृद्वग्निपरिपाचितः।
दुर्वारं गृध्रसीरोगं पीतमात्रः प्रणाशयेत्॥ २२४॥
पुष्योद्धृतं हरेदाशु पिष्टं तण्डुलवारिणा।
भार्गीमूलं समं खण्डं पानाद्गृध्रसिवातकम्॥ २२५॥

इति वैद्यवर श्रीशोढलप्रथिते गदनिग्रहे कायचिकित्साखण्डे वातरोगाधिकार एकोनविंशतितमः।

---

## अथ वातरक्ताधिकारो विंशतितमः।

अथ वातरक्तनिदानं व्याख्यास्यामः।

कृतं तावत्समासेन वातव्याधिनिरूपणम्।
वातव्याधिप्रसङ्गेन वातरक्तं निरूप्यते॥ १॥

वातरक्तस्य निदानपूर्वकं लक्षणम्।

लवणाम्लकटुक्षारस्निग्धोष्णाजीर्णभोजनैः।
क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः॥ २॥

कुलत्थमाषनिष्पावशाकादिपललेक्षुभिः ।
दध्यारनालसौवीरशुक्ततक्रसुरासवैः ॥ ३ ॥
विरुद्धाध्यशनक्रोधदिवास्वप्नप्रजागरैः ।
प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ।
स्थूलानां सुखिनां चैव वातरक्तं प्रकुप्यति ॥ ४ ॥
हस्त्यश्वोष्ट्रैर्गच्छतोऽन्यैश्च वायुः कोपं यातः कारणैः सेवितैः स्वैः ।
तीक्ष्णोष्णाम्लक्षारशाकादिभोज्यैः संतापाद्यैर्भूयसा सेवितैश्च ॥
शीघ्रं रक्तं दुष्टतां याति तच्च वायोर्मार्गं संरुणद्ध्याशु यातः ।
क्रुद्धोऽत्यर्थं मार्गरोधात्स वायुरत्युद्रिक्तं दूषयेद्रक्तमाशु ॥ ६ ॥
तत्संपृक्तं वायुना दूषितेन तत्प्राबल्यादुच्यते वातरक्तम् ।
तद्वत् पित्तं दूषितेनासृजाक्तं तद्वच्छ्लेष्मा दूषितेनासृजाक्तः ॥ ७ ॥

वातरक्तपूर्वरूपम् ।

स्वेदोऽत्यर्थं न वा कार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेऽतिरुक् ।
सन्धिशैथिल्यमालस्यं सदनं पिटिकोद्गमः ॥ ८ ॥
जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु ।
निस्तोदः स्फुरणं भेदो गौरवं सुप्तिरेव च ॥ ९ ॥
कण्डूः सन्धिषु रुग्भूत्वा भूत्वा नश्यति चासकृत् ।
वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक्पूर्वलक्षणम् ॥ १० ॥

वातजादिभेदेन वातरक्तलक्षणम् ।

वातेऽधिकेऽधिकं तत्र शूलस्फुरणतोदनम् ।
शोफस्य रौक्ष्यकृष्णत्वश्यावतावृद्धिहानयः ॥ ११ ॥
धमन्यङ्गुलिसन्धीनां संकोचोऽङ्गग्रहोऽतिरुक् ।
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ॥ १२ ॥
रक्ते शोफेऽतिरुक्तोदस्ताम्रश्चिमिचिमायते ।
स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः ॥ १३ ॥

पित्ते विदाहः संमोहः स्वेदो मूर्च्छा मदस्तृषा ।
स्पर्शासहत्वं रुग्रागः शोफपाकौ भृशोष्मता ॥ १४ ॥
कफे स्तैमित्यगुरुतासुप्तिस्निग्धत्वशीतताः ।
कण्डूर्मन्दा च रुग्द्वन्द्वे सर्वलिङ्गं तु संकरात् ॥ १५ ॥
पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ।
आखोर्विषमिव क्रुद्धं तद्देहमनुसर्पति ॥ १६ ॥

वातरक्तस्य साध्यासाध्यविचारः ।

आजानुस्फुटितं यच्च प्रभिन्नं प्रस्रुतं च यत् ।
उपद्रवैश्च यज्जुष्टं प्राणमांसक्षयादिभिः ।
वातरक्तमसाध्यं तद्याप्यं संवत्सरोत्थितम् ॥ १७ ॥
अस्वप्नारोचकश्वासमांसकोथशिरोग्रहाः ।
संमूर्च्छामदरुक्तृष्णाज्वरमोहप्रवेपकाः ॥ १८ ॥
हिक्कापाङ्गुल्यवीसर्पपाकतोदभ्रमक्लमाः ।
अङ्गुलीवक्रतास्फोटदाहमर्मग्रहार्बुदाः ॥ १९ ॥
एतैरुपद्रवैर्युक्तं मोहेनैकेन वापि यत् ।
अकृत्स्नोपद्रवं याप्यं साध्यं स्यान्निरुपद्रवम् ॥ २० ॥
एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् ।
त्रिदोषजमसाध्यं स्याद्यस्य च स्युरुपद्रवाः ॥ २१ ॥

इति वातरक्तनिदानम् ।

---

अथ वातरक्तचिकित्सितं व्याख्यास्यामः ।

वातरक्ते शोणितमोक्षणम् ।

शिरावेधं प्रशंसन्ति प्रथमं वातशोणिते ।
जलौकोलाबुशृङ्गैर्वा शोणितं तस्य निर्हरेत् ॥ २२ ॥

वाताधिकवातरक्तप्रतीकारः ।

सर्पिस्तैलवसामज्जापानाभ्यञ्जनबस्तिभिः ।
सुखोष्णैरुपनाहैश्च वातोत्तरमुपाचरेत् ॥ २३ ॥

वातरक्तभेदाः।

उत्तानमवगाढं च द्विविधं वातशोणितम्।
त्वङ्मांसाश्रयमुत्तानं गम्भीरं त्वन्तराश्रयम्॥ २४॥

वातरक्ते सामान्यचिकित्सा।

पिण्डतैलादिनाऽभ्यङ्गः पानं तिक्तादिसर्पिषः।
सेकालेपाद्यसृङ्मुक्तिः शोधनं चोभयोर्हितम्॥ २५॥
गाढे विशेषतः सर्पिःपानं शुद्धिः शिराव्यधः।
वातरक्तप्रशमनं हृद्यं गुडघृतं स्मृतम्॥ २६॥
कफरक्तप्रशमनं कच्छूवीसर्पनाशनम्।
सर्वेषु सगुडां पथ्यां गुडूचीक्वाथमेव वा।
पिप्पलीवर्धमानं वा शीलयेत्सुसमाहितः॥ २७॥
गोधूमचूर्णं छगलीपयश्च सच्छागदुग्धो रुबुबीजकल्कः।
लेपे विधेयं शतधौतसर्पिः सेके पयश्चाविकमेव शस्तम्॥२८।

वातरक्ते अमृतादिपाचनम्।

अमृतानागरधान्यककर्षत्रितयेन पाचनं सिद्धम्।
जयति सरक्तं वातं शाम्यन्ति कुष्ठान्यशेषाणि॥ २९॥

वातरक्ते गुडूचीक्वाथः।

वत्सादनीभवः क्वाथः पीतो गुग्गुलुसंयुतः।
समीरणसमायुक्तं शोणितं संप्रसादयेत्॥ ३०॥

वातरक्ते वासादिक्वाथः।

वासागुडूचीचतुरङ्गुलानामेरण्डतैलेन पिबेत्कषायम्।
क्रमेण सर्वाङ्गजमप्यशेषं जयेदसृग्वातभवं विकारम्॥ ३१

वातरक्तेऽभयायोगः।

तिस्रोऽथवा पञ्च गुडेन पथ्या जग्ध्वा पिबेच्छिन्नरुहाकषायम्
तद्वातरक्तं शमयत्युदीर्णमाजानुसंभिन्नमपि ह्यवश्यम्॥ ३२

वातरक्ते गुडूचीयोगाः ।

घृतेन वातं सगुडा विबन्धं पित्तं सिताढ्या मधुना कफं च ।
वातासृगुग्रं रुबुतैलमिश्रा शुण्ठ्याऽऽमवातं शमयेद्गुडूची ॥३३॥
अमृता कफवातघ्नी कफमेदोविशोषणी ।
वातरक्तप्रशमनी कच्छुवीसर्पनाशिनी ॥ ३४ ॥
गुडूच्याः स्वरसं कल्कं चूर्णं वा क्वाथमेव वा ।
प्रभूतकालमासेव्य मुच्यते वातशोणितात् ॥ ३५ ॥

वातरक्ते लाङ्गल्यादिवटिका ।

लाङ्गल्यास्त्वमृतसमं कन्दमुद्धृत्य यत्नतः ।
योजयेत्त्रिफलालोहरजस्त्रिकटुकैः सह ॥ ३६ ॥
गुग्गुल्वमृतवल्लीभिर्मातुलुङ्गरसेन वा ।
त्रिफलाया रसैर्युक्ता गुटिकाः कोलसंमिताः ॥ ३७ ॥
भक्षयेन्मधुनाऽऽलोड्य शृणु कुर्वन्ति यत्फलम् ।
पादस्फोटं महाघोरं स्फुटनं सर्वगं च यत् ॥ ३८ ॥
तत्सर्वं नाशयन्त्याशु असाध्यं वातशोणितम् ।

वातरक्ते त्रिफलादिकषायः ।

त्रिफलानिम्बमञ्जिष्ठावचाकटुकरोहिणी- ॥ ३९ ॥
वत्सादनीदारुनिशाकषायं नवकार्षिकम् ।
वातरक्तं तथा कुष्ठं पामां च रक्तमण्डलम् ॥ ४० ॥
कुष्ठं कपालिकाकुष्ठं पानादेवापकर्षति ।
कर्षादौ तु पलं यावद्दद्यात् षोडशिकं जलम् ॥ ४१ ॥
ततस्तु कुडवं यावत्तोयमष्टगुणं भवेत् ।

वातरक्ते गुडूच्याद्यं घृतम् ।

गुडूचीक्वाथकल्काभ्यां सपयस्कं घृतं शृतम् ॥ ४२ ॥
हन्ति रक्तं सवातं च कुष्ठं जयति दुस्तरम् ।

वातरक्ते शतावरीघृतम् ।

शतावरीकल्कगर्भं रसे तस्याश्चतुर्गुणे ॥ ४३ ॥

क्षीरतुल्यं घृतं सिद्धं वातशोणितनाशनम् ।

वातरक्ते पिण्डतैलम् ।

सारिवासर्जमञ्जिष्ठायष्टीसिक्थैः पयोन्वितैः ॥ ४४ ॥
तैलं पक्वं प्रयोक्तव्यं पिण्डाख्यं वातशोणिते ।

द्वितीयं पिण्डतैलम् ।

सारिवासर्जयष्ट्याह्वमधूच्छिष्टैः पयोन्वितैः ॥ ४५ ॥
साध्यमेरण्डतैलं वा वातरक्तरुजापहम् ।

वातरक्ते बलादिघृतम् ।

बलाकषायकल्काभ्यां सपयस्कं घृतं शृतम् ॥ ४६ ॥
हन्ति रक्तं सवातं च कुष्ठं जयति दुस्तरम् ।

वातरक्ते दशपाकं बलातैलम् ।

बलाकषायकल्काभ्यां तैलं क्षीरचतुर्गुणम् ॥ ४७ ॥
दशपाकं भवेदेतद्वातासृग्वातपित्तनुत् ।
धन्यं पुंसवनं चैव नराणां शुक्रवर्धनम् ॥ ४८ ॥
रेतोयोनिविकाराणामेतद्वातविकारनुत् ।

वातरक्ते नागबलाद्यं तैलम् ।

शुद्धां पचेन्नागबलां तुलां तु जलार्मणे पादकषायशेषे ॥४९॥
विस्राव्य तैलाढकमत्र दद्यादजापयस्तैलविमिश्रितं तु ।
नवस्य यष्टीमधुकस्य कल्कं पृथक्पचेत्पञ्चपलं विपक्वम् ॥५०॥
तद्वातरक्तं शमयत्युदीर्णं वस्तिप्रदानेन हि सप्तरात्रात् ।
पीतं दशाहेन करोत्यरोगं तैलं स्मृतं नागबलाद्यमेतत् ॥५१॥

वातरक्ते अमृताद्यगुग्गुलुः ।

अमृतायाश्च द्विप्रस्थं प्रस्थमेकं तु गुग्गुलोः ।
प्रत्येकं त्रिफलाप्रस्थं वर्षाभूप्रस्थमेव च ॥ ५२ ॥
सर्वमेकत्र संक्षुद्य क्वाथयेन्नल्वणेऽम्भसि ।
पुनः पचेत्पादशेषं यावत्सान्द्रत्वमागतम् ॥ ५३ ॥

दन्तीचित्रकमूलानि कणा विश्वा फलत्रिकम् ।
गुडूची च विडङ्गानि प्रत्येकार्धपलोन्मितम् ॥ ५४ ॥
त्रिवृता कर्षमेकं तु सर्वमेकत्र चूर्णयेत् ।
सिद्धमुष्णे क्षिपेत्तत्र, अमृतागुग्गुलोः पलम् ॥ ५५ ॥
यथावह्निबलं खादेदम्लपित्ती विशेषतः ।
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम् ॥ ५६ ॥
दुष्टव्रणं प्रमेहांश्च आमवातं भगन्दरम् ।
नाड्याढ्यवातश्वयथून् हन्यात्सर्वामयानसौ ॥ ५७ ॥
अश्विभ्यां निर्मितो योगोऽमृतागुग्गुलुः पुरा ।

योगसारामृतः ।

शतावरी नागबला वृद्धदारुकमुषटा ॥ ५८ ॥
पुनर्नवाऽमृता कृष्णा वाजिगन्धा त्रिकण्टकः ।
पृथग्दशपलान्येषां सूक्ष्मचूर्णानि कारयेत् ॥ ५९ ॥
तदर्धशर्करायुक्तं चूर्णं संमर्दयेद्बुधः ।
स्थापयेत्सुदृढे भाण्डे मध्वार्धाढकसंयुतम् ॥ ६० ॥
घृतप्रस्थेन चालोड्य त्रिसुगन्धिपलेन च ।
तं खादेदिष्टचेष्टान्नो यथावह्निबलं नरः ॥ ६१ ॥
वातरक्तं क्षयं कुष्ठं कार्श्यं पित्तास्रसंभवम् ।
वातपित्तकफोत्थांश्च रोगानन्यांश्च तद्विधान् ॥ ६२ ॥
हत्वा करोति पुरुषं वलीपलितवर्जितम् ।
योगसारामृतो नाम लक्ष्मीकान्तिविवर्धनः ॥ ६३ ॥
दिवास्वप्नाग्निसंतापं व्यायामं मैथुनं तथा ।
कट्वुष्णगुर्वभिष्यन्दिलवणाम्लानि वर्जयेत् ॥ ६४ ॥

किंचिद्बातव्याधावुक्तमस्ति ।

इति श्रीशोढलवैद्यग्रथिते गदनिग्रहे कायचिकित्साखण्डे वातरक्ताधिकारो विंशतितमः ।

## अथोरुस्तम्भाधिकार एकविंशतितमः ।

### अथात ऊरुस्तम्भनिदानं व्याख्यास्यामः ।

#### ऊरुस्तम्भस्य निदानसंप्राप्तिपूर्वकं लक्षणम् ।

वातव्याधिप्रसङ्गेन वातरक्ते निरूपिते ।
वातव्याधेः प्रस्तुतत्वादूरुस्तम्भो निरूप्यते ॥ १ ॥
शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः ।
जीर्णाजीर्णे तथाऽऽयासक्षोभस्वप्नप्रजागरैः ॥ २ ॥
सश्लेष्ममेदःपवनः साममत्यर्थसंचितम् ।
अभिभूयेतरं दोषमूरू चेत्प्रतिपद्यते ॥ ३ ॥
सक्थ्यस्थीनि प्रपूर्यान्तः श्लेष्मणा स्तिमितेन च ।
तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥ ४ ॥
परकीयाविव गुरू स्यातां भृशमतिव्यथौ ।
ध्यानाङ्गमर्दस्तैमित्यतन्द्राच्छर्द्यरुचिज्वरैः ॥ ५ ॥
संयुतौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः ।
तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥ ६ ॥

#### ऊरुस्तम्भपूर्वरूपम् ।

वातशङ्किभिरज्ञानात्तस्य स्यात्स्नेहनात् पुनः ।
पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा ॥ ७ ॥
जङ्घोरुग्लानिरत्यर्थं संसताऽऽनाहवेदना[1] ।
पादं च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च ॥ ८ ॥
संस्थाने चलने गत्यां पीडने चाप्यनीश्वरः ।
अन्यनेयौ हि संभग्नावूरू पादौ च मन्यते ॥ ९ ॥
प्राग्रूपं तस्य निद्राऽतिध्यानं स्तिमितता ज्वरः ।
रोमहर्षोऽरुचिश्छर्दिर्जङ्घोर्वोः सदनं तथा ॥ १० ॥

---

1 'संस्तम्भनाद्दवेदनाः' ख. 'शश्वचादाहवेदने' इति निदाने पाठः ।

ऊरुस्तम्भस्यासाध्यलक्षणम् ।

यदा दाहार्तितोदार्तो वेपनः पुरुषो भवेत् ।
ऊरुस्तम्भस्तदा हन्यात्साधयेदन्यथा नवम् ॥ ११ ॥

इत्यूरुस्तम्भनिदानम् ॥

---

अथोरुस्तम्भचिकित्सितं व्याख्यास्यामः ।

ऊरुस्तम्भे सामान्यचिकित्सा ।

स्नेहासृक्स्राववमनं वस्तिकर्म विरेचनम् ।
वर्जयेदाढ्यवाते तु तैश्च तस्य विरोधतः ॥ १२ ॥
तस्मादत्र सदा कार्यं स्वेदलङ्घनरूक्षणम् ।
आममेदःकफाधिक्यान्मारुतं परिरक्षता ॥ १३ ॥
यत्स्यात्कफप्रशमनं न च मारुतकोपनम् ।
तत्सर्वं सर्वदा कार्यमूरुस्तम्भस्य भेषजम् ॥ १४ ॥
सर्वो रूक्षः क्रमः कार्यस्तत्रादौ कफनाशनः ।
पश्चाद्वातविनाशाय कृत्स्नः कार्यः क्रियाक्रमः ॥ १५ ॥
भोज्याः पुराणाः श्यामाककोद्रवोद्दालशालयः ।
जाङ्गलैरघृतैर्मांसैः शाकैश्चालवणैर्हितैः ॥ १६ ॥
रूक्षणाद्वातकोपाच्च निद्रानाशार्तिसूचकाः ।
स्नेहस्वेदविधिस्तत्र कार्यो वातामयापहः ॥ १७ ॥
प्रतारयेत् प्रतिस्रोतो नदीं शीतजलां शिवाम् ।
संरश्च विमलं शीतं स्थिरतोयं पुनः पुनः ॥ १८ ॥
तथा विशुष्केऽस्य कफे शान्तिमूरुग्रहो व्रजेत् ।
शरीरबलमग्निं च कार्येषा रक्षता क्रिया ॥ १९ ॥
शिलाजतुं गुग्गुलुं वा पिप्पलीमथ नागरम् ।
ऊरुस्तम्भे पिबेन्मूत्रैर्दशमूलीरसेन वा ॥ २० ॥

ऊरुस्तम्भे भल्लातकादियोगः ।

भल्लातकामृताशुण्ठीदारुपथ्यापुनर्नवाः ।
पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भनिबर्हणाः ॥ २१ ॥

ऊरुस्तम्भे पिप्पल्यादिकषायः ।

पिप्पली पिप्पलीमूलं भल्लातकफलानि च ।
क्वाथं मधुयुतं पीत्वा ऊरुस्तम्भाद्विमुच्यते ॥ २२ ॥

ऊरुस्तम्भे कतिपययोगाः ।

त्रिफलाचव्यकटुकाग्रन्थिकं मधुना लिहेत् ।
ऊरुस्तम्भविनाशाय पुरं मूत्रेण वा पिबेत् ॥ २३ ॥
लिह्याद्वा त्रिफलाचूर्णं क्षौद्रेण कटुकायुतम् ।
सुखाम्बुना पिबेद्वाऽपि चूर्णं षड्धरणं नरः ॥ २४ ॥
पिप्पलीवर्धमानं वा माक्षिकेण गुडेन वा ।
ऊरुस्तम्भे प्रशंसन्ति गण्डीरारिष्टमेव च ॥ २५ ॥
सैन्धवाद्यं हितं तैलमष्टवाख्योऽपि गुग्गुलुः ।

ऊरुस्तम्भे अष्टकट्वरं तैलम् ।

पलाभ्यां पिप्पलीमूलान्नागरादष्टकट्वरः ।
तैलप्रस्थः समो दध्ना गृध्रस्यूरुग्रहापहः ॥ २६ ॥
अष्टकट्वरतैलेऽत्र तैलं सार्षपमिष्यते ।
सस्नेहदधिसंभूतं तक्रं कट्वरमुच्यते ॥ २७ ॥

ऊरुस्तम्भे भल्लातकादिक्वाथः ।

भल्लातकोपकुल्यातन्मूलैः साधितं पिबन्नम्भः ।
ऊरुस्तम्भादचिराद्घोरादपि मुच्यते नियतम् ॥ २८ ॥

ऊरुस्तम्भे प्रलेपनोद्वर्तनयोगः ।

वल्मीकमृन्मूलकबीजयुक्ता तुरङ्गगन्धा च हिता प्रलेपे
उद्वर्तनेनापि च घोरमूरुस्तम्भं विनाशं नयति प्रसह्य॥२

ऊरुस्तम्भेऽस्थिसंघाटिकायोगः।

साधं मांसैरस्थिसङ्घाटिकाया भुङ्क्ते यद्वा व्यञ्जनेनापरेण।
क्षिप्रं शाम्यत्यस्थिभङ्गोऽस्य नूनं वातव्याधिश्चातितीव्रोऽपि यः स्यात्॥ ७॥

ऊरुस्तम्भे वृद्धदार्वादिचूर्णम्।

पिबेदुष्णाम्बुना वृद्धदारुनागरचूर्णकम्।
ऊरुस्तम्भसमुद्भूतविकारव्यथयाऽन्वितः॥ ३१॥

ऊरुस्तम्भे खर्जूराद्यो लेपः।

फलं खर्जूरिसंभूतं तथा वल्मीकमृत्तिका।
ऊरुस्तम्भे प्रलेपोऽयं मधुना सर्षपान्वितः॥ ३२॥

ऊरुस्तम्भे कण्टकारिकादिकषायः।

कण्टकारीगुडूचीचित्रकराखाश्च कुष्ठपिप्पल्यः।
सुरदारुविश्वगुग्गुलुसहितो भार्गोत्तरः क्वाथः॥ ३३॥

ऊरुस्तम्भे हरीतक्यादिकल्कः।

हरीतकी च चव्या च चित्रको देवदारु च॥ ३४॥
कल्कं मधुयुतं पीत्वा ऊरुस्तम्भाद्विमुच्यते।

ऊरुस्तम्भे वचादिकषायः।

वचा सातिविषा कुष्ठं चित्रको देवदारु च॥ ३५॥
पाठा तेजोवती मुस्ता स्वर्णक्षीरी निदग्धिका।
वत्सको नक्तमालश्च मूर्वा च कटुरोहिणी॥ ३६॥
तर्कारी प्रग्रहश्चैव पीलूनि निचुलानि च।
असनः सप्तपर्णश्च त्रिफला मरिचानि च॥ ३७॥
एतानि समभागानि कषायमुपसाधयेत्।
मधुयुक्तं कषायं तं प्रयोगेण पिबेन्नरः॥ ३८॥
ऊरुस्तम्भं नुदत्येष वृक्षमिन्द्राशनिर्यथा।
एतान्येव तु चूर्णानि माक्षिकेण तु कल्पयेत्॥ ३९॥
अनेनैव कषायेण भोजयेत्सिद्धमोदनम्।

ऊरुस्तम्भे कुष्ठाद्यं तैलम्।

कुष्ठं श्रीवेष्टको दीप्यं सरलं दारु केसरम् ॥ ४० ॥
अश्वगन्धाजगन्धे च तैलं तैः सार्षपं पचेत्।
सक्षौद्रं मात्रया तच्चाप्यूरुस्तम्भार्दितः पिबेत् ॥ ४१ ॥

ऊरुस्तम्भे तर्कार्याद्यं निषेचनम्।

तर्कारीबिल्वसुरसाशिग्रुवत्सकनिम्बजैः।
पत्रमूलफलैस्तोयं शृतमुष्णं निषेचनम् ॥ ४२ ॥

ऊरुस्तम्भे पिचुमन्दाद्युद्वर्तनम्।

पिचुमन्दस्य पत्राणि चित्रको हस्तिपिप्पली।
त्वक्पत्रफलमूलानि करञ्जात्सर्षपात्तथा ॥ ४३ ॥
तुल्यान्येतानि सर्वाणि वल्मीकस्य च मृत्तिका।
गवां मूत्रेण पिष्टानि सूक्ष्माण्युद्वर्तनं परम् ॥ ४४ ॥

ऊरुस्तम्भे करञ्जाद्यः परिषेचालेपनयोगः।

करञ्जः सुरसा बिल्वो देवदार्वथवाऽर्जकः।
तर्कारी मेषशृङ्गी च शोभाञ्जनकमिङ्गुदी ॥ ४५ ॥
उभे बृहत्यौ श्योनाकः श्वदंष्ट्रा खदिरासनौ।
जलपिष्टैरिमैस्तुल्यैः कषायः परिषेचनम् ॥ ४६ ॥
एतैरेवौषधैस्तुल्यैः क्षीरपिष्टैः प्रलेपयेत्।
अनेन विधिना क्षिप्रमूरुस्तम्भः प्रशाम्यति ॥ ४७ ॥

इति श्रीशोढलवैद्यग्रथिते गदनिग्रहे कायचिकित्साखण्डे ऊरुस्तम्भाधिकार एकविंशतितमः।

---

## अथामवाताधिकारो द्वाविंशतितमः।

अथात आमवातनिदानं व्याख्यास्यामः।

आमवातस्य निदानसंप्राप्तिपूर्वकं लक्षणम्।

विरुद्धाहारचेष्टस्य मन्दाग्नेर्निश्चलस्य च।
स्निग्धं भुक्तवतो ह्यन्नं व्यायामं कुर्वतस्तथा ॥ १ ॥

वायुना प्रेरितो ह्यामः श्लेष्मस्थानं प्रधावति ।
तेनात्यर्थं विदग्धोऽसौ धमनीभिः प्रपद्यते ॥ २ ॥
वातपित्तकफैर्भूयो दूषितः सोऽन्नजो रसः ।
स्रोतांस्यभिष्यन्दयति नानावर्णोऽतिपिच्छिलः ॥ ३ ॥
व्याधीनामाश्रयो ह्येष आमसंज्ञोऽतिदारुणः ।
युगपत्कुपितावेतौ त्रिकसन्धिप्रवेशकौ ॥ ४ ॥
स्तब्धं वा कुरुतो गात्रमामवातः स उच्यते ।
मन्यापृष्ठकटीजानुत्रिकसन्धीन् विकुञ्चयन् ॥ ५ ॥
सशब्दः स्तब्धगात्रश्च आमवातः स उच्यते ।
अङ्गमर्दोऽरुचिस्तृष्णा आलस्यं गौरवं ज्वरः ॥ ६ ॥
अपाकः शूनताङ्गानामामवातस्य लक्षणम् ।
स कष्टः सर्वरोगाणां यदा प्रकुपितो भवेत् ॥ ७ ॥
हस्तपादशिरोगुल्फत्रिकजानूरुसन्धिषु ।
करोति सरुजं शोफं यत्र दोषः प्रपद्यते ॥ ८ ॥
स देशो रुज्यतेऽत्यर्थं व्याविद्ध इव वृश्चिकैः ।
जनयेत्सोऽग्निदौर्बल्यं प्रसेकारुचिगौरवम् ॥ ९ ॥
उत्साहहानिं वैरस्यं दाहं च बहुमूत्रताम् ।
कुक्षौ कठिनतां शूलं तथा निद्राविपर्ययम् ॥ १० ॥
तृट्छर्दिभ्रममूर्च्छाश्च हृद्ग्रहं विड्विबन्धताम् ।
जाड्यान्त्रकूजमानाहं कष्टांश्चान्यानुपद्रवान् ॥ ११ ॥
पित्तात् सदाहरागं च सशूलं पवनानुगम् ।
स्तिमितं गुरुकण्डूं च कफजुष्टं तमादिशेत् ॥ १२ ॥

आमवातस्य साध्यासाध्यविचारः ।

एकदोषानुगः साध्यो द्विदोषो याप्य उच्यते ।
सर्वदेहचरः शोफः स कृच्छ्रः सान्निपातिकः ॥ १३ ॥

इत्यामवातनिदानम् ।

अथामवातचिकित्सितं व्याख्यास्यामः।

आमवाते सामान्यचिकित्सा।

लङ्घनं स्वेदनं तिक्तं दीपनानि कटूनि च।
विरेचनं स्नेहपानं बस्तयश्चाममारुते ॥ १४ ॥

आमवाते रास्नादिक्वाथः।

रास्नैरण्डशतावरीसहचरादुस्पर्शवासामृता-
देवाह्वातिविषाभयाघनशठीशुण्ठीकषायः कृतः।
पीतः सोरुबुतैल एष विहितः सामे सशूलेऽनिले
कट्यूरुत्रिकपृष्ठपार्श्वजठरक्रोडेषु वातार्तिजित् ॥ १५ ॥

आमवाते शठ्यादिक्वाथः।

शठी शुण्ठ्यभया चोग्रा देवाह्वाऽतिविषाऽमृता।
कषायमामवातस्य पाचनं रूक्षभोजनम् ॥ १६ ॥
शठीविश्वौषधीकल्कं वर्षाभूक्वाथसंयुतम्।
सप्तरात्रं पिबेज्जन्तुरामवातविपाचनम् ॥ १७ ॥

आमवाते दशमूलादिक्वाथः।

दशमूलामृतैरण्डरास्नानागरदारुभिः।
क्वाथो रुबुकतैलेन सामं हन्त्यनिलं गुरुम् ॥ १८ ॥

आमवाते (कुक्ष्यादिशूले) एरण्डतैलयोगः।

दशमूलीकषायेण पिबेद्वा नागराम्भसा।
कुक्षिबस्तिकटीशूले तैलमेरण्डसंभवम् ॥ १९ ॥

आमवाते रास्नापञ्चकम्।

रास्नां गुडूचीमेरण्डं देवदारु महौषधम्।
पिबेत्सर्वाङ्गगे वाते सामे सन्ध्यस्थिमज्जगे ॥ २० ॥

आमवाते रास्नासप्तकम्।

रास्नामृतारग्वधदेवदारुत्रिकण्टकैरण्डपुनर्नवानाम्।
क्वाथं पिबेन्नागरचूर्णमिश्रं जङ्घोरुपृष्ठत्रिकपार्श्वशूले ॥ २१ ॥

आमवाते शुण्ठ्यादिक्काथः ।

शुण्ठीगोक्षुरकक्काथः प्रातः प्रातर्निषेवितः ।
सामे वाते कटीशूले पाचनो रुक्प्रणाशनः ॥ २२ ॥

यवक्षारसमायुक्तो मूत्रकृच्छ्रविनाशनः ।
महौषधगुडूच्योस्तु क्काथं पिप्पलिसंयुतम् ।
पिबेदामे मरुत्कोपे कटीशूले विशेषतः ॥ २३ ॥

आमवाते दशमूलीयोगः ।

आमवाते कणायुक्तं दशमूलीजलं पिबेत् ।
पिबेद्वाऽप्यभयाविश्वागुडूचीनागरैर्युतम् ॥ २४ ॥

आमवाते हरीतकीयोगः ।

एरण्डतैलयुक्तां हरीतकीं भक्षयेद्विधिवत् ।
आमानिलार्तियुक्तो गृध्रसिवृद्ध्यर्दितो नित्यम् ॥ २५ ॥

आमवाते शुण्ठीयोगः ।

कर्षं नागरचूर्णस्य काञ्जिकेन पिबेन्नरः ।
आमवातप्रशमनं कफवातहरं परम् ॥ २६ ॥

आमवाते पञ्चकोलचूर्णम् ।

पञ्चकोलकचूर्णं तु पिबेदुष्णेन वारिणा ।
मन्दाग्निशूलगुल्मामकफारोचकनाशनम् ॥ २७ ॥

आमवाते अमृतादिचूर्णम् ।

अमृतानागरगोक्षुरमुण्डितिकावरुणकैः कृतं चूर्णम् ।
मस्त्वारनालपीतं सामानिलनाशनं ख्यातम् ॥ २८ ॥

आमवाते अलम्बुषादिकं चूर्णम् ।

अलम्बुषा गोक्षुरकं गुडूची वृद्धदारुकम् ।
पिप्पली त्रिवृता मुस्ता वरुणः सपुनर्नवः ॥ २९ ॥
त्रिफला नागरं चैव श्लक्ष्णचूर्णं तु कारयेत् ।
यथोत्तरं भागवृद्ध्या श्यामाचूर्णं तु तत्समम् ॥ ३० ॥

पिबेन्मधुसुरातक्रकाञ्जिकोष्णोदकेन च।
सर्वं जयत्यामवातं त्रिकजानूरुसंस्थितम् ॥ ३१ ॥
सशोथं वातरक्तं च ज्वरारोचकनाशनम्।
अलम्बुषादिकं चूर्णं रोगानीकविनाशनम् ॥ ३२ ॥
मस्त्वारनालतक्रेण पयःकुम्भीरसेन वा।
आमवातं निहन्त्याशु श्वयथुं सन्धिसंस्थितम् ॥ ३३ ॥

आमवाते शतपुष्पादिकं चूर्णम्।

शतपुष्पा विडङ्गानि सैन्धवं मरिचं समम्।
चूर्णमुष्णाम्बुना पीतमग्निसंदीपनं परम् ॥ ३४ ॥

आमवाते हिङ्ग्वाद्यं चूर्णम्।

हिङ्गु चव्यं बिडं शुण्ठी कृष्णाऽजाजी च पौष्करम्।
भागोत्तरमिदं चूर्णं पीतं वातामजिद्भवेत् ॥ ३५ ॥

आमवाते शुण्ठीघृतम्।

नागरक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत्।
चतुर्गुणेन तेनाथ केवलेनोदकेन वा ॥ ३६ ॥
वातरक्तप्रशमनमग्निसंदीपनं परम्।
नागरं घृतमित्युक्तं कट्यामशूलनाशनम् ॥ ३७ ॥

आमवाते अपथ्यानि।

दधिमत्स्यगुडक्षीरपोतकीमाषपिष्टकम्।
वर्जयेदामवातार्तो मांसं चानूपसंभवम् ॥ ३८ ॥
अभिष्यन्दकरा ये च ये चान्ये गुरुपिच्छिलाः।
वर्जनीयाः प्रयत्नेन आमवातार्दितैर्नरैः ॥ ३९ ॥

इति श्रीबोडलवैद्यग्रथिते गदनिग्रहे कायचिकित्साखण्डे आमवाताधिकारो द्वाविंशतितमः।

## अथ शूलाधिकारस्त्रयोविंशतितमः।

अथातः शूलपरिणामशूलजरत्पित्ताम्लद्रवनिदानं व्याख्यास्यामः।

शूलभेदाः।

शूलस्य वातप्राधान्याद्वातव्याधौ निरूपिते।
प्रसङ्गतश्चामवाते ततः शूलं निरूप्यते॥ १॥
दोषैः पृथक्समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत्।
सर्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः॥ २॥

वातशूलस्य निदानसंप्राप्तिपूर्वकं लक्षणम्।

व्यायामयानादतिमैथुनाच्च प्रजागराच्छीतजलातिपानात्।
कलायमुद्गाढकिकोरदूषादत्यर्थरूक्षाध्यशनाभिघातात्॥ ३॥
कषायतिक्तातिविरूढकान्नविरुद्धवल्लूरकशुष्कशाकात्।
विट्शुक्रमूत्रानिलवेगरोधाच्छोकोपवासादतिहास्यभाष्यात् ४॥
वायुः प्रवृद्धो जनयेद्धि शूलं हृत्पार्श्वपृष्ठत्रिकबस्तिदेशे।
जीर्णे प्रदोषे च घनागमे च शीते च कोपं समुपैति गाढम् ५
मुहुर्मुहुश्चोपशमप्रकोपौ भवेच्च संस्तम्भनभेदतोदाः।
संस्वेदनाभ्यञ्जनमर्दनाद्यैः स्निग्धोष्णभोज्यैश्च शमं प्रयाति॥६॥

पित्तशूलस्य निदानसंप्राप्तिपूर्वकं लक्षणम्।

क्षारातितीक्ष्णोष्णविदाहितैलपिण्याकनिष्पावकुलत्थयूषैः।
कट्वम्लसौवीरसुराविकारैः क्रोधानलायासरविप्रतापैः॥ ७॥
ग्राम्यातियोगादशनैर्विदग्धैः पित्तं प्रकुप्याशु करोति शूलम्।
तृण्मोहदाहार्तिकरं हि ताभ्यां संस्वेदमूर्च्छाभ्रमदोषयुक्तम्॥८॥
मध्यन्दिने कुप्यति चार्धरात्रे निदाघकाले जलदात्यये च।
शीते च शीतैः समुपैति शान्तिं सुस्वादुशीतैरपि भोजनैश्च ९॥

कफशूलस्य निदानसंप्राप्तिपूर्वकं लक्षणम्।

आनूपवारिजकिलाटपयोविकारै-
र्मांसेक्षुपिष्टकृशरातिलशष्कुलीभिः।

अन्यैर्बलासजनकैरपि हेतुभिश्च
श्लेष्मा प्रकोपमुपगम्य करोति शूलम् ॥ १० ॥
हृल्लासकाससदनारुचिसंप्रसेकै-
रामाशये स्तिमितकोष्ठशिरोगुरुत्वैः।
भुक्ते सदैव हि रुजं कुरुतेऽतिमात्रं
सूर्योदये च शिशिरे कुसुमागमे च ॥ ११ ॥

त्रिदोषजशूललक्षणम्।

सर्वेषु दोषेषु च सर्वलिङ्गं विद्याद्भिषक् सर्वभवं हि शूलम्।
सुकष्टमेनं विषवज्रकल्पं विवर्जनीयं प्रवदन्ति तज्ज्ञाः॥१२॥

आमशूललक्षणम्।

आटोपहृल्लासवमीगुरुत्वस्तैमित्यकानाहकफप्रसेकैः।
कफस्य लिङ्गेन समानलिङ्गमामोद्भवं शूलमुदाहरन्ति॥१३॥

द्वन्द्वजशूललक्षणम्।

वस्तौ हृत्कण्ठपार्श्वेषु स शूलः कफवातिकः।
कुक्षौ हृन्नाभिमध्ये तु स शूलः कफपैत्तिकः ॥ १४ ॥
ज्वरदाहकरो घोरो विज्ञेयो वातपैत्तिकः।

शूलानां साध्यासाध्यविचारः।

एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः ॥ १५ ॥
सर्वदोषोत्थितो घोरस्त्वसाध्यो भूर्युपद्रवः।

शूलोपद्रवाः।

वेदना च तृषा मूर्च्छा आनाहो गौरवारुची ॥ १६ ॥
कासश्वासौ च हिक्का च शूलस्योपद्रवाः स्मृताः।

परिणामशूललक्षणम्।

स्वैर्निदानैः प्रकुपितो वायुः संनिहितस्तदा।
कफपित्ते समावृत्य शूलकारी भवेद्बली ॥ १७ ॥
भुक्ते जीर्यति यच्छूलं तदेव परिणामजम्।
तस्य लक्षणमप्येतत्समासेनाभिधीयते ॥ १८ ॥

आध्मानाटोपविण्मूत्रविबन्धारतिवेपनैः ।
स्निग्धोष्णोपशमप्रायं वातिकं तदुदाहृतम् ॥ १९ ॥
तृषादाहारतिस्वेदं कट्वम्ललवणोत्तरम् ।
शूलं शीतशमप्रायं पैत्तिकं लक्षयेद्भिषक् ॥ २० ॥
छर्दिहृल्लाससंमोहैः स्वल्परुग्दीर्घसंतति ।
कटुतिक्तोपशान्तं च तच्च ज्ञेयं कफात्मकम् ॥ २१ ॥
संसृष्टलक्षणं बुद्ध्वा द्विदोषं परिकल्पयेत् ।
त्रिदोषजमसाध्यं स्यात्क्षीणमांसबलानलम् ॥ २२ ॥
जीर्णे जीर्यत्यजीर्णे वा यच्छूलमुपजायते ।
तदप्यसाध्यं नित्यत्वादुक्तं वैद्यविशारदैः ॥ २३ ॥

अन्नद्रवशूललक्षणम् ।

पथ्यापथ्यप्रयोगेण भोजनाभोजनेन च ।
न शमं याति नियमात्सोऽन्नद्रव उदाहृतः ॥ २४ ॥
(अन्नद्रवाख्यशूलेषु न तावत्स्वास्थ्यमश्नुते ।
वान्तमात्रे जरत्पित्ते शूलमाशु व्यपोहति ॥)

शूलस्यासाध्यलक्षणम् ।

आनाहो गौरवं छर्दिस्तृष्णा मूर्च्छा भ्रमोऽरुचिः ।
कृशत्वं बलहानिश्च वेदनातिप्रवर्तनम् ॥ २५ ॥
उपद्रवा दशैवैते यस्य शूलेषु नास्ति सः ।

प्रकारान्तरेण शूललक्षणानि ।

सर्वाङ्गशूलं स्तब्धाङ्गस्फुटनं सर्वसन्धिषु ।
संकोचः सर्वगात्राणां वातशूलस्य लक्षणम् ॥ २६ ॥
नाभिमूले खरं शूलं दाहो देहे हृदि व्यथा ।
पित्तशूलस्य विज्ञेयं लक्षणं सुविचक्षणैः ॥ २७ ॥
लक्षणं श्लेष्मशूलस्य हृदये शूलमुल्बणम् ।
जडत्वं सर्वगात्रस्य न निद्रा न रुचिस्तथा ॥ २८ ॥

इति शूलपरिणामशूलान्नद्रवादिनिदानम् ।

अथ शूलादिचिकित्सितं व्याख्यास्यामः।

शूलानां सामान्यचिकित्सा।

वमनं लङ्घनं स्वेदः पाचनं फलवर्तयः।
क्षारचूर्णानि गुटिकाः शस्यन्ते शूलशान्तये ॥ २९ ॥

वातस्यानु जयेत्पित्तं पित्तस्यानु जयेत्कफम्।
त्रयाणां वा जयेत्पूर्वं यो भवेद्बलवत्तरः ॥ ३० ॥

आशुकारी हि पवनस्तस्मात्तं त्वरया जयेत्।
तस्य शूलाभिपन्नस्य स्वेद एव सुखावहः ॥ ३१ ॥

वातशूले कुलत्थादियूषः।

वातात्मकं हन्त्यचिरेण शूलं स्नेहेन युक्तः सुकुलत्थयूषः
ससैन्धवो व्योषयुतः सलावः सहिङ्गुसौवर्चलदाडिमाढ्यः

वातशूले हिङ्ग्वादिचूर्णम्।

शूले निरन्नकोष्ठोऽद्भिरुष्णाभिश्चूर्णिताः पिबेत्।
हिङ्गुप्रतिविषाव्योषवचासौवर्चलाभयाः ॥ ३३ ॥

वातशूले बलादियोगः।

बलापुनर्नवैरण्डबृहतीद्वयगोक्षुरम्।
सहिङ्गुलवणं पीतं सद्यो वातरुजं जयेत् ॥ ३४ ॥

वातशूले तुम्बुर्वादियोगः।

तुम्बरूण्यभया हिङ्गु पौष्करं लवणत्रयम्।
पिबेद्यवाम्बुना वातशूलगुल्मापतन्त्रकी ॥ ३५ ॥

वातशूले विश्वादिकषायः।

विश्वामेरण्डजं मूलं काथयित्वा जलं पिबेत्।
हिङ्गुसौवर्चलोपेतं सद्यः शूलनिवारणम् ॥ ३६ ॥

हिङ्गुपुष्करमूलाभ्यां हिङ्गुसौवर्चलेन वा।
विश्वैरण्डयवक्काथः पीतः शूलनिवारणः ॥ ३७ ॥

वातशूले यवान्यादियोगः।

यवानीहिङ्गुसिन्धूत्थक्षारसौवर्चलाभयाः।
सुरामण्डेन पातव्या वातशूलनिषूदनाः॥ ३८॥

शूले सौवर्चलादिवटिका।

सौवर्चलाग्निकाजाजीमरिचैर्द्विगुणोत्तरैः।
मातुलुङ्गरसे पिष्टा गुटिकाऽनिलशूलनुत्॥ ३९॥

शूले लेपयोगौ।

नाभिलेपाज्जयेच्छूलं मदनः काञ्जिकान्वितः।
जीवन्तीमूलकल्को वा सतैलः पार्श्वशूलहा॥ ४०॥

पित्तशूले सामान्यचिकित्सा।

गुडशालियवाः क्षीरं सर्पिःपानं विरेचनम्।
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम्॥ ४१॥

पैत्ते च शूले वमनं पयोम्बु
रसैस्तथेक्षोः सपटोलनिम्बैः।
शीतावगाहाः पुलिनाः सवाता
भाण्डानि कांस्यस्य जलाप्लुतानि।
अन्यानि शस्तानि च शीतलानि
सचन्दनानीन्दुकराः सुशीताः॥ ४२॥

मणिराजतताम्राणि भाजनानि च सर्वदा।
परिपूर्णानि तोयेन शूलस्योपरि निक्षिपेत्॥ ४३॥

विरेचनं पित्तहरं च शस्तं रसाः प्रशस्ताः शशलावकानाम्।
संतर्पणं लाजमधूपपन्नं पेया सुशीता मधुसंप्रयुक्ता॥ ४४॥
छर्द्यां ज्वरे पित्तभवेऽथ शूले घोरे विदाहे तृषितेऽतिमात्रम्।
यवस्य पेयां मधुना विमिश्रां पिबेत्सुशीतां मनुजः सुखार्थी॥ ४५

पित्तशूले कतिपययोगाः।

धात्र्या रसं विदार्या वा त्रायन्तीगोस्तनाम्बुना।
पिबेत्सशर्करं सद्यः पित्तशूलनिषूदनम्॥ ४६॥

शतावरीरसं द्राक्षायुक्तं प्रातः पिबेन्नरः ।
दाहशूलोपशान्त्यर्थं सर्वपित्तामयापहम् ॥ ४७ ॥

पित्तशूले शतावर्यादिक्वाथः ।

शतावरीसयष्ट्याह्ववाट्यालकुशगोक्षुरैः ।
शृतं शीतं पिबेत्तोयं सगुडक्षौद्रशर्करम् ॥ ४८ ॥
पित्तासृग्दाहशूलघ्नं सद्यो दाहज्वरापहम् ।

पित्तशूले त्रिफलादिक्वाथः ।

त्रिफलानिम्बयष्ट्याह्वकटुकारग्वधैः शृतम् ॥ ४९ ॥
पाययेन्मधुसंमिश्रं दाहशूलोपशान्तये ।

पित्तशूले बृहत्यादियोगः ।

बृहत्यौ गोक्षुरैरण्डकुशकासेक्षुवालिकाः ॥ ५० ॥
पीताः पित्तभवं शूलं सद्यो हन्युः सुदारुणम् ।

पित्तशूले धात्रीचूर्णम् ।

अलिह्यातिपित्तशूलघ्नं धात्रीचूर्णं समाक्षिकम् ॥ ५१ ॥

कफजशूले सामान्यचिकित्सा ।

श्लेष्माधिके लङ्घनछर्दनानि शिरोविरेकं मधुसीधुपानम् ।
मधूनि गोधूमयवानरिष्टान् सेवेत रूक्षान् कटुकांश्च सर्वान् ॥

कफशूले लवणत्रयादियोगः ।

लवणत्रयसंयुक्तं पञ्चकोलं सरामठम् ।
सुखोष्णेनाम्बुना पानं कफशूले प्रदापयेत् ॥ ५३ ॥

कफशूले पिप्पलीमूलादियोगः ।

कणामूलमथैरण्डं चित्रकं विश्वभेषजम् ।
हिङ्गुसैन्धवसंयुक्तं सद्यः शूलहरं परम् ॥ ५४ ॥

पार्श्वादिशूले शिग्रुक्वाथः ।

मातुलुङ्गरसोपेतः शिग्रुक्वाथस्तथा परः ।
स क्षारो मधुना पीतः पार्श्वहृद्बस्तिशूलजित् ॥ ५५ ॥

कफशूले पेयायोगः ।

श्लेष्मशूलहरा पेया पञ्चकोलप्रसाधिता ।

सान्निपातिकशूले विदार्यादियोगः ।

विदारीदाडिमरसः सव्योपो लवणान्वितः ।
क्षौद्रयुक्तो निहन्त्याशु शूलं दोषत्रयोद्भवम् ॥ ५६ ॥

त्रिदोषजशूले मण्डूरयोगः ।

गोमूत्रशुद्धमण्डूरं त्रिफलाचूर्णसंयुतम् ।
विलिहन्मधुसर्पिर्भ्यां शूलं हन्ति त्रिदोषजम् ॥ ५७ ॥

त्रिदोषजशूले शङ्खचूर्णादियोगः ।

शङ्खचूर्णं सलवणं सहिङ्गु व्योषसंयुतम् ।
उष्णोदकेन संपीतं शूलं हन्ति त्रिदोषजम् ॥ ५८ ॥

आमशूलचिकित्सा ।

आमशूले क्रिया कार्या कफशूलविनाशिनी ।
सेव्यमानं हितं सर्वं यद्यदग्निविवर्धनम् ॥ ५९ ॥

आमशूले एरण्डादिकषायः ।

एरण्डबिल्वबृहतीद्वयमातुलुङ्ग-
पाषाणभित्त्रिकटुमूलकृतः कषायः ।
सक्षारहिङ्गुलवणो रुबुतैलमिश्रः
श्रोण्यंसमेढ्रहृदयस्तनरुक्षु पेयः ॥ ६० ॥

आमशूले हिङ्ग्वादिचूर्णम् ।

सहिङ्गुतुम्बरुव्योषयवानीचित्रकाभयम् ।
सक्षारलवणं चूर्णं पिबेत्प्रातः सुखाम्बुना ।
विण्मूत्रानिलशूलघ्नं पाचनं वह्निदीपनम् ॥ ६१ ॥

आमशूले चित्रकादिकषायः ।

चित्रकग्रन्थिकैरण्डशुण्ठीधान्यजलैः शृतम् ॥ ६२ ॥
शूलानाहविबन्धेषु सहिङ्गुबिडसैन्धवम् ।

आमशूले दीप्यकादिचूर्णम् ।

दीप्यकं सैन्धवं पथ्या नागरं च चतुःपलम् ।
चूर्णं शूलं जयत्येतत्सन्नस्याग्नेश्च दीपनम् ॥ ६३ ॥

शूले पटोलादिकषायः ।

पटोलत्रिफलारिष्टकाथं मधुयुतं पिबेत् ।
पित्तश्लेष्मज्वरच्छर्दिदाहशूलोपशान्तये ॥ ६४ ॥

द्वन्द्वजशूलचिकित्सा ।

संसृष्टदोषजे चापि या क्रिया कथिता पृथक् ।
एकीकृत्य प्रयुञ्जीत तां शूले तु द्विदोषजे ॥ ६५ ॥
वमनं रेचनं चैव वीक्ष्य दोषबलाबलम् ।
कर्तव्यं कफपित्तोत्थे यथादोषं भिषग्जितम् ॥ ६६ ॥

कफवातशूले रुचकादिचूर्णम् ।

चूर्णं समं रुचकहिङ्गुमहौषधानां
शुण्ठ्यम्बुना कफसमीरणसंभवासु ।
हृत्पार्श्वपृष्ठजठरार्तिविषूचिकासु
पेयं तथा यवरसेन च विड्विबन्धे ॥ ६७ ॥
क्वाथेन चूर्णपानं यत्तत्र क्वाथप्रधानता ।
प्रवर्तते न तेनात्र चूर्णापेक्षी चतुर्द्रवः ।
हिङ्गुनः स्वल्पमानोक्तेः समशब्दे सहार्थता ॥ ६८ ॥

शूले हिङ्ग्वादियोगः ।

हिङ्गु त्रिकटुकं कुष्ठं यवक्षारोऽथ सैन्धवम् ।
मातुलुङ्गरसे पेयं प्लीहशूलरुजापहम् ॥ ६९ ॥

शूले अपथ्यानि ।

व्यायामं मैथुनं मद्यं लवणं कटुकानि च ।
वेगरोधं शुचं क्रोधं त्यजेच्छूली च वैदलम् ॥ ७० ॥

हृच्छूले बीजपूररसयोगः ।

सुपक्वबीजपूरस्य रसः सैन्धवमिश्रितः ।
पीतः पथ्याशिनो हन्ति हृच्छूलमतिदारुणम् ॥ ७१ ॥

शूले सुवर्चलादियोगः ।

सुवर्चलाभया हिङ्गुरजमोदा च सैन्धवम् ।
स्वर्जीयवोद्भवः क्षारः पयो शुक्तं च शूलहृत् ॥ ७२ ॥
सुवर्चला जीरकमम्लवेतसं समं त्र्यं व्यंशमरीचचूर्णकम् ।
सुपक्वपूरस्य रसेन भावितं जलेन पीतं खलु वातशूलहृत् ॥ ७३

शूले एरण्डमूलादिघृतम् ।

एरण्डमूलं बृहतीं श्वदंष्ट्रां पुनर्नवामिक्षुरकस्य मूलम् ।
शतावरीं हंसपदीं च दद्यान्महासहां क्षुद्रसहां विदारीम् ॥ ७४
बिल्वस्य मूलं च शृगालविन्नां निदिग्धिकां सर्पभजीवकां च ।
सगोक्षुराद्यां सहदेविकां च पचेत्कषायं जलपादशिष्टम् ॥ ७५॥
तेनैव कल्केन पिबेद्घृतं हि रसेन पक्वं फलपूरकस्य ।
चतुर्विधं हन्त्यचिरेण शूलं प्रसह्य मेघानिव मातरिश्वा ॥ ७६॥

शूले वमनयोगाः ।

निम्बकाथेन वमनं कटुतुम्बीजलेन वा ।
पटोलपत्रकाथेन कारवेल्लोदकेन वा ॥ ७७ ॥
क्षीरमाकण्ठतः पीत्वा मदनक्राथसंयुतम् ॥ ७८ ॥
यष्ट्याह्वादिकषायेण वमनं परमुच्यते ।

शूले विरेचनयोगाः ।

दन्ती त्रिवृन्महाश्यामा कम्पिल्लकटुकाह्वयाः ।
नीलिका नागरं चूर्णं तैलेनैरण्डजेन वै ॥ ७९ ॥
युक्तं विरेचनं सद्यः पवित्रशूलनिवारणम् ।
त्रिफलाक्काथगोमूत्रक्षौद्रक्षीररसैः पृथक् ॥ ८० ॥
एरण्डतैलं द्विगुणैस्ततः पीतं विरेचनम् ।
बीजपूररसोपेतो गुडः श्लेष्मसमुद्भवम् ॥ ८१ ॥
हृद्रोगं नाभिशूलं वा गुल्मं वा हन्ति निश्चितम् ।

शूले क्षुद्रादिकषायः ।

रिङ्गिणी बृहती बिल्वं बीजपूराद्ययोऽश्मभित् ॥ ८२ ॥

गोक्षीरेणान्वितैरेतैः कृतः क्राथोऽतिशीतलः ।
एलाहिङ्गुयवक्षारसैन्धवप्रतिवापितः ॥ ८३ ॥
पीत एरण्डतैलेन कटिहृद्गुदमेढ्रजम् ।
जाठरं नाभिशूलं च पृष्ठकुक्षिसमाश्रितम् ॥ ८४ ॥
शिरःकर्णाक्षिशूलं च नाशयत्यतिवेगतः ।

शूले अजमोदादिक्काथः ।

अजमोदा वचा हिङ्गु लवणं विडपूर्वकम् ।
शुण्ठी सुवर्चला कृष्णा बृहती रिङ्गिणी तथा ॥ ८५ ॥
बीजपूरस्य बीजानि तुम्बुरुः समभागतः ।
कृतक्राथस्य पानेन यान्ति शूलान्यनेकधा ॥ ८६ ॥

सर्वशूले वचादिचूर्णम् ।

वचा सुवर्चला हिङ्गु कुष्ठमिन्द्रयवाः समम् ।
चूर्णमुष्णाम्भसा पीतं सर्वशूलनिकृन्तनम् ॥ ८७ ॥

सर्वशूले अजमोदाद्यं चूर्णम् ।

अजमोदा वचा कुष्ठमम्लवेतससैन्धवम् ।
सर्जिक्षारो हिङ्गु पथ्या त्रिकटु ब्रह्मदण्डिका ॥ ८८ ॥
मुस्ता सुवर्चला पूररसं सविडपूर्वकम् ।
पीतं तक्रान्वितं चूर्णममीषां सर्वशूलहृत् ॥ ८९ ॥

शूले वचादिचूर्णम् ।

वचाऽभया विडं शुण्ठी हिङ्गु कुष्ठाग्निदीप्यकाः ।
द्वित्रिषट्चतुरेकाष्टसप्तपञ्चांशकाः क्रमात् ॥ ९० ॥
चूर्णं मद्यादिभिः पीतं शूलानाहोदरापहम् ।
गुल्मार्शःश्वासकासघ्नं ग्रहणीपाण्डुरोगहृत् ॥ ९१ ॥

परिणामशूलचिकित्सा ।

निम्बक्काथेन वमनं कटुतुम्बीरसेन वा ।
पेयं शृतेन तोयेन सुखोष्णेन सुचूर्णितम् ॥ ९२ ॥

परिणामोद्भवं शूलं त्रिफलालोहचूर्णकम्।
भक्षितं मधुना सार्धं नाशयत्यतिवेगतः ॥ ९३ ॥
अजमोदा तथा पाठा त्रिकटु समचूर्णितम्।
भुक्तमुष्णाम्भसाऽजीर्णशूलनिर्मूलनक्षमम्।

शूले लघुशम्बूकभस्मयोगः।

शूलोदये शूलशान्त्यै लघुशम्बूकभस च ॥ ९४ ॥

शूले विडङ्गादिमोदकः।

विडङ्गतण्डुलव्योषं त्रिवृद्दन्ती च चित्रकः।
सर्वाण्येतानि चाहृत्य सूक्ष्मचूर्णानि कारयेत् ॥ ९५ ॥
गुडेन मोदकान् कृत्वा भक्षयेत्प्रातरुत्थितः।
उष्णोदकानुपानं तु दद्यादग्निविवर्धनम् ॥ ९६ ॥
जयेत्त्रिदोषजं शूलं परिणामसमुद्भवम्।

परिणामशूले नागरादिकल्कः।

नागरतिलगुडकल्कं पयसा संसाध्य यः पुमानद्यात्।
उग्रपरिणामशूलं तस्यापैति सप्तरात्रेण ॥ ९७ ॥

शूले एरण्डादियोगः।

एरण्डबल्विशम्बूकयवपर्णभूगोक्षुरं समम्।
अन्तर्दग्ध्वा पिबेदद्भिरुष्णाभिः शूलशान्तये ॥ ९८ ॥

परिणामशूले शम्बूकादिवटिका।

शम्बूकं त्र्यूषणं चैव पञ्चैव लवणानि च।
समांशा गुटिकाः कृत्वा कलम्बुकरसेन च ॥ ९९ ॥
प्राक्भोजनकाले वा भक्षयेत्तु यथाबलम्।
शूलाद्विमुच्यते जन्तुः सहसा परिणामजात् ॥ १०० ॥

पक्तिशूले लोहयोगाः।

लोहचूर्णं वरायुक्तं विलीढं मधुसर्पिषा।
पक्तिशूलं च शमयेत्तत्किट्टं वा प्रयोजितम् ॥ १०१ ॥

परिणामोद्भवं शूलं त्रिफलालोहचूर्णकम् ।
मर्धितं मधुना सार्धं नाशयत्यतिवेगवः ॥ १०२ ॥
कृष्णाभयालोहचूर्णं लिह्यात्समधुशर्करम् ।
परिणामभवं शूलं सद्यो हन्ति सुदारुणम् ॥ १०३ ॥
पथ्यालोहरजःशुण्ठीचूर्णं माक्षिकसर्पिषा ।
परिणामरुजं हन्ति वातपित्तकफात्मकम् ॥ १०४ ॥

परिणामशूले कोलादिमण्डूरम् ।

कोलग्रन्थिकरुद्रागरचपलाक्षारैः समं चूर्णितं
मण्डूरं सुरभीजलेऽष्टगुणिते प्रकाथ्य सान्द्रीकृतम् ।
तत्खादेदशनादिमध्यविरतौ प्रायेण दुग्धान्नभुक्
जेतुं वातकफामयान्परिणतौ शूलान्यशेषाणि च ॥१०५॥

परिणामशूले भीमवटकमण्डूरम् ।

कोलग्रन्थिकसहितैर्विश्वौषधमगधजायवक्षारैः ।
अयसमयोमलरजसः पलांशकैश्चूर्णितैर्मिश्रैः ॥ १०६ ॥
अष्टगुणमूत्रयुक्तं क्रमपाकात्पिण्डतां नयेत्सर्वम् ।
कोलप्रमाणवटकास्तिस्रो भोज्यादिमध्यविरतौ च ॥१०७॥
[illegible] ।
[illegible] १०८ ॥

परिणामशूले चपलामण्डूरम् ।

लोहकिट्टपलान्यष्टौ गोमूत्रेऽष्टगुणे पचेत् ।
चपलानागरक्षारपिप्पलीमूलचित्रकम् ॥ १०९ ॥
संचूर्ण्य निक्षिपेत्तस्मिन् पलांशं सान्द्रतां गते ।
गुटिकां कल्पयेत्तेन पक्तिशूलनिवारणीम् ॥ ११० ॥

परिणामशूले शतावरीमण्डूरम् ।

संशोध्य चूर्णितं कृत्वा मण्डूरस्य पलाष्टकम् ।
शतावरीरसस्याष्टौ दध्नस्तु पयसस्तथा ॥ १११ ॥

पलान्यादाय चत्वारि तथा गव्यस्य सर्पिषः।
विपचेत्सर्वमैकध्यं यावत्पिण्डत्वमागतम् ॥ ११२ ॥
सिद्धं तं भक्षयेन्मध्ये भोजनस्याग्रतोऽपि वा।
वातात्मकं पित्तभवं शूलं च परिणामजम् ॥ ११३ ॥
निहन्त्येव हि योगोऽयं मण्डूरस्य न संशयः।
भवेद्गन्धः शुभः पाके वर्तिः स्याद्गाढवर्तनात् ॥११४॥

परिणामशूले तारामण्डूरवटकः।

विडङ्गं चित्रकं चव्यं त्रिफला त्र्यूषणानि च।
नवभागानि चैतानि लोहकिट्टसमानि च ॥ ११५ ॥
गोमूत्रं द्विगुणं कृत्वा मूत्राद्विकगुडान्वितम्।
शनैर्मृद्वग्निना कृत्वा सुसिद्धं पिण्डतां गतम् ॥ ११६ ॥
स्निग्धे भाण्डे विनिक्षिप्य भक्षयेत्कोलमात्रया।
प्राग्मध्यान्तप्रयोगेण भोजनस्य प्रयोजितः ॥ ११७ ॥
योगोऽयं शमयत्याशु पक्तिशूलं सुदारुणम्।
कामलां पाण्डुरोगं च शोथं मन्दाग्नितामपि ॥ ११८ ॥
अर्शांसि ग्रहणीदोषं कृमिगुल्मोदराणि च।
नाशयेदम्लपित्तं च स्थौल्यं चैवापकर्षति ॥ ११९ ॥
वर्जयेच्छुष्कशाकानि विदाह्यम्लकटूनि च।
पक्तिशूलान्तको ह्येष गुडो मण्डूरसंज्ञिकः।
शूलार्तानां कृपाभावात्तारया परिकीर्तितः ॥ १२० ॥

परिणामशूले त्रिफलालोहम्।

अक्षामलकशिवानां सुरसैः पक्वं सुलोहरजः।
सगुडं यष्टुपयुङ्क्ते मुञ्चति शूली त्रिदोषजं शूलम्॥१२१॥

शूले धात्रीलोहम्।

धात्रीचूर्णस्याष्टौ पलानि चत्वारि लोहचूर्णस्य।
यष्टीमधुकरजश्च द्विपलं दद्यात्पटे घृष्टम् ॥ १२२ ॥

अमृतार्कांशैनैतचूर्णं भाव्यं तु सप्ताहम् ।
खण्डातपेषु शुष्कं भूयः पिष्ट्वा नवे घटे स्थाप्यम्॥१२३॥
घृतमधुना संयुक्तं भक्तादौ मध्यतोऽन्ते च ।
त्रीनपि वारान् खादेत्पथ्यं दोषानुबन्धेन ॥ १२४ ॥
भक्तस्यादौ शमयति दोषान् पित्तानिलोद्भवान् ।
मध्येऽन्नजविष्टम्भं जयति नृणां विदह्यते नान्नम्॥१२५॥
पानान्नकृतान्दोषान् भुक्तस्यान्ते शीलितं जयति ।
एवं जीर्यति चान्ने शूलं नृणां सुकष्टमपि ॥ १२६ ॥
हरति च सहसा युक्तो योगश्चायं जरत्पित्तम् ।
चक्षुष्यं पलितघ्नं कफपित्तसमुद्भवाञ्जयेद्रोगान् ।
प्रह्लादयति च रक्तं पाण्डुत्वं कामलां जयति ॥१२७॥

अथ खण्डामलकीनं रसायनम् ।

स्विन्नपीडितकूष्माण्डतुलार्धं भृष्टमाज्यके ।
प्रस्थार्धे खण्डतुल्यं तु पचेदामलकीरसात् ॥ १२८ ॥
प्रस्थे तु स्विन्नकूष्माण्डरसप्रस्थे च घट्टयन् ।
दर्वीलेपं गते तस्मिन् चूर्णीकृत्य विनिक्षिपेत् ॥ १२९ ॥
द्वे द्वे पले कणाजाज्योः शुण्ठीनां मरिचस्य च ।
पलं तालीसधान्याकचातुर्जातकमुस्तकम् ॥ १३० ॥
कर्षप्रमाणं प्रत्येकं प्रस्थार्धं माक्षिकस्य च ।
पक्तिशूलं निहन्त्येतद्दोषत्रयकृतं च यत् ॥ १३१ ॥
छर्द्यम्लपित्तमूर्च्छाश्च श्वासकासावरोचकम् ।
हृच्छूलं रक्तपित्तं च पृष्ठशूलं प्रणाशयेत् ॥ १३२ ॥
रसायनमिदं श्रेष्ठं खण्डामलकसंज्ञकम् ।

अथ नारिकेलखण्डः ।

कुडवमितमिह स्यान्नारिकेरं सुपिष्टं
पलपरिमितसर्पिःपाचितं खण्डतुल्यम् ।

निजपयसि तदेतत्प्रस्थमात्रे विपक्कं
गुडवदथ सुशीते शाणभागान् क्षिपेच्च ॥ १३३
धान्याकपिप्पलिपयोदतुगाद्विजीरं
शाणं त्रिजातसितकेसरवह्निचूर्ण्यं ।
हन्त्यम्लपित्तमरुचिक्षयमस्रपित्तं
शूलं च मांसबलपौरुषकारि श्रेष्ठम् ॥ १३४ ॥

शूले कतिपययोगाः ।

कलायसक्तुभागौ द्वौ लोहचूर्णस्य चापरः ।
कारवेल्लपलाशानां रसेनैतद्विमर्दयेत् ॥ १३५ ॥
कर्षमात्रामतश्चैकां भक्षयेद्गुटिकां नरः ।
मण्डानुपानां सा हन्ति जरत्पित्तं सुदुःसहम् ॥ १३६
लिह्याद्वा त्रिफलाचूर्णं पित्ते क्षौद्रसमन्वितम् ।
त्रिवृच्चूर्णेन संयुक्तं लिह्यात्क्षौद्रेण हृद्रदे ॥ १३७ ॥

अन्नद्रवशूलचिकित्सा ।

पित्तान्तं वमनं कृत्वा कफान्तं च विरेचनम् ।
अन्नद्रवे तु तत्कार्यं जरत्पित्ते यदीरितम् ॥ १३८ ॥
आमपक्काशये शुद्धे गच्छेदन्नद्रवः शमम् ।
मापेण्डरी सतुपिका खिन्ना सर्पिर्युता हिता॥ १३९।
गोधूममण्डकं तत्र सर्पिषा गुडसंयुतम् ।
ससितं शीतदुग्धेन मृदितं वा हितं मतम् ॥ १४० ।
शालितण्डुलमण्डं वा कवोष्णं सिक्थवर्जितम् ।
वाट्यं क्षीरेण संसिद्धं घृतपूरं सशर्करम् ॥ १४१ ॥
शर्करां भक्षयित्वा वा क्षीरमुत्क्वथितं पिबेत् ।
पटोलपत्रयूषेण खादेच्चणकसक्तुकान् ॥ १४२ ॥
अन्नद्रवः सुदुर्ज्ञेयो दुश्चिकित्स्यो महागदः ।
तेनास्य प्रशमने परं यत्नं समाचरेत् ॥ १४३ ॥

अन्नद्रवे जरत्पित्ते वह्निर्मन्दो भवेद्यतः ।
तस्मादत्रान्नपानानि मात्राहीनानि कल्पयेत् ॥ १४४ ॥
अन्नद्रवे तु यत्प्रोक्तं जरत्पित्तेऽपि तद्विधम् ।
इति संक्षेपतः प्रोक्तमन्नद्रवचिकित्सितम् ॥ १४५ ॥

परिणामशूले त्रिफलालोहम् ।

परिणामशूलमपहन्ति हठान्मधुलोहचूर्णसहिता त्रिफला ।
कथितोदकेन मृदितं गलितं लघुशङ्खभस्म यदि वा बहुशः १४६

शूले हरिणशृङ्गयोगः ।

पुटप्रदग्धं हरिणस्य शृङ्गं घृतेन गव्येन निपीयमानम् ।
हृत्पृष्ठशूलार्तिमपोहति द्राङ्नृणां हिताहारविहारभाजाम् १४७

शूले रुचकादियोगः ।

रुचकहिङ्गुमहौषधमिश्रितं
पिबति यः कथितं सलिलं नरः ।
अभिभवन्ति न तं कटिपृष्ठहृ-
त्स्तनभवशूलरुजो विषमा अपि ॥ १४८ ॥
सौवर्चलं जीरकमम्लवेतसं
तुल्यानि तेषां मरिचं सचित्रकम् ।
सुपक्कलुङ्गस्य रसेन भावितं
सोष्णोदकं वातजशूलनाशनम् ॥ १४९ ॥

शूले निदिग्धिकादिक्वाथः ।

निदिग्धिकायुगलपुष्करमातुलुङ्ग-
बिल्वार्द्रमूलसहितोपलभेदयुक्तम् ।
क्वाथं च गोक्षुरयुतं सकलिङ्गमूलं
सेवेत्तथा यवजहिङ्गुमयं प्रपक्कम् ॥ १५० ॥

शूले कतिपययोगाः ।

सौवर्चलं मागधमातुलुङ्गबीजाजमोदात्रिवृताभयाख्यैः ।
शुण्ठीबिडं तुम्बुरुहिङ्गुचव्यमेषां पिबेच्छूलगदी कषायम् ॥१५१

लाजासमं कर्परभृष्टमुद्गमिश्रं कणासैन्धवजीरकेण।
मण्डं पिबेच्छूलहरं सबालवृद्धा सगर्भा महिला हिताय१५२
रसेन मातुलुङ्गस्य संप्रयुक्तं गुडं पिबेत्।
अथवा सैन्धवं चापि नाभिशूलनिवारणम् ॥ १५३ ॥
पटोलहिङ्गुशुण्ठीनां क्वाथः क्वथितशीतलः।
हृदये कटिपृष्ठे च शूलं हन्ति निषेवितः ॥ १५४ ॥

इति श्रीसोढलवैद्यविरचिते गदनिग्रहे कायचिकित्साखण्डे शूलपरिणामशूलजरत्पित्तान्नद्रवाधिकारस्त्रयोविंशतितमः।

---

## अथोदावर्तानाहाधिकारश्चतुर्विंशतितमः।

अथात उदावर्तानाहनिदानं व्याख्यास्यामः।

उदावर्तनिदानम्।

वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रिय-।
क्षुत्तृष्णोच्छ्वासनिद्राणां धृत्योदावर्तसंभवः ॥ १ ॥

त्रयोदशविधवेगनिरोधजोदावर्तलक्षणम्।

वातमूत्रपुरीषाणां सङ्गो ध्मानं क्लमो रुजः।
जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात् ॥ २ ॥
आटोपशूलौ परिकर्तिका च सङ्गः पुरीषस्य तथोर्ध्ववातः।
पुरीषमास्यादथवा निरेति पुरीषवेगेऽभिहते नरस्य ॥ ३ ॥
बस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा।
विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ॥ ४ ॥
मन्यागलस्तम्भशिरोविकारा जृम्भोपघातात्पवनात्मकाः स्युः।
तथाऽक्षिनासावदनामयाश्च भवन्ति तीव्राः सह कर्णरोगैः ॥ ५ ॥
आनन्दजं वाऽप्यथ शोकजं वा नेत्रोदकं प्राप्तममुञ्चतो हि।
शिरोगुरुत्वं नयनामयाश्च भवन्ति तीव्राः सह पीनसेन ॥ ६ ॥
मन्यास्तम्भं शिरःशूलमर्दितार्धावभेदकौ।
इन्द्रियाणां च दौर्बल्यं क्षवथोः स्याद्विनिग्रहात् ॥ ७ ॥

कण्ठास्यपूर्णत्वमतीव तोदः कूजश्च वायोरथवाऽप्रवृत्तिः ।
उद्गारवेगेऽभिहते भवन्ति जन्तोर्विकाराः पवनप्रसूताः ॥ ८ ॥

कण्डूकोठारुचिव्यङ्गशोफपाण्ड्वामयज्वराः ।
कुष्ठवीसर्पहृल्लासाश्छर्दिनिग्रहजा गदाः ॥ ९ ॥

मूत्राशये वै गुदमुष्कयोश्च शोफो रुजा मूत्रविनिग्रहश्च ।
शुक्राश्मरी तत्स्रवणं भवेच्च ते ते विकारा विहते तु शुक्रे ॥१०॥
तन्द्राङ्गमर्दावरुचिः श्रमश्च क्षुधोऽभिघातात्कृशता च दृष्टेः ।
कण्ठास्यशोषः श्रवणावरोधस्तृष्णाभिघाताद्धृदयव्यथा च॥११॥
श्रान्तस्य निःश्वासविनिग्रहेण हृद्रोगमोहावथवापि गुल्मः ।
जृम्भाऽङ्गमर्दोऽक्षिशिरोतिजाड्यं निद्राभिघातादथवापि तन्द्रा॥

दोषजोदावर्तलक्षणम् ।

वायुः कोष्ठानुगो रूक्षैः कषायकटुतिक्तकैः ।
भोजनैः कुपितः सद्य उदावर्तं करोति च ॥ १३ ॥
वातमूत्रपुरीषाश्रुकफमेदोवहानि वै ।
स्रोतांस्युदावर्तयति पुरुषं चातिवर्तयेत् ॥ १४ ॥
ततो हृद्बस्तिशूलार्तो हृल्लासारतिपीडितः ।
वातमूत्रपुरीषाणि कृच्छ्रेण लभते नरः ॥ १५ ॥
श्वासकासप्रतिश्यायदाहमोहतृषाज्वरान् ।
वमिहिक्काशिरोरोगमनःश्रवणविभ्रमान् ॥ १६ ॥
बहूनन्यांश्च लभते विकारान् वातकोपजान् ।

आनाहलक्षणम् ।

आमं शकृद्वा निचितं क्रमेण भूयो विबद्धं विगुणानिलेन ।
प्रवर्तमानं न यथास्वमेनं विकारमानाहमुदाहरन्ति ॥ १७ ॥
तस्मिन् भवन्त्यामसमुद्भवे तु तृष्णाप्रतिश्यायशिरोभितापाः ।
आमाशये शूलमथो गुरुत्वं हृल्लास उद्गारविघातनं च ॥१८॥

स्तम्भः कटीपृष्ठपुरीषमूत्रे शूलोऽथ मूर्च्छा शकृतश्च छर्दिः।
श्वासश्च पक्वाशयजे भवन्ति तथाऽलसोक्तानि च लक्षणानि१९

आनाहोदावर्तयोरसाध्यलक्षणम्।

तृष्णार्दितं परिक्लिष्टं क्षीणं शूलैरुपद्रुतम्।
शकृद्वमन्तमानाहमुदावर्तं च संत्यजेत्॥ २०॥

इति त्रयोदशविधवेगनिरोधजोदावर्तानाहनिदानं समाप्तम्।

अथ त्रयोदशविधवेगनिरोधजोदावर्तानाहचिकित्सा।

उदावर्ते सामान्यचिकित्सा।

त्रिवृत्सुधापत्रतिलादिशाकं ग्राम्यौदकानूपरसैर्यवान्नम्।
अन्यैश्च सृष्टानिलमूत्रविड्भिरद्यात् प्रसन्नां गुडसीधुपायी॥२१॥

आस्थापनं मारुतजे स्निग्धस्विन्नस्य शस्यते।
पुरीषजे तु कर्तव्यो विधिरानाहिकस्तु यः॥ २२॥
क्षीरवैतरणौ बस्ती युञ्जीतात्र विचक्षणः।

उदावर्ते श्यामादिगणः।

श्यामा दन्ती द्रवन्तीत्वक्महाश्यामा स्नुही त्रिवृत्॥२३॥
सप्तला शङ्खिनी श्वेता राजवृक्षः सतिल्वकः।
काम्पिल्लकः करञ्जस्तु हेमक्षीरी त्वयं गणः॥ २४॥
सर्पिस्तैलरजःक्वाथकल्केष्वन्यतमेन तु।
उदावर्तोदरानाहविषगुल्मविनाशनः॥ २५॥

विड्विबन्धे त्रिवृदादिवटिका।

त्रिवृत्कृष्णाहरीतक्यो द्विचतुष्पञ्चभागिकाः।
गुटिका गुडतुल्यास्ता विड्विबन्धगदापहाः॥ २६॥

उदावर्ते हरीतक्यादिचूर्णम्।

हरीतकीयवक्षारपीलूनि त्रिवृता तथा।
घृतैश्चूर्णमिदं पेयमुदावर्तविनाशनम्॥ २७॥

उदावर्ते हिङ्ग्वाद्यं द्विरुत्तरं चूर्णम्।

हिङ्गु कुष्ठं वचा स्वर्जिविडं चेति द्विरुत्तरम्।
मद्येन पीतं तच्चूर्णमुदावर्तप्रणाशनम्॥ २८॥

उदावर्ते नाराचचूर्णम् ।

खण्डपलं त्रिवृता समसुपकुल्याकर्षचूर्णितं श्लक्ष्णम् ।
प्राग्भोजने च समधु बिडालपदकं लिहेत् प्राज्ञः॥२९॥
एतद्गाढपुरीषे पित्ते सकफे च विनियोज्यम् ।
स्वादुर्नृपयोग्योऽयं चूर्णो नाराचको नाम्ना ॥ ३० ॥

उदावर्ते कतिपयवर्तियोगाः ।

हिङ्गुमाक्षिकसिन्धूत्थैः पक्त्वा वर्तिं सुवर्तिताम् ।
घृताभ्यक्तां गुदे दद्यादुदावर्तविनाशिनीम् ॥ ३१ ॥
मदनं पिप्पली कुष्ठं वचा गौराश्च सर्षपाः ।
गुडक्षारसमायुक्ता फलवर्तिः प्रशस्यते ॥ ३२ ॥
आगारधूमसिन्धूत्थतैलयुक्ताम्लिकाफलम् ।
क्षुण्णनिर्गुण्डिपत्रं वा स्विन्ने पायौ क्षिपेद्बुधः ॥ ३३ ॥

मूत्रनिरोधजोदावर्तप्रतीकारः ।

सौवर्चलाढ्यां मदिरां मूत्रे त्वभिहते पिबेत् ।
एलां वाऽप्यथ मद्येन क्षीरं वारि पिबेदथ ॥ ३४ ॥
दुस्पर्शास्वरसं वाऽपि कषायं ककुभस्य वा ।
एर्वारुबीजतोयेन पिबेद्वा लवणीकृतम् ॥ ३५ ॥
पञ्चमूलीशृतं क्षीरं द्राक्षारसमथापि वा ।
सर्वथैवोपयुञ्जीत मूत्रकृच्छ्राश्मरीविधिम् ॥ ३६ ॥

विविधोदावर्तचिकित्सा ।

स्नेहस्वेदैरुदावर्तं जृम्भजं समुपक्रमेत् ।
अश्रुमोक्षोऽश्रुजे कार्यः स्निग्धस्विन्नस्य यत्नतः ॥ ३७ ॥
क्षवजे क्षवपत्रेण घ्राणस्थेनानयेत्क्षवम् ।
उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत् ॥ ३८ ॥
छर्द्याघाते तथा दोषं नस्यस्नेहादिभिर्जयेत् ।
वस्तिशुद्धिकरैर्द्रव्यैश्चतुर्गुणजलं पयः ॥ ३९ ॥
आचारिनाशात् कथितं पीतवन्तं प्रकाङ्क्षितम् ।
रमयेयुः प्रिया नार्यः शुक्रोदावर्तिनं नरम् ॥ ४० ॥

अत्राभ्यङ्गावगाहाश्च मदिराश्चरणायुधाः ।
शालिः पयो निरूहाश्च हितं मैथुनमेव च ॥ ४१ ॥
क्षुद्विघाते स्निग्धमुष्णमल्पमल्पं च भोजनम् ।
तृष्णाघाते पिबेन्मन्थं यवागूं वा सुशीतलाम् ॥ ४२ ॥
रसेनाद्यात् सुविश्रान्तः श्रमश्वासातुरो नरः ।
निद्राघाते पिबेत्क्षीरं स्वप्याच्चेष्टकथारतः ॥ ४३ ॥

उदावर्तचिकित्साया आनाहेऽप्यतिदेशः ।

आनाहेऽपि प्रयुञ्जीत उदावर्तहरीं क्रियाम् ।

आनाहे वचादिचूर्णम् ।

वचाभयाचित्रकयावशूकान् सपिप्पलीकातिविषान् सकुष्ठान् ।
उष्णाम्बुनाऽऽनाहविमूढवातान् पीत्वा जयेदाशु हितौदनाशी॥

आनाहे त्रिवृदादिवटिका ।

त्रिवृद्धरीतकीश्यामाः स्नुहीक्षीरेण भावयेत् ।
वटिका मूत्रपीतास्ताः श्रेष्ठास्त्वानाहभेदने ॥ ४५ ॥

आनाहे वर्तियोगाः ।

राढधूमबिडव्योषगुडमूत्रैर्विपाचिता ।
गुदेऽङ्गुष्ठसमा वर्तिर्निधेयाऽऽनाहशूलनुत् ॥ ४६ ॥
वर्तिस्त्रिकटुकसैन्धवसर्षपगृहधूममदनफलसहितैः ।
मधुनि गुडे वाऽङ्गुष्ठप्रमाणिका वह्निना पक्वा ॥ ४७ ॥
वर्तिरियं दृष्टफला शनैः प्रणिहिता गुदे क्षिप्ता ।
आनाहोदावर्तोदरगुल्मविनाशिनी कथिता ॥ ४८ ॥

उदावर्ते शुष्कमूलकादिघृतम् ।

मूलकं शुष्कमामं च वर्षाभूमूलपञ्चकम् ।
आरेवतफलं चाप्सु पक्त्वा तेन पचेद्घृतम् ।
तत्पीयमानं शमयेदुदावर्तमशेषतः ॥ ४९ ॥

इति श्रीवैद्यसोढलप्रथिते गदनिग्रहे कायचिकित्साखण्डे त्रयोदशविधवेग-
निरोधजोदावर्ताधिकारश्चतुर्विंशतितमः ॥ २४ ॥

## अथ गुल्माधिकारः पञ्चविंशतितमः ।

अथातो गुल्मनिदानं व्याख्यास्यामः ।

गुल्मसंप्राप्तिः ।

उदावर्तं निरूप्यैवमानाहं तदनन्तरम् ।
प्रायो वातप्रधानत्वाद्गुल्मश्चाप्यभिधीयते ॥ १ ॥
दुष्टा वातादयोऽत्यर्थं मिथ्याहारविहारतः ।
कुर्वन्ति पञ्चधा गुल्मं कोष्ठान्तर्ग्रन्थिरूपिणम् ॥ २ ॥
तस्य पञ्चविधं स्थानं पार्श्वहृन्नाभिबस्तयः ।
हृन्नाभ्योरन्तरे ग्रन्थिः संचारी यदि वाऽचलः ॥ ३ ॥
वृत्तश्चैवोपचयवान् स गुल्म इति कीर्तितः ॥
स व्यस्तैर्जायते दोषैः समस्तैर्वापि चोच्छ्रितैः ।
पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चापरः ॥ ४ ॥

गुल्मपूर्वरूपम् ।

उद्गारबाहुल्यपुरीषबन्धतृप्त्यक्षमत्वान्त्रविकूजनानि ।
आटोपमाध्मानमपक्तिशक्तिरासन्नगुल्मस्य वदन्ति चिह्नम् ॥५॥

सर्वगुल्मसामान्यलक्षणम् ।

अरुचिं कृच्छ्रविण्मूत्रवातताऽन्त्रविकूजनम् ।
आनाहं चोर्ध्ववातत्वं सर्वगुल्मेषु लक्षयेत् ॥ ६ ॥

वातगुल्मस्य निदानसंप्राप्तिपूर्वकं लक्षणम् ।

रूक्षान्नपानं विषमातिमात्रं विचेष्टनं वेगविनिग्रहश्च ।
शोकोऽभिघातोऽतिमलक्षयश्च निरन्नता चानिलगुल्महेतुः ॥७॥
यः स्थानसंस्थानरुजां विकल्पं विड्वातसङ्गं गलवक्त्रशोषम् ।
श्यावारुणत्वं शिशिरज्वरं च हृत्कुक्षिपार्श्वांसशिरोरुजं च ॥८॥
करोति जीर्णेऽभ्यधिकं प्रकोपं भुक्ते मृदुत्वं समुपैति यश्च ।
वातात्स गुल्मो न च तत्र रूक्षं कषायतिक्तं कटु चोपशेते ॥९॥

पित्तगुल्मस्य निदानसंप्राप्तिपूर्वकं लक्षणम् ।

कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्रोधातिमद्यार्कहुताशसेवा ।
आमाभिघातो रुधिरं च दुष्टं पैत्तस्य गुल्मस्य निमित्तमुक्तम्१०
ज्वरः पिपासा वदनाङ्गरागः शूलं महज्जीर्यति भोजने च ।
स्वेदो विदाहो व्रणवच्च गुल्मः स्पर्शासहः पैत्तिकगुल्मरूपम्११

कफगुल्मस्य निदानसंप्राप्तिपूर्वकं लक्षणम् ।

शीतं गुरु स्निग्धमचेष्टनं च संपूरणं प्रस्वपनं दिवा च ।
गुल्मस्य हेतुः कफसंभवस्य सर्वस्तु दृष्टो निचयात्मकस्य॥१२॥
स्तैमित्यशीतज्वरगात्रसादहृल्लासकासारुचिगौरवाणि ।
शैत्यं रुगल्पा कठिनोन्नतत्वं गुल्मस्य रूपाणि कफात्मकस्य१३

द्वन्द्वजगुल्मलक्षणम् ।

निमित्तलिङ्गान्युपलभ्य गुल्मे द्विदोषजे दोषबलाबलं च ।
व्यामिश्रलिङ्गानपरांस्तु गुल्मांस्त्रीनादिशेदौषधकल्पनार्थम् १४

त्रिदोषजगुल्मलक्षणम् ।

महारुजं दाहपरीतमश्मवद्घनोन्नतं शीघ्रविदाहि दारुणम् ।
मनःशरीराग्निबलापहारिणं त्रिदोषजं गुल्ममसाध्यमादिशेत् १५

रक्तगुल्मलक्षणम् ।

नवप्रसूताऽहितभोजना या या चामगर्भं विसृजेदृतौ वा ।
क्रुद्धो मरुत्तत्र निगृह्य रक्तं करोति गुल्मं सरुजं सदाहम् ॥१६
पैत्तस्य लिङ्गेन समानलिङ्गं विशेषणं चाप्यपरं निबोध ।
यः स्पन्दते पिण्डित एव नाङ्गैश्चिरात् सशूलः समगर्भलिङ्गः ॥
स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः ।

गुल्मस्यासाध्यलक्षणानि ।

संचितः क्रमशो गुल्मो महावास्तुपरिग्रहः ।
कृतमूलः शिरानद्धो यदा कूर्म इवोन्नतः ॥ १८ ॥
दौर्बल्यारुचिहृल्लासकासाध्मानवमिज्वरैः ।
तृष्णातन्द्राप्रतिश्यायैर्युज्यते न स सिध्यति ॥ १९ ॥

गृहीत्वा सज्वरं श्वासच्छर्द्यतीसारपीडितम् ।
हृन्नाभिहस्तपादेषु शोफः कर्षति गुल्मिनम् ॥ २० ॥
श्वासशूलपिपासान्नविद्वेषग्रन्थिमूढताः ।
जायन्ते दुर्बलत्वं च गुल्मिनो मरणाय वै ॥ २१ ॥
इति गुल्मनिदानम् ।

---

अथातो गुल्मचिकित्सितं व्याख्यास्यामः ।
सर्वगुल्मे सामान्यचिकित्सा ।

लङ्घनं दीपनं स्निग्धमुष्णं वातानुलोमनम् ।
बृंहणं च भवेद्यच्च तद्धितं सर्वगुल्मिनाम् ॥ २२ ॥
सर्वत्र प्रथमं गुल्मे स्नेहस्वेदोपपादिते ।
या क्रिया क्रियते सिद्धिं सा याति न विरूक्षिते॥२३॥
गुल्मिनामनिलशान्तिरुपायैः सर्वशो विधिवदाचरणीया ।
मारुतेऽत्र विजितेऽन्यमुदीर्णं दोषमल्पमपि कर्म निहन्यात् २४
स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्बणम् ।
भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥ २५ ॥
वातगुल्मचिकित्सा ।
प्रागेव वातिके गुल्मे सुस्निग्धं स्वेदितं नरम् ।
रेचितं स्नेहरेकैश्च निरूहैः सानुवासनैः ॥ २६ ॥
उपाचरेद्भिषक्प्राज्ञो मात्राकालविभागवित् ।
सुखोष्णा जाङ्गलरसाः सुस्निग्धाव्यक्तसैन्धवाः ॥ २७॥
कटुत्रिकसमायुक्ता हिताः पानेषु गुल्मिनाम् ।
कुम्भीपिण्डेष्टिकास्वेदान् कारयेत् कुशलो भिषक्॥२८॥
उपनाहाश्च कर्तव्याः सुखोष्णाः शाल्वणादयः ।
स्नानावसेको रक्तस्य बाहुमध्ये शिराव्यधः ॥ २९ ॥
स्वेदोऽनुलोमनं चैव प्रशस्तं सर्वगुल्मिनाम् ।
मातुलुङ्गरसो हिङ्गु दाडिमं बिडसैन्धवम् ॥ ३० ॥

सुरामण्डेन पातव्यं वातगुल्मरुजापहम् ।
पिबेदेरण्डतैलं वा वारुणीमण्डमिश्रितम् ॥ ३१ ॥
तदेव तैलं पयसा वातगुल्मी पिबेन्नरः ।
स्वर्जिकाकुष्ठसहितः क्षारः केतकिजोऽपि वा ॥ ३२ ॥
तैलेन पीतः शमयेद्गुल्मं पवनसंभवम् ।
वातगुल्मप्रतीकारे प्रकुप्यति यदा कफः ।
शस्तमुल्लेखनं तत्र चूर्णाद्याश्च कफापहाः ॥ ३३ ॥
यदि कुप्यति वा पित्तं विरेकस्तत्र भेषजम् ।
दोषैरप्यशान्तौ च गुल्मे शोणितमोक्षणम् ॥ ३४ ॥

पित्तगुल्मचिकित्सा ।

काकोल्याद्यैर्महातिक्तैर्वासाद्यैः पित्तगुल्मिनम् ।
स्नेहयेत्स्रंसयेत्पश्चाद्योजयेद्बस्तिकर्मणा ॥ ३५ ॥
स्निग्धोष्णजे पित्तगुल्मे कम्पिल्लं मधुना लिहेत् ।
रेचनार्थे रसं वाऽथ द्राक्षायाः सगुडं पिबेत् ॥ ३६ ॥

पच्यमानगुल्मलक्षणं तच्चिकित्सा च ।

दाहशूलादिसंक्षोभस्वप्ननाशारुचिज्वरैः ।
विदह्यमानं जानीयाद्गुल्मं तमुपनाहयेत् ॥ ३७ ॥

पक्वगुल्मलक्षणं तच्चिकित्सा च ।

पक्वस्तु पीडितोन्नामी बहिस्तुङ्गोऽल्पवेदनः ।
श्यावो बस्तिनिभस्तत्र वेधशोधनरोपणम् ॥ ३८ ॥
स्वयमूर्ध्वमधो वापि सर्वो दोषः प्रपद्यते ।
द्वादशाहमुपेक्षेत रक्षन्नन्यानुपद्रवान् ॥ ३९ ॥
परं तु शोधनं सर्पिः शुद्धे समधुतिक्तकम् ।

कफगुल्मचिकित्सा ।

स्नेहोपनाहनस्वेदतीक्ष्णस्रंसनबस्तिभिः ॥ ४० ॥
योगैश्च वातगुल्मोक्तैः श्लेष्मगुल्ममुपाचरेत् ।
पञ्चमूलीशृतं तोयं पुराणं वारुणीरसम् ॥ ४१ ॥

कफगुल्मी पिबेत्काले जीर्णं माध्वीकमेव वा।
यवानीचूर्णितं तक्रं बिडेन लवणीकृतम् ॥ ४२ ॥
पिबेत्संदीपनं वातमूत्रवर्चोनुलोमनम्।

द्वन्द्वत्रयजगुल्मचिकित्सा।

व्यामिश्रदोषे व्यामिश्र एष एव क्रियाक्रमः ॥ ४३ ॥
सन्निपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः।

गुल्मे वचाद्यं चूर्णम्।

वचाविडाभयाशुण्ठीहिङ्गुकुष्ठाग्निदीप्यकाः ॥ ४४ ॥
द्वित्रिषट्चतुरेकाष्टसप्तपञ्चांशकाः क्रमात्।
चूर्णं मद्यादिभिः पीतं गुल्मानाहोदरापहम्।
शूलार्शःश्वासकासघ्नं ग्रहणीदीपनं परम् ॥ ४५ ॥

गुल्मे यवान्यादिचूर्णम्।

यवानीहिङ्गुसिन्धूत्थक्षारसौवर्चलाभयाः।
सुरामण्डेन पातव्या गुल्मशूलनिषूदनाः ॥ ४६ ॥

गुल्मभेदनार्थं हिङ्ग्वादियोगः।

हिङ्गुपुष्करमूलानि तुम्बरूणि हरीतकी।
श्यामा विडं सैन्धवं च यवक्षारं महौषधम् ॥ ४७ ॥
यवकाथोदकेनैतद्घृतभृष्टं विपाचयेत्।
तेनास्य भिद्यते गुल्मः सशूलः सपरिग्रहः ॥ ४८ ॥

गुल्मे भेदनार्थं वचादियोगः।

वचां हरीतकीं हिङ्गु सैन्धवं साम्लवेतसम्।
यवक्षारं यवानीं च पिबेदुष्णेन [illegible] ॥ ४९ ॥
एतद्धि [illegible]
भिनत्ति सप्तरात्रेण [illegible] ५० ॥

गुल्मे नादेयाद्यं लवणम् ।

नादेयीकुटजार्कशिग्रुबृहतीस्नुग्बिल्वभल्लातक-
व्याघ्रीकिंशुकपारिभद्रकजटापामार्गनीपाग्निकान् ।
वासामुष्ककपाटलाः सलवणा दग्ध्वा जले पाचितं
हिङ्ग्वादिप्रतिवापमेतदुदितं गुल्मोदराष्ठीलिषु ॥ ५२ ॥

रक्तगुल्मचिकित्सा ।

रौधिरस्य तु गुल्मस्य गर्भकालव्यतिक्रमे ।
स्निग्धस्विन्नशरीरायै दद्यात्स्नेहविरेचनम् ॥ ५३ ॥
पलाशक्षारपात्रे द्वे द्वे पात्रे तैलसर्पिषोः ।
गुल्मशैथिल्यजननीं पक्त्वा मात्रां प्रयोजयेत् ॥ ५४ ॥
इक्ष्वाकुमदनक्षारकिण्वदन्तीकणागुडैः ।
ससर्षपसुधाक्षीरमाक्षिकैः क्षौमलक्तकान् ॥ ५५ ॥
भावितान् धारयेद्योन्यां दुष्टरक्तप्रवर्तकान् ।
शताह्वाचिरबिल्वत्वग्दारुभार्गीकणोद्भवः ॥ ५६ ॥
कल्कः पीतो हरेद्गुल्मं तिलकाथेन रक्तजम् ।
विशेषमपरं चास्याः शृणु रक्तप्रभेदनम् ॥ ५७ ॥
पलाशक्षारतोयेन सिद्धं सर्पिः पिबेच्च सा ।
उष्णैर्वा भेदयेद्भिन्ने विधिरसृग्दरो हितः ॥ ५८ ॥
तिलक्वाथो गुडव्योषहिङ्गुभार्गीयुतो भवेत् ।
पानं रक्तभवे गुल्मे नष्टे पुष्पे च योषिताम् ॥ ५९ ॥
पीतो धात्रीरसो युक्त्या किंशुकक्षारसाधितः ।
क्षारत्र्यूषणसंयुक्ता मदिरा वाऽस्रगुल्मजित् ॥ ६० ॥

वातगुल्मे त्र्यूषणाद्यं घृतम् ।

त्र्यूषणत्रिफलाधान्यविडङ्गचव्यचित्रकैः ।
कल्कीकृतैर्घृतं सिद्धं सक्षीरं वातगुल्मनुत् ॥ ६१ ॥

पित्तगुल्मे द्राक्षाघृतम् ।

द्राक्षामधूकखर्जूरं विदारी सशतावरी ।
परूषकाणि त्रिफला साधयेच्च पलोन्मितान् ॥ ६२ ॥

जलाढके पादशेषे रसमामलकस्य च।
घृतमिक्षुरसं क्षीरमभयाकल्कपादिकम् ॥ ६३ ॥
साधयेत्तु घृतं सिद्धं शर्कराक्षौद्रपादिकम्।
पित्तगुल्महरं सर्पिः सर्वपित्तामयापहम् ॥ ६४ ॥
द्वित्रिप्रभृति यत्र स्युर्द्रव्याणि स्नेहसंविधौ।
तत्र स्नेहसमान्याहुरर्वाक् स्याच्च चतुर्गुणम् ॥ ६५ ॥

कफगुल्मे व्योषाद्यं घृतम्।

सव्योषक्षारलवणं दशमूलशृतं घृतम्।
कफगुल्मं हरत्याशु सहिङ्गुबिडदाडिमम् ॥ ६६ ॥

कफगुल्मे क्षीरषट्पलकं घृतम्।

पिप्पलीपिप्पलीमूलचविकानलनागरैः।
पालिकैः सयवक्षारैः सर्पिः प्रस्थं विपाचयेत् ॥ ६७ ॥
क्षीरप्रस्थेन तत्सर्पिर्हन्ति गुल्मं कफात्मकम्।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ ६८ ॥

सर्वगुल्मे धात्रीषट्पलं घृतम्।

धात्रीफलानां स्वरसे षडङ्गं विपचेद्घृतम्।
शर्करासैन्धवोपेतं तद्धितं सर्वगुल्मिनाम् ॥ ६९ ॥

अविपक्वगुल्मे वृश्चीवाद्योऽरिष्टः।

वृश्चीवमुरुबूकं च वर्षाभूर्बृहतीद्वयम्।
चित्रकं च जलद्रोणे पचेत्पादावशेषितम् ॥ ७० ॥
मागधीचित्रकक्षौद्रलिप्ते कुम्भे निधापयेत्।
मधुनः प्रस्थमावाप्य पथ्याचूर्णार्धसंयुतम् ॥ ७१ ॥
संस्थापितं दशाहं तु जीर्णभक्तः पिबेन्नरः।
अरिष्टोऽयं जयेद्गुल्ममविपक्वं सुदुस्तरम् ॥ ७२ ॥

गुल्मे पथ्यापथ्यविचारः।

बद्धविण्मारुतो गुल्मी भुञ्जीत पयसा यवान्।
कुल्माषान् वा बहुस्नेहान् भक्षयेल्लवणोत्तरान् ॥

वल्लूरं मूलकं मत्स्यान् शुष्कशाकं च वैदलम्।
न खादेदालुकं गुल्मी मधुराणि फलानि च ॥ ७४ ॥

गुल्मे कम्पिल्लकादियोगः।

कम्पिल्लकं हरीतक्यो विडं शिग्रुफलानि च।
श्यामां वचामश्वमूत्रीं(?) विडङ्गान्यम्लवेतसम् ॥७५॥
यवक्षारं यवानीं तु पिबेदुष्णेन वारिणा।
एतद्धि गुल्मनिचयं सशूलं सपरिग्रहम् ॥ ७६ ॥
भिनत्ति सप्तरात्रेण वायुर्वृद्धो यथा घनान्।

गुल्मे श्यामादियोगः।

श्यामा दन्ती त्रिवृत्कुष्ठं यवक्षारो हरीतकी ॥ ७७ ॥
गुग्गुलुश्चेति मूत्रेण पातव्यं गुल्मभेदनम्।

गुल्मे आरोग्यलवणम्।

त्र्यूषणं पिप्पलीमूलं शठी शृङ्गी दुरालभा ॥ ७८ ॥
द्वौ क्षारौ पञ्चलवणं समभागानि चूर्णयेत्।
सन्नीय चूर्णं लवणैः शनैर्मृद्वग्निना पचेत् ॥ ७९ ॥
तदग्निवर्णं निर्धूमं चूर्णं कृत्वा सुशीतलम्।
अङ्गुलग्रहमालोड्य सुरामण्डेन पाययेत् ॥ ८० ॥
मस्त्वारनालमूत्रैस्तु युक्तं स्याद्वातगुल्मजित् ॥ ८१ ॥
शूलवातोदरप्लीहपाण्ड्वामयकिलासजित्।
हन्यादारोग्यलवणं प्रशस्तं कफवातनुत् ॥ ८२ ॥

गुल्मे भल्लातकादियोगाः।

भल्लातकं पिप्पलीं च लोहचूर्णं शिलाजतु।
लशुनं वा प्रयुञ्जीत विधिवद्गुल्मशान्तये ॥ ८३ ॥

वातगुल्मे मरिचाद्यं घृतम्।

मरिचं पिप्पली शुण्ठी कटुकी वह्निहेमकौ।
सुवर्चला वचा क्षारः प्रत्येकं कर्षमात्रकम् ॥ ८४ ॥

पलानि षोडशाज्यस्य सुपक्वं मृदुवह्निना।
वातगुल्मं क्रमीन् हन्ति शुक्रं श्वासमसंशयम् ॥ ८५ ॥

वातगुल्मे बीजपूररसादियोगः।

बीजपूररसो हिङ्गु सैन्धवं विडपूर्वकम्।
लवणं दाडिमं शुक्तं सितया वातगुल्मजित् ॥ ८६ ॥
अम्लवेतसनिर्यासो लवणं विडपूर्वकम्।
रामठं स्वर्जिकाक्षारस्तक्रपीतं च गुल्महृत् ॥ ८७ ॥

वातगुल्मे तुम्बर्वादियोगः।

तुम्बरुः सैन्धवं हिङ्गु पथ्या पुष्करमूलिका।
सुवर्चलाऽशितं वातगुल्महृत्क्षारवारिणा ॥ ८८ ॥

वातगुल्मे विडङ्गादिक्षीरम्।

विडङ्गत्रिफलाव्योषचव्यधान्याग्निकल्कितम्।
शृतं क्षीरेण संसिद्धं पानात्पवनगुल्मजित् ॥ ८९ ॥
स्नेहादष्टगुणं क्षीरं क्षीराच्चोयं चतुर्गुणम्।
क्षीरशेषं प्रकर्तव्यं क्षीरपाके त्वयं विधिः ॥ ९० ॥

गुल्मे हिङ्ग्वाद्यं चूर्णम्।

हिङ्ग्वग्निचव्यलवणत्रयवेतसाम्ल-
क्षारद्वयं त्रिकटुदाडिमतिन्तिडीकम्।
सग्रन्थिकाग्निकशठीहपुषाजगन्धा-
पाठाभयाससितजीरकपुष्कराढ्यम् ॥ ९१ ॥
सोग्रं सधान्यकमिति प्रविधाय चूर्णं
भूयः प्लुतं हि फलमूलसुरारसेन।
उष्णोदकादिपरिपीतमिदं निहन्ति
शूलानि गुल्मगुदजग्रहणीविकारान् ॥ ९२ ॥

इति वैद्यश्रीसोढलविरचिते गदनिग्रहे कायचिकित्साखण्डे
गुल्माधिकारः पञ्चविंशतितमः ॥ २५ ॥

## अथ हृद्रोगाधिकारः षड्विंशतितमः ।

अथातो हृद्रोगनिदानं व्याख्यास्यामः ।

हृद्रोगसंप्राप्तिः ।

हृद्बस्त्योरन्तरे ग्रन्थिर्गुल्मश्चेति निरूपितम् ।
निरूपणप्रसङ्गेन हृद्रोगश्च निरूप्यते ॥ १ ॥
अत्युष्णगुर्वम्लकषायतिक्तश्रमाभिघाताध्यशनप्रसङ्गैः ।
संचिन्तनैर्वेगविधारणैश्च हृदामयः पञ्चविधः प्रदिष्टः ॥ २ ॥
दूषयित्वा रसं दोषा विगुणा हृदयं गताः ।
हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते ॥ ३ ॥

वातजादिभेदेन हृद्रोगलक्षणानि ।

आयाम्यते मारुतजे हृदयं तुद्यते तथा ।
निर्मथ्यते दीर्यते च स्फोट्यते पाट्यतेऽपि च ॥ ४ ॥
तृष्णोष्णदाहचोषाः स्युः पैत्तिके हृदयक्लमः ।
धूमायनं च मूर्च्छा च स्वेदः शोषो मुखस्य च ॥ ५ ॥
गौरवं मुखसंस्रावोऽरुचिः स्तम्भोऽग्निमार्दवम् ।
माधुर्यमपि चास्यस्य बलासावतते हृदि ॥ ६ ॥
विद्यात्त्रिदोषं त्वपि सर्वलिङ्गं तीव्रार्तितोदं क्रिमिजं सकण्डुम् ॥
उत्क्लेदः ष्ठीवनं तोदः शूलं हृल्लासकस्तमः ।
अरुचिः श्यावनेत्रत्वं शोषश्च कृमिजे भवेत् ॥ ७ ॥

हृद्रोगोपद्रवाः ।

क्लमः सादो भ्रमः शोषो ज्ञेयास्तेषामुपद्रवाः ।
कृमिजे क्रिमिजातीनां श्लैष्मिकाणां च ये मताः ॥ ८ ॥

इति हृद्रोगनिदानम् ।

---

अथातो हृद्रोगचिकित्सितं व्याख्यास्यामः ।

हृद्रोगे सामान्यचिकित्सा ।

हृद्रोगिणं स्नेहयित्वा वामयेत्स्रंसयेत्तथा ।
अचिरोत्थं लङ्घयेत्तु हृद्रोगं वातिकादिना ॥ ९ ॥

वातहृद्रोगचिकित्सा ।

वातोपसृष्टे हृदये वामयेत्स्निग्धमातुरम् ।
द्विपञ्चमूलीकाथेन सस्नेहलवणेन च ॥ १० ॥
पिप्पल्येलावचाहिङ्गुयवक्षाराद्दसैन्धवम् ।
सौवर्चलमथो शुण्ठी अजमोदा च चूर्णितम् ॥ ११ ॥
फलधान्याम्लकौलत्थदधिमद्यासवादिभिः ।
पाययेच्छुद्धदेहं च स्नेहेनान्यतमेन वा ॥ १२ ॥
नागरं वा पिबेदुष्णं कषायं चाग्निवर्धनम् ।
कासश्वासानिलहरं शूलहृद्रोगनाशनम् ॥ १३ ॥

पित्तहृद्रोगचिकित्सा ।

श्रीपर्णीमधुकक्षौद्रसितागुडजलैर्वमेत् ।
पित्तोपसृष्टे हृदये, सेवयेन्मधुरैः शृतम् ।
घृतं, कषायान् तूद्दिष्टान् पित्तज्वरविनाशनान् ॥ १४ ॥
शीताः प्रदेहाः परिषेचनानि तथा विरेको हृदि पित्तदुष्टे ।
द्राक्षासिताक्षौद्रपरूषकैः स्याच्छुद्धे च पित्तापहमन्नपानम् ।
पिष्ट्वा पिबेच्चापि सितां जलेन यष्ट्याह्वयं तिक्तकरोहिणीं च १५

हृद्रोगेऽर्जुनत्वग्योगाः ।

अर्जुनस्य त्वचासिद्धं क्षीरं योज्यं हृदामये ।
सितया पञ्चमूल्या वा बलया मधुकेन च ॥ १६ ॥
घृतेन दुग्धेन गुडाम्भसा वा पिबन्ति चूर्णं ककुभत्वचो ये ।
हृद्रोगजीर्णज्वररक्तपित्तं हत्वा भवेयुश्चिरजीविनस्ते ॥ १७ ॥

कफजहृद्रोगचिकित्सा ।

वचानिम्बकषायाभ्यां वान्तं हृदि कफोत्थिते ।
वातहृद्रोगहृच्चूर्णं पिप्पल्यादींश्च योजयेत् ॥ १८ ॥

त्रिदोषजहृद्रोगचिकित्सा ।

त्रिदोषजे लङ्घनमादितः स्यादन्नं तु सर्वेषु हितं विधेयम् ।
हीनादिमध्यत्वमवेक्ष्य चैवं कार्यं त्रयाणामपि कर्म शस्तम् १९

हृद्रोगे पुष्करमूलयोगः ।

चूर्णं पुष्करजं लिह्यान्माक्षिकेन समायुतम् ।
हृच्छूलश्वासकासघ्नं क्षयहिक्कानिवारणम् ॥ २० ॥

हृद्रोगेऽर्जुनयोगाः ।

तैलाज्यगुडविपक्वं चूर्णं गोधूमपार्थजं वापि ।
पिबति पयोऽनु स भवति जितसकलहृदामयः पुरुषः ॥ २१ ॥
गोधूमककुभचूर्णं छागपयोगव्यसर्पिषा पक्वम् ।
मधुशर्करासमेतं हन्ति हृद्रोगमुद्धतं पुंसाम् ॥ २२ ॥
मूलं नागबलायास्तु गवां दुग्धेन पाययेत् ।
हृद्रोगश्वासकासघ्नं ककुभस्य च वल्कलम् ॥ २३ ॥
रसायनं परं बल्यं वातजिन्मातयोजितम् ।
संवत्सरप्रयोगेण जीवेद्वर्षशतं ध्रुवम् ॥ २४ ॥

हृद्रोगे हिङ्ग्वादियोगः ।

हिङ्गूग्रगन्धाविडविश्वकृष्णा कुष्ठाभयाचित्रकयावशूकम् ।
पिबेत्सुसौवर्चलपुष्कराढ्यं यवाम्भसा शूलहृदामयघ्नम् २५

हृद्रोगे दशमूलयोगः ।

दशमूलीकषायस्तु लवणक्षारयोजितः ।
श्वासं कासं सहृद्रोगं गुल्मं शूलं च नाशयेत् ॥ २६ ॥

कृमिहृद्रोगचिकित्सा ।

कृमिहृद्रोगिणं स्निग्धं भोजयेत्पिशितौदनम् ।
दध्ना च पललोपेतं त्र्यहं पश्चाद्विरेचयेत् ॥ २७ ॥
सुगन्धिभिः सलवणैः साजाजीकणशर्करैः ।
विडङ्गाढैर्धान्याम्लं पाययेत विकारभित् ॥ २८ ॥
कृमिजेऽपि पिबेन्मूत्रं विडङ्गामयसंयुतम् ।
हृदि स्थिताः पतन्त्येवमधस्तात्कृमयो नृणाम् ॥ २९ ॥
यवान्नं वितरेच्चास्मै सविडङ्गमतः परम् ।

१ –'शतायुषम्' ख. । २ 'पाययेत्तच्चनुत्तमम्' ख. ।

हृद्रोगे वल्लभकं घृतम्।

मुस्त्यं शतार्धेन हरीतकीनां सौवर्चलस्यापि पलद्वयेन।
सिद्धं घृतं वल्लभकं तु नाम्ना हृच्छ्वासगुल्मोदरमारुतघ्नम्॥३०॥

हृद्रोगे हरीतक्यादिचूर्णम्।

हरीतकी वचा रास्ना पिप्पली विश्वभेषजम्।
शठी पुष्करमूलं च चूर्णं हृद्रोगनाशनम्॥ ३१ ॥

हृद्रोगे पाठादिचूर्णम्।

पाठां वचां यवक्षारमभयामम्लवेतसम्।
दुरालभां चित्रकं च त्र्यूषणं लवणत्रयम्॥ ३२ ॥
शठीं पुष्करमूलं च तिन्तिडीकं सदाडिमम्।
मातुलुङ्गस्य मूलानि सूक्ष्मचूर्णानि कारयेत्॥ ३३ ॥
सुखोदकेन मद्यैर्वा चूर्णान्येतानि पाययेत्।
अर्शः शूलं च हृद्रोगं गुल्मं चापि व्यपोहति॥ ३४ ॥

हृद्रोगे सौवर्चलादिचूर्णम्।

सौवर्चलं शृङ्गवेरं दाडिमं साम्लवेतसम्।
श्वासहृद्रोगशमनमिदं स्याद्धिङ्गुपञ्चमम्॥ ३५ ॥

हृद्रोगे कतिपययोगाः।

हृद्रोगिणं स्नेहयित्वा वामयेत्स्रंसयेत्तथा।
भल्लातपिप्पलीमूलक्वाथोऽयं हन्ति पानतः॥ ३६ ॥
हृद्रोगं गुडसंयुक्तो बीजपूररसोऽथवा।
लवणाम्बुयुतं तैलं हृद्रोगे वातिके पिबेत्।
सिद्धं मूत्रेण वा गुल्मशूलानाहनिवारणम्॥ ३७ ॥

हृद्रोगेऽभयादिघृतम्।

पञ्चाशदभयाकल्कं सौवर्चलपलद्वयम्।
घृतप्रस्थं जले सिद्धं हृद्रोगश्वासगुल्मनुत्॥ ३८ ॥

हृद्रोगे शुण्ठ्याद्यं चूर्णम्।

शुण्ठीसुवर्चलाहिङ्गुदाडिमं साम्लवेतसम्।
चूर्णमुष्णाम्बुना पेयं श्वासहृद्रोगमुक्तये॥ ३९॥

हृद्रोगे पिप्पल्याद्यो योगः।

पिप्पली बीजपूरं च नवनीतयुतं द्वयम्।
हृच्छूलं भक्षितं हन्ति हृद्रोगं चातिदारुणम्॥ ४०॥

इति श्रीवैद्यसोढलप्रथिते गदनिग्रहे कायचिकित्साखण्डे
हृद्रोगाधिकारः षड्विंशतितमः॥ २६॥

---

## अथ मूत्रकृच्छ्राधिकारः सप्तविंशतितमः।

अथातो मूत्रकृच्छ्रनिदानं व्याख्यास्यामः।

मूत्रकृच्छ्रस्य निदानपूर्विका संप्राप्तिः।

व्यायामतीक्ष्णौषधरूक्षमद्यप्रसङ्गनित्यद्रुतपृष्ठयानात्।
आनूपमत्स्याध्यशनादजीर्णात्स्युर्मूत्रकृच्छ्राणि नृणां तथाऽष्टौ॥१
पृथङ्मलाः स्वैः कुपिता निदानैः सर्वेऽथवा कोपमुपेत्य बस्तौ।
मूत्रस्य मार्गं परिपीडयन्ति यदा तदा मूत्रयतीह कृच्छ्रात्॥२

मूत्रकृच्छ्रस्य वातजादिभेदेन लक्षणानि।

तीव्रा रुजो वङ्क्षणबस्तिमेढ्रे स्वल्पं मुहुर्मूत्रयतीह वातात्।
पीतं सरक्तं सरुजं सदाहं मूत्रं मुहुर्मूत्रयतीह पित्तात्॥ ३॥
बस्तेः सलिङ्गस्य गुरुत्वशोथौ मूत्रं सपिच्छं कफमूत्रकृच्छ्रे।
सर्वाणि रूपाणि च सन्निपाताद्भवन्ति तत्कृच्छ्रतमं हि कृच्छ्रम्॥

मूत्रवाहिषु शल्येन क्षतेष्वभिहतेषु च।
मूत्रकृच्छ्रं तदाघाताज्जायते भृशदारुणम्॥ ५॥
वातकृच्छ्रेण तुल्यानि तस्य लिङ्गानि निर्दिशेत्।
शकृतस्तु प्रतीघाताद्वायुर्विगुणतां गतः॥ ६॥
आध्मानं वातशूलं च मूत्रसङ्गं करोति च।
अश्मरीहेतु तत्पूर्वं मूत्रकृच्छ्रमुदाहरेत्॥ ७॥

शुक्रे दोषैरुपहते मूत्रमार्गे विधाविते ।
सशुक्रं मूत्रयेत्कृच्छ्राद्वस्तिमेहनशूलवान् ॥ ८ ॥
अश्मरी शर्करा चैव तुल्यसंभवलक्षणे ।
विशेषं शर्करायास्तु शृणु कीर्तयतो मम ॥ ९ ॥
पच्यमानाऽश्मरी पित्ताच्छोष्यमाणा च वायुना ।
विमुक्तकफसंधाना क्षरन्ती शर्करा मता ॥ १० ॥
हृत्पीडा वेपथुः शूलं कुक्षावग्निश्च दुर्बलः ।
ततो भवति कृच्छ्रं च मूत्रकृच्छ्रं सुदारुणम् ॥ ११ ॥

इति मूत्रकृच्छ्रनिदानम् ।

---

अथातो मूत्रकृच्छ्रचिकित्सितं व्याख्यास्यामः ।

अश्मरीचिकित्साया मूत्रकृच्छ्रेऽप्यतिदेशः ।

अश्मरी शान्तिविधयो य उक्ताः प्रसमीक्ष्य तान् ।
यथादोषं प्रयुञ्जीत स्नेहादिमपि च क्रमम् ॥ १२ ॥

वातिकमूत्रकृच्छ्रचिकित्सा ।

अभ्यञ्जनस्नेहनिरूहवस्तिस्वेदोपनाहोत्तरवस्तिसेकान् ।
स्थिरादिभिर्वातहरैश्च सिद्धान् दद्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥
अमृतां नागरं धात्रीं वाजिगन्धां त्रिकण्टकान् ।
प्रपिबेद्वातरोगार्तः शूलवान्मूत्रकृच्छ्रवान् ॥ १४ ॥

पैत्तिकमूत्रकृच्छ्रचिकित्सा ।

सेकावगाहौ शिशिराः प्रदेहा ग्रैष्मो विधिर्वस्तिपयोनिरूहाः ।
द्राक्षाविदारीक्षुरसैर्घृतैश्च कृच्छ्रेषु पित्तप्रभवेषु कार्याः ॥ १५ ॥

पैत्तिकमूत्रकृच्छ्रे तृणपञ्चमूलम् ।

कुशः काशः सरो दर्भ इक्षुश्चेति तृणोद्भवम् ।
पित्तकृच्छ्रहरं पञ्चमूलं वस्तिविशोधनम् ।
एतत्सिद्धं पयः पीतं मेढ्रगं हन्ति शोणितम् ॥ १६ ॥

पैत्तिकमूत्रकृच्छ्रे शतावर्यादिकाथः ।

शतावरीकाशकुशश्वदंष्ट्राविदारिशालीक्षुकसेरुकाणाम् ।
क्वाथं सुशीतं मधुशर्करात्तं पिबञ्जयेत्पैत्तिकमूत्रकृच्छ्रम् ॥१७॥

पैत्तिकमूत्रकृच्छ्रे हरीतक्यादिकाथः ।

हरीतकीगोक्षुरराजवृक्षपाषाणभिद्धन्वयवासकानाम् ।
क्वाथं पिबेन्माक्षिकसंप्रयुक्तं कृच्छ्रे सदाहे सरुजे विबन्धे॥१८॥

मूत्रकृच्छ्रे गुडामलकयोगः ।

गुडेनामलकं वृष्यं श्रमघ्नं तर्पणं प्रियम् ।
पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रनिवारणम् ॥ १९ ॥

कफजमूत्रकृच्छ्रे एलायोगः ।

मूत्रेण सुरया चाऽपि कदलीस्वरसेन वा ।
कफकृच्छ्रविनाशाय श्लक्ष्णां पिष्ट्वा त्रुटिं पिबेत् ॥२०॥

कफजमूत्रकृच्छ्रचिकित्सा ।

तक्रेण पिष्टं शितिवारकस्य बीजं पिबेत्कृच्छ्रविघातहेतोः ।
पिबेत्तथा तण्डुलधावनेन प्रवालचूर्णं कफमूत्रकृच्छ्रे ॥ २१॥

त्रिदोषजमूत्रकृच्छ्रचिकित्सा ।

सर्वं त्रिदोषप्रभवे तु वायोः स्थानानुपूर्व्या प्रसमीक्ष्य कार्यम् ।
त्रिभ्योऽधिके प्राग्वमनं कफे स्यात्पित्ते विरेकः पवने च बस्तिः॥

मूत्रकृच्छ्रे बृहत्यादिगणः ।

बृहतीधावनीपाठायष्टीमधुकलिङ्गकाः ।
पाचनीयो बृहत्यादिः कृच्छ्रदोषत्रयापहः ॥ २३ ॥

मूत्रकृच्छ्रे गुडक्षारयोगः ।

गुडेन मिश्रितं क्षारं कदूष्णं कामतः पिबेत् ।
मूत्रकृच्छ्रेषु सर्वेषु शर्करावातरोगजित् ॥ २४ ॥

अभिघातजमूत्रकृच्छ्रचिकित्सा ।

तथाऽभिघातजे कुर्यात्सद्योव्रणचिकित्सितम् ।
मूत्रकृच्छ्रे सदा चास्य कार्या वातहरी क्रिया ॥ २५ ॥

पुरीषजमूत्रकृच्छ्रचिकित्सा ।

स्वेदचूर्णक्रियाऽभ्यङ्गो बस्तयः स्युः पुरीषजे ।
क्वाथं गोक्षुरबीजस्य यवक्षारयुतं पिबेत् ॥ २६ ॥
मूत्रकृच्छ्रं शकृज्जं तु कृच्छ्रं शीघ्रं निवारयेत् ।

अश्मरीजमूत्रकृच्छ्रचिकित्सा ।

शर्कराश्मरिकृच्छ्रे तु शर्कराश्मरिनाशनः ॥ २७ ॥

शुक्रविबन्धोत्थमूत्रकृच्छ्रचिकित्सा ।

लेह्यं शुक्रविबन्धोत्थे शिलाजतु समाक्षिकम् ।
वृष्यैर्बृंहितधातोश्च विधेयाः प्रमदोत्तमाः ॥ २८ ॥
एलाहिङ्गुयुतं क्षीरं सर्पिर्मिश्रं पिबेन्नरः ।
मूत्रदोषविशुद्ध्यर्थं शुक्रदोषहरं च तत् ॥ २९ ॥

अश्मरीजमूत्रकृच्छ्रे त्रिकण्टकादियोगः ।

त्रिकण्टकारग्वधदर्भकासदुरालभापर्वतभेदपथ्याः ।
निघ्नन्ति पीता मधुनाऽश्मरीजं संप्राप्तमृत्योरपि मूत्रकृच्छ्रम्३

सर्वमूत्रकृच्छ्रे एलादिचूर्णम् ।

एलाश्मभेदकशिलाजतुपिप्पलीनां
चूर्णानि तण्डुलजलैर्लुलितानि पीत्वा ।
यद्वा गुडेन सहितान्यवलिह्य चैता-
नासन्नमृत्युरपि जीवति मूत्रकृच्छ्री ॥ ३१ ॥

मूत्रकृच्छ्रे लोहयोगः ।

श्लक्ष्णपिष्टमयश्चूर्णं मधुना सह योजितम् ।
मूत्रकृच्छ्रं हरत्याशु त्रिभिर्लेहैर्न संशयः ॥ ३२ ॥

सर्वमूत्रकृच्छ्रे यवक्षारयोगः ।

सितातुल्यो यवक्षारः सर्वकृच्छ्रविनाशनः ।
निदिग्धिकारसो वाऽथ सक्षौद्रः कृच्छ्रनाशनः ॥ ३३

पैत्तिकमूत्रकृच्छ्रे शतावरीघृतं क्षीरं वा ।

शतावरीकाशकुशश्वदंष्ट्राविदारिकेक्ष्वामलकेषु सिद्धम् ।
सर्पिः पयो वा सितया विमिश्रं कृच्छ्रेषु पित्तप्रभवेषु योज्यम् ।

मूत्रकृच्छ्रे त्रिकण्टकाद्यं घृतम्।

त्रिकण्टकैरण्डकुशाद्यभीरुकर्कारुकेक्षुस्वरसेन सिद्धम्।
सर्पिर्गुडार्धांशयुतं प्रपेयं कृच्छ्राश्मरीमूत्रविघातदोषे ॥ ३५ ॥

मूत्रकृच्छ्रे एरण्डमूलादिकषायः।

एरण्डमूलं मधुकाश्मभेदद्रुपाश्वदंष्ट्राकृतमालकृष्णाः।
एलाशिलादित्ययुतः कषायः स मूत्रकृच्छ्रं हरति प्रसह्य ॥३६॥

अश्मरीजमूत्रकृच्छ्रे एलादिकषायः।

त्रुटिहरेणुकणाद्वयष्टिकात्रिकटुकोरुबुकोपलभेदकैः।
शृतमिदं जलमश्मजमुत्कटं जयति साश्मरिमूत्रविनिग्रहम्॥३७

एलोपकुल्यामधुकाश्मभेदकौन्तीश्वदंष्ट्राद्वृषकोरुबूकैः।
शृतं पिबेदश्मजतुप्रगाढं सशर्करं साश्मरिमूत्रकृच्छ्रे ॥ ३८ ॥

त्रिदोषजमूत्रकृच्छ्रे कूष्माण्डरसयोगः।

कूष्माण्डरसमादाय शर्करासहितं पिबेत्।
एतत्रिदोषसंभूतमूत्रकृच्छ्रनिवारणम् ॥ ३९ ॥

मूत्रकृच्छ्रे दुरालभादिकषायः।

दुरालभाश्मभित्पथ्याव्याघ्रीमधुकधान्यकैः।
कृतः काथः सितापीतो मूत्रकृच्छ्रविबन्धनुत्।
दाहं शूलं निहन्त्याशु तमः सूर्योदये यथा ॥ ४० ॥

मूत्रकृच्छ्रे पाषाणभेदादिकषायः।

पाषाणभेदो मधुयष्टिरेलाकृष्णाशिफैरण्डसिताटरूषाः।
स्पृक्का श्वदंष्ट्रा च शिवासमेतैः काथो हरेदुःसहमूत्रकृच्छ्रम् ४१

मूत्रकृच्छ्रे शिवाद्यं चूर्णम्।

शिवा पिप्पलिका द्राक्षा बीजं धवकुरण्टयोः।
कर्कव्याश्च कुबेराख्या बीजं पाषाणभेदतः ॥ ४२ ॥
एषां चूर्णं समांशानां भक्षितं मधुना समम्।
अश्मरीं शर्करां हन्ति मूत्रकृच्छ्रं च दारुणम् ॥ ४३ ॥

मूत्रकृच्छ्रे गुडक्षीरयोगः।

गोक्षीरेण गुडः पीतो मूत्रकृच्छ्रविनाशकृत्।

मूत्रकृच्छ्रे एलायोगः।

एला दध्यम्भसा पीता मूत्रकृच्छ्रहरी मता॥ ४४॥

शर्करायां बीजपूरमूलयोगः।

शीतेन वारिणा घृष्टा बीजपूरस्य मूलिका।
पीता पातयते वेगान्मेहनान्मूत्रशर्कराम्॥ ४५॥

शर्करायां कर्कोटीमूलयोगः।

कर्कोटीमूलिका पीता दशाहं पयसा सह।
भित्वाऽश्मशर्कराः शीघ्रं पातयत्येव खण्डशः॥ ४६॥

इति श्रीवैद्यशोढलमथिते गदनिग्रहे कायचिकित्साखण्डे मूत्रकृच्छ्राधिकारः सप्तविंशतितमः॥ २७॥

---

## अथ मूत्राघाताधिकारोऽष्टाविंशतितमः।

अथातो मूत्राघातनिदानं व्याख्यास्यामः।

मूत्राघातभेदाः।

जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश।
प्रायो मूत्रविघाताद्यैर्वातकुण्डलिकादयः॥ १॥

वातकुण्डलिकालक्षणम्।

रौक्ष्याद्वेगविघाताद्वा वायुर्बस्तौ सवेदनः।
मूत्रमाविश्य चरति विगुणं कुण्डलाकृतिः॥ २॥
मूत्रमल्पाल्पमथवा सरुजं संप्रवर्तते।
वातकुण्डलिकां तां तु विद्याद्व्याधिं सुदारुणम्॥ ३॥

वाताष्ठीलालक्षणम्।

आध्मापयन् बस्तिगुदं रुद्ध्वा वायुः स्थिरोन्नताम्।
कुर्यात्तीव्रार्तिमष्ठीलां मूत्रविण्मार्गरोधिनीम्॥ ४॥

वातबस्तिलक्षणम् ।

वेगं विधारयेद्यस्तु मूत्रस्याकुशलो नरः ।
निरुणद्धि मुखं तस्य बस्तेर्बस्तिगतोऽनिलः ॥ ५ ॥
मूत्रसङ्गो भवेत्तेन बस्तिकुक्षी निपीडयन् ।
वातबस्तिः स विज्ञेयो व्याधिः कृच्छ्रप्रसाधनः ॥ ६ ॥

मूत्रातीतलक्षणम् ।

चिरं धारयतो मूत्रं त्वरया न प्रवर्तते ।
मेहमानस्य मन्दं वा मूत्रातीतः स उच्यते ॥ ७ ॥

मूत्रजठरलक्षणम् ।

मूत्रस्य वेगेऽभिहते तदुदावर्तहेतुकः ।
अपानः कुपितो वायुरुदरं पूरयेद्भृशम् ॥ ८ ॥
नाभेरधस्तादाध्मानं जनयेत्तीव्रवेदनाम् ।
तन्मूत्रजठरं विद्यादधोबस्तिनिरोधनम् ॥ ९ ॥

मूत्रोत्सङ्गलक्षणम् ।

बस्तौ वा यदि वा नाले मणौ वा यस्य देहिनः ।
मूत्रं प्रवृत्तं सज्जेत सरक्तं वा प्रवाहतः ॥ १० ॥
स्रवेच्छनैरल्पमल्पं सरुजं वाथ नीरुजम् ।
विगुणानिलजो व्याधिः स मूत्रोत्सङ्गसंज्ञितः ॥ ११ ॥

मूत्रक्षयलक्षणम् ।

रूक्षस्य क्लान्तदेहस्य बस्तिस्थौ पित्तमारुतौ ।
मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ॥ [illegible]

मूत्रग्रन्थिलक्षणम् ।

अन्तर्बस्तिमुखे वृत्तः स्थिरोऽल्पः [illegible]
अश्मरीतुल्यरुग्ग्रन्थिर्मूत्रग्रन्थिः स [illegible] ॥ [illegible]

मूत्रशुक्रलक्षणम् ।

मूत्रितस्य स्त्रियं यातो वायुना [illegible] ।
स्थानाच्च्युतं मूत्रयतः प्राक् [illegible] ॥ [illegible]
भस्मोदकप्रतीकाशं मूत्रशुक्रं [illegible] ।

उष्णवातलक्षणम् ।

व्यायामाध्वातपैः पित्तं बस्तिं प्राप्यानिलान्वितम् ॥ १५ ॥
बस्तिं मेढ्रं गुदं चैव प्रदहत्स्रावयेदधः ।
मूत्रं हारिद्रमथवा सरक्तं रक्तमेव वा ॥ १६ ॥
उष्णं पुनः पुनः कृच्छ्रादुष्णवातं वदन्ति तम् ।

मूत्रसादलक्षणम् ।

पित्तं कफो द्वावपि वा संहन्येतेऽनिलेन चेत् ॥ १७ ॥
कृच्छ्रान्मूत्रं तदा पीतं रक्तं श्वेतं घनं सृजेत् ।
सदाहं रोचनाशङ्खचूर्णवर्णं भवेच्च तत् ॥ १८ ॥
शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम् ।

विड्विघातलक्षणम् ।

रूक्षदुर्बलयोर्वातेनोदावृत्तं शकृद्यदा ॥ १९ ॥
मूत्रस्रोतोऽनुपद्येत संसृष्टं शकृता तदा ।
विड्गन्धं मूत्रयेत्कृच्छ्राद्विड्विघातं विनिर्दिशेत् ॥ २० ॥

बस्तिकुण्डललक्षणम् ।

द्रुताध्वलङ्घनायासैरभिघातात्प्रपीडनात् ।
स्वस्थानाद्बस्तिरुद्वृत्तः स्थूलस्तिष्ठति गर्भवत् ।
शूलस्पन्दनदाहार्तो बिन्दुं बिन्दुं स्रवत्यपि ॥ २१ ॥
पीडितस्तु सृजेद्धारां संस्तम्भोद्वेष्टनार्तिमान् ।
बस्तिकुण्डलमाहुस्तं घोरं शस्त्रविषोपमम् ॥ २२ ॥
पवनप्रबलं प्रायो दुर्निवारमबुद्धिभिः ।
तस्मिन् पित्तान्विते दाहः शूलं मूत्रविवर्णता ॥ २३ ॥
श्लेष्मणा गौरवं शोफः स्निग्धं मूत्रं घनं सितम् ।
श्लेष्मरुद्धबिलो बस्तिः पित्तोदीर्णो न सिध्यति ॥ २४ ॥
अविभ्रान्तबिलः साध्यो न तु यः कुण्डलीकृतः ।
स्याद्बस्तौ कुण्डलीभूते हृन्मोहः श्वास एव च ॥ २५ ॥

इति मूत्राघातनिदानम् ॥

---

अथातो मूत्राघातचिकित्सितं व्याख्यास्यामः ।

मूत्राघाते सामान्यचिकित्सा ।

स्नेहस्वेदोपपन्नस्य हितं स्नेहविरेचनम् ।
ततः संशुद्धदेहस्य हिताश्चोत्तरबस्तयः ॥ २६ ॥

मूत्राघाते कतिपययोगाः ।

पाटल्या यावशूकाच्च पारिभद्रात्तिलादपि ।
क्षारोदकेन मदिरां त्वगेलोपणसंयुताम् ॥ २७ ॥
पिबेद्गुडोपदंशं वा लिह्यादेतान् पृथक्पृथक् ।
त्रिफलाकल्कसंयुक्तं लवणं वापि पाययेत् ॥ २८ ॥
निदिग्धिकायाः स्वरसं पिबेद्वा वान्तवस्त्रुतम् ।
जले कुङ्कुमकल्कं वा सक्षौद्रमुषितं निशाम् ॥ २९ ॥
सतैलं पाटलाभस्मक्षारं बद्ध्वा परिस्रुतम् ।
कल्कमेर्वारुबीजानामक्षमात्रं ससैन्धवम् ॥ ३० ॥
धान्याम्लयुक्तं पीत्वैव मूत्राघाताद्विमुच्यते ।
दाडिमाम्बुयुतं मुख्यमेलाबीजं सनागरम् ॥ ३१ ॥
पीत्वा सुरां सलवणां मूत्राघाताद्विमुच्यते ।
पिबेच्छिलाजतुक्वाथं गणे वीरतरादिके ।
रसं दुरालभाया वा कषायं वासकस्य वा ॥ ३२ ॥
त्रिकण्टकैरण्डशतावरीभिः
सिद्धं पयो वा तृणपञ्चमूले ।
गुडप्रगाढं सघृतं पयो वा
रोगेषु कृच्छ्रादिषु शस्तमेतत् ॥ ३३ ॥

उष्णवाते चन्दनयोगः ।

शृतशीतपयोऽन्नाशी चन्दनं तण्डुलाम्बुना ।
पिबेत्सशर्करं श्रेष्ठमुष्णवाते सशोणिते ॥ ३४ ॥

मूत्रशोणितचिकित्सा ।

स्त्रीणामतिप्रसङ्गेन शोणितं यस्य सिच्यते ।
मैथुनोपरमश्चास्य बृंहणीयो हितो विधिः ॥ ३५ ॥
ताम्रचूडवसावैलं हितं चोत्तरबस्तिषु ।

मूत्रशुक्रे स्वगुप्तादियोगः ।

स्वगुप्ताफलमृद्वीकाकृष्णेक्षुरसितारजः ॥ ३६ ॥
समांशान्यर्धभागानि क्षीरक्षौद्रघृतानि च ।
सर्वे सम्यग्विमथ्याक्षमात्रं लीढ्वा पयः पिबेत् ॥ ३७ ॥
हन्ति शुक्रोत्थयोन्युत्थान् दोषान् वन्ध्यासुतप्रदम् ।

चित्रकाद्यं घृतम् ।

चित्रकं सारिवा चैव बला कालनुसारिवा ॥ ३८ ॥
द्राक्षा विशाला पिप्पल्यस्तथा च त्रिफला भवेत् ।
तथैव मधुकं दद्याद्द्यादामलकानि च ॥ ३९ ॥
घृताढकं पचेदेतैः कल्कैरिक्षुसमन्वितैः ।
क्षीरद्रोणे जलद्रोणे तत्सिद्धमवतारयेत् ॥ ४० ॥
शीतं परिस्रुतं चैव शर्कराप्रस्थसंयुतम् ।
तुगाक्षीर्या च तत्सर्वं मतिमान् प्रविमिश्रयेत् ॥ ४१ ॥
ततो मात्रां पिबेत्काले यथादोषं यथाबलम् ।
वातरेताः पित्तरेताः श्लेष्मरेताश्च यो भवेत् ॥ ४२ ॥
रक्तरेता ग्रन्थिरेताः पिबेदिच्छन्नरोगताम् ।
जीवनीयं च वृष्यं च सर्पिरेतन्महागुणम् ॥ ४३ ॥
प्रजाहितं च धन्यं च सर्वरोगापहं शिवम् ।
सर्पिरेतत्प्रयुञ्जाना स्त्री गर्भमचिराल्लभेत् ॥ ४४ ॥
असृग्दोषाञ्जयेच्चापि योनिदोषानसंशयम् ।
मूत्रदोषेषु सर्वेषु कुर्यादेतच्चिकित्सितम् ॥ ४५ ॥

मूत्राघाते गोधापदीमूलादियोगः ।

गोधापदीमूलमनल्पसर्पिस्तैलान्वितं गोक्षुरसंयुतं च ।
निहन्ति सम्यक्क्थितं निपीतमत्युत्कटां मूत्रनिरोधपीडाम् ४६

मूत्रकृच्छ्रे बिल्वमूलादिकषायः।

बिल्वारग्वधमूलानां मूत्रकृच्छ्री दिनत्रयम्।
शृतं शीतं पिबेत्सम्यक्कषायं संप्रसाधितम्॥ ४७॥

मूत्राघाते पुनर्नवादियोगाः।

पुनर्नवायोरजनीश्वदंष्ट्रं फल्गुप्रवालं च सदर्भपुष्पम्।
क्षाराम्बुमद्येक्षुरसैः सुपिष्टं पेयं भवेदश्मरिशर्करासु॥ ४८॥

मूत्ररोधे एलादिकषायः।

एलादुरालभैरण्डपथ्यापाषाणभित्समम्।
गोक्षुरः कर्कटीबीजं तथा बीजं कुरण्टकात्॥ ४९॥
संमिश्र्य क्काथपानेन मूत्ररोधो निवर्तते।

मूत्राघाते त्रिफलाद्यं चूर्णम्।

त्रिफला कर्कटीबीजं सैन्धवं समभागतः॥ ५०॥
चूर्णमुष्णाम्भसा पीतं रुद्धं मूत्रं प्रवर्तयेत्।

मूत्ररोधे कर्कटीबीजयोगः।

वारिणाऽऽपिष्य बीजानि कर्कट्याः सितया सह॥५१॥
पीतानि नाशयन्त्युग्रं मूत्ररोधं सवेदनम्।
साम्बुरञ्जनमध्यस्थ(?)मृत्तिकालेपमात्रतः॥ ५२॥
उष्णवातः शमं याति यथाऽघं शिवचिन्तनात्।

मूत्राघाते स्वेदयोगः।

तापयित्वेष्टिकामस्या ऊर्ध्वं मूत्रे कृते भवेत्॥ ५३॥
बाष्पस्तेनेन्द्रियस्वेदादुष्णवातो विनश्यति।

मूत्राघाते शाकवृक्षमूलयोगः।

शर्कराजपयःपीता शाकवृक्षस्य मूलिका॥ ५४॥
मूत्ररोधं तथा दाहं नाशयत्यतिवेगतः।

शर्करायां शस्त्रोपचारः।

एभिर्यदि प्रयोगैस्तु शर्करा नोपशाम्यति॥ ५५॥

शुक्रशोणितविकित्सा।

स्त्रीणामतिप्रसङ्गेन शोणितं यस्य सिच्यते।
मैथुनोपरमश्चास्य बृंहणीयो हितो विधिः॥ ३५॥
ताम्रचूडवसातैलं हितं चोपरमत्विषु।

मूत्रशुक्रे स्वगुप्तादियोगः।

स्वगुप्ताफलमृद्वीकाकृष्णेक्षुरगिनागरैः॥ ३६॥
समांशान्यर्धभागानि क्षीरक्षौद्रघृतानि च।
सर्वं सम्यग्विमथ्यास्यमात्रं लीढ्वा पयः पिबेत्॥ ३७॥
हन्ति शुक्रोत्थयोन्युत्थान् दोषान् वन्ध्यासुतप्रदम्।

चित्रकाद्यं घृतम्।

चित्रकं सारिवा चैव बला कालनुसारिवा॥ ३८॥
द्राक्षा विशाला पिप्पल्यस्तथा च त्रिफला भवेत्।
तथैव मधुकं दद्याद्दद्यादामलकानि च॥ ३९॥
घृताढकं पचेदेतैः कल्कैरिक्षुसमन्वितैः।
क्षीरद्रोणे जलद्रोणे तत्सिद्धमवतारयेत्॥ ४०॥
शीतं परिस्रुतं चैव शर्कराप्रस्थसंयुतम्।
तुगाक्षीर्या च तत्सर्वं मतिमान् प्रविमिश्रयेत्॥ ४१॥
ततो मात्रां पिबेत्काले यथादोषं यथाबलम्।
वातरेताः पित्तरेताः श्लेष्मरेताश्च यो भवेत्॥ ४२॥
रक्तरेता ग्रन्थिरेताः पिबेदिच्छन्नरोगताम्।
जीवनीयं च वृष्यं च सर्पिरेतन्महागुणम्॥ ४३॥
प्रजाहितं च धन्यं च सर्वरोगापहं शिवम्।
सर्पिरेतत्प्रयुञ्जाना स्त्री गर्भमचिराल्लभेत्॥ ४४॥
असृग्दोषाञ्जयेच्चापि योनिदोषानसंशयम्।
मूत्रदोषेषु सर्वेषु कुर्यादेतच्चिकित्सितम्॥ ४५॥

मूत्राघाते गोधापदीमूलादियोगः।

गोधापदीमूलमनल्पसर्पिस्तैलान्वितं गोक्षुरसंयुतं च।
निहन्ति सस्यक्कथितं निपीतमत्युत्कटां मूत्रनिरोधपीडाम्॥ ४६

मूत्रकृच्छ्रे बिल्वमूलादिकषायः ।

बिल्वारग्वधमूलानां मूत्रकृच्छ्री दिनत्रयम् ।
शृतं शीतं पिबेत्सम्यक्कषायं संप्रसाधितम् ॥ ४७ ॥

मूत्राघाते पुनर्नवादियोगाः ।

पुनर्नवायोरजनीश्वदंष्ट्रं फल्गुप्रवालं च सदर्भपुष्पम् ।
क्षाराम्बुमद्येक्षुरसैः सुपिष्टं पेयं भवेदश्मरिशर्करासु ॥ ४८ ॥

मूत्ररोधे एलादिकषायः ।

एलादुरालभैरण्डपथ्यापाषाणभित्समम् ।
गोक्षुरः कर्कटीबीजं तथा बीजं कुरण्टकात् ॥ ४९ ॥
संमिश्र्य क्वाथपानेन मूत्ररोधो निवर्तते ।

मूत्राघाते त्रिफलाद्यं चूर्णम् ।

त्रिफला कर्कटीबीजं सैन्धवं सममागतः ॥ ५० ॥
चूर्णमुष्णाम्भसा पीतं रुद्धं मूत्रं प्रवर्तयेत् ।

मूत्ररोधे कर्कटीबीजयोगः ।

वारिणाऽऽपिष्य बीजानि कर्कट्याः सितया सह ॥५१॥
पीतानि नाशयन्त्युग्रं मूत्ररोधं सवेदनम् ।
साम्बुरञ्जनमध्यस्थ(?)मृत्तिकालेपमात्रतः ॥ ५२ ॥
उष्णवातः शमं याति यथाऽघं शिवचिन्तनात् ।

मूत्राघाते स्वेदयोगः ।

तापयित्वेष्टिकामस्या ऊर्ध्वं मूत्रे कृते भवेत् ॥ ५३ ॥
बाष्पस्तेनेन्द्रियस्वेदादुष्णवातो विनश्यति ।

मूत्राघाते शाकवृक्षमूलयोगः ।

शर्कराजपयःपीता शाकवृक्षस्य मूलिका ॥ ५४ ॥
मूत्ररोधं तथा दाहं नाशयत्यतिवेगतः ।

शर्करायां शस्त्रोपचारः ।

एभिर्यदि प्रयोगैस्तु शर्करा नोपशाम्यति ॥ ५५ ॥

समुद्रंत्स्वल्पहृतां दृष्टकर्मा बहुश्रुतः ।

मूत्रकृच्छ्रादौ त्रपुसबीजादियोगः ।

त्रपुसैर्वारुबीजानि कुमुदं दृषकं बला ॥ ५६ ॥
पुष्करस्य तु बीजानि पिबेद्द्राक्षारसेन तु ।
एतेन मूत्रकृच्छ्राणि पैत्तिकानीतराणि च ।
अश्मरी शर्करा चैव बस्तिशूलं च शाम्यति ॥ ५७ ॥

इति श्रीवैद्यशोढलविरचिते गदनिग्रहे कायचिकित्साखण्डे मूत्राघाताधिकारोऽष्टाविंशतितमः ॥ २८ ॥

---

## अथाश्मर्यधिकार एकोनत्रिंशत्तमः ।

अथातोऽश्मरीनिदानं व्याख्यास्यामः ।

अश्मरीसंप्राप्तिः ।

मूत्रकृच्छ्रं प्रकथ्याथ मूत्राघातं तथैव च ।
तत्संसर्गप्रमाणेन अश्मरीप्यभिधीयते ॥ १ ॥
वातपित्तकफैस्तिस्रश्चतुर्थी शुक्रजाऽपरा ।
प्रायः श्लेष्माश्रयाः सर्वा अश्मर्यः स्युर्यमोपमाः ॥ २ ॥
विशोषयेद्बस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा ।
यदा तदाऽश्मर्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः ॥ ३ ॥
नैकदोषाश्रयाः सर्वा

अश्मरीपूर्वरूपम् ।

अथासां पूर्वलक्षणम् ।
बस्त्याध्मानं तदासन्नदेशेषु परितोऽतिरुक् ॥ ४ ॥
मूत्रे बस्तसगन्धत्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ।

अश्मर्याः सामान्यलक्षणम् ।

सामान्यलिङ्गं रुङ्नाभिसेवनीबस्तिमूर्धसु ॥ ५ ॥
विशीर्णधारं मूत्रं स्यात्तया मार्गे निरोधिते ।
तद्व्यपायात्सुखं मेहेदच्छं गोमेदकोपमम् ॥ ६ ॥

तत्संक्षोभात् क्षते सास्रमायासाच्चातिरुग्भवेत् ।

यातजादिभेदेनाश्मरीलक्षणानि ।

तत्र वाताद्भृशं ह्यार्तो दन्तान् खादति वेपते ॥ ७ ॥
मृद्गाति मेहनं नाभिं पीडयत्यनिशं क्वणन् ।
सानिलं मुञ्चति शकृन्मुहुर्मेहति विन्दुशः ॥ ८ ॥
श्यावा रूक्षाऽश्मरी चास्य स्याच्चिता कण्टकैरिव ।
पित्तेन दह्यते वस्तिः पच्यमान इवोष्मवान् ॥ ९ ॥
भल्लातकास्थिसंस्थाना रक्ता पीता सिताऽश्मरी ।
वस्तिर्निस्तुद्यत इव श्लेष्मणा शीतलो गुरुः ॥ १० ॥
अश्मरी महती श्लक्ष्णा मधुवर्णाऽथवा सिता ।
एता भवन्ति बालानां तेषामेव हि भूयसा ॥ ११ ॥
आश्रयोपचयाल्पत्वाद्ग्रहणाहरणे सुखाः ।
शुक्राश्मरी तु महतां जायते शुक्रधारणात् ॥ १२ ॥
स्थानाच्च्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः ।
शोषयत्युपसंगृह्य शुक्रं सा शुक्रजाऽश्मरी ॥ १३ ॥
वस्तिरुक्कृच्छ्रमूत्रत्वमुष्कश्वयथुकारिणी ।
तस्यामुत्पन्नमात्रायां शुक्रमेति विलीयते ॥ १४ ॥
पीडिते त्ववकाशेऽस्मिन्नश्मर्येव च शर्करा ।
अणुशो वायुना भिन्ना सा तस्मिन्ननुलोमगे ॥ १५ ॥
निरेति सह मूत्रेण प्रतिलोमे विबध्यते ।

अश्मर्युपद्रवाः ।

मूत्रस्रोतःप्रवृत्ता सा सक्ता कुर्यादुपद्रवान् ॥ १६ ॥
दौर्बल्यं सदनं कार्श्यं कुक्षिशूलमथारुचिम् ।
पाण्डुत्वमुष्णवातं च तृष्णां हृत्पीडनं वमिम् ॥ १७ ॥

अश्मर्या असाध्यलक्षणम् ।

प्रसूननाभिवृषणं बद्धमूत्रं रुजातुरम् ।
अश्मरी क्षपयत्याशु सिकताशर्करान्विता ॥ १८ ॥

इत्यश्मरीनिदानम् ।

अथातोऽश्मरीचिकित्सितं व्याख्यास्यामः।

अश्मर्यां वेल्लन्तरादिगणः।

वेल्लन्तरारणिककूकटपाश्मभेद-
गोकण्टकेत्कटसहाचरबाणशाकाः।
वृक्षादनीनलकुशद्वयगुण्ठगुन्द्रा
भल्लूकमोरटकुरण्टकरम्भपार्थाः॥ १९॥
वर्गो वीरतराद्योऽयं हन्ति वातकृतान् गदान्।
अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः॥ २०॥

वातजाश्मर्यां वरुणत्वगादियोगः।

वरुणस्य त्वचं श्रेष्ठां शुण्ठीगोक्षुरसंयुताम्।
यवक्षारगुडं दत्त्वा क्वाथं कृत्वा पिबेद्धितम्॥ २१॥
अश्मरीं वातजां हन्ति चिरकालानुबन्धिनीम्।

अश्मर्यां शुण्ठ्यादिचूर्णम्।

शुण्ठ्यग्निमन्थपाषाणभेदैर्वरुणगोक्षुरैः॥ २२॥
अभयारग्वधफलैः क्वाथं कुर्याद्विचक्षणः।
रामठक्षारलवणचूर्णं दत्त्वा पिबेन्नरः॥ २३॥
अश्मरीमूत्रकृच्छ्रघ्नं दीपनं पाचनं परम्।
हन्यात्कोष्ठाश्रितं वातं कट्यूरुगुदमेढ्रजम्॥ २४॥

वातजाश्मर्यां पाषाणभेदादिघृतम्।

पाषाणभेदो वसुको वशिरोऽश्मन्तकस्तथा।
शतावरी श्वदंष्ट्रा च बृहती कण्टकारिका॥ २५॥
कपोतवङ्काऽऽर्तगलः काञ्चनोशीरगुन्द्रकाः।
वृक्षादन्यरलुकश्च वारुणं शाकजं फलम्॥ २६॥
यवाः कुलत्थाः कोलानि कुटजस्य फलानि च।
ऊषकादिप्रतीवापमेषां क्वाथे शृतं घृतम्॥ २७॥
भिनत्ति वातसंभूतामश्मरीं क्षिप्रमेव च।
क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च॥ २८

भोजनानि च कुर्वीत वर्गेऽस्मिन्वातनाशने ।
ऊपकस्तुत्थकं हिङ्गु कासीसद्वयसैन्धवम् ॥ २९ ॥
सशिलाजतु कृच्छ्राश्मगुल्ममेहकफापहम् ।

पित्ताश्मर्यां कुशादिघृतम् ।

कुशः काशः शरो मुञ्ज इत्कटो मोरटोऽश्मभित् ॥ ३०
दर्भो विदारी वाराही शालिमूलं त्रिकण्टकम् ।
भल्लूकः पाटली पाठा पत्तूरोऽथ कुरण्टिका ॥ ३१ ॥
पुनर्नवे शिरीषश्च क्वथितास्तेषु साधितम् ।
घृतं शिलाह्वमधुकबीजैरिन्दीवरस्य च ॥ ३२ ॥
त्रपुसैर्वारुकाणां च बीजैश्चावापितं शुभम् ।
भिनत्ति पित्तसंभूतामश्मरीं क्षिप्रमेव च ॥ ३३ ॥
क्षारान् यवागूं पेयां च कषायाणि पयांसि च ।
भोजनानि च कुर्वीत वर्गेऽस्मिन् पित्तनाशने ॥ ३४ ॥
शिलाजतु शिलाह्वं स्यात् पुण्ड्रको गुन्द्रगुच्छकौ ।
मधुकः क्वचहस्तत्वाद्बीजैर्बीजक उच्यते ॥ ३५ ॥
कुर्यात्क्षारादिकं क्वाथ्यैः तस्मिन् प्रक्षेपपादिकैः ।
वर्गत्वेन यथालाभं परिभाषा प्रवर्तते ॥ ३६ ॥

कफजाश्मर्यां वरुणादिघृतम् ।

गणे वरुणकादौ तु गुग्गुल्वेलाहरेणुभिः ।
कुष्ठमुस्ताह्वमरिचचित्रकैः ससुराह्वयैः ॥ ३७ ॥
एतैः सिद्धमजासर्पिरूषकादिगणेन च ।
भिनत्ति कफसंभूतामश्मरीं क्षिप्रमेव च ॥ ३८ ॥
भक्ष्यान् यवागूं पेयां च कषायाणि पयांसि च ।
भोजनादीनि कुर्वीत वर्गेऽस्मिन् कफनाशने ॥ ३९ ॥

वरुणादिगणः ।

वरुणसैर्यकयुग्मशतावरीदहनमोरटबिल्वविषाणिकाः ।
द्विबृहतीद्विकरञ्जजयाद्वयं बहलपल्लवदर्भरुजाकराः ॥ ४० ॥

वरुणादिः कफं मेदो मन्दाग्नित्वं नियच्छति ।
आढ्यवातं शिरःशूलं गुल्मवातं सविद्रधिम् ॥ ४१ ॥

शुक्राश्मरीप्रतीकारः ।

शुक्राश्मर्यां तु सामान्यो विधिरश्मरिनाशनः ।
यवक्षारगुडोन्मिश्रं पिबेत्पुष्पफलोद्भवम् ।
रसं मूत्रविबन्धघ्नं शुक्राश्मरिविनाशनम् ॥ ४२ ॥

अश्मर्यां नागरादिक्वाथः ।

नागरवरुणकगोक्षुरपाषाणभेदकपोतवङ्कजः क्वाथः ।
गुडयावशूकमिश्रः पीतो हन्त्यश्मरीमुग्राम् ॥ ४३ ॥

शर्करायां वरुणत्वगादिकषायः ।

वरुणत्वक्शिलाभेदशुण्ठीगोक्षुरकैः कृतः ।
कषायः क्षारसंयुक्तः शर्करां च भिनत्त्यपि ॥ ४४ ॥
पिबेद्वरुणकल्कत्वक्क्वाथं तत्कल्कसंयुतम् ।
वरुणत्वक्कषायस्तु पीतश्च गुडसंयुतः ॥ ४५ ॥
अश्मरीं पातयत्याशु शर्करां च निपातयेत् ।
क्वाथश्च शिग्रुमूलोत्थः कदुष्णोऽश्मरिनाशनः ॥ ४६ ॥

अश्मर्यां त्रिकण्टकयोगः ।

त्रिकण्टकस्य बीजानां चूर्णं माक्षिकसंयुतम् ।
अविक्षीरेण सप्ताहं पिबेदश्मरिभेदनम् ॥ ४७ ॥

कुलत्थाद्यं घृतम् ।

कुलत्थसिन्धूत्थविडङ्गसारं सशर्करं शीतलियावशूकम् ।
बीजानि कूष्माण्डकगोक्षुराभ्यां घृतं पचेत्तैर्वरुणस्य तोये ॥ ४८ ॥
दुःसाध्यसर्वाश्मरिमूत्रकृच्छ्रं मूत्राभिघातं च समूत्रबन्धम् ।
एतानि सर्वाणि निहन्ति शीघ्रं प्ररूढवृक्षानिव वज्रपातः ॥ ४९ ॥

शरादिघृतम् ।

शरादिपञ्चमूलस्य वा कषायेण पचेद्घृतम् ।
प्रस्थं गोक्षुरकल्केन सिद्धमथारसंशर्करम् ॥ ५० ॥

अश्मरीमूत्रकृच्छ्रघ्नं रेतोमार्गरुजापहम् ।

वरुणाद्यं घृतम् ।

वरुणस्य तुलां क्षुण्णां जलद्रोणे विपाचयेत् ॥ ५१ ॥
पादशेषं परिस्राव्य घृतप्रस्थं विपाचयेत् ।
वरुणः कदली बिल्वं तृणजं पञ्चमूलकम् ॥ ५२ ॥
अमृता चाश्मजं देयं बीजं च त्रपुसस्य वै ।
शतपर्वा तिलक्षारः पलाशक्षार एव च ॥ ५३ ॥
यूथिकायाश्च मूलानि कार्षिकाणि समावपेत् ।
अस्य मात्रां पिबेज्जन्तुर्देशकालाद्यपेक्षया ॥ ५४ ॥
जीर्णे चास्मिन् पिबेत्पूर्वं गुडं जीर्णे तु मस्तुना ।
अश्मरीं शर्करां चैव मूत्रकृच्छ्रं च नाशयेत् ॥ ५५ ॥

वीरतराद्यं घृतम् ।

सैन्धवाद्यं तु यत्तैलमृषिभिः परिभाषितम् ।
तत्तैलं द्विगुणक्षीरं पचेद्वीरतरादिना ॥ ५६ ॥
क्काथेन पूर्वकल्केन साधितं सुभिषग्वरैः ।
एतत्तैलं परं श्रेष्ठमश्मरीणां विनाशने ॥ ५७ ॥
मूत्राघाते मूत्रकृच्छ्रे पिच्चिते मथितेऽपि वा ।
भग्ने श्रमाभिपन्ने वा सर्वथैव प्रशस्यते ।
वध्मोधिकारे निर्दिष्टं सैन्धवाद्यमिहेष्यते ॥ ५८ ॥

अश्मर्यां यूथीमूलयोगः ।

यूथीमूलं ग्रीष्मकालोद्धृतं छागीक्षीरे सम्यगुत्क्वाथ्य पीतम् ।
मूत्राघातं मूत्रकृच्छ्रं सशूलं हन्यात्क्षिप्रं शर्करामश्मरीं च ॥५९

अश्मर्यां तिलपुष्पक्षारयोगः ।

क्षारो निपीतस्तिलपुष्पजातः समाक्षिकः क्षीरयुतस्त्रिरात्रम् ।
हन्त्यश्मरीं सीधुविमिश्रितं वा निपीयमानं रुचकं प्रयत्नात् ६०

अश्मर्यां गोपालकर्कटीमूलयोगः ।

गोपालकर्कटीमूलं पिष्टं पर्युषिताम्भसा ।
पीयमानं त्रिरात्रेण पातयत्यश्मरीं हठात् ॥ ६१ ॥

अश्मर्यामर्कपुष्पीयोगः ।

गव्येन पिष्टा पयसाऽर्कपुष्पी निपीयमानाऽनुदिनं प्रभाते ।
विदार्य वीर्येण निजेन तीव्रामप्यश्मरीं पातयते दशाहात् ॥६२

अश्मर्यां मालतीमूलयोगः ।

ग्रीष्मोत्थावं मालतीमूलमाजे क्षीरे सिद्धं शर्कराचूर्णमिश्रम् ।
पीतं सद्यो मूत्रसंरोधजातां हन्यात्पीडां पातयेदश्मरीं च ॥६३॥

इति श्रीवैद्यचोडलप्रथिते गदनिग्रहे कायचिकित्साखण्डेऽश्मरीचिकित्साधिकार एकोनत्रिंशत्तमः ॥ २९ ॥

---

## अथ प्रमेहाधिकारस्त्रिंशत्तमः ।

अथातः प्रमेहप्रमेहपिडकानिदानं व्याख्यास्यामः ।

प्रमेहसंप्राप्तिः ।

आस्यासुखं स्वप्नसुखं दधीनि ग्राम्यौदकानूपरसाः पयांसि ।
नवान्नपानं गुडवैकृतं च प्रमेहहेतुः कफकृच्च सर्वम् ॥ १ ॥
मेदश्च मांसं च शरीरजं च क्लेदं कफो बस्तिगतं प्रदूष्य ।
करोति मेहान् समुदीर्णमुष्णैस्तान्येव पित्तं परिदूष्य चापि ॥२॥
क्षीणेषु मांसेष्ववकृष्य धातून्
संदूष्य मेहान् कुरुतेऽनिलश्च ।
साध्याः कफोत्था दश, पित्तजाः षट्
याप्यास्त्वसाध्या पवनाच्चतुष्कः ॥ ३ ॥
समक्रियत्वाद्विषमक्रियत्वान्महात्ययत्वाच्च यथाक्रमं ते ।
कफः सपित्तः पवनश्च दोषा, मेदोऽस्रशुक्राम्बुवसालसीकाः ।
मज्जारसौजः पिशितं च दूष्यं, प्रमेहिणां विंशतिरेव मेहाः ॥४॥

प्रमेहपूर्वरूपम् ।

दन्तादीनां मलाढ्यत्वं प्राग्रूपं पाणिपादयोः ।
दाहश्चिक्कणता देहे मूत्रसंगश्च जायते ॥ ५ ॥

प्रमेहाणां सामान्यलक्षणम् ।

सामान्यलक्षणं तेषां प्रभूताविलमूत्रता ।
दोषदूष्याविशेषेऽपि तत्संयोगविशेषतः ॥ ६ ॥
मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते ।

श्लैष्मिकाणां दशमेहानां लक्षणम् ।

अच्छं बहु सितं शीतं निर्गन्धमुदकोपमम् ॥ ७ ॥
मेहत्युदकमेहेन किंचिच्चाविलपिच्छिलम् ।
इक्षो रसमिवात्यर्थं मधुरं चेक्षुमेहतः ॥ ८ ॥
सान्द्रीभवेत्पर्युषितं सान्द्रमेहेन मेहति ।
सुरामेही सुरातुल्यमुपर्यच्छमधो घनम् ॥ ९ ॥
संहृष्टरोमा पिष्टेन पिष्टवद्बहलं सितम् ।
शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति ॥ १० ॥
मूर्ताणून् सिकतामेही सिकतारूपिणो मलान् ।
शीतमेही सुबहुशो मधुरं भृशशीतलम् ॥ ११ ॥
शनैः शनैः शनैर्मेही मन्दं मन्दं प्रमेहति ।
लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ॥ १२ ॥

पैत्तिकानां षण्मेहानां लक्षणम् ।

गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ।
नीलमेहेन नीलाभं कालमेही मषीनिभम् ॥ १३ ॥
हारिद्रमेही कटुकं हरिद्रासन्निभं दहत् ।
विस्रं माञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम् ॥ १४ ॥
विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः ।

---

१ 'तृट्खाद्यास्' ख.

अश्मर्यां गोपालकर्कटीमूलयोगः ।

गोपालकर्कटीमूलं पिष्टं पर्युषिताम्भसा ।
पीयमानं त्रिरात्रेण पातयत्यश्मरीं हठात् ॥ ६१ ॥

अश्मर्यामर्कपुष्पीयोगः ।

गव्येन पिष्टा पयसाऽर्कपुष्पी निपीयमानाऽनुदिनं प्रभाते ।
विदार्य वीर्येण निजेन तीव्रामप्यश्मरीं पातयते दशाहात् ॥६२

अश्मर्यां मालतीमूलयोगः ।

ग्रीष्मोत्खातं मालतीमूलमाजे क्षीरे सिद्धं शर्कराचूर्णमिश्रम् ।
पीतं सद्यो मूत्रसंरोधजातां हन्यात्पीडां पातयेदश्मरीं च ॥६३॥

इति श्रीवैद्यशोढलप्रथिते गदनिग्रहे कायचिकित्साखण्डेऽश्मरीचिकित्साधिकार एकोनत्रिंशत्तमः ॥ २९ ॥

---

## अथ प्रमेहाधिकारस्त्रिंशत्तमः ।

अथातः प्रमेहप्रमेहपिडकानिदानं व्याख्यास्यामः ।

प्रमेहसंप्राप्तिः ।

आस्यासुखं स्वप्नसुखं दधीनि ग्राम्यौदकानूपरसाः पयांसि ।
नवान्नपानं गुडवैकृतं च प्रमेहहेतुः कफकृच्च सर्वम् ॥ १ ॥
मेदश्च मांसं च शरीरजं च क्लेदं कफो वस्तिगतं प्रदूष्य ।
करोति मेहान् समुदीर्णमुष्णैस्तान्येव पित्तं परिदूष्य चापि ॥२॥
क्षीणेषु मांसेष्ववकृष्य धातून्
संदूष्य मेहान् कुरुतेऽनिलश्च ।
साध्याः कफोत्था दश, पित्तजाः षट्
याप्यास्त्वसाध्याः पवनाच्चतुष्कः ॥ ३ ॥
समक्रियत्वाद्विषमक्रियत्वान्महात्ययत्वाच्च यथाक्रमं ते ।
कफः सपित्तः पवनश्च दोषा, मेदोऽस्रशुक्राम्बुवसालसीकाः ।
मज्जारसौजः पिशितं च दूष्यं, प्रमेहिणां विंशतिरेव मेहाः ॥४॥

प्रमेहपूर्वरूपम्।

दन्तादीनां मलाढ्यत्वं प्राग्रूपं पाणिपादयोः।
दाहश्चिक्कणता देहे मूत्रसंगश्च जायते ॥ ५ ॥

प्रमेहाणां सामान्यलक्षणम्।

सामान्यलक्षणं तेषां प्रभूताविलमूत्रता।
दोषदूष्याविशेषेऽपि तत्संयोगविशेषतः ॥ ६ ॥
मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते।

श्लैष्मिकानां दशमेहानां लक्षणम्।

अच्छं बहु सितं शीतं निर्गन्धमुदकोपमम् ॥ ७ ॥
मेहत्युदकमेहेन किंचिचाविलपिच्छिलम्।
इक्षो रसमिवात्यर्थं मधुरं चेक्षुमेहतः ॥ ८ ॥
सान्द्रीभवेत्पर्युषितं सान्द्रमेहेन मेहति।
सुरामेही सुरातुल्यमुपर्यच्छमधो घनम् ॥ ९ ॥
संहृष्टरोमा पिष्टेन पिष्टवद्बहलं सितम्।
शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति ॥ १० ॥
मूर्ताणून् सिकतामेही सिकतारूपिणो मलान्।
शीतमेही सुबहुशो मधुरं भृशशीतलम् ॥ ११ ॥
शनैः शनैः शनैर्मेही मन्दं मन्दं प्रमेहति।
लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ॥ १२ ॥

पैत्तिकानां षण्मेहानां लक्षणम्।

गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत्।
नीलमेहेन नीलाभं कालमेही मषीनिभम् ॥ १३ ॥
हारिद्रमेही कटुकं हरिद्रासन्निभं दहत्।
विस्रं माञ्जिष्ठमेहेन माञ्जिष्ठासलिलोपमम् ॥ १४ ॥
विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः।

१ 'तृट्स्वाद्वासं' ख.

चतुर्णां वातिकमेहानां लक्षणम् ।

वसामेही वसामिश्रं वसाभं मूत्रयेन्मुहुः ॥ १५ ॥
मज्जाभं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ।
कषायं मधुरं रूक्षं क्षौद्रमेहं वदेद्बुधः ॥ १६ ॥
हस्ती मत्त इवाजस्रं मूत्रं वेगविवर्जितम् ।
सलसीकं विबद्धं च हस्तिमेही प्रमेहति ॥ १७ ॥

प्रमेहोपद्रवाः ।

अविपाकोऽरुचिश्छर्दिर्निद्रा कासः सपीनसः ।
उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥ १८ ॥
बस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः ।
दाहस्तृष्णाऽम्लिका मूर्च्छा विड्भेदः पित्तजन्मनाम् ॥१९
वातजानामुदावर्तः कम्पहृद्ग्रहलोलताः ।
शूलमुन्निद्रता शोपः कासः श्वासश्च जायते ॥ २० ॥

प्रमेहिणामसाध्यलक्षणानि ।

यथोक्तोपद्रवाविष्टमतिप्रस्रुतमेव च ।
पीडकापीडितं गाढं प्रमेहो हन्ति मानवम् ॥ २१ ॥
जातः प्रमेही मधुमेहिनो वा
न साध्य उक्तः स हि बीजदोषात् ।
ये चापि केचित्कुलजा विकारा
भवन्ति तांश्चापि वदन्त्यसाध्यान् ॥ २२ ॥
सर्व एव प्रमेहास्तु कालेनातिप्रकारिणः ।
मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि ॥ २३ ॥
मधुमेहे मधुसमं जायते स किल द्विधा ।
क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथेऽथवा ॥ २४ ॥
आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयन् ।
क्षणात् क्षीणः क्षणात्पूर्णो भजते कृच्छ्रसाध्यताम् ॥२५॥

कालेनोपेक्षिताः सर्वे प्रयान्ति मधुमेहताम् ।
मधुरं यच्च मेहेषु प्रायो मध्विव मेहति ॥ २६ ॥
सर्वेऽपि मधुमेहाख्या माधुर्याच्च तनोरतः ।

प्रमेहनिवृत्तिलक्षणम् ।

प्रमेहिणो यदा मूत्रमनाविलमपिच्छिलम् ॥ २७ ॥
विशदं तिक्तकटुकं तदाऽऽरोग्यं प्रचक्षते ।

दशविधप्रमेहपिटिकानां लक्षणानि ।

शराविका कच्छपिका जालिनी विनताऽलजी ॥ २८ ॥
मसूरिका सर्षपिका पुत्रिणी सविदारिका ।
विद्रधिश्चेति पिटिकाः प्रमेहोपेक्षया दश ॥ २९ ॥
सन्धिमर्मसु जायन्ते मांसलेषु च धामसु ।
अन्तोन्नता मध्यनिम्नाः श्यावाः क्लेदरुजान्विताः ॥३०
शरावमानसंस्थानाः पिटिकाः स्युः शराविकाः ।
सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका बुधैः ॥ ३१ ॥
जालिनी तीव्रदाहा तु मांसजालसमन्विता ।
अवगाढरुजाक्लेदा पृष्ठे वा जठरेऽपि वा ॥ ३२ ॥
महती पिटिका नीला विनता नाम सा स्मृता ।
रक्ता सिता स्फोटचिता दारुणा त्वलजी भवेत् ॥ ३३
मसूराकृतिसंस्थाना विज्ञेया च मसूरिका ।
गौरसर्षपसंस्थाना तत्प्रमाणा च सर्षपी ॥ ३४ ॥
महत्यल्पाचिता ज्ञेया पिटिका चापि पुत्रिणी ।
विदारीकन्दवद्वृत्ता कठिना च विदारिका ॥ ३५ ॥
विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका तु सा ।
ये यन्मयाः स्मृता मेहा तेषामेतास्तु तन्मयाः ॥ ३६ ॥
प्रमेहेण विनाऽप्येता जायन्ते दुष्टमेदसः ।
तावच्चैता न लक्ष्यन्ते यावद्वास्तुपरिग्रहः ॥ ३७ ॥

रक्तपित्तप्रमेहयोर्भेदज्ञानम् ।

हारिद्रवर्णं रक्तं वा मेहमापूर्वरूपवर्जितम् ।
यो मूत्रयेन्न तं मेहं रक्तपित्तं च तद्विदुः ॥ ३८ ॥

प्रमेहपिडिकानामसाध्यलक्षणम् ।

गुदे हृदि शिरस्यंसे पृष्ठे मर्मसु चोत्थिता ।
सोपद्रवा दुर्बलाग्नेः पिडिकाः परिवर्जयेत् ॥ ३९ ॥

प्रमेहपिडकोपद्रवाः ।

तृट्कासमांससंकोचमोहहिक्कामदज्वराः ।
विसर्पमर्मसंरोधाः पिडकानामुपद्रवाः ॥ ४० ॥

इति प्रमेहप्रमेहपिडकानिदानम् ।

---

अथातो प्रमेहादिचिकित्सितं व्याख्यास्यामः ।

प्रमेहे आहारयोजना ।

श्यामाककोद्रवोद्दालगोधूमचणकाढकी- ।
कुलत्थाश्च हिता भोज्ये पुराणा मेहिनां सदा ॥ ४१ ॥
मेहिनां तिक्तशाकानि जाङ्गला हरिणादयः ।
यवान्नविकृतिर्मुद्गाः शस्यन्ते शालिषष्टिकाः ॥ ४२ ॥

उदकमेहाद्यष्टप्रमेहेष्वष्टौ कषायाः ।

पारिजातजयानिम्बवह्निगायत्रिणां पृथक् ।
पाठायाः सागुरोः पीताह्वयस्य शारदस्य च ॥ ४३ ॥
जलेक्षुमद्यसिकताशनैर्लवणपिष्टकान् ।
सान्द्रमेहान् क्रमाद्धन्युः क्वाथा अष्टौ समाक्षिकाः ॥ ४४ ॥

शुक्रमेहे दूर्वादिकषायः ।

दूर्वाकसेरुपूतीककुम्भीकभवशैवलम् ।
जलेन क्वथितं पीतं शुक्रमेहहरं परम् ॥ ४५ ॥

फेनमेहे त्रिफलादिकषायः ।

त्रिफलारग्वधद्राक्षाकषायो मधुसंयुतः ।
पीतो निहन्ति फेनाख्यं प्रमेहं नियतं नृणाम् ॥ ४६ ॥

कफप्रमेहे चत्वारः कषाययोगाः ।

रोध्राभयाकट्फलमुस्तकानां विडङ्गपाठार्जुनधन्वनानाम् ।
कदम्बशालार्जुनदीप्यकानां विडङ्गदार्वीधवशल्यकानाम् ४७
चत्वार एते मधुना कषायाः कफप्रमेहेषु निषेवणीयाः ।

पित्तप्रमेहे चत्वारः कषाययोगाः ।

रोध्रार्जुनोशीरकुचन्दनानामरिष्टसेव्यामलकाभयानाम् ॥ ४८॥
धात्र्यर्जुनारिष्टकवत्सकानां नीलोत्पलैलाद्विनिशार्जुनानाम् ।
चत्वार एते विहिताः कषायाः पित्तप्रमेहे मधुसंप्रयुक्ताः ॥४९

नीलादिप्रमेहेषु पञ्चकषाययोगाः ।

अश्वत्थचतुरङ्गुलन्यग्रोधादिफलत्रयैः ।
सरक्तसारमञ्जिष्ठाः क्राथाः पञ्च समाक्षिकाः ॥ ५० ॥
नीलहारिद्रसिकताक्षारमाञ्जिष्ठकाह्वयान् ।
मेहान् हन्युः क्रमादेते

रक्तमेहे खर्जूरादिकषायः ।

सक्षौद्रो रक्तमेहजित् ॥ ५१ ॥
क्राथः खर्जूरकाश्मर्यतिन्दुकास्थ्यमृताकृतः ।

सर्पिर्मेहे छिन्नादिकषायः ।

छिन्नावह्लिकषायेण पाठाकुटजरामठम् ।
तिक्तां कुष्ठं च संचूर्ण्य सर्पिर्मेहे पिबेन्नरः ॥ ५२ ॥

क्षौद्रमेहे खदिरादिकषायः ।

खदिरकदरपूगक्काथं क्षौद्राह्वये पिबेत् ॥ ५३ ॥

वसामेहेऽग्निमन्थकषायः ।

अग्निमन्थकषायं तु वसामेहे प्रयोजयेत् ।

हस्तिमेहे पाठादिकषायः ।

पाठाशिरीषदुस्पर्शामूर्वाकिंशुकतिन्दुक- ।
कपित्थानां भिषक् क्राथं हस्तिमेहे प्रयोजयेत् ॥ ५४ ॥

कफपित्तमेहे कम्पिल्लकादिचूर्णम् ।

कम्पिल्लसप्तच्छदशालजानि बिभीतरोहीतककौटजानि ।
कपित्थपुष्पाणि च चूर्णितानि क्षौद्रेण लिह्यात्कफपित्तमेही ५५

सर्वप्रमेहेषु कतिपययोगाः ।

स्निग्धं वान्तं विरिक्तं च निरूढं पाययेद्रसम् ।
धात्र्याः सर्वप्रमेहेषु निशाक्षौद्रसमन्वितम् ॥ ५६ ॥
कषायमथवा दारुत्रिफलामुस्तकैः शृतम् ।
त्रिफलादारुदार्व्यब्दक्वाथः क्षौद्रेण मेहहा ॥ ५७ ॥
कुटजासनदार्व्यब्दफलत्रयभवोऽथवा ।
गुडूच्याः स्वरसः पेयो मधुना सर्वमेहनुत् ॥ ५८ ॥
फलत्रिकं दारुनिशां विशालां मुस्तां च निःक्वाथ्य सरात्रिकल्कम् ।
पिबेत्कषायं मधुसंप्रयुक्तं सर्वप्रमेहेषु समुत्थितेषु ॥ ५९ ॥
कटङ्कटेरीमधुकत्रिफलाचित्रकैः समैः ।
सिद्धः कषायः पातव्यः प्रमेहाणां विनाशनः ॥ ६० ॥

प्रमेहे गोक्षुरादिगुग्गुलुवटिका ।

त्रिकटुत्रिफलाचूर्णं तुल्यं शुद्धं च गुग्गुलुम् ।
गोक्षुरक्वाथसंयुक्तं गुटिकां कारयेद्बुधः ॥ ६१ ॥
दोषकालबलापेक्षी भक्षयेच्चानुलोमिकाम् ।
न चात्र परिहारोऽस्ति कर्म कुर्याद्यथेप्सितम् ॥ ६२ ॥
प्रमेहान् वातरोगांश्च मूत्राघातोदरं जयेत् ।

प्रमेहे यवयोगः ।

यवान् सुकुट्टितान् कृत्वा गोमूत्रे परिभावयेत् ॥ ६३ ॥
त्रिफलारससंशुष्कान् सप्ताहं भावयेत्पुनः ।
तेभ्यो यवेभ्यः सक्तूंश्च कुल्माषान् भोज्यमेव च ॥ ६४ ॥
अपूपांश्चापि कुर्वीत प्रमेहाणां निवृत्तये ।

प्रमेहे शिलाजतुयोगः।

शालसारादितोयेन भावितं यच्छिलाजतु।
पिबेत्तेनैव संशुद्धकायः पिष्टं यथाबलम् ॥ ६५ ॥
कुर्यादेवं तुलां यावदुपयुञ्जीत मानवः।
मधुमेहं विहायासौ शर्करामश्मरीं तथा ॥ ६६ ॥
वपुर्वर्णबलोपेतं शतं जीवत्यनामयः।
माक्षीकधातुमप्येवं युञ्ज्याचास्याप्ययं गुणः ॥ ६७ ॥

सर्वप्रमेहे न्यग्रोधाद्यं चूर्णम्।

न्यग्रोधोदुम्बराश्वत्थश्योनाकारग्वधाः समम् ॥ ६८ ॥
आम्रं कपित्थं जम्बूश्च पियालः ककुभो धवः।
मधूकं मधुकं रोध्रं वरुणः पारिभद्रकः ॥ ६९ ॥
पलाशो मेषशृङ्गी च दन्ती चित्रकमाढकी।
करञ्जस्त्रिफला शक्रं भल्लातकफलानि च ॥ ७० ॥
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत्।
न्यग्रोधाद्यमिदं चूर्णं मधुना सह लेहयेत् ॥ ७१ ॥
फलत्रयरसं चानु पिबेन्मूत्रं विशुद्ध्यति।
अनेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च।
प्रशमं यान्ति योगेन पिटका न च जायते ॥ ७२ ॥

प्रमेहे लोहादिचूर्णम्।

चूर्णानि लोहत्रिफलाशिलानां क्षौद्रेण लीढानि पृथक्समं वा।
मेहान्समस्तानपि नाशयन्ति पीतः कदाचित्स्वरसो गुडूच्याः॥

प्रमेहे हरिद्राधात्र्योर्योगः।

चूर्णं निशाया मधुना समेतं धात्रीफलानां स्वरसेन मिश्रम्।
विलीढमल्पैर्दिवसैर्निहन्ति प्रमेहसंज्ञानखिलान्विकारान् ॥७४॥

प्रमेहे आमलहरीतक्योर्योगः।

आमलरसं मधुना विमिश्रितमथवा हरीतकीचूर्णम्।
सेवेत्प्रमेहरोगं हरति च दुःखसंघातम् ॥ ७५ ॥

प्रमेहे खदिरादियोगः।

खदिरं शर्करा दारु हरिद्रा मुस्तमेव च।
पाठा च गुडमिश्रोऽयं हरेद्रोगं प्रमेहजम् ॥ ७६ ॥

प्रमेहे कुष्ठाद्यं चूर्णम्।

कुष्ठं हरिद्राद्वयदेवदारु पाठा गुडूची त्रिफला च मुस्तम्।
एषां हि चूर्णं मधुना विमिश्रं मूत्रप्रमेहं हरति व्यथां च ॥७७

प्रमेहे श्वदंष्ट्राद्यं चूर्णम्।

श्वदंष्ट्रा त्रिफला मुस्ता गुडूची फल्गुपल्लवाः।
दर्भाः कुशाश्च गण्डीरं रोहिषस्य च पल्लवाः ॥ ७८ ॥
काला पुनर्नवा श्यामा सारिवा देवदारु च।
पिप्पली शृङ्गवेरं च विडङ्गं मरिचानि च ॥ ७९ ॥
पाठा कम्पिल्लकं भार्गी द्वे हरिद्रे निदिग्धिका।
एरण्डमूलं दन्ती च चित्रकं कटुरोहिणी ॥ ८० ॥
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत्।
यावन्त्येतानि चूर्णानि द्विस्तावत्स्यादयोरजः ॥ ८१ ॥
ततो बिडालपदकं पिबेदुष्णेन वारिणा।
लाभेन चापि मद्यानां प्रमेहादाशु मुच्यते ॥ ८२ ॥
एतच्छ्वयथुमर्शांसि पाण्डुरोगं सकामलम्।
उदराण्यथ शूलानि प्लीहानं चापकर्षति ॥ ८३ ॥
एभिर्गोमूत्रपिष्टैस्तु कटकान् कारयेद्भिषक्।
रोगेष्वेतेषु मुख्याः स्युर्बलमांसविवर्धनाः ॥ ८४ ॥

पित्तप्रमेहे गोक्षुरादिक्वाथः।

गोक्षुरो वंशसारश्च कारमर्दनलाङ्घ्रिजः।
क्वाथः पित्तप्रमेहं च निहन्ति सितया सह ॥ ८५ ॥

पित्तप्रमेहे पथ्यादिकषायः।

पथ्योशीरशिवामुस्तानिशोत्पलसमुद्भवः।
क्वाथो मधुयुतः पीतः प्रमेहं हन्ति पित्तजम् ॥ ८६ ॥

श्लेष्मप्रमेहे हरिद्रादिकषायः।

निशाद्वयविडङ्गानि पथ्या शुण्ठी समांशतः।
श्लेष्मप्रमेहनाशः स्यादस्य क्वाथस्य पानतः॥ ८७॥

प्रमेहे मुस्तादियोगः।

मुस्ता निशाद्वयं पाठा गुडूची देवडङ्गरी।
खदिरः कुष्ठमेतानि संपिष्य त्रिफलाम्भसा॥ ८८॥
हरन्ति मधुपीतानि प्रमेहं पीडया सह।
मधुपीतोऽश्मभेदो वा प्रमेहं हन्ति दारुणम्॥ ८९॥
मुस्तेन्द्रदारुत्रिफलाकषायः प्रमेहहृन्मेहवतां नराणाम्।
धात्रीफलक्वाथयुतः क्षपायाः कल्कोऽथवा माक्षिकसंप्रयुक्तः॥

प्रमेहपिटिकाचिकित्सा।

प्रमेहपिटिकानां च कार्यं रक्तावसेचनम्।
पाटनं चैव पक्वानां व्रणवत्स्यात्क्रियाविधिः॥ ९१॥
शराविकाद्याः पिटकाः साधयेच्छोथवद्विपक्।
जलौकाक्षारशस्त्राग्नियोगेनोपशमं नयेत्॥ ९२॥
ततोऽप्रमत्तैर्वैद्यैश्च विधेया व्रणवत् क्रिया।
पक्वां चिकित्सेद्व्रणवत्तासां पानेषु शस्यते॥ ९३॥
क्वाथो वनस्पतेर्वास्तिर्मूत्रं तीक्ष्णं च शोधनम्।
एलादिकेन कुर्वीत तैलं च व्रणरोपणम्॥ ९४॥
आरग्वधादिना कुर्यात्क्वाथमुद्वर्तनानि च।
शालसारादिना सेकं भोज्यानि चणकादिना॥ ९५॥
दण्डोत्पलकमूलेन पिटिका संप्रलेपिता।
तण्डुलोदकपिष्टेन नाशमायात्यसंशयम्॥ ९६॥
क्षीरमौदुम्बरं यद्वा बाकुचं वा प्रयोजयेत्।
पिटकासु समस्तासु लेपनं संप्रशान्तये॥ ९७॥

---

१ 'बास्तं मूत्रं' ख.।

प्रमेहिणां वर्ज्यानि।

सौवीरकं सुराशुक्तं तैलं क्षीरं घृतं गुडम्।
अम्लेक्षुरसपिष्टान्नानूपमांसानि वर्जयेत् ॥ ९८ ॥

इति श्रीवैद्यवरशोढलप्रथिते गदनिग्रहे कायचिकित्साखण्डे प्रमेहाधिकारस्त्रिंशत्तमः॥

## अथ मेदोरोगाधिकार एकत्रिंशत्तमः।

मेदोरोगलक्षणम्।

अव्यायामदिवास्वप्नश्लेष्मलाहारसेविनः।
मधुरोऽन्नरसः प्रायः स्नेहान्मेदो विवर्धयेत् ॥ १ ॥
मेदसाऽऽवृतमार्गत्वात्पुष्यन्त्यन्ये न धातवः।
मेदस्तु चीयते तस्मादशक्तः सर्वकर्मसु ॥ २ ॥
क्षुद्रश्वासतृषामोहस्वप्नक्रथनसादनैः।
युक्तः क्षुत्स्वेददौर्गन्ध्यैरल्पप्राणोऽल्पमैथुनः ॥ ३ ॥
मेदस्तु सर्वभूतानामुदरेष्वस्थिषु स्थितम्।
अत एवोदरे वृद्धिः प्रायो मेदस्विनो भवेत् ॥ ४ ॥
मेदसाऽऽवृतमार्गत्वाद्वायुः कोष्ठे विशेषतः।
चरन् संधुक्षयत्यग्निमाहारं शोषयत्यपि ॥ ५ ॥
तस्मात्स शीघ्रं जरयत्याहारं काङ्क्षत्यपि।
विकारांश्चाश्नुते घोरान् कांश्चित्कालव्यतिक्रमात् ॥ ६ ॥
एतावुपद्रवकरौ विशेषादग्निमारुतौ।
एतौ हि दहतः स्थूलं वनं दावानलो यथा ॥ ७ ॥
मेदस्यतीव संवृद्धे सहसैवानिलादयः।
विकारान् दारुणान् कृत्वा नाशयन्त्याशु जीवितम् ॥ ८
मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः।
अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥ ९ ॥

इति मेदोरोगनिदानम्॥

अथातो मेदोरोगचिकित्सितं व्याख्यास्यामः।

मेदोरोगे सामान्यचिकित्सा।

पुराणाः शालयो मुद्गाः कुलत्थोद्दालकोद्रवाः।
लेखना बस्तयश्चैव सेव्या मेदस्विना सदा ॥ १० ॥
चिन्ता क्रोधस्तथा धूमो व्यायामो रक्तमोक्षणम्।
उपवासोऽसुखा शय्या सत्त्वौदार्यं तमोजयः ॥ ११ ॥
श्रमचिन्ताव्यवायाध्वक्षौद्रजागरणप्रियः।
हन्त्यवश्यमतिस्थौल्यं यवश्यामाकभोजनः ॥ १२ ॥
प्रातर्मधुयुतं वारि सेवितं स्थौल्यनाशनम्।
विडङ्गनागरक्षारकाललोहरजो मधु ॥ १३ ॥
यवामलकचूर्णं तु योगोऽयं स्थौल्यनाशनः।
उष्णमन्नस्य मण्डं वा पिबन् कृशतनुर्भवेत् ॥ १४ ॥
सचव्यजीरकव्योषहिङ्गुसौवर्चलाभयाः।
मधुना सक्तवः पीता मेदोघ्ना वह्निदीपनाः ॥ १५ ॥

मेदोरोगे व्योषाद्यं संतर्पणम्।

व्योषं विडङ्गं शिग्रुं च त्रिफलां कटुरोहिणीम्।
बृहत्यौ द्वे हरिद्रे द्वे पाठामतिविषां स्थिराम् ॥ १६ ॥
हिङ्गु केबुकमूलानि यवानीधान्यचित्रकम्।
सौवर्चलमजाजीं च हपुषां चेति चूर्णयेत् ॥ १७ ॥
चूर्णतैलघृतक्षौद्रभागाः स्युर्मानतः समाः।
सक्तूनां षोडशगुणो भागः संतर्पणं पिबेत् ॥ १८ ॥
प्रयोगादस्य शाम्यन्ति रोगाः संतर्पणोत्थिताः।
प्रमेहा मूढवाताश्च कुष्ठान्यर्शांसि कामलाः ॥ १९ ॥
प्लीहः पाण्ड्वामयः शोथो मूत्रकृच्छ्रमरोचकम्।
हृद्रोगो राजयक्ष्मा च कासश्वासौ गलग्रहः ॥ २० ॥

१ द्राक्षादाडिमखर्जूरकदलीशर्करान्वितम्।
लाजाचूर्णं समध्वाज्यं संतर्पणमुदाहृतम् ॥ १ ॥

क्रमशो ग्रहणीदोषाः शैत्यं स्थौल्यमतीव च ।
नराणां दीप्यते वह्निः स्मृतिर्बुद्धिश्च वर्धते ॥ २१ ॥

मेदोरोगे त्रिफलाद्यं तैलम् ।

त्रिफलातिविषामूर्वात्रिवृच्चित्रकवासकैः ।
निम्बारग्वधषड्ग्रन्थासप्तपर्णनिशाद्वयैः ॥ २२ ॥
गुडूचीन्द्रसुराकृष्णाकुष्ठसर्षपनागरैः ।
तैलमेभिः समैः पक्वं सुरसादिरसाप्लुतम् ॥ २३ ॥
पानाभ्यञ्जनगण्डूषनस्यबस्तिषु योजितम् ।
प्रमेहस्थौल्यकण्ड्वादीञ्जयेत्कफकृतान् गदान् ॥ २४ ॥

मेदोरोगे नवकगुग्गुलुः ।

व्योषाग्निमुस्तत्रिफलाविडङ्गैर्गुग्गुलुं समम् ।
खादन् सर्वाञ्जयेद्व्याधीन् मेदःश्लेष्मामवातजान् ॥२५॥

शरीरदौर्गन्ध्यहरा योगाः ।

शिरीषलामज्जकहेमरोध्रैस्त्वग्दोषसंस्वेदहरः प्रघर्षः ।
पत्राम्बुलोध्राभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः॥२६॥
वासादलरसो लेपाच्छङ्खचूर्णावचूर्णितः ।
बिल्वपत्ररसो वापि गात्रदौर्गन्ध्यनाशनः ॥ २७ ॥
हरीतकी रोध्रमरिष्टपत्रं चूतत्वचो दाडिमवल्कलं च ।
एषोऽङ्गरागः कथितोऽङ्गनानां जङ्घाप्रघर्षेषु नराधिपानाम्॥२८
गोमूत्रपिष्टं विनिहन्ति कुष्ठं वर्णोज्ज्वलं गोपयसा च युक्तम् ।
कक्ष्यादिदौर्गन्ध्यहरं पयोभिः शस्तं वशीकृद्रजनीद्वयं हि॥२९॥
पिष्ट्वा जलेन रजनीं महिषीपुरीष-
मध्ये निधाय मृदुना दहनेन पक्त्वा ।
उद्वर्तनेन विदधाति शरीरमुद्य-
च्छीतांशुबिम्बरुचिसोदरचारुकान्तिम् ॥ ३० ॥
यः कुष्ठसर्षपतिलैर्निशया च दार्व्या
गात्रं प्रलिप्य सलिलैः कुरुतेऽभिषेकम् ।

तस्य प्रतप्तवरकाञ्चनकान्तिगौर-
मुद्दामसौरभमतीव विराजते तत् ॥ ३१ ॥
जम्बूदलार्जुनतरुप्रसवैः सकुष्ठै-
रुद्वर्तनं प्रकुरुते प्रतिवासरं यः।
प्रस्वेदबिन्दुकणिकानिकरानुषक्ता
दुर्गन्धता वपुषि तस्य पदं न धत्ते ॥ ३२ ॥
शिरीषपद्मकोशीररोध्रोद्वर्तितविग्रहः।
ग्रीष्मोष्मणाऽपि नाप्नोति दौर्गन्ध्यं जातु मानवः॥३३॥
ह्रीबेरोशीरमलयजकाश्मीरकाञ्जिकैर्लेपात्।
अपगच्छति दौर्गन्ध्यं मुण्डीचूर्णस्य पानाद्वा ॥ ३४ ॥
श्यामारग्वधनिम्बरोध्ररजनीमुस्तैः शिरीषत्वचा
युक्तैर्दाडिमवल्कलेन च पुनः स्यादङ्गरागः शुभः।
यद्वा दाडिमचूतवल्कलरसैर्निम्बस्य पत्रैश्च यः
स स्त्रीणां द्युतिकृन्नृणां तु कथितो जङ्घाप्रघर्षः परः॥३५
रोध्रोशीरशिरीषपद्मकचूर्णेन लेपिते देहे।
ग्रीष्मेऽपि गन्धदोषाः स्वेदप्रभवा न जायन्ते ॥ ३६ ॥
बिल्वशिवासमभागं लेपाद्भुजगगन्धमूलमपनयति।
परिणततिन्तिडिकान्वितपूतिकरञ्जोरथबीजं वा॥३७॥

इति श्रीवैद्यशोढलप्रथिते गदनिग्रहे कायचिकित्साखण्डे मेदोरोगाधिकार एकत्रिंशत्तमः।

---

## अथोदररोगाधिकारो द्वात्रिंशत्तमः।

अथात उदरनिदानं व्याख्यास्यामः।

उदरसंप्राप्तिः।

रोगाः सर्वेऽपि मन्दाग्नौ सुतरामुदराणि च।
अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसंचयात्॥ १ ॥

रुद्ध्वा स्वेदाम्बुवाहीनि दोषाः स्रोतांसि संचिताः ।
प्राणाग्न्यपानान् संदूष्य जनयन्त्युदरं नृणाम् ॥ २ ॥

उदरपूर्वरूपम् ।

तत्पूर्वरूपं बलवर्णकाङ्क्षावलीविनाशो जठरे च राज्यः ।
जीर्णापरिज्ञानविदाहवत्यो बस्तौ रुजः पादगतश्च शोफः॥३

उदरसामान्यलक्षणम् ।

आध्मानं गमनेऽशक्तिर्दौर्बल्यं दुर्बलाग्निता ।
शोथः सदनमङ्गानां सङ्गो वातपुरीषयोः ॥ ४ ॥
दाहस्तन्द्रा च सर्वेषु जठरेषु भवन्ति हि ।
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ॥ ५ ॥
संभवन्त्युदराण्यष्टौ तेषां लिङ्गं पृथक् शृणु ।

वातोदरलक्षणम् ।

तत्र वातोदरे शोफः पाणिपन्नाभिकुक्षिषु ॥ ६ ॥
कुक्षिपार्श्वोदरकटीपृष्ठरुक्पर्वभेदनम् ।
शुष्ककासोऽङ्गमर्दोऽधोगुरुता मलसंग्रहः ॥ ७ ॥
श्यावारुणत्वगादित्वमकस्माद्वृद्धिह्रासवत् ।
सतोदभेदमुदरं तनुकृष्णशिराततम् ॥ ८ ॥
आध्मातदृतिवच्छब्दमाहतं प्रकरोति च ।
वायुश्चात्र सरुक्छब्दो विचरेत्सर्वतोगतिः ॥ ९ ॥

पित्तोदरलक्षणम् ।

पित्तोदरे ज्वरो मूर्च्छा दाहस्तृट् कटुकास्यता ।
भ्रमोऽतिसारः पीतत्वं त्वगादावुदरं हरित् ॥ १० ॥
पीतताम्रशिरानद्धं सस्वेदं सोष्म दह्यते ।
धूमायति मृदुस्पर्शं क्षिप्रपाकं प्रदूयते ॥ ११ ॥

श्लेष्मोदरलक्षणम् ।

श्लेष्मोदरेऽङ्गसदनं स्वापः श्वयथुगौरवम् ।
निद्रोत्क्लेशोऽरुचिः श्वासः कासः शुक्लत्वगादिता॥१२॥

उदरं स्तिमितं स्निग्धं शुक्लराजीततं महत्।
चिराभिवृद्धि कठिनं शीतस्पर्शं गुरु स्थिरम् ॥ १३ ॥

सन्निपातोदरलक्षणम्।

स्त्रियोऽन्नपानं नखरोममूत्रविडार्तवैर्युक्तमसाधुवृत्ताः।
यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बुदूषीविषसेवनाद्वा ॥ १४ ॥
तेनाशु रक्तं कुपिताश्च दोषाः कुर्युश्च सद्यो जठरं त्रिलिङ्गम्।
तच्छीतवाते भृशदुर्दिने च विशेषतः कुप्यति दह्यते च ॥१५॥
स चातुरो मूर्च्छति हि प्रसक्तं पाण्डुः कृशः शुष्यति तृष्णया च।
दूष्योदरं कीर्तितमेतदेवं

प्लीहोदरलक्षणम्।

प्लीहोदरं कीर्तयतो निबोध ॥ १६ ॥
विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थमसृक्कफश्च।
प्लीहाभिवृद्धिं कुरुतः प्रवृद्धं प्लीहोत्थमेतज्जठरं वदन्ति ॥ १७ ॥
तद्वामपार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोऽत्र।
मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डुः॥१८॥
सव्यान्यपार्श्वे यकृति प्रदुष्टे ज्ञेयं यकृद्दाल्युदरं तदेव।
उदावर्तरुजानाहैर्मोहतृड्दहनज्वरैः।
गौरवारुचिकाठिन्यैर्विद्यात्तत्र मलान् क्रमात् ॥ १९ ॥

बद्धगुदोदरलक्षणम्।

यस्यान्त्रमन्नैरुपलेपिभिर्वा बालाश्मभिर्वा पिहितं यथावत्।
संचीयते तस्य मलः सदोषः शनैः शनैः संकरवच्च नाड्याम्२०
निरुध्यते तस्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम्।
हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरं बद्धगुदं वदन्ति ॥ २१ ॥

परिस्राव्युदरलक्षणम्।

शल्यं तथान्त्रोपहितं यदन्नं भुक्तं भिनत्त्यागतमन्यथा वा।
तस्मात्स्रुतोऽन्त्रात्सलिलप्रकाशः स्रावः स्रवेद्वै गुदतस्तु भूयः २२

नाभेरधश्चोदरमेति वृद्धिं निस्तुद्यते दाल्यति चातिमात्रम्।
एतत्परिस्राव्युदरं प्रदिष्टं

जलोदरलक्षणम्।

दकोदरं कीर्तयतो निबोध ॥ २३ ॥
यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढः।
पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दूष्यन्ति हि तद्वहानि २४
स्नेहोपलिप्तेष्वथवाऽपि तेषु दकोदरं पूर्ववदभ्युपैति।
स्निग्धं महत्तत्परिवृत्तनाभि समाततं पूर्णमिवाम्बुना च।
यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत्॥

उदरिणः साध्यासाध्यलक्षणानि।

जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम्।
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ॥ २६ ॥
पक्षाद्बद्धगुदं तूर्ध्वं सर्वं जातोदकं तथा।
प्रायो भवत्यभावाय छिद्रान्त्रं चोदरं नृणाम् ॥ २७ ॥
शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम्।
बलशोणितमांसाग्निपरिक्षीणं विवर्जयेत् ॥ २८ ॥
पार्श्वभङ्गान्नविद्वेषशोफातीसारपीडितम्।
विरिक्तं चाप्युदरिणं पूर्यमाणं विवर्जयेत् ॥ २९ ॥

इत्युदरनिदानम् ॥

---

अथोदरचिकित्सितं व्याख्यास्यामः।

सर्वोदरसामान्यचिकित्सा।

रक्तशालिर्यवा मुद्गा जाङ्गलाश्च हिता रसाः।
विरेकास्थापनं शस्तं सर्वेषु जठरेषु च ॥ ३० ॥

वातोदरप्रतीकारः।

वातोदरे स्नेहपानमादौ संस्कृतमिष्यते।
स्वेदाभ्यङ्गावगाहाश्च कार्यं जठरमार्दवम् ॥ ३१ ॥

वातोदरं बलवतः स्नेहस्वेदैरुपाचरेत् ।
स्निग्धाय स्वेदिताङ्गाय दद्यात्स्नेहविरेचनम् ॥ ३२ ॥
दोषातिमात्रोपचयात्स्नेहमार्गनिरोधनात् ।
संभवत्युदरं तस्मान्नित्यमेनं विरेचयेत् ॥ ३३ ॥

उदरे तक्रविधानम् ।

वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम् ।
शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥ ३४ ॥
यवानीसैन्धवाजाजीव्योषयुक्तं कफोदरी ।
सन्निपातोदरी तक्रं त्रिकटुक्षारसैन्धवैः ॥ ३५ ॥
मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः ।
युक्तं प्लीहोदरी जातं सव्योषमुदकोदरी ॥ ३६ ॥
बद्धोदरी तु हपुषासैन्धवाजाजिदीप्यकैः ।
पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम् ॥ ३७ ॥
गौरवारोचकानाहमन्दवह्न्यतिसारिणाम् ।
तक्रं वातकफार्तानाममृतत्वाय कल्पते ॥ ३८ ॥
नातिसान्द्रं हितं पाने स्वादु तक्रमपेलवम् ।

वातोदरे स्नेहविरेचनविधिः ।

पाययेत्तैलमेरण्डं समूत्रं सपयोऽपि वा ॥ ३९ ॥
मासं द्वौ वाऽथवा गव्यं मूत्रं माहिषमेव वा ।
सूक्ष्माणां बहुवातानां दोषसंशुद्धिकाङ्क्षिणाम् ॥ ४० ॥
स्नेहनीयानि सर्पींषि जठरघ्नानि योजयेत् ।
एभिः स्निग्धाय संजाते बले शान्ते च मारुते ॥ ४१ ॥
स्रस्तदोषाश्रये दद्यात्स्नेहयुक्तं विरेचनम् ।

उदरे निरूहबस्तियोजना ।

सुविरिक्तो नरो यस्तु पुनराध्माति तं भिषक् ॥ ४२ ॥

सुस्निग्धैरम्ललवणैर्निरूहैः समुपाचरेत् ।

उदरे पटोलादिचूर्णम् ।

पटोलमूलधान्यक्षत्रायन्तीरजनीसमम् ॥ ४३ ॥
यंशं विडङ्गं कम्पिल्लं त्रिवृच्चापि चतुर्गुणा ।
पथ्याद्यद्गुणितं चूर्णं पीतं दोषचलं प्रति ॥ ४४ ॥
क्षीराम्बुमूत्रैर्जठरप्लीहश्वयथुनाशनम् ।

उदरेऽवस्थाविशेषे तैलम् ।

पार्श्वशूलमुपस्तम्भं हृद्रोगं च समीरणः ॥ ४५ ॥
यदि कुर्यात्तदा तैलं बिल्वक्षारान्वितं पिबेत् ।
त्रिवृत्त्रायन्तिशम्याकैः शृतमेकाह्निसर्वशः ॥ ४६ ॥

पित्तोदरे क्षीरयोगः ।

क्षीरं पित्तोदरं हन्ति पीतमुष्णं यथाबलम् ।

उदरे कम्पिल्लकादिघृतम् ।

कम्पिल्लकत्रिवृतयोः कुडवौ द्वौ पलद्वयम् ॥ ४७ ॥
पिप्पल्यास्तैर्घृतप्रस्थं धात्रीक्षूणां रसे पचेत् ।

कफोदरचिकित्सा ।

स्निग्धस्विन्नविशुद्धं च कफोदरिणमातुरम् ॥ ४८ ॥
संसर्जयेच त्रिकटुक्षारयुक्तैः कफापहैः ।
उष्णाम्भसा तु युञ्जीत पिप्पलीं च कफोदरी ॥ ४९ ॥
पिप्पलीवर्धमानं वा पयसैव प्रयोजयेत् ।
उष्ट्रीक्षीरमनन्नाम्बु सप्ताहं वा कफोदरी ॥ ५० ॥
पिबेन्मासं परं चातो वृत्तिः स्याच विरिक्तवत् ।
उष्ट्रीक्षीरं पिबेज्जीर्णे निरन्नो जठरामयी ॥ ५१ ॥
पक्षं मासमृतुं वापि न च पानीयमाचरेत् ।
शिलाजतुं प्रयुञ्जीत मूत्रैर्वापि पयोऽन्नभुक् ॥ ५२ ॥
भिन्नवर्चाश्च मन्दाग्निरुदश्विचा च केवलम् ।
कफोदर्यथ सेवेत भल्लातकरसायनम् ॥ ५३ ॥

स्नुहीपयोभावितानां पिप्पलीनां पयोऽश्नतः।
सहस्रमुपयुञ्जीत शक्तितो जठरामये ॥ ५४ ॥
शिलाजतूनां मूत्राणां गुग्गुलोस्त्रिफलस्य च।
स्नुहीक्षीरप्रयोगश्च शमयत्युदरामयम् ॥ ५५ ॥

उदरे यूषयोगः।

स्नुक्पयसा परिभाविततण्डुलचूर्णविनिर्मितो यूपः।
उदरमुदारो हिंसाद्योगोऽयं सप्तरात्रेण ॥ ५६ ॥

उदरे पिप्पलीवर्धमानयोगः।

पिप्पलीवर्धमानं वा कल्पदिष्टं प्रयोजयेत्।
जठराणां विनाशाय नास्ति तेन समं भुवि ॥ ५७ ॥

उदरे दशमूलादिक्वाथः।

दशमूलदारुनागरच्छिन्नरुहपुनर्नवाक्वाथः।
जयति जलोदरशोथश्लीपदगलगण्डवातिकान् रोगान् ॥

सर्वोदरे पटोलाद्यं चूर्णम्।

पटोलमूलं रजनीं विडङ्गं त्रिफलात्वचः।
कम्पिल्लकं नीलिनीं च त्रिवृतां चेति चूर्णयेत् ॥ ५९ ॥
षडाद्यान् कार्षिकानन्त्यांस्त्रींश्च द्वित्रिचतुर्गुणान्।
कृत्वा चूर्णं ततो मुष्टिं गवां मूत्रेण ना पिबेत् ॥ ६० ॥
विरिक्तो जाङ्गलरसैर्भुञ्जीत मृदु भोजनम्।
मण्डं पेयां च पीत्वाऽथ सव्योषं षडहं पयः ॥ ६१ ॥
शृतं पिबेत्तु तच्चूर्णं पिबेदेवं पुनः पुनः।
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि ॥ ६२ ॥
कामलापाण्डुकुष्ठानि श्वयथुं चापकर्षति।

उदरे तुम्बर्वाद्यं चूर्णम्।

तुम्बरूण्यभया हिङ्गु पुष्करं लवणत्रयम् ॥ ६३ ॥
यवानी च यवक्षारं विडङ्गानि समानि च। ...

त्रिवृत्त्रिगुणितं चूर्णं समसुष्णाम्बुना पिबेत् ॥ ६४ ॥
आनाहमुदराण्यष्टौ विबन्धं च विनाशयेत् ।

उदरे चित्रकाद्यं घृतम्।

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात्पले ॥ ६५ ॥
कल्के सिद्धं घृतप्रस्थं सक्षीरं जठरी पिबेत् ।

उदरे रोहीतकसन्धानम्।

रोहीतकलतानां तु गण्डिकाः साभया जले ॥ ६६ ॥
मूत्रे वा सुनुयात्तत्र सप्तरात्रस्थितं पिबेत् ।
[illegible] ६७ ॥
[illegible] ।

उदरेऽष्टमूत्रोपयोगः।

मूत्राण्यष्टावुदरिणां पाने सेके प्रयोजयेत् ॥ ६८ ॥

उदरे देवदार्वादियोगः।

देवद्रुमं शिग्रुमयूरकं च गोमूत्रपिष्टान्यथवाऽश्वगन्धाम् ।
पीत्वाऽऽशु हन्यादुदरं प्रवृद्धं क्रमीन् सशोथानुदरं च दूष्यम्६९

वातोदरे दशमूलादिघृतम्।

दशमूलकषायेण रास्नानागरदारुभिः ।
पुनर्नवाभ्यां च घृतं सिद्धं वातोदरापहम् ॥ ७० ॥

वातोदरे दध्यादिघृतम्।

दध्यारनालकोलाम्बुकुलत्थयवजै रसैः ।
प्रत्येकमाढकमितैस्तिलतैलाढकं पचेत् ॥ ७१ ॥
बलापुनर्नवायष्टीरास्नानागरदारुभिः ।
साश्वगन्धैः पलार्धांशैस्तत्पिबेत्पवनोदरी ॥ ७२ ॥

वातोदरे निरूहानुवासनयोगः।

दशमूलबलैरण्डरास्नाचपांशुचित्रकान् ।
आरग्वधं यवान् कोलान् कुलत्थान् मदनानि च॥७३॥

पक्त्वाऽम्भसि रसेनैषां पिष्टैर्नतबलाफलैः ।
यवानीसर्षपैः कुष्ठशताह्वाचपलागुडैः ॥ ७४ ॥
क्षीरेणैरण्डतैलेन पुराणेन च सर्पिषा ।
संयोज्य मूत्रमदिरादधिमण्डाम्लकाञ्जिकैः ॥ ७५ ॥
वातोदरे निरूहः स्यादेभिरेव घृतं विना ।
तैलमेरण्डतैलं च सिद्धं स्यादनुवासनम् ॥ ७६ ॥

वातोदरे विडङ्गाद्यं तैलम् ।

विडङ्गत्रिफलाव्याघ्रीबृहतीचित्रकैः पृथक् ।
पलांशैः सर्पिषः प्रस्थं सुधाक्षीरपले पचेत् ॥ ७७ ॥
दधि द्विगुणितं दद्यात्तत्प्रयुक्तं यथाबलम् ।
वैरस्यवातजठरगुल्मक्षयघुनाशनम् ॥ ७८ ॥

वातोदरे कुष्ठाद्यं चूर्णम् ।

कुष्ठं दन्ती यवक्षारः पाठा त्रिलवणं वचा ।
अजाजी दीप्यको हिङ्गु स्वर्जिका चव्यचित्रकौ ॥७९॥
शुण्ठी चोष्णाम्भसा पीतं वातोदररुजापहम् ।

वातोदरे कतिपययोगाः ।

दशमूलकषायेण क्षीरवृत्तिः शिलाजतुम् ॥ ८० ॥
युञ्ज्याद्वातोदरी क्षीरमौष्ट्रमश्नीत केवलम् ।
पिप्पलीं वा प्रयुञ्जीत पयसा चान्नवर्जिताम् ॥ ८१ ॥
न पिप्पलीसमं ह्यस्ति जठराणां भिषग्जितम् ।

पित्तोदरचिकित्सा ।

पुनः क्षीरप्रयोगश्च बस्तिकर्म विरेचनम् ॥ ८२ ॥
क्रमेण ध्रुवमातिष्ठन् ततः पित्तोदरं जयेत् ।

पित्तोदरे हरीतकीयोगः ।

हरीतकीसहस्रं वा विधिवच्चोपयोजयेत् ॥ ८३ ॥
अन्नाम्बुवर्जी पित्तोत्थाज्जठराद्विप्रमुच्यते ।

पित्तोदरे शिलाजतुयोगः ।

पटोलत्रिफलातिक्तागवाक्षीक्वाथसंयुतम् ॥ ८४ ॥

शिलाजतुं प्रयुञ्जीत जीर्णे क्षीरौदनाशनः ।

पित्तोदरे सातलाद्यं घृतम् ।

सातलायाः पलार्धं स्यात्त्रायमाणापलत्रयम् ॥ ८५ ॥
क्षीरमाभ्यां शृतं पीतं पित्तोदरहरं परम् ।

पित्तोदरे घृतद्वयम् ।

गवाक्ष्यारग्वधो द्राक्षा पथ्या कम्पिल्लकं त्रिवृत् ॥ ८६ ॥
सातला पिप्पली चेति घृतप्रस्थं विपाचयेत् ।
क्षीरत्रायन्तिकाधात्रीरसैस्तुल्यघृतैः पृथक् ॥ ८७ ॥
घृते ते पित्तजठरप्लीहपाण्ड्वामयापहे ।

पित्तोदरे पृश्निपर्ण्यादिक्षीरम् ।

पृश्निपर्णीबलाव्याघ्रीद्राक्षानागरसाधितम् ॥ ८८ ॥
क्षीरं पित्तोदरहरमिति पित्तोदरे क्रिया ।

प्लीहोदरचिकित्सा ।

स्नेहस्वेदविरेकादि विधेयं प्लीहरोगिणाम् ॥ ८९ ॥
वामबाहौ च मोक्तव्या कूर्पराभ्यन्तरे शिरा ।
रोहीतककषायेण कृष्णामक्षसमां पिबेत् ॥ ९० ॥
प्लीहामयविनाशाय हिताशी नियतो नरः ।

प्लीहोदरे पुनर्नवादिचूर्णम् ।

पुनर्नवा शृङ्गवेरं देवदारु च भागिकाः ॥ ९१ ॥
यवानी साह्निडङ्गं च चित्रकश्चार्धभागिकाः ।
त्रिवृत्त्रिगुणितं चूर्णमुष्णेन पयसा पिबेत् ॥ ९२ ॥
गोमूत्रेणाथवा प्लीहशोफार्शःपाण्डुरोगजित् ।

प्लीहोदरे विडङ्गादियोगः ।

विडङ्गानि गवाक्षी च चित्रकश्चेति तत्समम् ॥ ९३ ॥
द्विगुणं देवकाष्ठं च श्योनाकः सपुनर्नवः ।
त्रिवृद्भागाश्च चत्वारस्तत्सर्वं कल्कपेषितम् ॥ ९४ ॥
क्षीरेणोष्णेन पातव्यं मुख्यं प्लीहविनाशनम् ।
अथवा तानि सर्वाणि गवां मूत्रेण पाययेत् ॥ ९५ ॥

उदरीभूतमप्येतत्प्लीहानं संप्रसाधयेत् ।

प्लीहोदरे चित्रकादिक्षारः ।

चित्रकः पिप्पली चैव सैन्धवं लवणं वचा ॥ ९६ ॥
घृतं चेति समांशानि कटाहे संवृतं दहेत् ।
पिबेत्क्षीरेण तं क्षारं मद्येनोष्णोदकेन वा ॥ ९७ ॥
प्लीहानमर्शः शूलानि गुल्मं चैव प्रणाशयेत् ।

प्लीहोदरेऽर्कपत्रक्षारः ।

अर्कपत्रं सलवणमन्तर्धूमं विपाचयेत् ॥ ९८ ॥
मस्तुना तत्पिबेत्क्षारं प्लीहोदरहरं परम् ।

यकृदाल्युदरचिकित्सा ।

प्लीहोदिष्टां क्रियां सर्वां यकृतः संप्रकल्पयेत् ॥ ९९ ॥
कार्यं दक्षिणबाहौ च तत्र शोणितमोक्षणम् ।

उदरे देवदार्वादिलेपः ।

देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः ॥ १०० ॥
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं समैः ।

उदरे वृश्चिकाल्याद्यवसेचनम् ।

वृश्चिकालीं वचां कुष्ठं पञ्चमूलं पुनर्नवाम् ॥ १०१ ॥
वर्षाभूं नागरं धान्यं जले पक्त्वाऽवसेचयेत् ।

उदरे माहिषक्षीरमूत्रोपयोगः ।

सक्षीरं माहिषं मूत्रं निराहारः पिबेन्नरः ॥ १०२ ॥
शाम्यत्यनेन जठरं सप्ताहादिति निश्चयः ।

उदरे हरीतकीयोगः ।

समादाय पलाशिन्याः क्षारप्रस्थचतुष्टयम् ॥ १०३ ॥
चतुर्गुणे समालोड्य गोमूत्रे क्वाथयेद्भिषक् ।
निःस्राव्य पादशिष्टं तु क्वाथं पञ्चशतानि ॥ १०४ ॥
निक्षिप्य तत्र पथ्यानां पुनरग्नावधिश्रयेत् ।
अर्धस्विन्नास्तु संस्थाप्याः क्वाथेन सह यत्नतः ॥ १०५॥

शिलाजतु प्रयुञ्जीत जीर्णे क्षीरौदनाशनः।

पित्तोदरे सातलाद्यं घृतम्।

सातलायाः पलार्धं स्यात्त्रायमाणापलत्रयम् ॥ ८५ ॥
क्षीरमाभ्यां शृतं पीतं पित्तोदरहरं परम्।

पित्तोदरे घृतद्वयम्।

गवाक्ष्यारग्वधो द्राक्षा पथ्या कम्पिल्लकं त्रिवृत् ॥ ८६
सातला पिप्पली चेति घृतप्रस्थं विपाचयेत्।
क्षीरत्रायन्तिकाधात्रीरसैस्तुल्यघृतैः पृथक् ॥ ८७ ॥
घृतं ते पित्तजठरप्लीहपाण्ड्वामयापहे।

पित्तोदरे पृश्निपर्ण्यादिक्षीरम्।

पृश्निपर्णीबलाव्याघ्रीद्राक्षानागरसाधितम् ॥ ८८ ॥
क्षीरं पित्तोदरहरमिति पित्तोदरे क्रिया।

प्लीहोदरचिकित्सा।

स्नेहस्वेदविरेकादि विधेयं प्लीहरोगिणाम् ॥ ८९ ॥
वामबाहौ च मोक्तव्या कूर्पराभ्यन्तरे शिरा।
रोहीतककषायेण कृष्णामक्षसमां पिबेत् ॥ ९० ॥
प्लीहामयविनाशाय हितार्थी नियतो नरः।

प्लीहोदरे पुनर्नवादिचूर्णम्।

पुनर्नवा शृङ्गवेरं देवदारु च भागिकाः ॥ ९१ ॥
यवानी स्याद्विडङ्गं च चित्रकश्चार्धभागिकाः।
त्रिवृत्त्रिगुणितं चूर्णमुष्णेन पयसा पिबेत् ॥ ९२ ॥
गोमूत्रेणाथवा प्लीहशोफार्शःपाण्डुरोगजित्।

प्लीहोदरे विडङ्गादियोगः।

विडङ्गानि गवाक्षी च चित्रकश्चेति तत्समम् ॥ ९३
द्विगुणं देवकाष्ठं च श्योनाकः सपुनर्नवः।
त्रिवृद्भागाश्च चत्वारस्तत्सर्वं कल्कपेषितम् ॥ ९४ ॥
क्षीरेणोष्णेन पातव्यं मुख्यं प्लीहविनाशनम्।
अथवा तानि सर्वाणि गवां मूत्रेण पाययेत् ॥ ९५

उदरीभूतमप्येतत्प्लीहानं संप्रसाधयेत् ।

प्लीहोदरे चित्रकादिक्षारः ।

चित्रकः पिप्पली चैव सैन्धवं लवणं वचा ॥ ९६ ॥
घृतं चेति समांशानि कटाहे संवृतं दहेत् ।
पिबेत्क्षीरेण तं क्षारं मद्येनोष्णोदकेन वा ॥ ९७ ॥
प्लीहानमर्शः शूलानि गुल्मं चैव प्रणाशयेत् ।

प्लीहोदरेऽर्कपत्रक्षारः ।

अर्कपत्रं सलवणमन्तर्धूमं विपाचयेत् ॥ ९८ ॥
मस्तुना तत्पिबेत्क्षारं प्लीहोदरहरं परम् ।

यकृदाल्युदरचिकित्सा ।

प्लीहोद्दिष्टां क्रियां सर्वां यकृतः संप्रकल्पयेत् ॥ ९९ ॥
कार्यं दक्षिणबाहौ च तत्र शोणितमोक्षणम् ।

उदरे देवदार्वादिलेपः ।

देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः ॥ १०० ॥
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं समैः ।

उदरे वृश्चिकाल्याद्यवसेचनम् ।

वृश्चिकालीं वचां कुष्ठं पञ्चमूलं पुनर्नवाम् ॥ १०१ ॥
वर्षाभूं नागरं धान्यं जले पक्त्वाऽवसेचयेत् ।

उदरे माहिषक्षीरमूत्रोपयोगः ।

सक्षीरं माहिषं मूत्रं निराहारः पिबेन्नरः ॥ १०२ ॥
शाम्यत्यनेन जठरं सप्ताहादिति निश्चयः ।

उदरे हरीतकीयोगः ।

समादाय पलाशिन्याः क्षारप्रस्थचतुष्टयम् ॥ १०३ ॥
चतुर्गुणे समालोड्य गोमूत्रे क्वाथयेद्भिषक् ।
निःस्राव्य पादशिष्टं तु क्वाथं पञ्चशतानि ॥ १०४ ॥
निक्षिप्य तत्र पथ्यानां पुनरप्यधिश्रयेत् ।
अर्धस्विन्नास्तु संस्थाप्याः क्वाथेन सह यत्नतः ॥ १०५ ॥

अयात्ततः सिन्धुयुता यवक्षारविमिश्रिताः ।
क्रमेणाग्निबलं लब्ध्वा प्रातरुत्थाय योगवित् ॥ १०६ ॥
जीर्णे पथ्यां च युञ्जानो मुच्यते तूदरामयात् ।
क्षारवारिपलं प्रातः पलाशिन्याः पिबेन्नरः ।
यवक्षारस्य कर्षेण मिश्रितं तूदरापहम् ॥ १०७ ॥

उदरेऽनुलोमनप्रशंसा ।

कुपितानिलमूलत्वात्संचितत्वान्मलस्य च ।
सर्वोदरेषु शंसन्ति बहुशस्त्वनुलोमनम् ॥ १०८ ॥

सर्वोदरेषु क्षीरमांसरसयोः प्रयोगः ।

आस्थापने चैव विरेचने च पाने तथाऽऽहारविधिक्रियासु ।
सर्वोदरेभ्यः कुशलैः प्रयोज्यं क्षीरं शृतं जाङ्गलजो रसो वा१०९

जलोदरे व्यधनोपदेशः ।

अक्रियाभिश्च सर्वाणि विक्रियाभिश्च देहिनाम् ।
जलीभवन्ति तेषां तु व्यधनं स्यात्सुखावहम् ॥ ११० ॥

जलोदरे शिग्रुमूलकषायः ।

सैन्धवचित्रकयुक्तं पिबति रसं शिग्रुमूलसंभूतम् ।
सपलाशतरुक्षारं तत्तस्य दकोदरं जयति ॥ १११ ॥

उदरे हरीतक्यादिवटिका ।

हरीतकी रोहितकं वचा च मध्वन्वितानां गुटिकां विधाय ।
संभाव्य गोमूत्ररसेन तां तु सर्वोदरे सोष्णजलेन सेवेत् ॥११२

सर्वोदरे सामुद्रशुक्तिक्षारादियोगः ।

सामुद्रशुक्तिकाक्षारो यवक्षारः ससैन्धवः ।
गोदध्ना संप्रयुज्येत सर्वोदरविनाशनः ॥ ११३ ॥

सर्वोदरे कुटजमूलादिचूर्णम् ।

कौटजकटुरोहिणिकागुडूचिकात्रिकटुमूलं तु ।
सोष्णोदकं तदनु च सर्वोदरपवननिर्दलनम् ॥ ११४ ॥

जलोदरे हरीतक्यादियोगः ।

हरीतकीं पुष्करतैलपकां संचूर्ण्य गोमूत्ररसैः पिबेद्वै ।
सपिप्पलीसैन्धवमिश्रितां च जलोदराक्रान्तजनः सुखाय॥११५॥

जलोदरे पुनर्नवादियोगः ।

पुनर्नवागुग्गुलुदेवदारुहरीतकीनां सगुडूचिकानाम् ।
पिष्टं तु गोमूत्रचयं निषेवेत्सर्वोदरे तीव्रजलोदरे च ॥ ११६ ॥

सर्वोदरे सर्जिक्षारादियोगः ।

सर्जिः सयवक्षारा नीली च त्रिकटु पञ्च लवणानि ।
चित्रकसहितं चूर्णं सघृतं सर्वोदरं हन्ति ॥ ११७ ॥

सर्वोदरे द्वितीयः पुनर्नवादियोगः ।

पुनर्नवां दार्वभयां गुडूचीं पिबेत्समूत्रां महिषाक्षयुक्ताम् ।
त्वग्दोषशोफोदरपाण्डुरोगस्थौल्यप्रसेकोर्ध्वसमीरणेषु ॥ ११८ ॥

सर्वोदरे गवाक्ष्यादियोगः ।

गवाक्षीशङ्खिनीदन्तीनीलीतिल्वकसंयुतम् ।
सर्वोदरविनाशाय गोमूत्रं पानमाहरेत् ॥ ११९ ॥

सर्वोदरे शिग्रुमूलादिक्षारः ।

शिग्रुमूलरसो वह्निः सैन्धवं ब्रह्मवृक्षकः ।
क्षारभक्षणतोऽमीषां याति सर्वोदरं शमम् ॥ १२० ॥

जलोदरे पथ्यादियोगः ।

पथ्या पुनर्नवा दारु गुडूची गुग्गुलुः समम् ।
पिष्य गोमूत्रपीतानि नाशयन्ति जलोदरम् ॥ १२१ ॥

जलोदरे त्रिवृदादियोगाः ।

त्रिवृता दन्तिनीमूलं देवदाली यवासकः ।
एकैकं वारिणा पीतं हन्ति सर्वं जलोदरम् ॥ १२२ ॥

प्लीहोदरे लवणादियोगः ।

लवणं राजिकामिश्रं समं गोमूत्रमिश्रितम् ।
त्रिशाणं हन्ति पीतं हि यकृत्प्लीहोदराण्यपि ॥ १२३ ॥

सन्निपातोदरे तक्रयोगः।

नातिसान्द्रं हितं पाने स्वादु तक्रमपेलवम्।
त्र्यूषणक्षारलवणैर्युक्तं च निचयोदरे ॥ १२४ ॥

उदरे वर्ज्यानि।

अम्बुपानं दिवास्वापं गुर्वभिष्यन्दि भोजनम्।
व्यायामं चाध्वयानं च जठरी परिवर्जयेत् ॥ १२५ ॥

प्लीहरोगे यवानिकादिचूर्णम्।

यवानिकाचित्रकयावशूकपञ्चग्रन्थदन्तीमगधोद्भवानाम्।
प्लीहानमेतद्विनिहन्ति चूर्णमुष्णाम्बुना मस्तुसुरासवैर्वा ॥१२६॥

उदरे विडङ्गादिचूर्णम्।

विडङ्गार्काग्निसिन्धूत्थसक्तून्दग्ध्वा वचायुतान्।
पिबेत्क्षीरेण संचूर्ण्य गुल्मप्लीहोदरापहान् ॥ १२७ ॥
पातव्यो युक्तितः क्षारः क्षीरेणोदधिशुक्तिजः।

प्लीहोदरे पिप्पलीयोगः।

पयसा वा प्रयोक्तव्याः पिप्पल्यः प्लीहनाशनाः ॥१२८॥

प्लीहोदरे भल्लातकादिमोदकः।

भल्लातकाभयाजाजीगुडैश्च मोदकः कृतः।
सप्तरात्रान्निहन्त्येष प्लीहानमतिदारुणम् ॥ १२९ ॥

प्लीहोदरे लशुनादियोगः।

लशुनं पिप्पलीमूलमभयां चैव भक्षयेत्।
पिबेद्गोमूत्रगण्डूषं प्लीहरोगविमुक्तये ॥ १३० ॥

प्लीहोदरे शरपुङ्खायोगः।

शरपुङ्खायाः कल्कस्तक्रेण निषेवितो यथाग्निबलम्।
यदि न जयति प्लीहानं शैलोऽपि तदा जले प्लवते ॥ १३१ ॥

सर्वोदरे रोहीतकादियोगः।

रोहीतकाभयाक्षोद्रभावितं मूत्रमम्बु वा।
पीतं सर्वोदरप्लीहमेहार्शःकृमिगुल्मनुत् ॥ १३२ ॥

प्लीहयकृदुदरयोः शिराव्यधोपदेशः।

दध्ना भुक्तवतो वामबाहुमध्ये शिरां भिषक्।
विध्येत्प्लीहविनाशाय यकृन्नाशाय दक्षिणे ॥ १३३ ॥
प्लीहानं मर्दयेद्गाढं दुष्टरक्तप्रवृत्तये।

यकृत्प्लीहोदरयोर्घृतयोगाः।

चित्रकस्य घृतं श्रेष्ठं रोहीतकघृतं तथा ॥ १३४ ॥
महारोहीतकं चैव यकृत्प्लीहनिवृत्तये।

प्लीहोदरे इन्द्रवारुणीयोगः।

मूलं विदार्य सुरनायकवारुणीजं
नामाभिधाय यदि रोगवतो नरस्य।
प्रक्षिप्यतेऽति यदि दूरतरं तदानीं
प्लीहोदरं क्षयमुपैत्यचिरेण तस्य ॥ १३५ ॥
यस्याभिधानमुच्चार्य दारयित्वेन्द्रवारुणम्।
मूलमुत्क्षिप्यते दूरं तस्य प्लीहा विनश्यति ॥ १३६ ॥

प्लीहोदरेऽर्कपत्रादिक्षारः।

विधाय पूर्वं लवणेन युक्तान्यर्कस्य पत्राणि पुटेन दग्ध्वा।
यो मस्तुयुक्तानि पिबत्यभीक्ष्णं प्लीहोदरं गच्छति तस्य नाशम्॥

उदरे पिप्पलीयोगः।

यः सप्तरात्रत्रितयं सुधायाः क्षीरेण चूर्णं मृदितं कणायाः।
लेढि प्रकामं मधुरं च भुङ्क्ते तस्योदरव्याधिरुपैति नाशम् १३८

उदरे विलेपीयोगः।

विस्राव्य रम्भादलभस्ममध्याच्चोयं ततस्तेन कृता विलेपी।
स्याद्भक्षिता सत्युदरामयानां नाशाय नूनं दिवसत्रयेण॥१३९॥

उदरे कदलीकन्दयोगः।

सर्पिर्गुडाभ्यां सह पाचयित्वा यः कन्दलीकन्दममन्दमत्ति।
सद्यः पतन्ति क्रमयः समग्रा यात्युग्रदन्तोदरकुक्षिपीडा॥१४०॥

कफोदरे चित्रकादिचूर्णम् ।

चित्रको हिङ्गु च समं त्रिवृच्छंखा च सातला ।
चतुर्गुणानि दन्त्यादनिचुलानि च तद्घृतम् ॥ १४१ ॥
सिद्धं कफोदरे तद्वच्चूर्णं वा चित्रकादिकम् ।

उदरे रास्नादियोगः ।

रास्नाकम्पिल्लकवचाविडङ्गं नीलिनी त्रिवृत् ॥ १४२ ॥
त्रिफला सातला दन्ती रजनी देवदारु च ।
पटोलस्य गवाक्ष्याश्च मूलं तत्सूक्ष्मचूर्णितम् ॥ १४३ ॥
पीतं गोमूत्रतोयाभ्यां गुल्मशोफोदरापहम् ।

प्लीहोदरे शिग्रुक्वाथः ।

पीतः प्लीहोदरं हन्यात्पिप्पलीमरिचान्वितः ॥ १४४ ॥
अम्लवेतससंयुक्तः शिग्रुक्वाथः ससैन्धवः ।

प्लीहोदरे पिप्पलीलोहयोगः ।

पिप्पलीलोहचूर्णं वा पयसा प्लीहनाशनम् ॥ १४५ ॥

प्लीहोदरे त्र्यूषणाद्यं चूर्णम् ।

त्र्यूषणं निचुलं दन्ती केसरं लवणत्रयम् ।
विशालां त्रिफलां दार्वीं पटोलं चेति चूर्णयेत् ॥१४६॥
सुखाम्बुनाऽथ मूत्रेण धात्रीफलरसेन वा ।
पीतमेतद्यथादोषं प्लीहोदरहरं परम् ॥ १४७ ॥

प्लीहोदरे पिप्पल्याद्यं चूर्णम् ।

पिप्पली नागरं दन्ती समभागास्त्रयोऽभया ।
त्रिगुणाऽथ विडादर्धं तच्चूर्णं प्लीहनाशनम् ॥ १४८ ॥
उष्णाम्बुक्षीरगोमूत्रैर्यथावत्संप्रयोजयेत् ।
सप्ताहं माहिषं मूत्रं पयसा वाऽम्बुवर्जितम् ॥ १४९ ॥
पीतमौष्ट्रं पयो मासं श्वयथूदरनाशनम् ।

सर्वोदरे पुनर्नवादिचूर्णम् ।

पुनर्नवामृतापाठादारुबिल्वं श्वदंष्ट्रिका ॥ १५० ॥

बृहत्यौ द्वे रजन्यौ द्वे पिप्पलीमूलचित्रकम् ।
समभागानि संचूर्ण्य गवां मूत्रेण वै पिबेत् ॥ १५१ ॥
बहुप्रकारं श्वयथुं सर्वगात्रविसारिणम् ।
हन्ति चाशूदराण्यष्टौ व्रणांश्चैवोद्धतानपि ॥ १५२ ॥

उदरे कतिपययोगाः ।

एरण्डतैलं दशमूलमिश्रं गोमूत्रयुक्तस्त्रिफलारसो वा ।
निहन्ति वातोदरशोथशूलं क्वाथः समूत्रो दशमूलजश्च ॥१५३॥
गोमूत्रयुक्तं महिषीपयो वा क्षीरं गवां वा त्रिफलाविमिश्रम् ।
क्षीरान्नभुक्केवलमेव गव्यं मूत्रं पिबेद्वा श्वयथूदरे च ॥ १५४ ॥

इति श्रीवैद्यसोढलग्रथिते गदनिग्रहे कायचिकित्साखण्डे उदररोगाधिकारो द्वात्रिंशत्तमः ।

---

## अथ श्वयथ्वधिकारस्त्रयस्त्रिंशत्तमः ।

अथातो श्वयथुनिदानं व्याख्यास्यामः ।

श्वयथुसंप्राप्तिः ।

पित्तरक्तकफान् वायुर्दुष्टो दुष्टान् बहिःशिराः ।
नीत्वा रुद्धगतिस्तैर्हि कुर्यात्त्वङ्मांससंश्रयम् ॥ १ ॥
उत्सेधं संहतं शोथं तमाहुर्निचयादतः ।
सर्वं हेतुविशेषैस्तु रूपभेदान्नवात्मकम् ॥ २ ॥
दोषैः पृथग्द्वयैः सर्वैरभिघाताद्विषादपि ।
द्विधा वा निजमागन्तुं सर्वाङ्गैकाङ्गजं च तम् ॥ ३ ॥

श्वयथुपूर्वरूपम् ।

तत्पूर्वरूपं दवथुः शिरायामोऽङ्गगौरवम् ।

श्वयथुनिदानम् ।

शुद्ध्यामयाभुक्तकृशाबलानां क्षाराम्लतीक्ष्णोष्णगुरूपसेवा ।
दध्याममृच्छाकविरोधिदुष्टगरोपसृष्टान्ननिषेवणं च ॥ ४ ॥
अर्शांस्यचेष्टा न च देहशुद्धिर्मर्मोपघातो विषमा प्रसूतिः ।
मिथ्योपचारः प्रतिकर्मणां च निजस्य हेतुः श्वयथोः प्रदिष्टः ५

श्वयथोः सामान्यलक्षणम्।

सगौरवं स्यादनवस्थितत्वं सोत्सेधमूष्मा च शिरातनुत्वम्।
सरोमहर्षाङ्गविवर्णता च सामान्यलिङ्गं श्वयथोः प्रदिष्टम्॥ ६॥

वातजश्वयथुलक्षणम्।

चलस्तनुत्वक् परुषोऽरुणोऽसितः
प्रसुप्तिहर्षार्तियुतोऽनिमित्ततः।
प्रशाम्यतीवोन्नमति प्रपीडितो
दिवाबली च श्वयथुः समीरणात्॥ ७॥

पित्तशोथस्य लक्षणम्।

मृदुः सगन्धोऽसितपीतरागवान्
भ्रमज्वरस्वेदतृषामदान्वितः।
य उष्यते स्पर्शरुगक्षिरागवान्
स पित्तशोफो भृशदाहपाकवान्॥ ८॥

कफशोफलक्षणम्।

गुरुः स्थिरः पाण्डुररोचकान्वितः
प्रसेकनिद्रावमिवह्निमान्द्यकृत्।
स कृच्छ्रजन्मप्रशमो निपीडितो
न चोन्नमेद्रात्रिबली कफात्मकः॥ ९॥

द्वन्द्वजसान्निपातिकशोफलक्षणम्।

निदानाकृतिसंसर्गाच्छ्वयथुः स्याद्विदोषजः।
सर्वाकृतिः सन्निपाताच्छोथो व्यामिश्रलक्षणः॥ १०॥

अभिघातजश्वयथुलक्षणम्।

अभिघातेन शस्त्रादिच्छेदभेदक्षतादिभिः।
हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजैः॥ ११॥
रसैः शूकैश्च संस्पृष्टैः श्वयथुः स्याद्विसर्पवान्।
भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः॥ १२॥

विषजशोथलक्षणम् ।

विषजः सविषप्राणिपरिसर्पणमूत्रणात् ।
दंष्ट्रादन्तनखाघातात्सविषप्राणिनामपि ॥ १३ ॥
विण्मूत्रशुक्रोपहतमलवद्वस्त्रसंकरात् ।
विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात् ॥ १४ ॥
मृदुश्चलोऽवलम्बी च शीघ्रो दाहरुजाकरः ।
दोषाः श्वयथुमूर्ध्वं हि कुर्वन्त्यामाशयस्थिताः ॥ १५ ॥
पक्वाशयस्था मध्ये तु वर्चःस्थानगतास्त्वधः ।
कृत्स्नदेहमनुप्राप्ताः कुर्युः सर्वसरं तथा ॥ १६ ॥

श्वयथोः साध्यासाध्यलक्षणम् ।

यो मध्यदेशे श्वयथुः स कष्टः सर्वगश्च यः ।
अर्धाङ्गेऽरिष्टभूतः स्याद्यश्चोर्ध्वं परिसर्पति ॥ १७ ॥
श्वासः पिपासा छर्दिश्च दौर्बल्यं ज्वर एव च ।
यस्य चान्ने रुचिर्नास्ति श्वयथुं तं विवर्जयेत् ॥ १८ ॥
हिक्काऽतिसारः कासश्च नूनं संक्षपयन्ति तम् ।
अनन्योपद्रवकृतः शोफः पादसमुत्थितः ॥ १९ ॥
पुरुषं हन्ति, नारीं तु मुखजो, गुह्यजो द्वयम् ।
नवोऽनुपद्रवः शोफः साध्योऽसाध्यः पुरेरितः ॥ २० ॥
विवर्जयेत्कुक्ष्युदराश्रितं च तथा गले मर्मणि संश्रितं च ।
स्थूलः खरश्चापि भवेद्विवर्ज्यो यश्चापि बालस्थविराबलानाम् ॥
मुखतो जायते शोफः स्त्रीणां पुंसां च पादतः ।
असाध्यौ द्वावपि प्रोक्तौ तयोः पुण्यं निवर्तकम् ॥ २२ ॥

इति शोफनिदानम् ।

---

अथातो शोफचिकित्सां व्याख्यास्यामः ।

वातशोफे शुण्ठ्यादिचूर्णम् ।

शुण्ठीपुनर्नवैरण्डपञ्चमूलं जले शृतम् ।
वातिके श्वयथौ श्रेष्ठं पानाहारपरिग्रहे ॥ २३ ॥

वातशोथे पुनर्नवादिघृतम् ।

पुनर्नवाब्ददारुपथ्यानागरसाधितम् ।
शुष्कमूलकनिर्यूहे वातशोफी घृतं पिबेत् ॥ २४ ॥

वातशोथे यवादिघृतम् ।

यवान् कुलत्थकान् कोलान् दशमूलं च साधयेत् ।
तत्कषाये पचेत्तैलं क्षीरं दत्त्वा चतुर्गुणम् ॥ २५ ॥
शतावरीजीवनीयैः पिष्टैः समधुशिग्रुभिः ।
पानाभ्यङ्गाज्जयत्याशु श्वयथुं मारुतोल्बणम् ॥ २६ ॥

वातशोथे एरण्डादिलेपः ।

एरण्डो मधुकं द्राक्षा वाजिगन्धा पुनर्नवा ।
शुष्कमूलकसंयुक्ता वातशोथप्रलेपनम् ॥ २७ ॥

पित्तश्वयथौ पृश्निपर्ण्यादिजलम् ।

पृश्निपर्णीघनोदीच्यशुण्ठीसिद्धं जलं हितम् ।
पानाहारविधौ पैत्ते शोथे क्षीराशनं तथा ॥ २८ ॥

पित्तश्वयथौ विशालादिक्वाथः ।

विशाला त्रिफला तिक्ता गवाक्षी रजनी त्रिवृत् ।
पटोलमूलं त्रायन्ती तुल्या श्रेष्ठं महौषधम् ।
काथोऽयं पित्तशोफघ्नः पीतो वाऽऽमलकाद्रसः ॥ २९॥

पित्तशोथे पटोलादिलेपः ।

पटोलो मधुकं निम्बो दार्वी सप्तच्छदो वृषः ।
सारिवा चेति सघृतं पित्तशोथप्रलेपनम् ॥ ३० ॥

कफश्वयथौ पिप्पलीमूलादिपानीयम् ।

कफजे पिप्पलीमूलदारुचित्रकनागरैः ।
पानाहारविधौ शोथे सिद्धं पानीयमाचरेत् ॥ ३१ ॥

कफश्वयथौ व्योषादियोगः ।

व्योषं त्रिवृच्चित्रकरोहिणी च सायोरजस्का त्रिफलारसेन ।
पीता कफोत्थं शमयेद्धि शोथं गव्येन मूत्रेण हरीतकी वा ३२

कफश्वयथौ पुनर्नवादियोगः ।

पुनर्नवाविश्वशिग्रुबृहतीश्यामाकपथ्यामरदारुकल्कम् ।
शोफे कफोत्थे महिषाख्यमूत्रयुतं पिबेद्वा सलिलैस्तथैव ॥ ३३ ॥

कफशोफे शिग्रुत्वगादिलेपः ।

शिग्रुत्वङ्नक्तमालार्कदार्व्यारग्वधमूलकैः ।
गोमूत्रयुक्तैः श्वयथुः प्रलेप्तव्यः कफाधिकः ॥ ३४ ॥

कफशोफे कृष्णादिलेपः ।

कफे तु कृष्णासिकतापुराणपिण्याकशिग्रुत्वगुमाप्रलेपः ।
कुलत्थशुण्ठीजलमूत्रसेकश्चण्डागुरुभ्यामनुलेपनं च ॥ ३५ ॥

त्रिदोषजश्वयथौ अजाज्यादियोगः ।

अजाजिपाठाघनपञ्चकोलव्याघ्रीरजन्यः सुखतोयपीताः ।
शोफं त्रिदोषं चिरजं प्रवृद्धं निघ्नन्ति भूनिम्बमहौषधैर्वा ॥३६॥

त्रिदोषजश्वयथौ कतिपययोगाः ।

रसस्तथैवार्द्रकनागरस्य पेयोऽथ जीर्णे पयसाऽन्नमद्यात् ।
शिलाह्वयं वा त्रिफलारसेन हन्यात्रिदोषं श्वयथुं प्रसह्य ॥ ३७॥

संसाध्य वज्रकन्देन पायसं योऽत्ति मानवः ।
कष्टं स शोथं जयति चिरोत्थमपि सर्वजम् ॥ ३८ ॥

विल्वपत्ररसः पीतः सोषणः श्वयथुं त्रिजम् ।
विट्सङ्गं चैव दुर्नाम निहन्यात्कामलामपि ॥ ३९ ॥

आर्द्रकस्य रसः पीतः पुराणगुडमिश्रितः ।
अजाक्षीराशिनां शीघ्रं सर्वशोथहरो भवेत् ॥ ४० ॥

त्रिफलाक्वाथपानं हि महिषीसर्पिषा सह ।
हन्ति शोफं प्रमेहं च नाडीव्रणभगन्दरम् ॥ ४१ ॥

शोफे त्रिकटुलोहयोगः ।

त्रिकटु लोहचूर्णं च द्वयमेतत्समांशकम् ।
पीतमुष्णाम्भसा हन्ति शोफरोगमसंशयम् ॥ ४२ ॥

शोफे त्रिफलादिवटिका ।

त्रिफलागुरुकृष्णानां त्रिपञ्चैकांशकल्पिता ।
गुडेन गुटिका हन्ति शोफपाण्डुभगन्दरान् ॥ ४३ ॥

शोफे न्यग्रोधादिलेपः ।

न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः ।
ससर्पिष्कैः प्रलेपः स्याच्छोफनिर्वारणः परम् ॥ ४४ ॥

शोफे देवदार्वादिचूर्णम् ।

देवदार्वृषोऽश्मन्तो विश्वा कृष्णा कुरण्टकः ।
रिङ्गिणी चूर्णमेतेषां दध्ना पीतं च शोफहृत् ॥ ४५ ॥

श्वयथौ गुडादिचूर्णम् ।

गुडपिप्पलिशुण्ठीनां चूर्णं श्वयथुनाशनम् ।
आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनम् ॥ ४६ ॥

श्वयथौ क्षीरयोगाः ।

दन्ती गुडूची त्रिफला चित्रकं नागरं तथा ।
एतैः सिद्धं पिबेत्क्षीरं श्वयथूनां विनाशनम् ॥ ४७ ॥
चित्रकोऽथ त्रिकटुकं त्रिवृता तिक्तरोहिणी ।
क्षीरमेभिः शृतं पेयं श्वयथूनां निवारणम् ॥ ४८ ॥
क्षीरं शोफहरं दारुवर्षाभूनागरैः शृतम् ।
पेयं वा चित्रकव्योषत्रिवृद्दारुप्रसाधितम् ॥ ४९ ॥

श्वयथौ चित्रकादिघृतम् ।

क्षीरं घटे चित्रकमूललिप्ते दध्यागतं साधु विमथ्यमानम् ।
एतद्घृतं चित्रककल्कगर्भं तक्रेण सिद्धं श्वयथुप्रशम्यम् ।
अर्शोऽतिसारानिलमेहगुल्मांस्तद्धन्ति दीप्तं कुरुते च वह्निम् ॥५०

श्वयथौ पुनर्नवादिघृतम् ।

पुनर्नवाचित्रकदेवदारुपञ्चोषणक्षारहरीतकीनाम् ।
कल्केन पक्वं दशमूलतोये घृतोत्तमं शोथनिषूदनं हि ॥ ५१ ॥

अथ शैलेयकतैलम् ।

शैलेयकुष्ठागुरुदारुकौन्तीत्वक्पद्मकैलाम्बुपलाशमुस्तैः ।
प्रियङ्गुस्थौणेयकहेममांसीतालीसपत्रप्लवपत्रधान्यैः ॥ ५२ ॥
श्रीवेष्टकध्यामकपिप्पलीभिः स्पृक्कानखैश्चापि यथोपलाभम् ।
वातान्वितेऽभ्यङ्गमुशन्ति तैलं सिद्धं सुपिष्टैरपि च प्रदेहम् ॥५३

अथ शुष्कमूलकाद्यं तैलम् ।

शुष्कमूलकवर्षाभूदारुरास्नामहौषधैः ।
पक्वमभ्यञ्जने तैलं सशूलशोफवारणम् ॥ ५४ ॥

अथ कृष्णाद्यं चूर्णम्

कृष्णाग्निविश्वघनजीरककण्टकारी-
पाठानिशाकरिकणामगधाजटानाम् ।
चूर्णं कवोष्णसलिलैरवलोड्य पीतं
नातः परं श्वयथुरोगहरं नराणाम् ॥ ५५ ॥

अथ पौनर्नवो लेहः ।

पुनर्नवामृतादारुदशमूलजलाढके ।
आर्द्रकस्य रसप्रस्थे गुडस्य च तुलां पचेत् ॥ ५६ ॥
तत्सिद्धं व्योषपत्रैलात्वक्कर्ष्यैः कार्षिकैः पृथक् ।
चूर्णीकृतैर्युतं शीते मधुनः कुडवं क्षिपेत् ॥ ५७ ॥
लेहः पौनर्नवो नाम शोथशूलनिषूदनः ।
कासश्वासारुचिहरो बलवर्णाग्निवर्धनः ॥ ५८ ॥

अथ वासादिक्वाथः ।

सिंहास्यामृतभण्टाकीकाथं पीत्वा समाक्षिकम् ।
कृच्छ्रशोथं जयेज्जन्तुः कासं श्वासं ज्वरं वमिम् ॥ ५९ ॥

अथ सेकयोगाः ।

सेकस्तथाऽर्कवर्षाभूनिम्बकाथेन शोथजित् ।
गोमूत्रेणाथ कुर्वीत सुखोष्णेनावसेचनम् ॥ ६० ॥

शोफेऽवस्थाविशेषे लेपयोगाः।

मज्जाप्रलेपोऽथ विसर्पितकानां सर्वेषु दाहार्तिहरः प्रदिष्टः।
यष्ट्याह्वमुस्तैः सकपित्थपत्रैः सचन्दनैस्तत्पटिकासु लेपः॥६१॥

भल्लातशोथभयप्रतीकारः।

यष्टीदुग्धतिलैर्लेपो नवनीतेन संयुतः।
शोथमारुष्करं हन्ति मृत्स्नः शालदलस्य च॥ ६२॥
महिषीक्षीरसंपिष्टैर्नवनीतसमन्वितैः।
भल्लातकक्लृतः शोथस्तिलैर्लिप्तः प्रशाम्यति॥ ६३॥
शिरीषो मेघनादश्च नवनीतसमन्वितः।
भल्लातसंभवं शोथं हन्ति लेपेन देहिनः॥ ६४॥
माहिषं म्रक्षणं दुग्धं सुपिष्टं तिलसंयुतम्।
शोथं हन्ति प्रलेपेन भल्लातकभवं क्षणात्॥ ६५॥

विषजशोफप्रतीकारः।

शोथे विषनिमित्ते तु विषोक्ता शस्यते क्रिया।

शोफे गुग्गुलुयोगः।

पुनर्नवादारुशुण्ठीक्वाथे मूत्रेऽथ केवले॥ ६६॥
दशमूलरसे वापि गुग्गुलुः शोफनाशनः।

शोफे गोधूमादिपोलिका।

गोधूमकणिकायुक्तनिर्गुण्डीपत्रचूर्णकैः॥ ६७॥
पोलिका तिलतैलेन युक्ता शोफविनाशिनी।

शोफे कुटजपत्रादिस्वेदः।

कुटजार्कशिरीषाणां चिन्दुलैरण्डनिम्बजैः॥ ६८॥
पत्रैर्युक्तं जलं तप्तं तत्स्वेदो दुष्टशोफहा।

उदरशोफेऽरणीक्षारयोगः।

अरणीक्षारसंमिश्रं तोयं क्वथितशीतलम्॥ ६९॥
त्रिदिनं पानतोऽभ्यङ्गाच्छोफं हन्त्युदरोद्भवम्।

शोफे अजमोदाद्यो मोदकः ।

अजमोदा कणा विश्वा मरिचं दारु चित्रकः ॥ ७० ॥
विडङ्गं पिप्पलीमूलं शतपुष्पा च सैन्धवम् ।
एकैकांशमितं सर्वं पञ्चभागा हरीतकी ॥ ७१ ॥
वृद्धिर्दशांशका जीर्णो गुडः स्याज्जिनभागतः ।
मोदकः क्रियतेऽमीभिर्भुक्त्वा योऽनु जलं पिबेत् ॥७२॥
उष्णं तस्य विनश्यन्ति सद्योथाश्वाममारुताः ।

शोथे पुनर्नवादिस्वेदः ।

पुनर्नवाग्निनिर्गुण्डीपलितैरण्डजैर्दलैः ॥ ७३ ॥
सहाचरैर्जलं तप्तं तत्स्वेदः शोफहा मतः ।

शोफे क्षीरयोगौ ।

क्षीरं शोफहरं दारुवर्षाभूनागरैः शृतम् ॥ ७४ ॥
पेयं वा चित्रकव्योषत्रिवृद्दारुप्रसाधितम् ।

शोफे कतिपययोगाः ।

खलेन सगुडं खादेद्वातशोफोदरापहम् ॥ ७५ ॥
मूलकं च तिलेनाशु सर्वशोफहरं परम् ।
मार्कण्डीभक्षणं हन्ति शोफं सर्वाङ्गसंभवम् ॥ ७६ ॥

शोफे गुडार्द्रकाद्यास्त्रयो योगाः ।

गुडार्द्रकं वाऽथ सदारुविश्वं सनागरं वाऽथ किराततिक्तम् ।
योगत्रयं श्रेष्ठतमं प्रदिष्टमित्यौषधं शोफहरं नराणाम् ॥ ७७ ॥

शोफेऽपथ्यानि ।

ग्राम्यानूपं पिशितमबलं शुष्कशाकं नवान्नं
गौडं पिष्टान्नं दधि सकृशरं पिच्छिलं मद्यमम्लम् ।
धाना वल्लूरं समशनमथो गुर्वसात्म्यं विदाहि
सुप्तिं चाह्नि श्वयथुगदवान् वर्जयेन्मैथुनं च ॥ ७८ ॥

इति श्रीवैद्यसोढलप्रथिते गदनिग्रहे कायचिकित्साखण्डे शोथाधिकार-
स्त्रयस्त्रिंशत्तमः समाप्तः ॥ ३३ ॥

## अथ विद्रध्यधिकारश्चतुस्त्रिंशत्तमः ।

अथातो विद्रधिनिदानं व्याख्यास्यामः ।

विद्रधिसंप्राप्तिः ।

त्वग्रक्तमांसमेदांसि प्रदूष्यास्थिसमाश्रिताः ।
दोषाः शोफं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम् ॥ १ ॥
महाशूलं रुजावन्तं वृत्तं वाऽप्यथवाऽऽयतम् ।
स विद्रधिरिति ख्यातो विज्ञेयः षड्विधश्च सः ॥ २ ॥
पृथग्दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा ।
षण्णामपि हि तेषां तु लक्षणं संप्रवक्ष्यते ॥ ३ ॥

वातआदिभेदेन विद्रधीनां लक्षणानि ।

कृष्णोऽरुणो वा विषमो भृशमत्यर्थवेदनः ।
चित्रोत्थानप्रपाकश्च विद्रधिर्वातसंभवः ॥ ४ ॥
पक्वोदुम्बरसंकाशः श्यावो वा ज्वरदाहवान् ।
क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसंभवः ॥ ५ ॥
शरावसदृशः पाण्डुः शीतः स्निग्धोऽल्पवेदनः ।
चिरोत्थानप्रपाकश्च विद्रधिः कफसंभवः ॥ ६ ॥
तनुपीतसिताश्चैषामास्रावाः क्रमशः स्मृताः ।
नानावर्णरुजास्रावो घाटालो विषमो महान् ॥ ७ ॥
विषमं पच्यते चापि विद्रधिः सान्निपातिकः ।
तैस्तैर्भावैरभिहते क्षते चापथ्यकारिणः ॥ ८ ॥
क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत् ।
ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः ॥ ९ ॥
आगन्तुर्विद्रधिर्ह्येष पित्तविद्रधिलक्षणः ।
कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाकरः ॥ १० ॥
पित्तविद्रधिलिङ्गश्च रक्तविद्रधिरुच्यते ।

उक्ता विद्रधयो ह्येते तेष्वसाध्यस्तु सर्वजः ॥ ११ ॥

आभ्यन्तरविद्रधिलक्षणम्।

आभ्यन्तरानतश्चोर्ध्वं विद्रधींश्च प्रवक्ष्यहम्।
गुर्वसात्म्यविरुद्धान्नशुष्कसंक्लिन्नभोजनात्।
अतिव्यवायव्यायामवेगाघातविदाहिभिः ॥ १२ ॥
पृथक् संभूय वा दोषाः कुपिता गुल्मरूपिणम् ॥१३॥
वल्मीकवत्समुन्नद्धमन्तः कुर्वन्ति विद्रधिम्।
गुदे बस्तिमुखे नाभ्यां कुक्षौ वंक्षणयोस्तथा ॥ १४ ॥
वृक्कयोः प्लीह्नि यकृति क्लोम्नि वाऽप्यथवा हृदि।
एषामुक्तानि लिङ्गानि बाह्यविद्रधिलक्षणैः ॥ १५ ॥
अधिष्ठानविशेषेण लक्षणानि निबोध मे।
गुदे वातनिरोधस्तु बस्तौ कृच्छ्राल्पमूत्रता ॥ १६ ॥
नाभ्यां हिक्का तु साटोपा कुक्षौ मारुतकोपनम्।
कटीपृष्ठग्रहस्तीव्रो वंक्षणोत्थे तु विद्रधौ ॥ १७ ॥
वृक्कयोः पार्श्वसंकोचः प्लीह्न्युच्छ्वासावरोधनम्।
सर्वाङ्गप्रग्रहस्तीव्रो हृदि शूलं च दारुणम् ॥ १८ ॥
श्वासो यकृति तृष्णा च क्लोम्नि पेपीयते पयः।
नाभेरुपरिजाः पक्का यान्त्यूर्ध्वमितरे त्वधः ॥ १९ ॥

विद्रधीनामामपक्वज्ञानम्।

आमपक्वविदग्धत्वं तेषां शोफवदादिशेत्।

विद्रधीनां साध्यासाध्यविचारः।

अधःस्रुतेषु जीवेत्तु स्रुतेषूर्ध्वं न जीवति ॥ २० ॥
हृन्नाभिबस्तिवर्ज्या ये तेषु भिन्नेषु बाह्यतः।
जीवेत्कदाचित्पुरुषो नेतरेषु कदाचन ॥ २१ ॥
साध्या विद्रधयः पञ्च विवर्ज्यः सान्निपातिकः।

आध्मातं बद्धनिष्यन्दं छर्दिहिक्कातृषान्वितम्।
रुजाश्वाससमायुक्तं विद्रधिर्नाशयेन्नरम् ॥ २२ ॥

इति विद्रधिनिदानं समाप्तम् ॥

---

अथातो विद्रधिचिकित्सितं व्याख्यास्यामः।

विद्रधेः सामान्यचिकित्सा।

विद्रधिं सर्वमेवामं शोफवत्समुपाचरेत्।
सततं च हरेद्रक्तं पक्वे तु व्रणवत्क्रिया ॥ २३ ॥
जलौकापातनं शस्तं सर्वस्मिन्नेव विद्रधौ।
मृदुर्विरेको लघ्वन्नं स्वेदः पित्तोत्तरं विना ॥ २४ ॥

वातविद्रधिचिकित्सा।

वातघ्नमूलकल्कैस्तु वसातैलघृताप्लुतैः।
सुखोष्णो बहलो लेपः प्रयोज्यो वातविद्रधौ ॥ २५ ॥
स्वेदोपनाहाः कर्तव्याः शिग्रुमूलसमन्विताः।
यवगोधूममुद्गैश्च सिद्धपिष्टैः प्रलेपयेत् ॥ २६ ॥
देवदारुसमायुक्तं रास्नाहिंस्रासमन्वितम्।
विश्वाग्निमन्थसहितं मातुलुङ्गरसाप्लुतम् ॥ २७ ॥
घृतमात्रायुतं चोष्णं दद्यादालेपनं बुधः।
विलीयते क्षणादेवमपक्वो वातविद्रधिः ॥ २८ ॥
पुनर्नवादारुविश्वादशमूलाभयाम्भसा।
गुग्गुलुं रुबुतैलं वा पिबेन्मारुतविद्रधौ॥ २९ ॥

पित्तविद्रधिचिकित्सा।

पित्तजं शर्करालाजामधुकैः सारिवायुतैः।
प्रदिह्यात्क्षीरपिष्टैर्वा पयस्योशीरचन्दनैः ॥ ३० ॥

हरीतकीत्रिवृद्भ्यां तु चूर्णं मधुसमन्वितम्।

लीढ्वा सुखमवाप्नोति पित्तविद्रधिपीडितः ॥ ३२ ॥
पञ्चवल्कलकल्केन घृतमिश्रेण लेपनम् ।
पिबेद्वा त्रिफलाक्वाथं त्रिवृत्कल्काक्षसंमितम् ॥ ३३ ॥

कफविद्रधिचिकित्सा ।

इष्टिकासिकतालोहगोशकृत्तुषपांशुभिः ।
मूत्रपिष्टैश्च सततं स्वेदयेच्छ्लेष्मविद्रधिम् ॥ ३४ ॥
शिरीषकर्कटशृङ्गीशिग्रुत्वग्देवदारुभिः ।
पिष्टैः सनागरैर्लेपो नाशनः श्लेष्मविद्रधेः ॥ ३५ ॥

रक्तजागन्तुजविद्रध्योश्चिकित्सा ।

पित्तविद्रधिवत्सर्वां क्रियां निरवशेषतः ।
विद्रध्यां कुशलः कुर्याद्रक्तागन्तुनिमित्तयोः ॥ ३६ ॥
दशमूलीकषायेण सस्नेहेन रसेन वा ।
शोफं व्रणं वा कोष्णेन सशूलं परिषेचयेत् ॥ ३७ ॥
शोभाञ्जनकनिर्यूहो हिङ्गुसैन्धवसंयुतः ।
अचिराद्विद्रधीन् हन्ति प्रातः प्रातर्निषेवितः ॥ ३८ ॥

आभ्यन्तरविद्रधिचिकित्सा ।

शिग्रुमूलं जले धौतं जलपिष्टं प्रगालयेत् ।
तद्रसं मधुना पीत्वा हन्त्यन्तर्विद्रधिं नरः ॥ ३९ ॥
श्वेतवर्षाभुवो मूलं मूलं वरुणकस्य च ।
जलेन क्वथितं पीतमपक्वं विद्रधिं जयेत् ॥ ४० ॥
वरुणादिगणक्वाथमपक्वेऽभ्यन्तरोत्थिते ।
ऊषकादिप्रतीवापं पिबेत्संशमनाय वै ॥ ४१ ॥
मूलं सुदर्शनायास्तु पिष्ट्वा तण्डुलवारिणा ।
जीर्णे विलेपिकामद्यात्क्षिप्रं नाशाय विद्रधेः ॥ ४२ ॥
पानभोजनलेपेषु मधुशिग्रुद्रुमोऽपि वा ।
दत्तावापो यथादोषमपक्वं विद्रधिं जयेत् ॥ ४३ ॥

विद्रधिव्रणे रोपणार्थं प्रियङ्ग्वादितैलम्।

प्रियङ्गुर्धातकी रोध्रं कट्फलं मिशिसैन्धवम्।
एतैस्तैलं विपक्तव्यं विद्रधिव्रणरोपणम् ॥ ४४ ॥

आभ्यन्तरविद्रधौ वरुणादिकषायः।

कासीससैन्धवशिलाजतुहिङ्गुचूर्ण-
मिश्रीकृतो वरुणवल्कलजः कषायः।
अभ्यन्तरोत्थितमपक्वमतिप्रमाणं
नृणामयं जयति विद्रधिमुग्रशोथम् ॥ ४५ ॥

विद्रधौ भूनिम्बादिचूर्णम्।

भूनिम्बार्धपलं निशापलयुतं दार्वी पले द्वे तथा
दार्व्यर्धेन पुनर्नवां कुरु समां दार्वीसमः ग्रग्रहः।
सार्धं दुःस्पर्शपलं तु कटुका योज्या तदर्धेन वै
अश्वाह्वं निशया समानममृता कर्षास्तु पञ्चैव तु ॥४६॥
सर्वं वत्सकसप्तकर्षसहितं शुष्कं तु चूर्णीकृतं
वासायाः स्वरसेन भावितमिदं त्रीन् पञ्च वा वासरान्।
भूयस्तद्गुडवारिणा प्रतिदिनं पीतं पुरस्थे रवौ
पुंसां विद्रधिनाशनं तु कथितं प्रोक्तं स्वयं ब्रह्मणा॥४७

विद्रधौ त्रिफलागुग्गुलुत्रिफलाघृतयोर्योगः।

पक्वेषु विद्रधिषु पूयमतिस्रवत्सु
नाडीषु च व्रणिषु चापि भगन्दरेषु।
स्याद्गण्डमालिषु फलत्रिकगुग्गुलुः स्या-
त्पथ्यं फलत्रिकघृतं लघुभोजनं च ॥ ४८ ॥
अपाकत्वे तदुद्दिष्टं पक्वे तु व्रणवत्क्रिया।

विद्रधौ कतिपययोगाः।

मूलं समं तण्डुलधावनेन प्रपेषितं श्वेतपुनर्नवायाः।
पीतं भवेद्विद्रधिनाशहेतुः पाठाजयाच्छिन्नरुहाकषायः॥४९॥

इति श्रीवैद्यसोढलविरचिते गदनिग्रहे कायचिकित्साखण्डे
विद्रध्यधिकारश्चतुस्त्रिंशत्तमः।

## अथ वृद्ध्यधिकारः पञ्चत्रिंशत्तमः।

अथातो वृद्धिनिदानं व्याख्यास्यामः।

वृद्धिसंप्राप्तिः।

क्रुद्धोऽनूर्ध्वगतिर्वायुः शोफशूलकरश्चरन्।
मुष्कौ वंक्षणतः प्राप्य फलकोशाभिवाहिनीः॥ १॥
प्रपीड्य धमनीर्वृद्धिं करोति फलकोशयोः।
दोषास्रमेदोमूत्रान्त्रैः स वृद्धिः सप्तधा गदः॥ २॥
मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलम्।

वातजादिभेदेन वृद्धीनां लक्षणानि।

वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक्॥ ३॥
पक्वोदुम्बरसंकाशः पित्ताद्दाहोष्मपाकवान्।
कफाच्छीतो गुरुः स्निग्धः कण्डूमान्कठिनोऽल्परुक्॥४॥
कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्तजः।
कफवन्मेदसा वृद्धिर्मृदुस्तालफलोपमः॥ ५॥
मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः।
अम्भोभिः पूर्णदृतिवत्क्षोभं याति सरुङ्मृदुः॥ ६॥
मूत्रकृच्छ्रमधः स्याच वलयं फलकोशयोः।
वातकोपिभिराहारैः शीततोयावगाहनैः॥ ७॥
वेगधारणभाराध्वविषमाङ्गप्रवर्तनैः।
क्षोभणैः क्षुभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा॥ ८॥
पवनो विगुणीकृत्य स्वनिवेशादधो नयेत्।
कुर्याद्वंक्षणसंधिस्थो ग्रन्थ्याभं श्वयथुं तदा॥ ९॥
उपेक्ष्यमाणस्य च मुष्कवृद्धिमाध्मानरुक्स्तम्भवतीं स वायुः।
प्रपीडितोऽन्तःस्वनवान् प्रयाति प्रध्मापयन्नेति पुनश्च मुक्तः॥१०
अन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः।
अत्यभिष्यन्दिगुर्वामसेवनान्निचयं गतः॥ ११॥

करोति ग्रन्थिवच्छोथं दोषो वङ्क्षणसन्धिषु ।
ज्वरशूलाङ्गसादाढ्यं तं वर्ध्ममिति निर्दिशेत् ॥ १२ ॥

इति वृद्धिनिदानम् ॥

अथातो वृद्धिचिकित्सितं व्याख्यास्यामः ।

वातवृद्धिचिकित्सा ।

गुग्गुलुं रुबुतैलं वा गोमूत्रेण पिबेन्नरः ।
वातवृद्धिं निहन्त्याशु चिरकालानुबन्धिनीम् ॥ १३ ॥
सक्षीरं वा पिबेत्तैलं मासमेरण्डसंभवम् ।
तैलं नारायणं योज्यं पानाभ्यञ्जनबस्तिषु ॥ १४ ॥

पित्तजरक्तजवृद्ध्योश्चिकित्सा ।

चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम् ।
क्षीरपिष्टैः प्रलेपः स्याद्दाहशोथरुजापहः ॥ १५ ॥
पञ्चवल्कलकल्केन सघृतेन प्रलेपनम् ।
सर्वं पित्तहरं कार्यं रक्तजे रक्तमोक्षणम् ॥ १६ ॥

कफजवृद्धिचिकित्सा ।

श्लेष्मवृद्धौ तूष्णवीर्यैर्मूत्रपिष्टैः प्रलेपयेत् ।
पीतदारुकषायं च पिबेन्मूत्रेण संयुतम् ॥ १७ ॥

मेदोजवृद्धिचिकित्सा ।

स्विन्नं मेदःसमुत्थं च लेपयेत्सुरसादिना ।
शिरोविरेकद्रव्यैर्वा सुखोष्णैरम्लपेषितैः ॥ १८ ॥

मूत्रजवृद्धिचिकित्सा ।

संस्वेद्य मूत्रप्रभवं वस्त्रपट्टेन वेष्टयेत् ।
सेवन्या पार्श्वतोऽधस्ताद्विध्येद्व्रीहिमुखेन वै ॥ १९ ॥

अन्त्रवृद्धिचिकित्सा ।

शङ्खोपरि च कर्णान्ते त्यक्त्वा सेवनिमादरात् ।
व्यत्यासाद्वा शिरां विध्येदन्त्रवृद्धिनिवृत्तये ॥ २० ॥

१ 'सक्षीरं' ख.।

अङ्गुष्ठमध्यत्वक्छित्वा दहेदङ्गविपर्यये।
रास्नायष्ट्यमृतैरण्डबलागोक्षुरसाधितः॥ २१॥
क्वाथोऽन्त्रवृद्धिं हन्त्याशु रुबुतैलेन मिश्रितः।
तैलमेरण्डजं पीत्वा बलासिद्धं पयोन्वितम्।
आध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः॥ २२॥

वृद्धौ हरीतकीयोगाः।

हरीतकीं मूत्रसिद्धां सतैललवणान्विताम्।
प्रातः प्रातश्च सेवेत कफवातामयापहाम्॥ २३॥
गोमूत्रसिद्धां रुबुतैलभृष्टां हरीतकीं सैन्धवचूर्णयुक्ताम्।
खादन्नरः कोष्णजलानुपानां निहन्ति वृद्धिं चिरतः प्रवृद्धाम्॥२४
भृष्टो रुबुकतैलेन कल्कः पथ्यासमुद्भवः।
कृष्णासैन्धवसंयुक्तो मेदवृद्धिहरः परः॥ २५॥

वृषणश्वयथौ त्रिफलायोगः।

त्रिफलाक्वाथगोमूत्रं पिबेत्प्रातरतन्द्रितः।
कफवातोत्थितं हन्ति श्वयथुं वृषणोद्भवम्॥ २६॥

वृद्धौ सरलादिलेपः।

सरलागुरुकुष्ठानि देवदारुमहौषधम्।
मूत्रारनालसंपिष्टं शोफघ्नं कफवातजित्॥ २७॥

कोरण्डे सैन्धवघृतम्।

गव्यं घृतं सैन्धवचूर्णयुक्तं शम्बूकभाण्डे विनिवेश्य यत्नात्।
सप्ताहमादित्यकरैर्विपक्कं निहन्ति कोरण्डमतिप्रवृद्धम्॥ २८॥

वृद्धौ लेपाः।

वचासर्षपकल्केन प्रलेपः शोफनाशनः।
अविक्षीरेण गोधूमकल्कः कुन्दुरकस्य च।
प्रलेपनं सुखोष्णं स्याद्वर्ध्मशूलहरं परम्॥ २९॥

वर्ध्मरोगे उपनाहयोगः।

मृतमात्रे तु वै काके विदास्ते तु प्रवेशयेत्।

मुहूर्तं वर्त्म मेधावी तत्क्षणादरुजं जयेत् ॥ ३० ॥

वृद्धौ वृद्धसैन्धवाद्यं तैलम्।

सैन्धवं मदनं कुष्ठं शताह्वां निचुलं बलाम्[1]।
ह्रीबेरं मधुकं भार्गीं देवदारु सनागरम् ॥ ३१ ॥
कट्फलं पौष्करं भद्रां चविकां चित्रकं शठीम्।
विडङ्गातिविषे श्यामां रेणुकां नीलिनीं स्थिराम् ॥ ३२ ॥
बिल्वाजमोदे कृष्णां तु दन्तीं रास्नां प्रपेष्य च।
साध्यमेरण्डजं तैलमभ्यङ्गात्कफवातजित् ॥ ३३ ॥
वर्त्मोदावर्तशूलार्शोग्रहमेहाढ्यमारुतान्।
आनाहमश्मरीं चैव निहन्याद्वृद्धिं निषेवणात् ॥ ३४ ॥

वातवृद्धिप्रतीकारः।

तत्रादितो वातवृद्धौ स्नेहतस्निग्धमातुरम्।
स्विन्नं चैव यथान्यायं पाययेत विरेचनम् ॥ ३५ ॥

पित्तजवृद्धिप्रतीकारः।

पित्तजायामपक्वायां पित्तग्रन्थिक्रमो हितः।
पक्वां वा भेदयेच्छिन्नां शोधयेत्क्षौद्रसर्पिषा ॥ ३६ ॥

रक्तजवृद्धिप्रतीकारः।

शर्कराक्षौद्रसंयुक्तं रक्तजायां विरेचनम्।

कफजवृद्धिप्रतीकारः।

कफजायां विभिन्नायां तैलं शोधनमिष्यते ॥ ३७ ॥

मेदोजवृद्धिप्रतीकारः।

रक्षन् फले सेवनीं च वृद्धिपत्रेण दारयेत्।
मेदः समुद्धृत्य ततो दद्यात्कासीससैन्धवम् ॥ ३८ ॥
बध्नीयाच्च यथोद्दिष्टं शुद्धे तैलं च दापयेत्।

अन्त्रवृद्धौ दाहविधानम्।

तप्तया वंक्षणस्थानं दहेदर्धेन्दुवक्रया ॥ ३९ ॥

---

1 'वचाम्' ख.।

सम्यङ्मार्गावरोधार्थं कौशस्थां विवर्जयेत् ।

वृद्धौ गन्धर्वतैलम् ।

शतमेरण्डमूलस्य शुण्ठ्याः पञ्च यवाढकम् ।
जलद्रोणे चतुर्थांशे पयसाऽष्टगुणेन च ॥ ४० ॥
प्रस्थमेरण्डतैलस्य तन्मूलाच्च चतुःपलम् ।
द्विपलं शृङ्गवेरस्य गर्भे दत्त्वा शनैः पचेत् ॥ ४१ ॥
तत्पिबेन्नियतः शुद्धो नरः क्षीरान्नभुक् सदा ।
अन्त्रवृद्धिं निहन्त्याशु तैलं गन्धर्वसंज्ञितम् ॥ ४२ ॥

वृद्धौ द्विजीरकाद्यं तैलम् ।

अजाजीद्वयसिन्धूत्थहिङ्गुतोऽर्धपलानि च ।
तैलं च षोडशपलं पक्वं वृद्धिं व्यपोहति ॥ ४३ ॥

वृद्धौ पुनर्नवादिलेपः ।

मूलं पुनर्नवायाश्च शुष्कैरण्डफलं तिलाः ।
सर्वमेकत्र संचूर्ण्य यवचूर्णेन योजयेत् ॥ ४४ ॥
काञ्जिकेन च पिष्टं तु सुखोष्णेनैव कारयेत् ।
लेपो वृद्धिहरः प्रोक्तः सद्यः शूलनिवारणः ॥ ४५ ॥

वृद्धौ पिप्पल्यादिलेपः ।

पिप्पली जीरकं कुष्ठं बदरं शुष्कगोमयम् ।
काञ्जिकेन प्रलेपोऽयमन्त्रवृद्धिविनाशनः ॥ ४६ ॥

वृद्धौ त्रिफलादिलेपः ।

त्रिफलाशतपुष्करजं काञ्जिकयवतिलपुनर्नवामूलम् ।
संपेषितं सुखोष्णं प्रलेपनं वृषणवृद्धौ स्यात् ॥ ४७ ॥

वृद्धौ तर्कारिकादिलेपः ।

तर्कारिकासैन्धवदेवदारुकुष्ठानि शुण्ठी सह चित्रकेण ।
रास्नाऽरुष्करोऽथ तथा शताह्वा प्रलेपनं स्याद्वृषणप्रवृद्धौ ॥४८॥

कुरण्डे इन्द्रवारुणीमूलयोगः ।

इन्द्रवारुणिकामूलं तैलं पुष्करजं तथा ।
संमर्द्य च सगोदुग्धं पिबेज्जन्तुः कुरण्डके ॥ ४९ ॥

कुरण्डे सैन्धवघृतयोगः।

गवां घृतेन संयुक्तं क्षिपेत्सैन्धवचूर्णकम्।
पिबेत्सप्तदिनं यावत्ततो लेप्यः कुरण्डकः॥ ५० ॥

संचूर्णितं सैन्धवमाज्ययुक्तं समर्दय तोयमिवमेव सोष्णम्।
मुहुर्मुहुर्यः कुरुते प्रलेपं विलीयते तस्य कुरण्डरोगः॥ ५१ ॥

कुरण्डे कासीसादियोगः।

एरण्डतैलसंमिश्रं कासीससैन्धवं पिबेत्।
गृध्रेण धूपणं बद्ध कुरण्डज्वरनाशनम्॥ ५२ ॥
तण्डुलवारिविमिश्रं घृतपुरसंज्ञकं यदुच्यते लोके।
तन्मूलपिष्टलेपं(?) कुरण्डगलगण्डयोः कुर्यात्॥ ५३ ॥

कुरण्डे ईश्वरीमूलादिलेपः।

ईश्वरीमूलमेरण्डमूलं मूषिकचर्म च।
प्रलेपः स्यात्कुरण्डानां रोगविच्छेदकारकः॥ ५४ ॥

कुरण्डे भार्गीमूललेपः।

संपेषितं ब्राह्मणयष्टिकाया मूलं समं तण्डुलधावनेन।
निहन्ति लेपाद्गलगण्डमालां कुरण्डमुग्रान्यानखिलान्विकारान्॥ ५५

कुरण्डे इन्द्रवारुणीमूलयोगः।

वातारितैलमृदितं सुरवारुणीजं
मूलं नरः पिबति यो मसृणं विचूर्ण्य।
गव्ये निधाय पयसि त्रिदिनावसाने
तस्य प्रणश्यति कुरण्डकृतो विकारः॥ ५६ ॥

तन्मूषिकचर्मनिबद्धः प्रविलिप्तो जटेश्वरीभुवा च।
उपशान्तिमुपैति मानवानामचिरेणैव कुरण्डसंज्ञरोगः॥ ५७ ॥
यः पित्तदोषेण कुरण्डरोगो भवेच्छिश्नोर्दक्षिणमुष्कभागे।
तस्योर्ध्वभागं श्रवणस्य विध्येद्वामस्य, वामप्रभवेऽपरस्य॥ ५८ ॥

इति श्रीवैद्यसोढलग्रथिते गदनिग्रहे कायचिकित्साखण्डे
वृध्द्यधिकारः पञ्चत्रिंशत्तमः।

## अथ कुष्ठाधिकारः षट्त्रिंशत्तमः ।

अथातः कुष्ठनिदानं व्याख्यास्यामः ।

कुष्ठसंप्राप्तिः ।

विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च ।
भजतामागतां छर्दिं वेगांश्चान्यान् प्रतिघ्नताम् ॥ १ ॥
व्यायाममतिसंतापमतिभुक्त्वा निषेविणाम् ।
शीतोष्णलङ्घनाहारान् क्रमं त्यक्त्वा निषेविणाम् ॥ २ ॥
घर्मश्रमभयार्तानां द्रुतं शीताम्बुसेविनाम् ।
अजीर्णाध्यशिनां चैव पञ्चकर्मापचारिणाम् ॥ ३ ॥
नवान्नदधिमत्स्यातिलवणाम्लनिषेविणाम् ।
माषमूलकपिष्टान्नतिलक्षीरगुडाशिनाम् ॥ ४ ॥
व्यायामं चाप्यजीर्णेऽन्ने निद्रां च भजतां दिवा ।
विप्रान् गुरून् धर्षयतां पापं कर्म च कुर्वताम् ॥ ५ ॥
वातादयस्त्रयो दोषास्त्वग्रक्तं मांसमम्बु च ।
दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः ॥ ६ ॥
अथ कुष्ठानि जायन्ते सप्त चैकादशैव च ।
कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः ॥ ७ ॥
सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकत्वतः ।

कुष्ठपूर्वरूपम् ।

अतिश्लक्ष्णखरस्पर्शस्वेदास्वेदविवर्णताः ॥ ८ ॥
दाहः कण्डूस्त्वचि स्वापः तोदः कोठोन्नतिः श्रमः ।
व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ॥ ९ ॥
रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽपि कोपनम् ।
रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम् ॥ १० ॥

सप्तमहाकुष्ठलक्षणानि ।

कृष्णारुणकपालाभं यद्रूक्षं परुषं च यत् ।

१ 'व्यवायं' ख. ।

कपालं तोदबहुलं तत्कुष्ठं विषमं स्मृतम् ॥ ११ ॥
रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरम् ।
उदुम्बरफलाभासं कुष्ठमौदुम्बरं भवेत् ॥ १२ ॥
श्वेतं रक्तं सितं पीतं स्निग्धमुत्सन्नमण्डलम् ।
कृच्छ्रमन्योन्यसंसक्तं कुष्ठं मण्डलमुच्यते ॥ १३ ॥
कर्कशं रक्तपर्यन्तमन्तःश्यावं सवेदनम् ।
यदृक्षजिह्वासंस्थानमृक्षजिह्वं तदुच्यते ॥ १४ ॥
सश्वेतं रक्तपर्यन्तं पुण्डरीकदलोपमम् ।
सोत्सेधं च सरागं च पुण्डरीकं प्रचक्षते ॥ १५ ॥
श्वेतं ताम्रं तनु च यद्रजो घृष्टं विमुञ्चति ।
प्रायेणोरसि तत्सिध्ममलाबुकुसुमोपमम् ॥ १६ ॥
यत्काकणन्तिकावर्णं सपाकं तीव्रवेदनम् ।
त्रिदोषलिङ्गं तत्कुष्ठं काकणं नैव सिध्यति ॥ १७ ॥

एकादशक्षुद्रकुष्ठानां लक्षणानि ।

अस्वेदनं महावस्तु यन्मत्स्यशकलोपमम् ।
तदेककुष्ठं, चर्माख्यं बहलं हस्तिचर्मवत् ॥ १८ ॥
श्यावं किणखरस्पर्शं परुषं किटिभं स्मृतम् ।
वैपादिकं पाणिपादस्फोटनं तीव्रवेदनम् ॥ १९ ॥
कण्डूमद्भिः सरागैश्च गण्डैरलसकं चितम् ।
सकण्डूरागपिडकं दद्रूमण्डलमुन्नतम् ॥ २० ॥
रक्तं सशूलं कण्डूमत्सस्फोटं यद्दलत्यपि ।
तच्चर्मदलमाख्यातं संस्पर्शासहमुच्यते ॥ २१ ॥
सूक्ष्मा बह्व्यः पीटिकाः स्राववत्यः
पामेत्युक्ताः कण्डुमत्यः सदाहाः ।
सैव स्फोटैस्तीव्रदाहैरुपेता
ज्ञेया पाण्योः कच्छुरुग्रा स्फिजोश्च ॥ २२ ॥

स्फोटाः श्यावारुणाभासा विस्फोटाः स्युस्तनुत्वचः ।
रक्तं श्यावं सदाहार्ति शतारुः स्याद्बहुव्रणम् ॥ २३ ॥
सकण्डूः पिटिका श्यावा बहुस्रावा विचर्चिका ।

दोषभेदेन कुष्ठलक्षणानि ।

खरं श्यावारुणं रूक्षं वातकुष्ठं सवेदनम् ॥ २४ ॥
पित्तात्प्रकुपितं दाहरागस्रावान्वितं मतम् ।
कफात्क्लेदि घनं स्निग्धं सकण्डूशैत्यगौरवम् ॥ २५ ॥
द्विलिङ्गं द्वन्द्वजं कुष्ठं त्रिलिङ्गं सान्निपातिकम् ।

सप्तधातुगतकुष्ठानां लक्षणानि ।

(स्पर्शहानिः स्वेदनत्वमीषत्कण्डूश्च जायते ॥ २६ ॥)
त्वक्स्थे वैवर्ण्यमङ्गेषु कुष्ठे रौक्ष्यं च जायते ।
त्वक्स्वापो रोमहर्षश्च स्वेदस्यातिप्रवर्तनम् ॥ २७ ॥
कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रिते ।
बाहुल्यं वक्त्रशोषश्च कार्कश्यं पिडिकोद्गमः ॥ २८ ॥
तोदः स्फोटः स्थिरत्वं च कुष्ठे मांससमाश्रिते ।
कौण्यं गतिक्षयोऽङ्गानां संभेदः क्षतसर्पणम् ॥ २९ ॥
मेदःस्थानगते लिङ्गं पूर्वोक्तानि तथैव च ।
नासाभङ्गोऽक्षिरागश्च क्षतेषु कृमिसंभवः ॥ ३० ॥
स्वरोपघातश्च भवेदस्थिमज्जसमाश्रिते ।
दम्पत्योः कुष्ठबाहुल्याद्दुष्टशोणितशुक्रयोः ॥ ३१ ॥
यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम् ।

कुष्ठानां साध्यासाध्यविचारः ।

साध्यं त्वग्रक्तमांसस्थं वातश्लेष्माधिकं च यत् ॥ ३२ ॥
मेदोगतं भवेद्याप्यमसाध्यमत उत्तरम् ।
कृमितृड्दाहमन्दाग्निसंयुक्तं यत्रिदोषजम् ॥ ३३ ॥
प्रभिन्नं प्रसुताङ्गं च रक्तनेत्रं हतस्वरम् ।
पञ्चकर्मगुणातीतं कुष्ठं हन्तीह मानवम् ॥ ३४ ॥

दोषविशेषेण कुष्ठविशेषोत्पत्तिः ।

वातेन कुष्ठं कापालं पित्तादौदुम्बरं कफात् ।
मण्डलाख्यं विचर्ची च ऋष्याख्यं वातपित्तजम् ॥ ३५ ॥
चर्मकुष्ठं किटिमं सिध्मालसविपादिकाः ।
वातश्लेष्मोद्भवाः श्लेष्मपित्ताद्दद्रुशतारुषी ॥ ३६ ॥
पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा ।
सर्वैः स्यात्काकणं पूर्वत्रिकं दद्रुः सकाकणम् ॥ ३७ ॥
पुण्डरीकर्ष्यजिह्वे च महाकुष्ठानि सप्त तु ।

दोषभेदेन श्वित्रलक्षणानि ।

कुष्ठैकसंभवं श्वित्रं किलासं दारुणं भवेत् ॥ ३८ ॥
निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम् ।
वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् ॥ ३९ ॥
सदाहं रोमविध्वंसी कफाच्छ्वेतं घनं गुरु ।
सकण्डुरं क्रमाद्रक्तमांसमेदःसु चादिशेत् ॥ ४० ॥
वर्णेनैवेदृगुभयं कृच्छ्रं स्याच्चोत्तरोत्तरम् ।

श्वित्रस्य साध्यासाध्यविचारः ।

अशुक्लरोमाऽबहुलमसंसृष्टं मिथो नवम् ॥ ४१ ॥
अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ।
गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम् ।
वर्जनीयं विशेषेण किलासं सिद्धिमिच्छता ॥ ४२ ॥

कुष्ठस्यातिकष्टत्वनिरूपणम् ।

म्रियते यदि कुष्ठेन पुनर्जातेऽपि गच्छति ।
नातः कष्टतरो रोगो यथा कुष्ठं प्रकीर्तितम् ॥ ४३ ॥

कुष्ठादीनां संक्रामकत्वनिरूपणम् ।

स्पर्शैकाहारशय्यादिसेवनात्प्रायशो गदाः ।
कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च ।

१ 'कफैकसंभवं' क. ।

औपसर्गिकरोगाश्च संचरन्ति नरान्नरम् ॥ ४४ ॥

इति कुष्ठनिदानम् ॥

---

अथातः कुष्ठचिकित्सां व्याख्यास्यामः।

कुष्ठे आहारोपयोगीनि द्रव्याणि।

शालयो यवगोधूमाः कोरदूषाः प्रियङ्गवः।
मुद्गा मसूरास्तुवरी तिक्तशाकानि जाङ्गलम् ॥ ४५ ॥
वरापटोलखदिरनिम्बारुष्करयोजितम्।
मद्यान्यौषधगर्भाणि मथितं चेन्दुराजिमत् ॥ ४६ ॥
अन्नपानं हितं कुष्ठे न त्वम्ललवणौषधम्।
दधिदुग्धगुडानूपतिलमाषांस्त्यजेत्तराम् ॥ ४७ ॥

प्रसुप्तकुष्ठे कञ्चुकीयोगः।

शुष्कचूर्णं तु कञ्चुक्या मध्वाज्यसहितं लिहेत्।
प्रसुप्तानां च गात्राणामेष एव प्रबोधकः ॥ ४८ ॥

कुष्ठे कोशातकीयोगः।

कोशातकीफले न्यस्तं जलं पर्युषितं निशि।
कर्षमात्रं तु तत्पीतं सर्वकुष्ठहरं परम् ॥ ४९ ॥

कुष्ठे सामान्यचिकित्सा।

ललाटहस्तपादेषु शिराश्चास्य विमोक्षयेत्।
प्रच्छन्नमल्पके कुष्ठे शृङ्गाद्याश्च यथायथम् ॥ ५० ॥
असादूर्ध्वं निःसुते दुष्टरक्ते जातत्राणं सर्पिषा स्नेहयित्वा।
तीक्ष्णैर्योगैश्छर्दयित्वा प्रगाढं पश्चाद्दोषान्निर्हरेच्चाप्रमत्तः॥ ५१ ॥

पक्षात्पक्षाच्छर्दनान्यभ्युपेया-
न्मासान्मासाच्छोधनं चाप्यधस्तात्।
शुद्धिर्मूर्ध्नि स्यात्त्रिरात्रात्त्रिरात्रात्
षष्ठे षष्ठे मास्यसृङ्मोक्षणं च ॥ ५२ ॥

यो दुर्वान्तो दुर्विरिक्तोऽथवा स्यात्कुष्ठी दोषैरुद्धतैर्व्याप्यतेऽसौ
निःसंदेहं यात्यसाध्यत्वमेव तस्मात्कृच्छ्रान्निर्हरेत्तस्य दोषान्॥

ये लेपाः कुष्ठानां युज्यन्ते निर्हृतास्रदोषाणाम् ।
संशोधिताशयानां सद्यः सिद्धिर्भवेत्तेषाम् ॥ ५४ ॥
दोषे हृतेऽपनीते रक्ते बाह्यान्तरे कृते शमने ।
स्नेहे च कालयुक्ते न कुष्ठमतिवर्तते साध्यम् ॥ ५५ ॥
वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं चाग्र्यम् ॥ ५६ ॥
प्रच्छन्नमल्पकुष्ठे महति च शस्तं शिराव्यधनम् ।
बहुदोषः संशोध्यः कुष्ठी बहुशोऽनुरक्षता प्राणान् ।
दोषे ह्यतिमात्रहृते वायुर्हन्यादबलमाशु ॥ ५७ ॥

कुष्ठे त्रिफलादिपाचनकषायः ।

त्रिफला खादिरं काष्ठं निम्बत्वक्च जले शृतम् ।
कुष्ठेषु पाचनं दद्यात्सर्वदोषोल्बणेष्वपि ॥ ५८ ॥

कुष्ठे वमनयोगः ।

दोषोत्क्लिष्टे च हृदये वमनं चोर्ध्वभागिषु ।
वचावासापटोलानां निम्बस्य फलिनीत्वचः ॥ ५९ ॥
कषायो मधुना पीतो वान्तिकृन्मदनान्वितः ।

कुष्ठे विरेचनयोगः ।

विरेचनं प्रयोक्तव्यं त्रिवृद्दन्तीफलत्रिकैः ॥ ६० ॥

कुष्ठे राजवृक्षादिपाचनक्वाथः ।

राजवृक्षोऽश्वत्थसारोऽमृताऽरिष्टो हरीतकी ।
वासाखदिरमञ्जिष्ठाव्याघ्र्यः कुष्ठेषु पाचनम् ॥ ६१ ॥

कुष्ठे मञ्जिष्ठाद्यो महाकषायः ।

मञ्जिष्ठापिचुमन्दचन्दनघनच्छिन्नागवाक्षीविषा-
त्रायन्तीत्रिवृतासनद्विरजनीभूनिम्बपाठाम्बुपैः ।

गायत्रीत्रिफलापटोलकटुकाकीटद्विपत्पर्पटे-
रुग्रावल्गुजयासवत्सकयुतैः क्वाथं विदध्यान्द्विपक्॥६२॥
कण्डूमण्डलपुण्डरीककिटिभैः पामाविचर्चिव्रणैः
सिध्मश्वित्रविसर्पदद्रुरकसैर्व्याप्ताः प्रसुप्तत्वचः।
ये चान्ये गलरोगचक्षुवदनघ्राणच्युताः कुष्ठिनः
प्राप्यैनं तु महाकषायमचिरात्स्युः कामरूपान्विताः ६३

कुष्ठे लेपयोगौ।

मनःशिलैलामरिचानि तैलमार्कं पयः कुष्ठहरः प्रदेहः।
करञ्जबीजैडगजं सकुष्ठं गोमूत्रपिष्टं च परः प्रदेहः॥ ६४॥

कफपित्तकुष्ठे हरिद्रादिकषायः।

निशोत्तमानिम्बपटोलमूलतिक्तावचालोहितयष्टिकाभिः।
कृतः कषायः कफपित्तकुष्ठं सुसेवितो धर्म इवोच्छिनत्ति॥६५॥

कुष्ठे पटोलादिकषायः।

मूलं पटोलस्य तथा गवाक्ष्याः पृथक्पलांशं त्रिफलात्वचश्च।
सात्रायमाणा कटुरोहिणी च भागार्धिके नागरपादयुक्ते॥६६
पलं तथैषां सह चूर्णितानां जले शृतं दोषहरं पिबेत्तु।
जीर्णे रसैर्धन्वमृगद्विजानां पुराणशाल्योदनमाददीत॥ ६७॥
कुष्ठानि शोफं ग्रहणीप्रदोषमर्शांसि कृच्छ्राणि हलीमकं च।
योगः प्रयोगेन निहन्ति चैव हृद्बस्तिशूलं विषमज्वरं च॥६८॥

कुष्ठे त्रिफलादिकषायः।

त्रिफलापटोलपिचुमन्दवचारुणयष्टिकाः सकटुका रजनी।
नवभिः शृतं प्रपिबतः सलिलं न भवन्ति पित्तकफकुष्ठरुजः६९

कुष्ठे पटोलाद्यं चूर्णम्।

मूलं पटोलस्य तथा रजन्यौ फलत्रिकं चेति समानि षट् च।
सानीलिनी द्वित्रिगुणं विडङ्गं कम्पिल्लकश्चापि चतुर्भिरंशैः ७०

---

१ 'धर्मं' ख.।

त्रिवृत्तथा पञ्चगुणेति योगं चूर्णीकृतं मुष्टिमितं पिबेद्धि।
कुष्ठेषु मूत्रेण तु रोहिणीनां श्वित्रे गरे वाऽथ हलीमके च॥७१॥
जातोदकान्यप्युदराणि हन्यात्पाण्ड्वामयार्शःश्वयथुप्रमेहान्।
एनं प्रयोगं प्रपिबंश्च कुष्ठी भुञ्ज्याद्रसैर्धन्वमृगद्विजानाम्॥७२॥

कुष्ठे वातशान्त्यर्थं स्नेहोपयोगः।

स्नेहैराप्याययेच्चैनं कुष्ठैरन्तरान्तरा।
मुक्तरक्तविरिक्तस्य रिक्तकोष्ठस्य कुष्ठिनः॥ ७३॥
प्रभञ्जनस्तथा ह्यस्य स्यान्न देहप्रभञ्जनः।

आवर्तकीघृतम्।

आवर्तकीतुलां द्रोणे पचेदष्टाङ्गशेषितम्॥ ७४॥
तन्मूलैस्तत्र निर्यूहे घृतप्रस्थं विपाचयेत्।
पीत्वा तदेकदिवसान्तरितं सुजीर्णे
भुञ्जीत कोद्रवमसंस्कृतकाञ्जिकेन।
कुष्ठं किलासमपचीं च विजेतुमिच्छ-
न्निच्छन् प्रजां च विपुलां ग्रहणं स्मृतिं च॥७५॥

कुष्ठे भूनिम्बाद्योऽवलेहः।

भूनिम्बनिम्बत्रिफलापद्मकातिविषाकणाः।
मूर्वा पटोली द्विनिशा पाठा तिक्तेन्द्रवारुणी॥ ७६॥
सकलिङ्गवचा तुल्या द्विगुणा च यथोत्तरम्।
लिह्याद्दन्तीत्रिवृद्ब्राह्म्यश्चूर्णिता मधुसर्पिषा॥ ७७॥
मेहकुष्ठप्रसुप्तीनां परमं स्याच्चदौषधम्।

कुष्ठे खदिरयोगः।

सुदेशजातं खदिरं निरीक्ष्य तस्याप्यधस्तादवटं खनेत।
जटां निकृन्त्याशु च तस्य मूलं ताम्रे निदध्यात्कलशे सुगुप्तम् ७८
तं वेष्टितं मृत्तिकया विलिप्तं प्रदीपयेच्चारुचितं समग्रम्।
उद्धृत्य तं लोहरजोविमिश्रं पिबेद्रसं क्षौद्रघृतोपपन्नम्॥ ७९॥

प्रलेपनाभ्यञ्जनपानयोगैर्मासेन हन्यात्प्रबलं हि कुष्ठम्।
पाण्ड्वामयार्शःश्वयथुप्रमेहानुद्धृत्य दोषान्प्रणुदेच्च सद्यः॥८०॥
य एष दृष्टः खदिरस्य कल्पः सर्वामयानां शमने समर्थः।
स एव निम्बासनदेवदारुरोहीतकारग्वधशिंशपानाम्॥८१॥

कफपित्तजकुष्ठे त्रिफलादिकषायः।

त्रिफलापटोलरजनीमञ्जिष्ठाकटुरोहिणीवचानिम्बैः।
एष कषायोऽभ्यस्तो निहन्ति कफपित्तजं कुष्ठम्॥८२॥

कुष्ठे गुडूचीस्वरसोपयोगः।

छिन्नायाः स्वरसं चापि सेवमानो यथाबलम्।
जीर्णे घृतेन भुञ्जीत खल्पयूषोदकेन तु॥८३॥
अपि पूतिशरीरोऽपि दिव्यरूपो भवेन्नरः।

कुष्ठे पटोलादिक्वाथः।

पटोलखदिरारिष्टत्रिफलाकृष्णाचित्रकैः॥८४॥
तिक्तासनैः पिबेत्क्वाथं कुष्ठी कुष्ठं व्यपोहति।

कुष्ठे सप्तसमोऽवलेहः।

त्रिफलाव्योषभल्लाततिलाज्यक्षौद्रशर्कराः।
धृष्यः सप्तसमो मेध्यः कुष्ठहा कामचारिणः॥८५॥

कुष्ठे विडङ्गादिचूर्णम्।

विडङ्गत्रिफलाकृष्णाचूर्णं लीढं समाक्षिकम्।
हन्ति कुष्ठं कृमीन् मेहान्नाडीव्रणभगन्दरान्॥८६॥

कुष्ठे कतिपययोगाः।

यः खादेदभयारिष्टमरिष्टामलकं तथा।
स जयेत्सर्वकुष्ठानि मासादूर्ध्वं न संशयः॥८७॥

कुष्ठे खदिररसप्रयोगः।

दह्यमानाच्युतस्ताम्रे मूलगे खदिराद्रसः।
साज्यधात्रीरसक्षौद्रो हन्यात्कुष्ठं रसायनम्॥८८॥

पृथुयवनिम्बचूर्णम्।

पुष्पकाले च पुष्पाणि फलकाले फलानि च।
संगृह्य पिचुमन्दस्य त्वङ्मूलानि दलानि च ॥ ८९ ॥
द्विरंशानि समाहृत्य भागिकानि प्रकल्पयेत्।
त्र्यूषणं त्रिफला ब्राह्मी श्वदंष्ट्रारुष्कराग्निकाः ॥ ९० ॥
विडङ्गसारवाराहीलोहचूर्णामृतासनाः।
निशाद्वयावल्गुजकव्याधिघाताः सशर्कराः ॥ ९१ ॥
कुष्ठेन्द्रयवपाठाश्च चूर्णं कृत्वा समाहितः।
खदिरासननिम्बानां घनक्वाथेन भावितम् ॥ ९२ ॥
सप्तधा पथ्यनिम्बं तु मार्कवस्वरसेन च।
स्निग्धशुद्धतनुर्धीमान्योजयेत्तु शुभे दिने ॥ ९३ ॥
मधुना तिक्तहविषा खदिरासनवारिणा।
लेह्यमुष्णाम्भसा वापि कोलवृद्ध्या पलं पिबेत् ॥ ९४ ॥
जीर्णे तु भोजनं कार्यं स्निग्धं लघु हितं च यत्।
विचर्चिकोदुम्बरपुण्डरीककपालदद्रूकिटिभालसानि।
शतारुविस्फोटविसर्पपामाः कफप्रकोपं विविधं किलासम् ॥९५
भगन्दरश्लीपदवातरक्तं जहाति नाडीव्रणशीर्णमांसान्।
सर्वप्रमेहान् प्रदरांश्च सर्वान्दंष्ट्राविषं मूलविषं निहन्ति ॥ ९६ ॥
स्थूलोदरं सिंहकृशोदरं च सुश्लिष्टसन्धित्वमथोपयोगात्।
समोपयोगादपि ये दशन्ति सर्पादयो यान्ति विनाशमाशु ९७
जीवेच्चिरं व्याधिजराविमुक्तः शुभः शरच्चन्द्रसमानकान्तिः।

कुष्ठे खदिरसारादिचूर्णम्।

सपथ्यनिम्बत्रिफलाशताह्वः सलोहचूर्णः सविडङ्गसारः।
सबीजसारः खदिरस्य सारः कुष्ठापहः श्वित्रगदापहश्च ॥ ९८ ॥

कुष्ठे निम्बपत्रप्रयोगः।

यो निम्बपत्रशतमाचि जलेन पिष्टं
पिष्टान्नशुक्तसमयमेकमृतुत्रयं ना।

कुष्ठानि तस्य विषमानि चिरोत्थितानि
सिंहोद्धते मृगगणा इव यान्ति नाशम् ॥ ९९ ॥

कुष्ठे तिलवाकुच्योर्योगः।

तिलैः समां वाकुचिकां हिताशी संवत्सरं यो नियमेन खादेत्।
तस्य प्रणश्येत्प्रबलं हि कुष्ठं मेधादयश्चापि भवन्ति भावाः१००

कुष्ठे पथ्यादियोगः।

पथ्यागुडतिलैः पिण्डी कुष्ठं सारुष्करैर्जयेत्।
गुडारुष्करजन्तुघ्नसोमराजीकृताऽथवा ॥ १०१ ॥

कुष्ठे हरिद्रादिवटिका।

निशाकणानागरवेल्लतोवरं सवह्निताप्यं क्रमशो विवर्धितम्।
गवाम्बुपीतं वटकीकृतं तथा निहन्ति कुष्ठानि सुदारुणानि१०२

कुष्ठे औष्ट्रक्षीरयोगः।

जातकृमीणि कुष्ठानि च्युतरोमनखान्यपि।
अपि वा शीर्णमांसानि क्षीरमौष्ट्रं पिबञ्जयेत् ॥ १०३ ॥

कुष्ठे खदिरयोगः।

यियासुरन्तं कुष्ठस्य खदिरं कुष्ठपीडितः।
सर्वथैवोपयुञ्जीत स्नानपानाशनादिषु ॥ १०४ ॥

कुष्ठे धात्र्यादिस्वरसः।

रसं हि धात्र्यक्षहरीतकीनां पृथक्पृथग्यन्त्रनिपीडितानाम्।
क्षौद्रान्वितं चैव पिबेत्तु पक्षं पथ्याशनश्चकुष्ठनिवर्हणाय ॥१०५॥

कुष्ठे विडङ्गादिवटिका।

विडङ्गभल्लातकवाकुचीनां साद्रीपिवाराहिहरीतकीनाम्।
सलाङ्गलीकृष्णतिलोपकुल्या गुडेन पिण्डी विनिहन्ति कुष्ठम् ॥

कुष्ठे धात्र्याद्योऽवलेहः।

धात्र्यक्षपथ्याकृमिशत्रुवह्निभल्लातकावल्गुजलोहभृङ्गैः।
भागाभिवृद्धैस्तिलतैलमिश्रैः सर्वाणि कुष्ठानि निहन्ति लेहः१०७

कुष्ठे गन्धकयोगः ।

पिबति सकटुतैलं गन्धपाषाणचूर्णं
रविकिरणसुतप्तं यामतो यः पलार्धम् ।
त्रिदिनमनु च सक्तुक्षीरभोजी स शीघ्रं
भवति कनकदीप्तः कामरूपो मनुष्यः ॥ १०८ ॥

कुष्ठे शशाङ्कलेखादिलेहः ।

शशाङ्कलेखा सविडङ्गसारा सपिप्पलीका सहुताशमूला ।
सायोमला सामलका सतैला कुष्ठानि सर्वाणि निहन्ति लीढा ॥

कुष्ठे षड्लेपयोगाः ।

आरग्वधः सैडगजः करञ्जो वासा गुडूची मदनं हरिद्रे ।
श्याह्वः सुराह्वः खदिरो धवश्च निम्बो विडङ्गं करवीरकत्वक् ११०
ग्रन्थिश्च भौर्जो लशुनं शिरीषः सलोमशो गुग्गुलुकृष्णगन्धे ।
फणिज्जको वत्सकसप्तपर्णौ पीलूनि कुष्ठं सुमनःप्रवालाः ॥१११॥
वचा हरेणुस्त्रिवृता निकुम्भो भल्लातकं गैरिकमञ्जनं च ।
मनःशिलाले गृहधूमकुष्ठकासीसरोध्रार्जुनमुस्तसर्जाः ॥ ११२ ॥
इत्यर्धरूपैर्विहिताः षडेते गोपित्तपीताः पुनरेव पिष्टाः ।
सिद्धाः परं सर्षपतैलयुक्ताश्चूर्णप्रदेहा भिषजा प्रयोज्याः ॥११३॥
कुष्ठानि कृच्छ्राणि नवं किलासं सुरेशलुप्तं किटिभं सदद्रु ।
भगन्दरार्शांसि विचर्चिकां सपामां हन्युः प्रयुक्तास्त्वचिरान्नराणाम् ॥

कुष्ठे मनःशिलामयूरपित्तलेपः ।

अथवा कुनटीयुक्तं शिखिपित्तप्रलेपनम् ।
शोषं यावद्व्रणं याति, दातव्यं षष्टिकोदनम् ॥ ११५ ॥
तक्रेण भोजनं चास्य लवणेन विवर्जितम् ।
ततस्तु त्रिफलासिद्धं भोजनार्थे हितं घृतम् ॥ ११६ ॥
शाकार्थे च प्रदातव्यं पटोलं कारवेल्लकम् ।
वार्ताकनिम्बपत्राणि सर्पिःसिद्धानि दापयेत् ॥ ११७ ॥

ससैन्धवानि चाम्लानि यानि कुष्ठहराणि च ।

कुष्ठे आमलकादियोगः ।

यः प्रातरामलकनिम्बदलानि लेढि
चूर्णीकृतान्यनुदिनं प्रविमुक्ततन्द्रः ।
शीर्णाङ्घ्रिपाणिरवटीटसमो हि कुष्ठ-
रोगेण कैरपि दिनैः प्रविमुच्यतेऽसौ ॥ ११८ ॥

कुष्ठे लेपयोग्याऽवस्था ।

स्थिरकठिनमण्डलानां कुष्ठानां पोटलैर्हितः स्वेदः ।
स्विन्नोत्सन्नं कुष्ठं शस्त्रलिखितं प्रलेपनैर्लिम्पेत् ॥ ११९ ॥

कुष्ठे क्षारयोगः ।

येषु न शस्त्रं क्रमते स्पर्शेन्द्रियविनाशनेषु कुष्ठेषु ।
तेषु निपात्यः क्षारो रक्तं दोषं च विस्राव्य ॥ १२० ॥

कुष्ठ विषलेपः ।

लेपोऽतिकठिनपरूषे सुप्ते कुष्ठे स्थिरे पुराणे च ।
पीतागदस्य कार्यो विषैः समन्त्रोऽगदैश्चानु ॥ १२१ ॥
स्तब्धानि सुप्तिसुप्तान्यस्वेदनकण्डुलानि कुष्ठानि ।
घृष्टानि शुष्कगोमयफेनकशस्त्रैः प्रदेह्यानि ॥ १२२ ॥

कुष्ठे विषादिलेप ।

विषधूमव्योषवह्निरजनीसर्षपैः ससैन्धूत्थैः ।
क्षारद्वयगोमूत्रैः प्रसुप्तिकुष्ठापहो लेपः ॥ १२३ ॥

दद्रुकण्डूत्वादिलेप ।

दूर्वाभयासैन्धवचक्रमर्दकुठेरकाः काञ्जिकतक्रपिष्टाः ।
त्रिभिः प्रलेपैरपि बद्धमूलां दद्रुं च कण्डुं च विनाशयन्ति १२४

सिध्मकुष्ठे कतिपयलेपयोगाः ।

शिखरिरसेन तु पिष्टं मूलकबीजं प्रलेपतः सिध्म ।
क्षारेण कदल्या वा रजनीमिश्रेण नाशयति ॥ १२५ ॥
गन्धपाषाणमिश्रेण यवक्षारेण लेपतः ।
सिध्मं नाशमुपैत्याशु कटुतैलयुतेन च ॥ १२६ ॥

कासमर्दकबीजानि मूलकानां तथैव च।
गन्धपाषाणमिश्राणि सिध्मानां परमौषधम् ॥ १२७ ॥

कण्डौ अटरूषादिलेपः।

सिंहास्यकोमलदलं सनिशं सुरभीजलेन संपिष्टम्।
दिवसत्रयेण नियतं क्षपयति कण्डूं प्रलेपनतः ॥ १२८ ॥

पामादिषु हरिद्रायुद्वर्तनम्।

निशासुधारग्वधकाकमाचीपत्रैश्च दार्वीप्रपुन्नाटबीजैः।
तक्रेण पिष्टैः कटुतैलमिश्रैः पामादिपूद्वर्तनमेतदिष्टम् १२९

कण्ड्वादिषु एडगजाद्युद्वर्तनम्।

एडगजातिलसर्षपकुष्ठं वाकुचिकारजनीद्वयतक्रम्।
वर्षशतोपचितामपि कण्डूं हन्ति विचर्चिकमण्डलदद्रुम्॥

कुष्ठे विषादिलेपः।

विषवरुणहरिद्राचित्रकागारधूमं
दहनमरिचदूर्वाः क्षीरमर्कस्नुहीभ्याम्।
दहति पतति मात्रं कुष्ठजातीरशेषाः
कुलिशमिव सरोषाच्छक्रहस्ताद्विमुक्तम् ॥ १३१ ॥

दद्रौ कतिपयलेपयोगाः।

भार्गिक एडगजस्तत्पादो धात्रीफलस्य च।
शालितन्दुलतः पादो लेपो दद्रुहरः स्मृतः ॥ १३२ ॥
शेफालिकादलैर्घृष्टा तद्रसेन प्रलेपिता।
दद्रुः क्षिप्रमजीर्णोत्था नाशमायात्यसंशयम् ॥ १३३ ॥
शुष्कगोमयसंघृष्टामजीर्णप्रभवां बुधः।
दुग्धिकायास्तु दुग्धेन दद्रुनाशाय लेपयेत् ॥ १३४ ॥

किटिभादौ मनःशिलादिलेपः।

गोमूत्रवारिसंपिष्टैः शिलाकासीसतुत्थकैः।
लेपः किटिभवीसर्पकुष्ठनाशाय पूजितः ॥ १३५ ॥

विचर्चिकायां सर्षपकल्कयोगः ।

खण्डे महावृक्षभवे निलीनः स्विन्नः कुकूले पुटपाकयुक्त्या ।
विचर्चिकां सर्षपकल्कपिण्डो निहन्ति लज्जामिव रागवेगः १३६

दद्रुकुष्ठे लाक्षादिलेपः ।

लाक्षा कुष्ठं सर्षपाः श्रीनिकेतं रात्रिर्व्योषं चक्रमर्दस्य बीजम् ।
कृत्वैकस्थं तक्रपिष्टः प्रलेपो दद्रूपूक्तो मूलकाद्बीजयुक्तः ॥१३७॥

कुष्ठे गृहधूमादिलेपः ।

गृहधूमपञ्चलवणक्षारद्वयचक्रमर्दशशिरेखा-
व्योषचिपवह्निबृहतीरात्रिद्वयकुष्ठकम्पिल्लैः ॥ १३८ ॥
उग्राशिलालसर्षपसूतकसिन्दूरतुत्थकासीसैः ।
गोमूत्रसंप्रपिष्टैः स्नुगर्कपयसाऽन्वितैर्लेपः ॥ १३९ ॥
कुष्ठमपहन्त्यशेषं समुत्थितं मण्डलं समुल्लिखति ।
नाशयति स्तब्धसुप्तिं चिरजमपि सवर्णयच्छ्विन्नम् ॥ १४०॥

कुष्ठे निम्बादिप्रलेपः ।

निम्बं हरिद्रां सुरसं पटोलं कुष्ठाश्वगन्धे सुरदारु शिग्रुम् ।
ससर्षपं तुम्बरुधान्यवन्यं चण्डां च चूर्णानि समानि कुर्यात् १४१

कुष्ठे वाकुचीयोगः ।

तैस्तक्रपिष्टैः प्रथमं शरीरं तैलाक्तमुद्वर्तयितुं यतेत ।
तेनास्य कण्डूः किटिभाः सपामाः कुष्ठानि शोफाश्च शमं मजन्ति

कुष्ठे मुस्ताद्युद्वर्तनम् ।

मुस्ताऽमृतासङ्गकटङ्कटेरीकासीसकम्पिल्लककुष्ठरोध्राः ।
गन्धोपलः सर्जरसो विडङ्गं मनःशिलाले करवीरकत्वक् ॥१४३॥
तैलाक्तगात्रस्य कृतानि चूर्णान्येतानि दद्यादवचूर्णनार्थम् ।
दद्रूः सकण्डूः किटिभानि पामा विचर्चिका चैव तथेति शान्तिम्॥

कुष्ठे तुम्बर्वाद्युद्वर्तनम् ।

तुम्बरुः सर्षपाः कुष्ठमश्वगन्धाऽथ चित्रकः ।
पटोलपिचुमन्दौ च देवदारुः कुठेरकः ॥ १४५ ॥
सुरसा सैन्धवं रास्ना चोरकः सारिवा वचा ।

हरितालं शिला चैव हरिद्रे द्वे निदिग्धिका ॥ १४६ ॥
एतानि तक्रपिष्टानि कुष्ठेषूद्वर्तनं परम् ।
पामाकिटिभसिध्मानि स्थूलारुष्कं विचर्चिका ॥१४७॥
कपालकुष्ठं दद्रुं च तथा स्याद्विपमं च यत् ।
योगेनानेन शाम्यन्ति कुष्ठानि विविधान्यपि ॥१४८॥

कण्ड्वादौ हरिद्रादियोगः ।

हरिद्राकल्कसंयुक्तं गोमूत्रस्य पलद्वयम् ।
पिबेन्नरः कामचारी कण्डूपामाविनाशनम् ॥ १४९ ॥

दद्रौ हरीतकीयोगः ।

शोफपाण्ड्वामयहरा गुल्ममेहकफापहा ।
दद्रुपामाहरा चैव पथ्या गोमूत्रसाधिता ॥ १५० ॥

कण्डौ मांस्यादिगणः ।

मांसीचन्दनशम्याककरञ्जारिष्टसर्षपम् ।
यष्टीदार्व्यब्दकुटजं हन्ति कण्ड्वामयं गणः ॥ १५१ ॥

कुष्ठे वाकुचीयोगः ।

घर्मसेवी कदुष्णेन वारिणा वाकुचीं पिबेत् ।
क्षीरभोजी स सप्ताहात्कुष्ठरोगाद्विमुच्यते ॥ १५२ ॥

कुष्ठे भल्लातकादिप्रलेपः ।

भल्लातकद्वीपिसुधार्कमूलं गुञ्जाफलं त्र्यूषणशङ्खचूर्णम् ।
कुष्ठं सतुत्थं लवणानि पञ्च क्षीरद्वयं लाङ्गलिकां च पक्त्वा१५३
स्नुगर्कदुग्धे घनमायसस्थं शलाकया तद्विदधीत लेपम् ।
कुष्ठे किलासे तिलकालकेषु मषेषु दुर्नामसु चर्मकीले ॥ १५४ ॥

कुष्ठे हरीतक्यादिलेपः ।

हरीतकीसैन्धवसोमराजीविडङ्गसिद्धार्थकरञ्जबीजैः ।
करोति गोमूत्रयुतैः प्रपिष्टैः कुष्ठप्रणाशं विहितः प्रलेपः ॥१५५॥

रक्से गोमूत्रादिलेपः ।

आरण्यगोमयनिघृष्टमतिप्रलिप्तं
गोमूत्रतक्रलवणैः कथितैः प्रयत्नात् ।

नाशं प्रयाति रक्तसं चिरसंप्ररूढ-
मप्याशु पापमिव संसरणेन शम्भोः ॥ १५६ ॥

कुष्ठे गुञ्जादियोगः।

अपगततुपगुञ्जाचूर्णहैयङ्गवीन-
प्रमृदितमुपशान्तिं कुष्ठिनो याति कुष्ठम्।
यदि तु भवति लिप्तं सर्वतस्ताम्रपात्रे
गृहितमथितकिट्टैस्तन्न भूयो भवेत्तु ॥ १५७ ॥

रक्तसादौ हरितालादिलेपः।

गोमूत्रपिष्टैर्हरितालदूर्वासिन्धूद्भवैर्लेपितमादरेण।
प्रयाति नाशं रक्तसं नराणां दद्रुश्च यायाचिरसंप्ररूढा॥१५८॥

दद्रौ शृङ्गवेरादिलेपः।

शृङ्गवेरं विडङ्गानि कुष्ठं तगरमेव च।
परिपिष्टानि मूत्रेण दद्रुघ्नानि प्रलेपनात् ॥ १५९ ॥

श्वित्रे सुदर्शनामूलयोगः।

सौदर्शनीं शिफां पिष्ट्वा लेपं कुर्यात्सजीरकाम्।
काञ्जिकेन जयेद्दद्रूं श्वित्रमी कांस्यसंस्थिता ॥ १६० ॥

किटिभे चक्रमर्दादिलेपः।

चक्राह्वबीजं स्नुक्क्षीरभावितं मूत्रसंयुतम्।
रवितप्तं सकिण्वं च लेपनं किटिभापहम् ॥ १६१ ॥

कच्छ्वादौ अवल्गुजादियोगः।

अवल्गुजं कासमर्दं चक्रमर्दं निशायुगम्।
माणिमन्थेन तुल्यांशं मस्तुकाञ्जिकपेषितम् ॥ १६२ ॥
कच्छूं कण्डूं जयत्युग्रां सिद्ध एष प्रयोगराट्।

पादस्फुटनचर्मदलयोः कतिपययोगाः।

शुक्तिकाभस्म सिन्धूत्थं सर्पिः सर्जरसं पयः ॥ १६३ ॥
पादस्फुटनहा लेपस्तिक्तालाबुन्यवस्थितः।
सक्षीरं तु स्नुहीकाण्डं बिडसौवर्चलान्वितम् ॥ १६४ ॥

त्रिदिनं कटुतुम्बीस्थं पादलेपं प्रकल्पयेत् ।
अनेन स्फुटितौ पादौ भवेज्जिह्वोपमौ नृणाम् ॥ १६५ ॥
सर्जसिक्थकसिन्धूत्थघृतगुग्गुलुगैरिकैः ।
गुडक्षौद्रयुतैर्लेपः पादस्फुटननाशनः ॥ १६६ ॥
वचया श्वेतया याति नाशं चर्मदलं नृणाम् ।
लेपेनेन्द्रयवैर्धात्रीफलैर्गोमूत्रपेषितैः ॥ १६७ ॥
सलिलेन तु शुष्कानि घृष्ट्वा धात्रीफलानि च ।
कराभ्यां सुखमाप्नोति नरश्चर्मदलार्दितः ॥ १६८ ॥
पलं पलं समादाय सर्जनिर्यासमसर्पिषोः ।
तयोस्तुल्यं गुडं दत्त्वा सम्यग्दपदि पेषयेत् ॥ १६९ ॥
अर्कदुग्धपलार्धं तु क्षिप्त्वा लेपं प्रकल्पयेत् ।
तेनैवालेपितौ पादौ स्यातामब्जदलोपमौ ॥ १७० ॥
आविकक्षीरसंसिद्धैः फलैर्गोमूत्रपेषितैः ।
तिक्ततुम्बीभवैः सम्यग्लेपः पादरुजापहः ॥ १७१ ॥
एरण्डतैलसिन्धूत्थशतपुष्पान्वितेन तु ।
मदनस्य फलैः शुद्धैर्मिश्रितेन प्रयत्नतः ॥ १७२ ॥
नवनीतेन चरणौ माहिषेण पुनः पुनः ।
लेपितौ च ध्रुवं स्यातां विकचाब्जदलोपमौ ॥ १७३ ॥

कुष्ठे चतुरङ्गुलपर्णादिलेपः ।

पर्णानि पिष्ट्वा चतुरङ्गुलस्य तक्रेण पर्णान्यथ काकमाच्याः ।
तैलाक्तगात्रस्य नरस्य कुष्ठान्युद्वर्तयेदश्वरिपुच्छदैश्च ॥ १७४ ॥

कुष्ठे एडगजादिलेपः ।

एडगजकुष्ठसैन्धवतक्रेण सौवीरकसर्षपैः कृमिघ्नैश्च ।
कृमिसिध्मदद्रुमण्डलकुष्ठानां नाशनो लेपः ॥ १७५ ॥

कुष्ठे आरग्वधपत्रलेपः ।

आरग्वधस्य पत्राणि चारनालेन लेपयेत् ।
दद्रुकिटिभकुष्ठानि हन्ति सिध्मानमेव च ॥ १७६ ॥

कण्डूकुष्ठे स्थौणेयकादिलेपः ।

स्थौणेयकनिशादूर्वाः खल्पतालाः प्रलेपतः ।
धत्तूररसपिष्टाश्च कण्डूकुष्ठविनाशनाः ॥ १७७ ॥

कुष्ठे कासमर्दमूललेपः ।

कासमर्दकजं मूलं सौवीरेण तु पेषितम् ।
दद्रुकिटिभकुष्ठानि जयेदेतत्प्रलेपनात् ॥ १७८ ॥

कुष्ठे मूलकबीजादिलेपः ।

बीजानि वा मूलकसर्षपाणां लाक्षारजन्यौ प्रपुन्नाटबीजम् ।
श्रीवेष्टकं व्योषविडङ्गकुष्ठं पिष्ट्वा च मूत्रेण तु लेपनं स्यात् ॥१७९
दद्रूणि सिध्माः किटिभानि पामां
कपालकुष्ठं विषमं च हन्यात् ।

दद्रुकुष्ठे विडङ्गादिलेपः ।

विडङ्गैडगजाकुष्ठनिशासिन्धूत्थसर्षपैः ।
धान्याम्लपिष्टैर्लेपोऽयं दद्रूकुष्ठविनाशनः ॥ १८० ॥

सिध्मकुष्ठे धात्रीरसाद्युद्वर्तनम् ।

धात्रीरसः सर्जरसः सपाक्यः सौवीरपिष्टश्च तदाप्लुतश्च ।
भवन्ति सिध्मानि यथा न भूयस्तथैनमुद्वर्तनकं प्रकुर्यात्॥१८१

सिध्मकुष्ठे कार्पासपत्रादिलेपः ।

कार्पासिकापत्रविमिश्रकाकजङ्घाकृतो मूलकबीजयुक्तः ।
तक्रेण लेपः क्षितिपुत्रवारे सिध्मानि सद्यो नयति प्रणाशम् ॥

सिध्मकुष्ठे मूलकबीजादिलेपः ।

पिष्टैर्मूलकबीजैः प्रत्यक्पुष्पीरसान्वितैर्लेपः ।
सिध्मानि हरति यदि वा रम्भाक्षारेण निशया च ॥ १८३

कुष्ठे लघुविषगर्भतैलम् ।

मरिचालधिलाब्दार्कपयोश्वारिजटात्रिवृ- ।
च्छकृद्रसविशालारुङ्निशायुग्दारुचन्दनैः ॥ १८४ ॥

कटुतैलात्पचेत्प्रस्थं त्र्यक्षैर्विषपलान्वितैः ।
सगोमूत्रं तदभ्यङ्गाद्दद्रुश्वित्रविनाशनम् ॥ १८५ ॥
सर्वेष्वपि च कुष्ठेषु तैलमेतत्प्रशस्यते ।

कुष्ठे बृहन्मरिचाद्यं विषगर्भतैलम् ।

मरिचं त्रिवृता दन्ती क्षीरमार्कं शकृद्रसः ॥ १८६ ॥
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ।
विशाला करवीरं च हरितालं मनःशिला ॥ १८७ ॥
लाङ्गली चित्रकं चैव विडङ्गं चक्रमर्दकम् ।
शिरीषं कुटजो निम्बः सप्तपर्णोऽमृता स्नुही ॥ १८८ ॥
शम्याकनक्तमालाब्दखदिरं पिप्पली वचा ।
ज्योतिष्मती च पलिकान् विषस्य द्विपलं भवेत् ॥१८९
आढकं कटुतैलं च गोमूत्रं च चतुर्गुणम् ।
मृत्पात्रे लोहपात्रे वा शनैर्मृद्वग्निना पचेत् ॥ १९० ॥
पक्वं तैलवरं ह्येतत्प्रजयेत्कौष्ठिकान् व्रणान् ।
पामाविचर्चिकाकण्डूदद्रुविस्फोटकानि च ॥ १९१ ॥
वलयः पलितं छाया नाडी व्यङ्गं तथैव च ।
अभ्यङ्गेन प्रणश्यन्ति सौकुमार्यं च जायते ॥ १९२ ॥
प्रथमे वयसि स्त्रीणां नस्यं च यदि दीयते ।
परामपि जरां प्राप्य न च सा याति विक्रियाम्॥१९३
बलीवर्दस्तुरङ्गो वा गजो वा वायुपीडितः ।
त्रिभिरभ्यञ्जनैर्वोढं भवेन्मारुतविक्रमः ॥ १९४ ॥

पामायां मञ्जिष्ठाद्यं सूर्यपाकतैलम् ।

मञ्जिष्ठात्रिफलालाक्षानिशाशिलालगन्धकैः ।
चूर्णितैस्तैलमादित्यपाकं पामाहरं परम् ॥ १९५ ॥

कच्छ्वादौ दूर्वाद्यं तैलम् ।

स्वरसेन तु दूर्वायाः पचेत्तैलं चतुर्गुणम् ।
कच्छूं विचर्चिकां पामामभ्यङ्गादेव नाशयेत् ॥ १९६ ॥

अर्कतैलम्

अर्कपत्ररसे पक्वं हरिद्राकल्कसंयुतम् ।
कटुतैलं निहन्त्येतत्कच्छूपामाविचर्चिकाः ॥ १९७ ॥

कुष्ठादौ विषतैलम् ।

नक्तमालं हरिद्रे द्वे अर्कस्नुक्पय एव च ।
करवीरो वचा कुष्ठमास्फोटा रक्तचन्दनम् ॥ १९८ ॥
मालती सप्तपर्णश्च मञ्जिष्ठा सिन्दुवारिका ।
एषामर्धपलान् भागान् विषस्यापि पलं क्षिपेत् ॥ १९९
चतुर्गुणे गवां मूत्रे तैलप्रस्थं विपाचयेत् ।
हन्ति विस्फोटकिटिभकीटलूताविचर्चिकाः ॥ २०० ॥
कण्डूकच्छूविकारं च ये व्रणा विषदूषिताः ।
विषतैलमिदं नाम्ना सर्वव्रणविशोधनम् ॥ २०१ ॥

कुष्ठे श्वेतकरवीराद्यं तैलम् ।

श्वेतकरवीरकरसो गोमूत्रं चित्रको विडङ्गं च ।
कुष्ठे तु तैलयोगः सिद्धोऽयं संमतो भिषजाम् ॥ २०२॥

सर्वकुष्ठे सिन्दूराद्यं तैलम् ।

सिन्दूरं चन्दनं मांसी विडङ्गं रजनीद्वयम् ।
प्रियङ्गुं पद्मकं कुष्ठं मञ्जिष्ठां खदिरं वचाम् ॥ २०३ ॥
जात्यर्कत्रिवृतानिम्बकरञ्जं विषमेव च ।
कृष्णचित्रकरोध्रं च प्रपुन्नाटं च संहरेत् ॥ २०४ ॥
जलपिष्टानि सर्वाणि योजयेत्तैलमात्रया ।
अभ्यङ्गं च प्रयुञ्जीत सर्वकुष्ठविनाशनम् ॥ २०५ ॥
पामाविचर्चिकाकण्डूविसर्पादिहितं मतम् ।
रक्तपित्ताश्रितान् हन्ति रोगानेवंविधान् बहून् ॥ २०६

सर्वकुष्ठे द्वितीयं सिन्दूराद्यं तैलम् ।

सिन्दूरगुग्गुलुरसाञ्जनसिक्थतुत्थैः
कल्कीकृतैश्च कटुतैलमिदं विपक्वम् ।

कच्छूस्रवत्पिटकिकामथवापि शुष्का-
मभ्यञ्जनेन सकृदुद्धरति प्रसह्य ॥ २०७ ॥

पामायां तृतीयं सिन्दूराद्यं तैलम्।

सिन्दूरतुत्थमदनाञ्जनगुग्गुलूनां
चूर्णेन मध्यनिहितेन समं विपक्वम्।
सिद्धार्थकप्रभवमाशु निहन्ति तैल-
मभ्यञ्जनेन बहुशो विहितेन पामाम् ॥ २०८ ॥

पामायां सिन्दूराद्यो लेपः।

सिन्दूरमरिचक्षोदयुक्तेनाभ्यङ्गयोगतः।
माहिषेणाचिरात्पामा नवनीतेन नश्यति ॥ २०९ ॥

पामायां चतुर्थं सिन्दूराद्यं तैलम्।

सिन्दूरार्धपलं पिष्ट्वा जीरकस्य पलं तथा।
कटुतैलं पचेदाभ्यां सद्यः पामाहरं परम् ॥ २१० ॥

कुष्ठे तृणकट्वैतैलम्।

मञ्जिष्ठारुङ्घ्रिशाचक्रमर्दारग्वधपल्लवैः।
तृणकस्वरसे सिद्धं तैलं कुष्ठहरं कटु ॥ २११ ॥

सिध्मकुष्ठे ज्योतिष्मतीतैलम्

मयूरकक्षारजले सप्तकृत्वः परिस्रुते।
सिद्धं ज्योतिष्मतीतैलमभ्यङ्गात्सिध्मनाशनम् ॥ २१२॥

सिध्मकुष्ठे कुष्ठाद्यं तैलम्।

कुष्ठं मूलकबीजं प्रियङ्गवः सर्षपास्तथा रजनी।
एतैः केसरपष्ठैर्निहन्ति बहुवार्षिकं सिध्म ॥ २१३ ॥

कुष्ठे पञ्चनिम्बकं चूर्णम्।

खदिरोदकसंमिश्रं पञ्चाङ्गं निम्बचूर्णकम्।
सेवेत्कुष्ठविनाशाय ब्रह्मचर्येण संयुतः ॥ २१४ ॥

कुष्ठे भल्लातकाद्यं चूर्णम्।

भल्लातको मार्कवशङ्खपुष्पीब्राह्मीवचावाकुचिकाविडङ्गम्।
फलत्रयं पिप्पलिका च चव्यं कुष्ठानि चूर्णं सघृतं निहन्ति२१५

कुष्ठे पशुपतिचूर्णम्।

सुरतरुकृतमालव्यालदार्वीकराल-
स्तपनफलमृणालोद्धाङ्गगौरीविशालः।
समधृतशशिरेखः सेव्यमानः सुभक्तः
पशुपतिरिव योगः सर्वकुष्ठानि हन्ति ॥ २१६ ॥

कुष्ठे तुवरास्थिवटकाः।

पथ्या सेन्द्रयवा सकिंशुकफला सार्कं तथाऽऽवर्तकी
व्याधिघ्नेन तु योजिता हुतभुजा सारुष्करा वाकुची।
तद्वच्च कृमिशत्रुणाऽभ्युपगता ह्येकैकवृद्धानिमान्
गोमूत्रेण विमर्द्य तुल्यतुवरान् कुष्ठी वटान् भक्षयेत् ॥२१७॥
निहन्ति हतनासिकाकरजकर्णपादाङ्गुलि-
क्षरद्रुधिरपूयकं परिविजृम्भजन्तुव्रणम्।
प्रभिन्नचिरलक्षितस्वरमशेषकुष्ठं भृशं
निहन्ति कुरुतेऽरुणार्कवपुषं नरं योगतः ॥ २१८ ॥

पाददद्रौ वाकुचिकायोगः।

भागं तिलानां सह सोमराज्या भागद्वयेन प्रतिवासरं यः।
अश्नाति तस्य द्रुतमङ्घ्रिदद्रुश्चिरप्ररूढोऽपि विनाशमेति ॥२१९॥

पित्तकफकुष्ठे त्रिफलादिकाथः।

त्रिफलापटोलपिचुमन्दवचारुणयष्टिकाः सकटुका रजनी।
नवभिः शृतं प्रपिबतः सलिलं न भवन्ति पित्तकफकुष्ठरुजः ॥

कुष्ठे चिन्तामणियोगः।

शिवापथ्याद्यपानिम्बवल्कं सव्याधिघातकम्।
पटोलीपाटलाराजीशाल्मलीचित्रकामृताः ॥ २२१ ॥
तुम्बरुः कटुका दन्ती करञ्जोऽथ विभीतकः।
भार्गी वरुणमेतेषां काथः पेयस्त्रिसप्तकम् ॥ २२२ ॥
प्रथमे प्रथमे यामे घर्मः सेव्योऽथ भोजनम्।
शालिभक्तेन कर्तव्यं नाह्नि निद्रा विधीयते ॥ २२३ ॥

एवं कृते विनश्यन्ति सर्वकुष्ठानि देहिनाम्।
चिन्तामणिरिति ख्यातो योगोऽयं तत्त्ववेदिभिः ॥२२४

कुष्ठे दैवव्यपाश्रयचिकित्सा।

नीचलोमनखो नित्यं नित्यमौषधतत्परः।
योषिन्मांससुरावर्जी कुष्ठी कुष्ठं व्यपोहति ॥ २२५ ॥
व्रतदमयमसेवात्यागशीलाभियोगः
सुरगुरुद्विजपूजा सर्वसत्त्वेषु मैत्री।
जिनजिनसुतताराभास्कराराधनानि
प्रकटितमलपापं कुष्ठमुन्मूलयन्ति ॥ २२६ ॥

इति कुष्ठचिकित्सितम्।

---

अथातः श्वित्रचिकित्सितं व्याख्यास्यामः

श्वित्रस्य शीघ्रावश्यप्रतीकार्यत्वम्।

कुष्ठादपि बीभत्सं यच्छीघ्रतरं यात्यसाध्यत्वम्।
श्वित्रमवस्तच्छान्त्यै यतेत दीप्ते यथा भवने ॥ २२७ ॥

श्वित्रशान्त्यर्थं स्फोटजननाः कतिपययोगाः।

संशोधनं विशेषात् प्रयोजयेत्पूर्वमेव देहस्य।
श्वित्रे स्रंसनमग्र्यं मलपूरस इष्यते सगुडः ॥ २२८ ॥
तं पीत्वाऽभ्यक्ततनुर्यथाबलं सूर्यपादसंतापम्।
सेवेत विरिक्तश्च त्र्यहं पिपासुः पिबेत्पेयाम् ॥ २२९ ॥
श्वित्रेऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान् भिन्द्यात्।
स्फोटेषु निःसुतेषु प्रातः प्रातः पिबेत्पक्षम् ॥ २३० ॥
मलयूमसनं प्रियङ्गुशतपुष्पे चाम्भसा समुत्क्वाथ्य।
पालाशं वा क्षारं यथाबलं फाणितोपेतम् ॥ २३१ ॥
फल्गवक्षवृक्षवल्कलनिर्यूहेणेन्दुराजिकाकल्कम्।
पीत्वा जाते स्फोटे तक्रेण भोजनं निर्लवणम् ॥२३२॥

चित्रपावल्गुजबीजाच्चूर्णं गोवारिभावितं बहुशः ।
मूलकाथेन पिबेत्कलितरुमदनकृतमालफल्गूनाम् ॥ २३३ ॥
पीते किलासी तिलतैलदिग्धो प्रातर्दिनेशस्य च पादसेवी ।
जीर्णे च तक्रान्वितकोद्रवाशी स्फोटोद्भवार्थेप विधिस्त्रिरात्रम्॥

विद्धाऽन्येद्युः स्फोटकान् कण्टकैस्तान्
वस्त्राम्भोभिर्घृष्टया शुक्लवर्त्या ।
लिम्पेत्कामं लेपनाद्वेदनायां
लेपे योज्या शङ्खनाभिर्जलेन ॥ २३५ ॥

त्वचं बिभीतकतरोः काष्ठोदुम्बरिकात्वचम् ।
समांशं योजयित्वा च क्वाथयेत्पादशेषितम् ॥ २३६ ॥
वाकुच्यास्तेन बीजानि बहुशः परिभावयेत् ।
अतस्तेन कषायेण पाययेत यथाबलम् ॥ २३७ ॥
आतपे पीतमात्रं तु स्थापयेच्छ्वित्रिणं नरम् ।
स्फोटास्तस्य प्रजायन्ते द्वित्र्यहेण सुदारुणाः ॥ २३८ ॥
श्वित्रमावृत्य तेषां तु पूये संप्रस्रुते ततः ।
आवर्तकीविपकेन तैलेनाभ्यञ्जनं हितम् ॥ २३९ ॥
द्वीपिचर्ममषीं कृत्वा मषीं वा गजचर्मणः ।
शोषं यावद्व्रणं याति तावत्तमवचूर्णयेत् ॥ २४० ॥

श्वित्रे धात्र्यादियोगः ।

धात्रीखदिरयोः क्वाथं पीत्वाऽवल्गुजसंयुतम् ।
कुन्देन्दुधवलं श्वित्रं हन्ति तूर्णं न संशयः ॥ २४१ ॥

श्वित्रे वाकुचिकादिलेपः ।

कुडवोऽवल्गुजबीजाद्धरितालचतुर्भागसंमिश्रः ।
मूत्रेण गवां पिष्टः सवर्णकरणं परं श्वित्रे ॥ २४२ ॥

श्वित्रे वायस्यादिलेपः ।

वायसैडगजाकुष्ठकृष्णाभिर्गुटिका कृता ।
बस्तमूत्रेण संपिष्टा प्रलेपाच्छ्वित्रनाशिनी ॥ २४३ ॥

सिध्मकिलासयोर्मरिचादिलेपः।

मरिचं तमालपत्रं कुष्ठं समनःशिलं सकासीसम्।
तैलेन युक्तमुषितं सप्ताहं भाजने ताम्रे॥ २४४॥
तेनालिप्तं सिध्म सप्ताहाद्धर्मसेविनोऽपैति।
मासान्नवं किलासं स्नानेन विना विशुद्धस्य॥ २४५॥
रात्रौ गोमूत्रे वासिताज्जर्जराङ्गा-
नह्नि छायायां शोषयेत्स्फोटयेचान्।
एवं वारांस्त्रींस्ततः श्लक्ष्णपिष्टैः
स्नुह्या क्षीरेण श्वित्रनाशाय लेपः॥ २४६॥

सिध्मश्वित्रयोः पत्रकादिलेपः।

पत्रकोपणकासीसतैलताप्यमनःशिलाः।
सप्ताहमुषिता कांस्ये सिध्मश्वित्रविनाशनाः॥ २४७॥

श्वित्रादौ पूतीकादिलेपः।

पूतीकार्कस्नुङ्नरेन्द्रद्रुमाणां मूत्रैः पिष्टाः पल्लवा जातिजाश्च।
लेपाच्छ्वित्रं घ्नन्ति दद्रुव्रणांश्च कुष्ठान्यर्शोस्युग्रनाडीव्रणांश्च॥

श्वित्रकुष्ठे भद्रोदुम्बरिकादियोगः।

भद्रासंज्ञोदुम्बरीमूलतुल्यं दत्त्वा मूलं क्षोदयित्वा मलप्वाः।
सिद्धं तोये पीतमुष्णे सुखोष्णं स्फोटाच्छ्वित्रे पुण्डरीके च कुर्यात्॥
द्वैपं दग्धं चर्म मातङ्गजं वा भिन्ने स्फोटे तैलयुक्तः प्रलेपः।
पूतिः कीटो राजवृक्षोद्भवेन क्षारेणाक्तः श्वित्रमेको निहन्ति॥

श्वित्रे काकोदुम्बरिकादियोगः।

मथितेन पिबेच्चूर्णं काकोदुम्बर्यफल्गुजम्।
तैलाक्तो घर्मसेवी स्यात्तक्राशी श्वित्रमुद्धरेत्॥ २५१॥

श्वित्रे काष्ठोदुम्बरपर्ण्यादिर्को कृष्णीकरणो योगः।

काष्ठोदुम्बरपर्णी च सर्जिका तुत्थचित्रकौ।
हयमारो भृङ्गराजः कासीसं मदयन्तिका॥ २५२॥

एतान्यक्षप्रमाणानि नीरे भृङ्गरजस्य तु ।
त्रिप्रस्थे वै समालोड्य तैलं चाक्षजसार्षपम् ॥ २५३ ॥
कुडवं खुरचूर्णस्य पित्तं कूर्मशिखण्डिनोः ।
अन्तर्भूमौ निधातव्यं दिवसानेकविंशतिम् ॥ २५४ ॥
एषोऽस्थिकभिदो योगः श्वित्राणां परिकीर्तितः ।
अकालपलितानां च कृष्णीकरणमुत्तमम् ॥ २५५ ॥

श्वित्रे बाकुचीबीजाद्यो योगः ।

विभीतकत्वङ्मलपूजटानां क्वाथेन पीतं गुडसंयुतेन ।
आवल्गुजं बीजमपाकरोति श्वित्राणि कृच्छ्राण्यपि पुण्डरीकम्॥

कुष्ठे रोमजननार्थं कपोतवङ्कादियोगः ।

कपोतवङ्का लशुनस्य शीर्षं ससैन्धवं चित्रकमूलमिश्रम् ।
तदश्वलिण्डस्य रसेन पिष्टं व्रणे प्रलेपो जननो हि रोम्णाम्२५७

श्वित्रे रोम्णां कृष्णीकरणार्थं कुरण्टकादियोगः ।

दासीकुरण्टस्य तु पत्रपुष्पमादित्यपुष्पाञ्जनवह्निपुष्प्यः ।
गृह्णीत तेषां स्वरसं प्रपीड्य तल्लोहचूर्णाञ्जनसंप्रयुक्तम् ॥२५८॥
निघृष्य पूर्वं व्रणवास्तुभूमिं तेन प्रयोगेण पुनः प्रलिम्पेत् ।
श्वेतानि रोमाणि निहन्ति शीघ्रं कृष्णानि कुर्यादपि योगराजः॥

श्वित्रस्य कृच्छ्रसाध्यत्वम् ।

क्षुधा शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च सक्तूनाम् ।
श्वित्रं कस्यचिदेव प्रशाम्यति क्षीणपापस्य ॥ २६० ॥

श्वित्रेऽङ्कोल्लकादियोगः ।

अङ्कोल्लः करवीरमूलमुशलीघच्चूरपत्रं जटा
शिग्रुर्लाङ्गलिका च कुष्ठतुलसीमूलं च बीजानि च ।
भृङ्गैरण्डगजार्कपत्रसहितं युक्तं तथा सर्षपै-
र्देहश्वित्रहरं सकाञ्जिकमिदं तक्रेण संचूर्णितम् ॥ २६१

इति श्रीवैद्यसोढलप्रथिते गदनिग्रहे कायचिकित्साखण्डे कुष्ठाधिकारः
षट्त्रिंशत्तमः समाप्तः ॥ ३६ ॥

## अथ शीतपित्ताधिकारः सप्तत्रिंशत्तमः।

अथातः शीतपित्तोदर्दकोठनिदानं व्याख्यास्यामः।

शीतपित्तसंप्राप्तिः।

शीतमारुतसंस्पर्शात्प्रदुष्टौ कफमारुतौ।
पित्तेन सह संभूय बहिरन्तर्विसर्पतः॥ १॥

शीतपित्तपूर्वरूपम्।

पिपासारुचिहृल्लासदेहसादाङ्गगौरवम्।
रक्तलोचनता तेषां पूर्वरूपस्य लक्षणम्॥ २॥

शीतपित्तोदर्दलक्षणम्।

वरटीदंशसंस्थानः शोफः संजायते बहिः।
सकण्डूस्तोदबहुलश्छर्दिज्वरविदाहवान्॥ ३॥
उदर्दमिति तं विद्याच्छीतपित्तमथापरे।
वाताधिकं शीतपित्तमुदर्दस्तु कफाधिकः॥ ४॥
सोत्सेधैश्च सरागैश्च कण्डूमद्भिश्च मण्डलैः।
शैशिरः कफजो व्याधिरुदर्दः परिकीर्तितः॥ ५॥
शीतपानीयसंस्पर्शाच्छीतकाले विशेषतः।
सरागकण्डूः शोफः स्यादुदर्दः कफसंभवः॥ ६॥

कोठलक्षणम्।

असम्यग्वमनोदीर्णपित्तश्लेष्मान्ननिग्रहैः।
मण्डलानि सकण्डूनि रागवन्ति बहूनि च।
उत्कोठः सोनुबन्धस्तु कोठ इत्यभिधीयते॥ ७॥

इति शीतपित्तोदर्दकोठनिदानं समाप्तम्।

---

अथातः शीतपित्तोदर्दकोठचिकित्सितं व्याख्यास्यामः।

शीतपित्तोदर्दकोठानां सामान्यचिकित्सा।

अभ्यङ्गः कटुतैलेन सेकः कोष्णाम्बुभिस्तथा।
तथाऽऽशु वमनं कार्यं पटोलारिष्टवारिणा॥ ८॥

त्रिफलासुरकृष्णाभिर्विरेकश्चात्र शिष्यते ।
त्रिफलाक्षौद्रसहितं पिबेद्वा नवकार्षिकम् ॥ ९ ॥
विसर्पोक्तामृतादिं तु भिषगत्रापि योजयेत् ।
पिप्पलीवर्धमानं वा लशुनं वा प्रयोजयेत् ॥ १० ॥
कुष्ठोक्तं च क्रमं कुर्यादम्लपित्तोक्तमेव च ।
उदर्दोक्तां क्रियां चात्र कोठरोगे समासतः ॥ ११ ॥
सर्पिः पीत्वा महातिक्तं कार्यं शोणितमोक्षणम् ।
सितां मधुकसंयुक्तां सगुडामलकैः सह ॥ १२ ॥
सगुडं दीप्यकं यस्तु खादेत्पथ्याचभुङ्नरः ।
तस्य नश्यति सप्ताहादुदर्दः सर्वदेहजः ॥ १३ ॥

शीतपित्ते सिद्धार्थाद्युद्वर्तनम् ।

सिद्धार्थरजनीकल्कैः प्रपुन्नाटतिलैः सह ।
कटुतैलेन संमिश्रमेतदुद्वर्तनं हितम् ॥ १४ ॥

शीतपित्ते दूर्वादिलेपः ।

दूर्वानिशायुतो लेपः कच्छूपामाविनाशनः ।
कृमिदद्रुहरश्चैव शीतपित्तापहः स्मृतः ॥ १५ ॥

शीतपित्ते निम्बपत्रयोगः ।

निम्बस्य पत्राणि सदा घृतेन धात्रीविमिश्राण्यथवोपयुञ्ज्यात् ।
विस्फोटकोठक्षतशीतपित्तकण्ड्वम्लपित्तं रकसं च हन्यात् ॥१६

शीतपित्ते सामान्यचिकित्सा ।

क्षीरसिन्धूत्थतैलं च गात्राभ्यङ्गे प्रयोजयेत् ।
तैलोद्वर्तनयोगे तु योज्य एलादिको गणः ॥ १७ ॥
शुष्कमूलकयूषेण कौलत्थेन रसेन वा ।
भोजनं सर्वदा कार्यं लावतित्तिरजेन वा ॥ १८ ॥
शीतलान्यन्नपानानि बुद्ध्वा दोषगतिं भिषक् ।
उष्णानि वा यथादोषं शीतपित्ते प्रयोजयेत् ॥ १९ ॥

शीतपित्ते काश्मरीफलयोगः।

कालेन पक्वं प्रतिपाद्य शुष्कं गव्येन सिद्धं पयसोपयुक्तम्।
काश्मर्यमाशु प्रतिहन्ति शीतपित्तं हिताहाररतेन लीढम्॥ २०

इति श्रीसोढलवैद्यप्रथिते गदनिग्रहे कायचिकित्साखण्डे शीतपित्ताधिकारः सप्तत्रिंशत्तमः॥ ३७॥

---

## अथाम्लपित्ताधिकारोऽष्टत्रिंशत्तमः।

अथातोऽम्लपित्तनिदानं व्याख्यास्यामः।

अम्लपित्तस्य संप्राप्तिपूर्वकं लक्षणम्।

विरुद्धदुष्टाम्लविदाहपित्तप्रकोपिपानान्नभुजो विदग्धम्।
पित्तं स्वहेतूपचितं पुरा यत्तदम्लपित्तं प्रवदन्ति तज्ज्ञाः॥१॥
अविपाकश्रमोत्क्लेशतिक्ताम्लोद्गारगौरवैः।
हृत्कण्ठदाहारुचिभिरम्लपित्तं वदेद्भिषक्॥ २॥

अधोगताम्लपित्तलक्षणम्।

तृड्दाहमूर्च्छाभ्रममोहकारि प्रयात्यधो वा विविधप्रकारम्।
हृल्लासकोठानलसादहर्षस्वेदाङ्गपीतत्वकरं कदाचित्॥ ३॥

ऊर्ध्वगाम्लपित्तलक्षणम्।

वान्तं हरित्पीतकनीलकृष्णमारक्तरक्ताभमतीव चाम्लम्।
मत्स्योदकाभं त्वतिपिच्छलाच्छं श्लेष्मानुजातं विविधं रसेन ४
भुक्ते विदग्धेऽप्यथवाऽप्यभुक्ते करोति तिक्ताम्लवमिं कदाचित्।
उद्गारमेवंविधमेव कण्ठे हृत्कुक्षिदाहं शिरसो रुजं च॥ ५॥
करचरणदाहमौष्ण्यं महतीमरुचिं ज्वरं च कफपित्तम्।
जनयति कण्डूमण्डलपिटिकाशतनिचितगात्ररोगचयम्॥ ६॥

अम्लपित्तस्य साध्यासाध्यविचारः।

रोगोऽयमम्लपित्ताख्यो यत्नात्संसाध्यते नवः।
चिरोत्थितो भवेद्याप्यः कृच्छ्रसाध्यस्तु कस्यचित्॥ ७॥

अम्लपित्ते वातादिसंसर्गलक्षणम्।

सानिलं सानिलकफं सकफं तच्च लक्षयेत्।
दोषलिङ्गेन मतिमान् भिषङ्मोहकरं च तत्॥ ८॥
कम्पप्रलापमूर्च्छाचिमचिमगात्रावसादशूलानि।
तमसो दर्शनविभ्रमप्रमोहहर्षाण्यनिलयुक्ते॥ ९॥
कफनिष्ठीवनगौरवजडतारुचिशीतसादवमिलेपाः।
दहनबलसादकण्डूनिद्राश्चिह्नं कफानुगते॥ १०॥
उभयमिदमेव चिह्नं मारुतकफसंभवे भवत्यम्ले॥ ११॥)
(तिक्ताम्लकटुकोद्गारवमिहृत्कण्ठदाहकृत्।

श्लेष्मपित्तलक्षणम्।

भ्रमो मूर्च्छाऽरुचिश्छर्दिरालस्यं च शिरोरुजा।
प्रसेको मुखमाधुर्यं श्लेष्मपित्तस्य लक्षणम्॥ १२॥

इत्यम्लपित्तनिदानम्॥

---

अथातोऽम्लपित्तचिकित्सां व्याख्यास्यामः।

अम्लपित्ते सामान्यचिकित्सा।

वमनानन्तरं तत्र विरेकं मृदु कारयेत्।
सम्यग्वान्तविरिक्तस्य सुस्निग्धस्यानुवासनम्॥ १३॥
आस्थापनं चिरोद्भूते देयं दोषाद्यपेक्षया।
क्रिया शुद्धस्य शमनी त्वनुबन्धाद्यपेक्षया॥ १४॥
दोषसंसर्गजा कार्या भिषजाऽऽहारकल्पना।
ऊर्ध्वगं वमनैर्धीमानधोऽगं रेचनैर्हरेत्॥ १५॥
तिक्तभूयिष्ठमाहारं पानं चैव प्रकल्पयेत्।
यवगोधूमविकृतीस्तीक्ष्णसंस्कारवर्जिताः॥ १६॥
यथास्वं लाजसक्तून् वा सितामधुयुतान् पिबेत्।

---

१ 'मृदु' ख.।

अम्लपित्ते यवादिक्वाथः ।

निस्तुषयवद्वृषधात्रीक्वाथं त्रिसुगन्धिसंयुतं पीत्वा ।
अपहरति चाम्लपित्तं यदि भुङ्क्ते मुद्गयूषेण ॥ १७ ॥

अम्लपित्ते शृङ्गवेरादिक्वाथः ।

कफपित्तवमीकण्डूज्वरविस्फोटदाहहा ।
पाचनो दीपनः क्वाथः शृङ्गवेरपटोलयोः ॥ १८ ॥

अम्लपित्ते पटोलादिक्वाथः ।

पटोलं नागरं धान्यं क्वाथयित्वा जलं पिबेत् ।
कण्डूपामार्तिशूलघ्नं कफपित्ताग्निमान्द्यजित् ॥ १९ ॥
पटोलनिम्बामृतरोहिणीकृतं जलं पिबेत्पित्तकफोच्छ्रये ना ।
शूलभ्रमारोचकवह्निमान्द्यदाहज्वरच्छर्दिनिवारणं च ॥ २० ॥

अम्लपित्ते यवादिक्वाथः ।

यवकृष्णापटोलानां क्वाथं क्षौद्रयुतं पिबेत् ।
नाशयेदम्लपित्तं च अरुचिं च वमिं तथा ॥ २१ ॥

अम्लपित्ते दशाङ्गक्वाथः ।

वासामृतापर्पटकनिम्बभूनिम्बमार्कवैः ।
कुलत्थत्रिफलैः क्वाथः सक्षौद्रश्चाम्लपित्तहा ॥ २२ ॥

अम्लपित्ते त्रिफलादिक्वाथः ।

फलत्रिकं पटोलं च तिक्ता क्वाथः सितायुतः ।
पीतः शीतकमध्वाक्तो ज्वरच्छर्द्यम्लपित्तहा ॥ २३ ॥

अम्लपित्ते वासादिक्वाथः ।

वासानिम्बपटोलत्रिफलाच्छिन्नाभियोजितो जयति ।
अधिककफमम्लपित्तं प्रयोजितो गुग्गुलुः क्रमशः ॥ २४ ॥

अम्लपित्ते कतिपययोगाः ।

छिन्नाखदिरयष्ट्याह्वदार्व्यम्भो वा मधूद्भवम् ।
सद्राक्षामभयां खादेत्सक्षौद्रां सगुडां वचाम् ॥ २५ ॥

कटुका सितावलेखा पटोलयिथं तथा क्षौद्रयुतम्।
रक्तसुतौ च युक्त्या खण्डकूष्माण्डकं श्रेष्ठम् ॥ २६ ॥
पटोलत्रिफलारिष्टघृतं मधुयुतं पिबेत्।
पित्तश्लेष्मज्वरच्छर्दिदाहमोहोपशान्तये ॥ २७ ॥
सिंहास्यामृतकण्टारीक्वाथं पीत्वा समाक्षिकम्।
अम्लपित्तं जयेज्जन्तुः श्वासं कासं ज्वरं वमिम् ॥ २८ ॥
वासाघृतं तिक्तघृतं च युक्त्या मधूक्षितां मागधिकां लिहेद्वा।
अन्यत्तथैवं गुणवच्च सर्पिस्तदम्लपित्तं शमयत्युदीर्णम् ॥ २९ ॥

अम्लपित्ते गुडाद्यो मोदकः।

गुडपिप्पलिपथ्याभिस्तुल्याभिर्मोदकः कृतः।
पित्तश्लेष्मापहः प्रोक्तो मन्दमग्निं च दीपयेत् ॥ ३० ॥

अम्लपित्ते पञ्चनिम्बचूर्णम्।

एकोंऽशः पञ्चनिम्बानां द्विगुणो वृद्धदारुकः।
सक्तुर्दशगुणो देयः शर्करामधुरीकृतः ॥ ३१ ॥
शीतेन वारिणा पीतं शूलं पित्तकफोत्थितम्।
निहन्ति चूर्णं सक्षौद्रमम्लपित्तं सुदुस्तरम् ॥ ३२ ॥
सवाते सविवन्धेऽस्मिन् हिता कंसहरीतकी।

अम्लपित्ते जीरकाद्यं घृतम्

पिष्ट्वाऽजाजीं सधुकां घृतप्रस्थं विपाचयेत् ॥ ३३ ॥
कफपित्ताम्लकहरं वमिं मन्दानलं जयेत्।
पटोलशुण्ठीकल्काभ्यां केवलं कुलकेन वा ॥ ३४ ॥
घृतप्रस्थं विपक्तव्यं कफपित्तहरं परम्।
पिप्पलीक्वाथकल्केन घृतं सिद्धं मधुप्लुतम् ॥ ३५ ॥
पिबेन्ना प्रातरुत्थाय अम्लपित्तनिवृत्तये।

अम्लपित्ते कतिपयघृतयोगाः।

शतावरीमूलकल्कं घृतप्रस्थं पयःसमम् ॥ ३६ ॥

पचेन्मृद्वग्निना सम्यक्क्षीरं दत्त्वा चतुर्गुणम् ।
नाशयेदम्लपित्तं च वातपित्तोद्भवान् गदान् ॥ ३७ ॥
रक्तपित्तं तृषां मूर्च्छां श्वासं संतापमेव च ।

अम्लपित्ते कतिपययोगाः ।

अम्लपित्ते प्रयोक्तव्यः कफपित्तहरो विधिः ॥ ३८ ॥
गुडकूष्माण्डकं चैव तथा खण्डामलक्यपि ।
गुडक्षीरकणासिद्धं सर्पिश्चात्रापि योजयेत् ॥ ३९ ॥

अम्लपित्ते द्राक्षाद्यं घृतम् ।

द्राक्षामृताशक्रपटोलपत्रैः सोशीरधात्रीघनचन्दनैश्च ।
त्रायन्तिकापद्मकिरातधान्यैः कल्कैः पचेत्सर्पिरुपेतमेभिः॥४०॥
युञ्जीत मात्रां सह भोजनेन सर्वे तु पानेन भिषग्विदध्यात् ।
बलासपित्तं ग्रहणीं प्रवृद्धां कासाग्निसादज्वरमम्लपित्तम् ।
सर्वं निहन्याद्घृतमेतदाशु सम्यक्प्रयुक्तं ह्यमृतोपमं च ॥ ४१ ॥

अम्लपित्तेऽवस्थाविशेषे शोधनविधानम् ।

ज्वलन्तमिव चात्मानं मन्यते योऽम्लपित्तवान् ।
तस्य संशोधनं पथ्यं न शान्तिः शोधनं विना ॥ ४२
अचिरोत्थे चिरोत्थे वा वमनं तत्र कारयेत् ।
अम्लपित्ते च वमनं पटोलारिष्टवारिभिः ।
विरेचनं त्रिवृच्चूर्णं मधुधात्रीफलैर्भवेत् ॥ ४३ ॥

इति श्रीवैद्यसोढलप्रथिते गदनिग्रहे कायचिकित्साखण्डेऽम्लपित्ताधिकारोऽष्टत्रिंशत्तमः ॥ ३८ ॥

---

## अथ विसर्पाधिकार एकोनचत्वारिंशत्तमः ।

अथातो विसर्पनिदानं व्याख्यास्यामः ।

विसर्पसंप्राप्तिः ।

लवणाम्लकटूष्णादिसंसेवाद्दोपकोपतः ।
विसर्पः सप्तधा ज्ञेयः सर्वतः परिसर्पणात् ॥ १ ॥

पृथक् त्रयस्त्रिभिश्चैको विसर्पा द्वन्द्वजास्त्रयः।
वातिकः पैत्तिकश्चैव श्लैष्मिकः सान्निपातिकः॥ २॥
चत्वार एते वीसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः।
आग्नेयो वातपित्ताभ्यां, ग्रन्थ्याख्यः कफवातजः॥ ३॥
यस्तु कर्दमको घोरः स पित्तकफसंभवः।
रक्तं लसीका त्वङ्मांसं दूष्यं, दोषास्त्रयो मलाः॥ ४॥
विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः।

दोषभेदेन विसर्पलक्षणानि।

तत्र वातात्स वीसर्पो वातज्वरसमव्यथः॥ ५॥
शोफस्फुरणनिस्तोदभेदायामार्तिहर्षवान्।
पित्ताद्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः॥ ६॥
कफात्कण्डूयुतः स्निग्धः कफज्वरसमानरुक्।
सन्निपातसमुत्थश्च सर्वरूपसमन्वितः॥ ७॥

अग्निविसर्पलक्षणम्।

वातपित्ताज्वरच्छर्दिमूर्च्छातीसारतृड्भ्रमैः।
अस्थिभेदाग्निसदनतमकारोचकैर्युतः॥ ८॥
करोति सर्वमङ्गं च दीप्ताङ्गारावकीर्णवत्।
यं यं देशं विसर्पश्च विसर्पति भवेत्स सः॥ ९॥
शान्ताङ्गारासितो नीलो रक्तो वाऽऽशु च चीयते।
अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद्द्रुतं च सः॥ १०॥
मर्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः।
व्यथेताङ्गं हरेत्संज्ञां निद्रां च श्वासमीरयेत्॥ ११॥
हिक्कां स च गतोऽवस्थामीदृशीं लभते न ना।
क्वचिच्छर्मारतिग्रस्तो भूमिशय्यासनादिषु॥ १२॥

१ 'ग्रन्थिभेदाग्निसदन-' ख.।

चेष्टमानस्ततः क्लिष्टो मनोदेहप्रमोहवान्।
दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते ॥ १३ ॥

ग्रन्थिविसर्पलक्षणम्।

कफेन रुद्धः पवनो भित्त्वा तं बहुधा कफम्।
रक्तं वा वृद्धरक्तस्य त्वक्शिरास्नायुमांसगम् ॥ १४ ॥
दूषयित्वा च दीर्घाणुवृत्तस्थूलखरात्मनाम्।
ग्रन्थीनां कुरुते मालां सरक्तां तीव्ररुग्ज्वराम् ॥ १५ ॥
कासश्वासातिसारास्यशोषहिध्मावमिभ्रमैः।
मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाग्निसदनैर्युताम् ॥ १६ ॥
इत्ययं ग्रन्थिवीसर्पः कफमारुतकोपजः।

कर्दमविसर्पलक्षणम्।

कफपित्ताज्ज्वरः स्तम्भो निद्रा तन्द्रा शिरोरुजा ॥ १७ ॥
अङ्गावसादविक्षेपौ प्रलापारोचकभ्रमाः।
मूर्च्छाऽग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम् ॥ १८ ॥
आमोपवेशनं लेपः स्रोतसां स च सर्पति।
प्रायेणामाशये गृह्णन्नेकदेशं न चातिरुक् ॥ १९ ॥
पिडकैरवकीर्णोऽतिपीतलोहितपाण्डुरैः।
मेचकाभोऽसितः स्निग्धो मलिनः शोफवान् गुरुः ॥ २० ॥
गम्भीरपाकः प्राज्योष्मा पक्वः क्लिन्नोऽवदीर्यते।
पङ्कवच्छीर्णमांसश्च स्पष्टस्नायुशिरागणः ॥ २१ ॥
शवगन्धिश्च वीसर्पं कर्दमाख्यमुशन्ति तम्।

क्षतविसर्पलक्षणम्।

बाह्यहेतोः क्षतात्क्रुद्धः सरक्तं पित्तमीरयन् ॥ २२ ॥
विसर्पं मारुतः कुर्यात्कुलत्थसदृशैश्चितम्।
स्फोटैः शोफज्वररुजादाहाढ्यं श्यावलोहितम् ॥ २३ ॥

विसर्पोपद्रवाः।

ज्वरातिसारवमथुतृण्मांसदरणक्लमाः।
अरोचकाविपाकौ च विसर्पाणामुपद्रवाः ॥ २४ ॥

विसर्पाणां साध्यासाध्यलक्षणम्।

सिध्यन्ति वातकफपित्तकृता विसर्पाः
सर्वात्मकः क्षतकृतश्च न सिद्धिमेति।
पित्तात्मकोऽञ्जनवपुश्च भवेदसाध्यः
कृच्छ्राश्च मर्मसु भवन्ति हि सर्व एव ॥ २५ ॥

इति विसर्पनिदानम्।

---

अथातो विसर्पचिकित्सितं व्याख्यास्यामः।

विसर्पे सामान्यचिकित्सा।

विरेकवमनालेपशोधनासृग्विमोक्षणैः।
उपाचरेद्यथादोषं विसर्पनिवहार्दितम् ॥ २६ ॥

विसर्पे पटोलादिवमनयोगः।

पटोलपिचुमन्दाभ्यां पिप्पल्या मदनेन च।
विसर्पे वमनं शस्तं तथा चेन्द्रयवैः सह ॥ २७ ॥

विसर्पे त्रिफलादिविरेचनम्।

त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह।
प्रयोक्तव्यं विरेकार्थे विसर्पज्वरशान्तये ॥ २८ ॥

वातविसर्पे कतिपययोगाः।

रसमामलकानां वा घृतमिश्रं प्रदापयेत्।
तृणवर्ज्यं प्रयोक्तव्यं पञ्चमूलचतुष्टयम्।
प्रदेहसेकसर्पिष्षु विसर्पे वातसंभवे ॥ २९ ॥

वासाफलत्रयपटोलगुडूच्यरिष्टै-
रम्भः शृतं सखदिरैः सुखकृद्विसर्पी।

लेपं शिरीषरजनीद्वयकुष्ठयष्टि-
मांसीनतैः सत्रुटिबालकचन्दनैश्च ॥ ३० ॥

वातविसर्पे कुष्ठादियोगः।

कुष्ठं शताह्वा सुरदारु मुस्ता वाराहिकुस्तुम्बरुकृष्णगन्धाः।
वातेऽर्कवंशार्तगलाश्च योज्याः सेकेषु लेपेषु तथा घृतेषु ॥३१॥

पित्तविसर्पे प्रपौण्डरीकादिलेपः।

प्रपौण्डरीकमञ्जिष्ठापद्मकोशीरचन्दनैः।
सयष्टीन्दीवरैः पिष्टैः क्षीरयुक्तैः प्रलेपनम् ॥ ३२ ॥

पित्तविसर्पे कसेरुकादिलेपः।

कसेरुशृङ्गाटकपद्मगुन्द्राः सशैवलाः सोत्पलकर्दमाश्च।
वस्त्रान्तराः पित्तकृते विसर्पे लेपा विधेयाः सघृताः सुशीताः३३

विसर्पे कतिपयलेपयोगाः।

प्रदेहः परिषेकश्च शस्यते पञ्चवल्कलैः।
पद्मकोशीरमधुकचन्दनैर्वा प्रशस्यते ॥ ३४ ॥
पित्ते तु पद्मिनीपङ्कः पिष्टं वा शङ्खशैवलम्।
गुञ्जामूलं तु शुक्तिं वा गैरिकं वा घृतान्वितम् ॥ ३५ ॥
न्यग्रोधपादास्तरुणाः कदलीगर्भ एव च।
बिसग्रन्थिश्च लेपः स्याच्छतधौतघृतान्वितः ॥ ३६ ॥
हरेणवो मसूराश्च मुद्गाश्चैव सशालयः।
पृथक् पृथक् प्रदेहाः स्युः सर्वे वा सर्पिषा सह ॥ ३७ ॥

विसर्पे द्राक्षादिशोधनयोगः।

द्राक्षारग्वधकाश्मर्यत्रिफलाविडपीलुभिः।
त्रिवृद्धरीतकीभिश्च विसर्पे शोधनं हितम् ॥ ३८ ॥

कफविसर्पे खदिरादिलेपः।

गायत्रीसप्तपर्णाह्ववासारग्वधदारुभिः।
कुटन्नटैर्भवेल्लेपो विसर्पे श्लेष्मसंभवे ॥ ३९ ॥

कफविसर्पेऽजगन्धादिलेपः।

अजाऽश्वगन्धा सरलाऽथ काला सैकेशिका चाऽप्यथवाऽजशृङ्गी।
गोमूत्रपिष्टो विहितः प्रदेहो हन्याद्विसर्पं कफजं सुशीघ्रम् ॥४०

कफविसर्पे मदनादिवमनम्।

मदनं मधुकं निम्बं वत्सकस्य फलानि च।
वमनं च विधातव्यं विसर्पे कफसंभवे ॥ ४१ ॥

कफविसर्पे त्रिफलादिलेपः।

त्रिफलापद्मकोशीरसमङ्गाकरवीरकम्।
नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा ॥ ४२ ॥

वातविसर्पे क्षीरादिपरिषेकयोगः।

क्षीरतैलविमिश्रेण घृतमण्डेन कल्पितः।
परिषेकः क्षिणोत्याशु विसर्पमनिलोद्भवम् ॥ ४३ ॥

वातविसर्पे रास्नादिलेपः।

रास्ना च मधुकं चैव पेषयेद्दधिमस्तुना।
प्रदेहो वातवीसर्पे घृताक्तस्तु प्रशस्यते ॥ ४४ ॥

वातविसर्पे क्षीरवृक्षशुङ्गादिलेपः।

शुङ्गाश्च क्षीरवृक्षाणां मधुकं नीलमुत्पलम्।
क्षीरसिद्धमिदं कोष्णं वातवीसर्पनाशनम् ॥ ४५ ॥

वातविसर्पे रास्नादिलेपः।

रास्ना नीलोत्पलं दारु चन्दनं मधुकं शठी।
घृतक्षीरयुतो लेपो वातवीसर्पनाशनः ॥ ४६ ॥

पैत्तिके विसर्पे प्रपौण्डरीकादिलेपः।

प्रपौण्डरीकं मधुकं पयस्या मञ्जिष्ठिका पद्मकचन्दने च।
सुगन्धिका चेति सुखोपलेपः पैत्ते विसर्पे भिषजा प्रयोज्यः ॥४७

पैत्तिकविसर्पे कपीतनादित्वग्लेपः।

कपीतनवटाश्वत्थप्लक्षोदुम्बरजास्त्वचः।
लेपनाच्छोफवीसर्परक्तपित्तप्रसाधनाः ॥ ४८ ॥

पित्तविसर्पे पद्मकादिलेपः।

पद्मकोशीरमधुकचन्दनैश्च प्रशस्यते।
लेपो विसर्पपित्तास्रदाहरागनिवारणः॥ ४९॥

पित्तविसर्पे कालीयकादिलेपः।

कालीयकविमिश्रैस्तु सघृतैः शालितण्डुलैः।
प्रलिप्तः पित्तवीसर्पो न पुनर्याति विक्रियाम्॥ ५०॥

पित्तविसर्पे विशग्रन्थ्यादिलेपः।

विशग्रन्थिमृणालाभ्यां निशाकाष्ठवटच्छदैः।
पित्तवीसर्पनाशाय वारिपिष्टैः प्रलेपनम्॥ ५१॥

कफविसर्पे काकजङ्घादिलेपः।

काकजङ्घा शिरीषस्य पुष्पं श्लेष्मातकत्वचः।
कृतमालस्य पत्राणि वाजिगन्धा प्रियङ्गवः।
प्रदेहं कफवीसर्पे कदुष्णं च प्रयोजयेत्॥ ५२॥

कफविसर्पे खदिरादिलेपः।

गायत्रीसप्तपर्णाब्दधवारग्वधदारुभिः।
सकुरण्टैर्भवेल्लेपो विसर्पे श्लेष्मसंभवे॥ ५३॥

विसर्पे दशाङ्गलेपः।

शिरीषयष्टीनतचन्दनैलामांसीहरिद्राद्वयकुष्ठतोयैः।
लेपो दशाङ्गः सघृतः प्रदेयो विसर्पकुष्ठव्रणशोफहारी॥ ५४॥

विसर्पे प्रपौण्डरीकादिलेपः।

प्रपौण्डरीकयष्ट्याह्वदार्वीरोध्राब्दचन्दनैः।
सितोत्पलैरकासक्तुमसूरोशीरपद्मकैः।
लेपो रुग्दाहवीसर्पस्फोटशोफनिवारणः॥ ५५॥

विसर्पे नलादिलेपः।

नलवेतसमूलानि गुन्द्रा शैवलशाद्वलम्।
विसर्पे सघृतं पिष्टमेकैकं लेपनं हितम्॥ ५६॥

विसर्पे मसूरादिलेपः।

मसूरैः खण्डितैर्मुद्गैश्चणकैः समकुष्ठकैः।

यवैश्च निस्तुषैस्तद्वल्लेपो वीसर्पनाशनः ॥ ५७ ॥

विसर्पे बलादिलेपः ।

बलानागबलापथ्याभूर्जग्रन्थिविभीतकम् ।
वंशपत्राण्यग्निमन्थं दद्याद्ग्रन्थिप्रलेपनम् ॥ ५८ ॥

विसर्पे कम्पिल्लकादिलेपः ।

कम्पिल्लकं विडङ्गानि त्वचं दार्व्यास्तथैव च ।
पिष्ट्वा तैलं विपक्तव्यं ग्रन्थिव्रणचिकित्सितम् ॥ ५९ ॥

विसर्पव्रणे दूर्वादिघृतम् ।

दूर्वास्वरससिद्धं च घृतं स्याद्व्रणरोपणम् ।

विसर्पे दार्व्यादिघृतम् ।

दार्वीत्वङ्मधुकं रोध्रं केसरं चावचूर्णितम् ॥ ६० ॥
पटोलपत्रं त्रिफलां कुर्यादर्धपलोन्मितान् ।
पक्वं यष्ट्याह्वकल्केन घृतं स्याद्व्रणरोपणम् ॥ ६१ ॥

विसर्पे प्रपौण्डरीकादिलेपः ।

प्रपौण्डरीकोत्पलगैरिकं च मञ्जिष्ठयष्टीमधुकं विदारी ।
द्वे चन्दने पद्मकपद्मपत्रं सौगन्धिकं स्यात्कुमुदं च तुल्यम् ।
लेपः प्रशस्तः पयसा सुपिष्टः कुमारकाणां सविसर्पकाणाम् ६२

विसर्पे दुरालभादिशीतकषायः ।

दुरालभापर्पटकगुडूचीविश्वभेषजम् ।
निशापर्युषितं दद्यात्तृष्णावीसर्पनाशनम् ॥ ६३ ॥

विसर्पे पटोलपत्रादियूषः ।

पटोलपत्रमुद्गानां रसमामलकस्य च ।
पाययेत घृतोन्मिश्रं नरं वीसर्पपीडितम् ॥ ६४ ॥

विसर्पे पटोलादिक्वाथः ।

पटोलारिष्टदार्वीत्वक्तिक्तात्रायन्तिकामृताः ।
सयष्टीमधुकाः सर्वे विसर्पान् घ्नन्ति पानतः ।

विसर्पे मुस्तादिकषायः।

मुस्तारिष्टपटोलानां क्वाथः सर्वविसर्पजित् ॥ ६५ ॥

विसर्पे खदिराष्टकम्।

खदिरपटोलवृषनिम्बफलत्रितयै-
रमृतान्वितैरपि पयः पिबतः क्वथितम्।
प्रशममुपैति कुष्ठमथ सर्पिरनेन
पचेदपि खदिराष्टकेन विसर्पहरम् ॥ ६६ ॥

विसर्पे पटोलादिकषायः।

पीत्वा पटोलनिम्बैस्तु चन्दनोत्पलमुस्तकैः।
क्वाथं विसर्परोगार्तः क्षिप्रं सुखमवाप्नुयात् ॥ ६७ ॥

विसर्पे सारिवादिकषायः।

सारिवामुस्तकोशीरधात्रीभिः परिसाधितम्।
कषायं च पिबेदाशु सर्ववीसर्पनाशनम् ॥ ६८ ॥

विसर्पे आरग्वधादिकषायः।

आरग्वधस्य पत्राणि त्वचः श्लेष्मातकोद्भवाः।
शिरीषपुष्पं कामाची हिता लेपावचूर्णनैः ॥ ६९ ॥

विसर्पे अमृतादिकषायः।

अमृतविशपटोलं निम्बकल्कैरुपेतं
त्रिफलखदिरसारं व्याधिघातं च तुल्यम्।
क्वथितमिदमशेषं गुग्गुलोर्भागयुक्तं
जयति विषविसर्पं कुष्ठमष्टादशाख्यम् ॥ ७० ॥

विसर्पे द्वितीयोऽमृतादिकषायः।

अमृतविशपटोलं मुस्तकं सप्तपर्णं
खदिरमसितपत्रं निम्बपत्रं हरिद्रे।
विविधविषविसर्पान् कुष्ठविस्फोटकण्डू-
रपनयति मसूरांश्छीतपित्तज्वरांश्च ॥ ७१ ॥

इति श्रीवैद्यसोढलमथिते गदनिग्रहे कायचिकित्साखण्डे विसर्पाधिकार एकोनचत्वारिंशत्तमः समाप्तः ॥ ३९ ॥

## अथ विस्फोटकाधिकारश्चत्वारिंशत्तमः।

### अथातो विस्फोटकनिदानं व्याख्यास्यामः।

विस्फोटकानां निदानसंप्राप्तिपूर्वकं सामान्यलक्षणम्।

कट्वम्लरूक्षोष्णविदाहितीक्ष्णक्षारैरजीर्णाध्यशनातपैश्च।
तथर्तुदोषेण विपर्ययेण कुप्यन्ति दोषाः पवनादयश्च॥ १॥
त्वचमाश्रित्य ते रक्तमांसास्थीनि प्रदूष्य च।
घोरान् कुर्वन्ति विस्फोटान् सर्वान् ज्वरपुरःसरान्॥ २
अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्तजाः।
क्वचित् सर्वत्र या देहे स्मृता विस्फोटका इति॥ ३॥

विस्फोटकानां वातजादिभेदेन लक्षणानि।

शिरोरुक्छूलभूयिष्ठज्वरतृट्पर्वभेदनम्।
सकृष्णवर्णता चेति वातविस्फोटलक्षणम्॥ ४॥
ज्वरदाहरुजास्रावपाकतृष्णाभिरन्वितम्।
पीतलोहितवर्णं च पित्तविस्फोटलक्षणम्॥ ५॥
छर्द्यरोचकजाड्यानि कण्डूकाठिन्यपाण्डुताः।
अवेदनश्चिरात्पाकी स विस्फोटः कफात्मकः॥ ६॥
कण्डूर्दाहो ज्वरश्छर्दिरेतैश्च कफपैत्तिकः।
वातपित्तकृतो यश्च कुरुते तीव्रवेदनाम्॥ ७॥
कण्डूस्तैमित्यगुरुभिर्जानीयात्कफवातिकम्।
मध्ये निम्नोन्नतोऽन्ते च कठिनोऽल्पप्रपाकवान्॥ ८॥
दाहो रागस्तृषा मोहश्छर्दिर्मूर्छा ज्वरो रुजा।
प्रलापो वमथुस्तन्द्रा सोऽसाध्यः स्यात्त्रिदोषजः॥ ९॥
रक्ता रक्तसमुत्थाना गुञ्जाफलनिभास्तथा।
वेदितव्यास्तु रक्तेन पैत्तिकेन तु हेतुना।
न ते सिद्धिं समायान्ति सिद्धैर्योगशतैरपि॥ १०॥

विस्फोटकानां साध्यासाध्यविचारः।

एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः।

सर्वरूपान्वितो घोरस्त्वसाध्यो भूर्युपद्रवः ॥ ११ ॥

विस्फोटस्योपद्रवाः।

तृड्श्वासमांससंकोचदाहहिक्कामदज्वराः।
विसर्पमार्गसंरोधास्तेषां प्रोक्ता उपद्रवाः ॥ १२ ॥

इति विस्फोटकनिदानम् ॥

---

अथातो विस्फोटकचिकित्सितं व्याख्यास्यामः।

विस्फोटके लङ्घनविधानम्।

विस्फोटकेषु सर्वेषु लङ्घनं पूर्वमाचरेत्।
न रसेन विना केचिद्विस्फोटाः संभवन्ति हि ॥ १३ ॥

विस्फोटके पटोलादिक्वाथः।

पटोलामृतभूनिम्बवासकारिष्टपर्पटैः।
खदिराब्दयुतैः क्वाथो विस्फोटार्तिज्वरापहः ॥ १४ ॥

विस्फोटके निम्बादिक्वाथः।

निम्बामृताब्दकटुकावृषधन्वयास-
भूनिम्बपर्पटपटोलफलत्रयाणाम्।
क्वाथो नृणामिह भवेद्गतेषु पाकं
विस्फोटकेष्वतिहितः कथितो भिषग्भिः ॥ १५ ॥

विस्फोटके भूनिम्बादिकषायः।

कर्षद्वयं च भूनिम्बं तदर्धं निम्बमेव च।
क्वाथस्तयोर्त्र्यहं पीतः सर्वविस्फोटनाशनः ॥ १६ ॥

विस्फोटके सहदेवीयोगः।

सहदेवीकृता पिण्डी सर्वविस्फोटनाशिनी।

विस्फोटके पटोलादिक्वाथः।

पटोलत्रिफलारिष्टगुडूचीमुस्तचन्दनैः ॥ १७ ॥
समूर्वारोहिणीपाठारजनीभिः सयासकैः।
कषायं पाययेदेतत्कफपित्तज्वरापहम्।

कण्डूत्वग्दोषविस्फोटविषवीसर्पनाशनम् ॥ १८ ॥

विस्फोटके हलिन्यादियोगः ।

मूलबीजान्विता पिष्टा काञ्जिकेन प्रलेपतः ।
हलिनी देवदाली वा दुग्धिका स्फोटनाशिनी ॥१९॥

विस्फोटके करञ्जबीजादिलेपः ।

करञ्जतरुबीजानि युक्तानि तिलसर्षपैः ।
एरण्डफलयुक्ता वा दुग्धिका स्फोटनाशिनी ॥ २० ॥

विस्फोटके भूनिम्बादिक्वाथः ।

भूनिम्बवासाकटुकापटोलफलत्रिकाचन्दननिम्बसिद्धः ।
विसर्पदाहज्वरवक्त्रशोषविस्फोटतृष्णावमिनुत्कषायः ॥२१॥

विस्फोटके कुण्डल्यादि(गुडूच्यादि)योगः ।

कुण्डलीपिचुमन्दाम्बुखदिरेन्द्रयवाम्बुदाः ।
विस्फोटान्नाशयन्त्याशु वायुर्जलधरानिव ॥ २२ ॥

विस्फोटके त्रिफलादियोगः ।

सकफे पित्तयुक्ते तु त्रिफलां योजयेत्पुरा ।
दुरालभां पर्पटकं पटोलं कटुकां तथा ।
सोष्णं गुग्गुलुसंमिश्रं पिबेद्वा खदिराष्टकम् ॥ २३ ॥

विस्फोटके चन्दनादिलेपः ।

चन्दनं नागपुष्पं च तन्दुलीयकसारिवे ।
शिरीषवल्कलं जाती लेपः स्याद्दाहनाशनः ॥ २४ ॥
शुकतरुचन्दनमांसीरजनीपद्मकानि तुल्यानि ।
पिष्टानि शीततोयैर्लेपः स्यात्सर्वविस्फोटे ॥ २५ ॥

विस्फोटे शिरीषादिकवलग्रहः ।

शिरीषपूगमञ्जिष्ठादार्व्यामलकयष्टिकैः ।
सजातीपल्लवक्षौद्रैर्विस्फोटे कवलग्रहः ॥ २६ ॥
शिरीषोदुम्बरौ जम्बूः सेकालेपनयोर्हिताः ।
श्लेष्मातकत्वचो वाऽपि प्रलेपे सेचने हिताः ॥ २७ ॥

विस्फोटे शिरीषादिलेपः ।

शिरीषोशीरनागाह्वहिंस्राभिर्लेपनाद्द्रुतम् ।
विसर्पविषविस्फोटाः प्रशाम्यन्ति न संशयः ॥ २८ ॥

विस्फोटे वृषाद्यं घृतम् ।

वृषखदिरपटोलनिम्बपत्रत्वगमृतलतामलकीकषायकल्कैः ।
घृतमभिनवमेतदाशु पक्वं जयति विसर्पगदासकुष्ठगुल्मान् ॥२९

त्रिदोषजविस्फोटे पञ्चतिक्तं घृतम् ।

पटोलसप्तच्छदनिम्बवासाफलत्रिकच्छिन्नरुहाविपक्वम् ।
तत्पञ्चतिक्तं घृतमाशु हन्ति त्रिदोषविस्फोटविसर्पकण्डूः ॥३०

विस्फोटके दशमूलादिकषायः ।

द्विपञ्चमूली त्रिफला गुडूची किरातकं धन्वयवासकं च ।
जले शृतं मागधिकाविमिश्रं त्रिदोषविस्फोटहरं प्रदिष्टम् ॥३१॥

विस्फोटे इन्द्रयवलेपः ।

विस्फोटव्याधिनाशाय तण्डुलाम्बुप्रपेषितैः ।
बीजैः कुटजवृक्षस्य लेपः कार्यो विजानता ॥ ३२ ॥
सुधां पुरातनीं तद्वद्वारिणा परिपेषिताम् ।
लेपनं तैलदिग्धस्य विस्फोटव्याधिनाशनम् ॥ ३३ ॥

पक्वविस्फोटचिकित्सा ।

परिपक्वान् विदित्वा तु भसना परिचूर्णयेत् ।
शय्यायां तु प्रकुर्वीत दग्ध्वा वाऽरण्यगोमयम् ॥ ३४ ॥
तद्रस वाऽसकृद्द्यात्तत्पक्वक्लेदनाशनम् ।
रोपणं विहितं तच्च कण्डूघ्नं च प्रकीर्तितम् ॥ ३५ ॥
कल्केन पिचुमन्दस्य मूलकेन तु रोपणम् ।
खदिरेण तु कुर्वीत प्रलेपं दाहशान्तये ॥ ३६ ॥

अक्षिजविस्फोटचिकित्सा ।

अक्षिगेषु प्रकुर्वीत आश्च्योतनमिदं भिषक् ।
शेलुत्वचित्रफलादार्वीक्वाथो रोचनया युतः ॥ ३७ ॥

दार्वीचन्दनरोध्रैः सुमनोदैः सेचनं हितं चाक्ष्णोः।
चन्दनकर्पूराञ्जनरसाञ्जनाख्यैस्तथा चान्यैः।
हितमक्ष्णोरिदमञ्जनमुक्तं पुष्पादिरोगहरम् ॥ ३८ ॥

मुखजविस्फोटकप्रतीकारः।

मुखजेषु निम्बखदिरक्काथो मुखपाकभेषजं पश्चात्।
सवर्णकरं कुरण्टकतैलं तथा कुङ्कुमाद्यं च ॥ ३९ ॥
वमनं प्रधानकर्म स्फोटेषु विरेचनं तथा च परम्।
न भवति लूनमूला विस्फोटाभ्यन्तरेऽल्पमलाः ॥ ४० ॥

स्नायुकस्य निदानसंप्राप्तिपूर्वकं लक्षणम्।

शाखासु कुपितो दोषः शोफं कृत्वा विसर्पवत्।
भिनत्ति तत्क्षते तत्र सोष्मा मांसं विशोष्य च ॥ ४१ ॥
कुर्यात्तन्तुनिभं सूत्रं तत्पिण्डैस्तक्रसक्तुजैः।
शनैः शनैः क्षताद्याति छेदात्कोपं समावहेत् ॥ ४२ ॥
तत्पाताच्छोफशान्तिः स्यात्पुनः स्थानान्तरे भवेत्।
स स्नायुक इति ख्यातः क्रियोक्ताऽत्र विसर्पवत् ॥ ४३ ॥

स्नायुकचिकित्सा।

गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डीस्वरसं त्र्यहम्।
पिबन् स्नायुकमत्युग्रं हन्त्यवश्यं न संशयः ॥ ४४ ॥
शोभाञ्जनमूलदलैः काञ्जिकलवणसंयुतैर्लेपः।
स्नायुकरोगं हन्याज्जयेद्वा मोचकत्वचा लेपः ॥ ४५ ॥
रक्तचन्दनपर्पटत्रिफलामूलकामृताः।
खदिरो वारिपिष्टानि विस्फोटान् घ्नन्ति लेपतः ॥ ४६ ॥
कटुतैलान्वितैर्लेपात् सर्पकञ्चुकभस्मकैः।
सद्यः शाम्यति गण्डस्थः प्रकोपात्स्फुटति ध्रुवम् ॥ ४७ ॥

इति वैद्यशोढलप्रथिते गदनिग्रहे कायचिकित्साखण्डे विस्फोटकाधिकारश्चत्वारिंशत्तमः समाप्तः ॥ ४० ॥

## अथ मसूरिकाधिकार एकचत्वारिंशत्तमः।

अथातो मसूरिकानिदानं व्याख्यास्यामः।

मसूरिकासंप्राप्तिः।

कट्वम्ललवणक्षारविरुद्धाध्यशनाशनैः।
दुष्टनिष्पावशाकाद्यैः प्रदुष्टपवनोदकैः॥ १॥
क्रुद्धग्रहेक्षणाच्चापि देहे दोषाः समुद्धताः।
जनयन्ति शरीरेऽस्मिन् दुष्टरक्तेन संहताः॥ २॥
मसूराकृतिसंस्थानाः पिडिकाः स्युर्मसूरिकाः।

मसूरिकापूर्वरूपम्।

तासां पूर्वं ज्वरः कण्डूर्गात्रभङ्गोऽरतिर्भ्रमः॥ ३॥
त्वचि शोफः सवैवर्ण्यो नेत्ररागस्तथैव च।

वातिकादिभेदेन मसूरिकालक्षणम्।

रुजावन्तश्च रूक्षाश्च मन्दपाकाल्पपूयकाः॥ ४॥
वातज्वराकृतिप्राया वातिकाः स्युर्मसूरिकाः।
सन्ध्यस्थिपर्वणां भेदः कासकम्पारतिक्लमाः॥ ५॥
शोषस्ताल्वोष्ठजिह्वानां तृष्णा चारुचिसंयुता।
रक्ताः पीताः सिताः स्फोटाः सदाहास्तीव्रवेदनाः॥६
भवन्त्यचिरपाकाश्च पित्तकोपसमुद्भवाः।
विड्भेदश्चाङ्गमर्दश्च दाहस्तृष्णाऽरुचिस्तथा॥ ७॥
मुखपाकोऽक्षिपाकश्च ज्वरस्तीव्रः सुदारुणः।
रक्तजायां भवन्त्येते विकारा पित्तलक्षणाः॥ ८॥
कफप्रसेकः स्तैमित्यं शिरोरुग्गात्रगौरवम्।
हृल्लासः सारुचिर्निद्रा तन्द्रालस्यसमन्विता॥ ९॥
श्वेताः स्निग्धाः भृशं स्थूलाः कण्डूरा मन्दवेदनाः।
मसूरिका कफोत्थाश्च चिरपाकाः प्रकीर्तिताः॥ १०॥
नीलाश्चिपिटविस्तीर्णा मध्ये निम्ना महारुजः।
चिरपाकाः पूययुताः प्रभूताः सर्वदोषजाः॥ ११॥

कण्ठरोधारुचिस्तम्भप्रलापारतिसंयुताः।
दुश्चिकित्स्याः समुद्दिष्टाः पिडकाश्चर्मसंस्थिताः॥ १२॥

रोमान्तिकालक्षणम्।

रोमकूपोन्नतिसमा रागिण्यः कफपित्तजाः।
कासारोचकसंयुक्ता रोमान्त्यो ज्वरपूर्विकाः॥ १३॥

रसादिधातुगतमसूरिकालक्षणम्।

तोयबुद्बुदसंकाशास्त्वग्गतास्तु मसूरिकाः।
स्वल्पदोषाः प्रजायन्ते भिन्नास्तोयं स्रवन्ति च॥ १४॥
मांसस्थाः कठिनाः स्निग्धाश्चिरपाका घनत्वचः।
गात्रशूलतृपाकण्डूज्वरारुचिसमन्विताः॥ १५॥
मेदोजा वर्तुलाकारा मृदवः किंचिदुन्नताः।
घोरज्वरपरीताश्च स्थूलाः स्निग्धाः सवेदनाः॥ १६॥
संमोहारतिसंतापाः कश्चिदाभ्यो विनिस्तरेत्।
क्षुद्रा गात्रसमा रूक्षाश्चिपिटाः किंचिदुन्नताः॥ १७॥
भ्रमरेणेव विद्धानि कुर्वन्त्यस्थीनि तद्गताः।
पक्काभाः पिटिकाः स्निग्धाः सूक्ष्माश्चात्यर्थवेदनाः॥१८
मज्जोत्था भृशसंमोहा वेदनारतिसंयुताः।
छिन्दन्ति मर्मधामानि प्राणानाशु हरन्ति च॥ १९॥
स्तैमित्यारतिसंमोहदाहोन्मादतृषान्विताः।
शुक्रजायां मसूर्यां च लक्षणानि भवन्ति हि॥ २०॥

मसूरिकाणां साध्यासाध्यत्वलक्षणम्।

त्वग्गता रक्तजाश्चैव पित्तजा कफजास्तथा।
कफपित्तकृताश्चैव सुखसाध्या मसूरिकाः॥ २१॥
वातजा वातपित्तोत्था कफवातकृताश्च याः।
असाध्या सन्निपातोत्थास्तासां वक्ष्यामि लक्षणम्॥२२
प्रवालसदृशाः काश्चित्काश्चिज्जम्बूफलोपमाः।
लोहजालधृताः काश्चिदतसीफलसन्निभाः॥ २३॥

कुष्ठवीसर्पविस्फोटकण्ड्वादीनपि पानतः ।
अमृतादिकषायस्तु जयेत्पित्तकफात्मिकाम् ॥ ४४

मसूरिकायां मातुलुङ्गकेसरलेपः ।

सौवीरेण तु संपिष्टं मातुलुङ्गस्य केसरम् ।
प्रलेपात्पानयेदाशु दाहं चापि नियच्छति ॥ ४५

मसूरिकायां पाददाहे तण्डुलाम्बुसेकः ।

पाददाहं प्रकुरुते पिटिका पादसंभवा ।
तत्र सेकं प्रशंसन्ति बहुशस्तन्दुलाम्बुना ॥ ४६ ॥

मसूरिकायाः पाककाले बृंहणविधिः ।

पाककाले तु सर्वास्ता विशोषयति मारुतः ।
तस्मात्संबृंहणं कार्यं न तु पथ्यं विशोषणम् ॥ ४७

मसूरिकायां पाचनयोगाः ।

गुडूचीमधुकं द्राक्षामोरटं दाडिमैः सह ।
पाककाले प्रदातव्यं भैषज्यं गुडसंयुतम् ॥ ४८ ॥
तेन पाकं व्रजन्त्याशु न च वायुः प्रकुप्यति ।
लिह्याद्वा बादरं चूर्णं पाचनार्थं गुडेन वा ॥ ४९ ।
अनेनाशु विपच्यन्ते वातपित्तकफात्मिकाः ।

मसूरिकोपद्रवचिकित्सा ।

शूलाध्माने रुजस्तस्य कम्पमानस्य वायुना ॥ ५०
धन्वमांसरसाः शस्ता ईषत्सैन्धवसंयुताः ।
दाडिमाम्लरसैर्युक्ता यूषाः स्युररुचौ हिताः ॥ ५१ ।
पिबेदम्भस्तप्तशीतं भावितं खदिरासनैः ।
शौचे वारि प्रयुञ्जीत गायत्र्या बहुधा शृतम् ॥ ५२
जातीपत्रं समञ्जिष्ठं दार्वी पूगफलं शमी ।
धात्रीफलं समधुकं क्वथितं मधुसंयुतम् ॥ ५३ ॥
मुखरोगे कण्ठरोगे गण्डूषार्थं प्रशस्यते ।
अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना ॥ ५४ ।

मधुकं त्रिफला मूर्वा दार्वीत्वङ्नीलमुत्पलम् ।
उशीररोध्रमञ्जिष्ठाः प्रलेपाश्च्योतने हिताः ॥ ५५ ॥
नश्यन्त्यनेन दृग्जाता मसूर्यो न भवन्ति च ।
पञ्चवल्कलचूर्णेन क्लेदनीमवचूर्णयेत् ॥ ५६ ॥
भसना केचिदिच्छन्ति केचिद्गोमयरेणुना ।
कृमिपातभयाद्वापि धूपयेत्सूरसादिभिः ॥ ५७ ॥
वेदनादाहशान्त्यर्थं स्रुतानां च विशुद्धये ।
सगुग्गुलुं वराक्वाथं युञ्ज्याद्वा खदिराष्टकम् ॥ ५८ ॥
कृष्णाभयारजो लिह्यान्मधुना कण्ठशुद्धये ।
तथाऽष्टाङ्गावलेहं वा कवलं वाऽऽर्द्रकादिकम् ॥ ५९ ॥
पञ्चतिक्तं प्रयुञ्जीत पानाभ्यञ्जनभोजनैः ।
कुर्याद्व्रणविधानं च तैलादीन् वर्जयेच्चिरम् ॥ ६० ॥
विसर्पन्तीं सविस्फोटां छिन्नां स्रावयतीं तथा ।
दशाङ्गलेपचूर्णेन गुण्डयेदगदैर्दिहेत् ॥ ६१ ॥
विषघ्नैः सिद्धमन्त्रैश्च संप्रमृज्यात्पुनः पुनः ।
तथा शोणितसंसृष्टाः काश्चिच्छोणितमोक्षणैः ॥ ६२ ॥
काश्चिद्विनाऽपि क्रियया सिध्यन्त्याशु मसूरिकाः ।
काश्चित्क्रियाकलापैर्हि न सिध्यन्ति मसूरिकाः ॥ ६३ ॥
सौक्ष्म्यात्कष्टतराः काश्चिद्घनाः सिध्यन्ति मानवाः ।
काश्चिच्च नैव सिध्यन्ति साध्यमानाः सुयत्नतः ॥ ६४ ॥

शिरीषाद्यः ।

निशाद्वयोशीरशिरीषमुस्तकैः सरोध्रभद्रश्रियनागकेसरैः ।
संस्वेदविस्फोटविसर्पकुष्ठदौर्गन्ध्यरोमान्तिहरः प्रदेहः ॥ ६५ ॥

मसूरिकायां कतिपययोगाः ।

निम्बातिमुक्तकास्फोटबिम्बीवेतसवल्कलम् ।
शृतं[illegible] प्रयोक्तव्यं तासां प्रक्षालने सदा ॥ ६६ ॥

कुष्ठोशीरं समं वारिपिष्टं तेनाङ्गलेपतः ।
निपीते खदिरक्काथे स दाहो याति गोचरः ॥ ६
शीतलीं वारयत्येव गोजिह्वामूलिकामृता ।
उत्थितो वाऽथ पुष्यार्के पीतस्तन्दुलवारिणा ॥ ६
भूनिम्बेन कृतो निम्बक्काथः शीतलिकापहः ।
वृषामृतावालकैश्च क्काथः शीतलिकापहः ॥ ६९

भूनिम्बादिरष्टकः ।

भूनिम्बनिम्बविश्वापर्पटह्रीबेरधान्यवृषैः ।
क्काथः प्रातःपीतो विनिहन्ति सकष्टां शीतलीम्

शीतलिकायां कतिपययोगाः ।

विश्वादलेन सहितां रजनीं प्रपेष्य
ये शीतलेन सलिलेन समं पिबन्ति ।
तेषां भवन्ति नहि शीतलिकाः शरीरे
कार्यं त्विदं प्रथममेव तदुद्भवस्य ॥ ७१ ॥
यावन्त्यः शीतलिका गात्रे यस्योत्थिताः प्रथममे
श्लेष्मातकपत्राणि छिन्द्यात्तावन्ति तन्नाम्ना ॥ ७
विज्ञाय यः शीतलिकोपसर्गं प्रवृत्तमादौ मधुना विमिश्र
पिबेज्जलं पर्युषितं न तस्य ताः संभवन्ति ज्वरदर्शनेऽपि
आरण्यकच्छगणभस्म पुनः पुनः प्रयोज्यम् । उ
फलाकारा कृष्णमुखा कृष्णा वा मृत्युदा ॥ ७४ ॥

इति श्रीवैद्यसोढलप्रथिते गदनिग्रहे कायचिकित्साखण्डे मसूरिक
धिकार एकचत्वारिंशत्तमः समाप्तः ॥ ४१ ॥

समाप्तोऽयं द्वितीयः कायचिकित्साखण्डः ।

# गदनिग्रहः ।

## अथ शालाक्यतन्त्रं नाम तृतीयः खण्डः ।

### अथ शिरोरोगाधिकारः प्रथमः ।

अथातः शिरोरोगनिदानं व्याख्यास्यामः ।

शिरोरोगभेदाः ।

शिरोरोगास्तु जायन्ते वातपित्तकफैस्त्रिभिः ।
सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा ॥ १ ॥
सूर्यावर्तानन्तवातार्धावभेदकशङ्खकैः ।
दशप्रकारस्याप्यस्य लक्षणं संप्रवक्ष्यते ॥ २ ॥

दशविधशिरोरोगाणां क्रमेण लक्षणानि ।

यस्यानिमित्तं शिरसो रुजश्च भवन्ति तीव्रा निशि चातिमात्रम् ।
बन्धोपतापैश्च प्रशमश्च यत्र शिरोभितापः स समीरणेन ॥ ३ ॥
यस्योष्णमङ्गारचितं यथैव भवेच्छिरो धूप्यति चाक्षिनासम् ।
शीतेन रात्रौ च भवेच्छमश्च शिरोभिघातः स तु पित्तकोपात् ॥ ४
शिरो भवेद्यस्य कफोपदिग्धं गुरु प्रतिस्तब्धमथो हिमं च ।
शूनाक्षिकूटं वदनं च यस्य शिरोभितापः स कफप्रकोपात् ॥ ५ ॥
शिरोभितापे त्रितयप्रवृत्ते सर्वाणि रूपाणि समुद्भवन्ति ।
रक्तात्मकः पित्तसमानलिङ्गः स्पर्शासहत्वं शिरसो भवेच ॥ ६ ॥
असृग्वसाश्लेष्मसमीरणानां शिरोगतानामिह संक्षयेण ।
क्षयप्रवृत्तः शिरसोऽभियातः कष्टो भवेदुग्ररुजोऽतिमात्रम् ॥ ७ ॥
संस्वेदनच्छर्दनधूमनस्यैरसृग्विमोक्षैश्च विवृद्धिमेति ।
निस्तुद्यते यस्य शिरोऽतिमात्रं संभक्ष्यमाणं स्फुटतीव चान्तः ८

घ्राणाच्च गच्छेत्सलिलं सरक्तं शिरोभिघातः क्रिमिभिः सुघोरः ।
दोषास्तु दुष्टास्त्रय एव मन्यां संपीड्य घाटासु रुजां सुतीव्राम् ९
कुर्वन्ति योऽक्षिभ्रुवि शङ्खदेशे स्थितिं करोत्याशु विशेषतस्तु ।
गण्डस्य पार्श्वे तु करोति कम्पं हनुग्रहं लोचनजांस्तु रोगान् ॥१०
अनन्तवातं समुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम् ।
सूर्योदयं या प्रति मन्दमन्दं चक्षुर्भ्रुवं रुक्समुपैति गाढा ॥११॥
विवर्धते चांशुमता सहैव सूर्यापवृत्तौ विनिवर्तते च ।
सर्वात्मकं कष्टतमं विकारं सूर्यावर्तं समुदाहरन्ति ॥ १२ ॥

अन्यः प्रतिनिवृत्तेऽर्के सूर्यावर्तः प्रवर्तते ।
रात्र्यन्ते प्रशमं याति स तु स्याद्वातपित्तजः ॥ १३ ॥
रूक्षाशनाध्यशनप्राग्वातावश्यायमैथुनैः ।
वेगसंधारणायासव्यायामैः कुपितोऽनिलः ॥ १४ ॥
केवलः सकफो वाऽर्धं गृहीत्वा शिरसो नृणाम् ।
मन्याभ्रूशङ्खकर्णाक्षिललाटार्धेऽतिवेदनाम् ।
शस्त्रारणिनिभां कुर्यात्तीव्रां सोऽर्धावभेदकः ॥ १५ ॥
नयनं वाऽथवा श्रोत्रमतिवृद्धो विनाशयेत् ।
रक्तपित्तानिला दुष्टाः शङ्खदेशे च मूर्च्छिताः ॥ १६॥
तीव्ररुग्दाहरागं हि शोफं कुर्वन्ति दारुणम् ।
स शिरो विषवद्वेगी रुणध्याशु गलं तथा ॥ १७ ॥
त्रिरात्राज्जीवितं हन्ति शङ्खको नामतः परम् ।
त्र्यहाज्जीवति भेषज्यं प्रत्याख्याय च कारयेत् ॥ १८ ॥

इति शिरोरोगनिदानम् ॥

---

अथातः शिरोरोगचिकित्सितं व्याख्यास्यामः ।

वातशिरोरोगे सामान्यचिकित्सा ।

वातिके शिरसो रोगे स्नेहस्वेदान् सनावनान् ।
पानान्नमुपनाहांश्च कुर्याद्वातामयापहान् ॥ १९ ॥

वातशिरोरोगे माषादियोगः ।

माषमुद्गकुलत्थानामेकं खिन्नं घृतान्वितम् ।
अनु कोष्णं पयो भुक्त्वा स्वपेद्वातशिरोर्तिषु ॥ २० ॥

वातशिरोरोगे कुष्ठादिलेपः ।

कुष्ठमेरण्डमूलं च लेपात्काञ्जिकपेषितम् ।
शिरोर्तिं नाशयत्याशु पुष्पं वा मुचकुन्दजम् ॥ २१ ॥

पित्तशिरोरोगे चन्दनादिलेपः ।

चन्दनद्वयसंयुक्तैः कुष्ठवालककेसरैः ।
क्षीराज्ययोजितैर्लेपः क्षिप्रं पित्तशिरोर्तिनुत् ॥ २२ ॥
पञ्चमूलीशृतं क्षीरं नस्यं दद्याच्छिरोगदे ।

शिरोबस्तिविधिः ।

आशिरो व्यायतं चर्म षोडशाङ्गुलमुच्छ्रितम् ॥ २३ ॥
तेनावेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत् ।
निश्चलस्योपविष्टस्य तैलमुष्णं प्रपूरयेत् ॥ २४ ॥
धारयेदारुजः शान्त्यै यामं यामार्धमेव वा ।
शिरोबस्तिर्जयत्येष शिरोरोगं मरुद्भवम् ॥ २५ ॥
हनुमन्याक्षिकर्णार्तिमर्दितं मूर्धकम्पनम् ।
तैलेनापूर्य मूर्धानं पञ्च मात्राशतानि च ॥ २६ ॥
तिष्ठेच्छ्लेष्मणि पित्तेऽष्टौ दश वाते शिरोगदी ।
एष एव विधिः कार्यस्तथा कर्णाक्षिपूरणे ॥ २७ ॥

पित्तशिरोरोगे शतावर्यादिलेपः ।

शतावरीकुष्ठतिलं मधूकं नीलमुत्पलम् ।
दूर्वां पुनर्नवां चापि लेपं साध्ववचारयेत् ॥ २८ ॥

पित्तशिरोरोगे कतिपययोगाः ।

शीततोयानुपानं च क्षीरसेकांश्च शीतलान् ।
पित्तात्मके शिरोरोगे स्निग्धं सम्यग्विरेचयेत् ॥ २९ ॥

मृद्वीकात्रिफलेक्षूणां रसैः क्षीरैर्घृतैरपि।
शर्कराक्षीरसलिलैः शिरश्च परिषेचयेत् ॥ ३० ॥
सर्पिषः शतधौतस्य शिरसा धारणं हितम्।
निमज्जनं च शिरसः शीतले शस्यतेऽम्भसि ॥ ३१ ॥
कुमुदोत्पलपद्मानां शीतानां चन्दनाम्बुभिः।
स्पर्शाः सुखाश्च पवनाः सेव्या दाहार्तिशान्तये ॥३२॥

पित्तशिरोरोगे चन्दनादिलेपः।

चन्दनोशीरयष्ट्याह्वबलाव्याघ्रनखोत्पलैः।
क्षीरपिष्टैः प्रदेहः स्यात्सृतैर्वा परिषेचनम् ॥ ३३ ॥

पित्तशिरोरोगे मृणालादिलेपः।

मृणालबिसशालूकचन्दनोत्पलकेसरैः।
स्निग्धशीतैः शिरो दिह्याच्छद्दामलकोत्पलैः ॥ ३४ ॥

पित्तशिरोरोगे यष्ट्यादिघृतम्।

यष्ट्याह्वचन्दनानन्ताक्षीरसिद्धं घृतं हितम्।
नावनं शर्कराद्राक्षामधुकैर्वापि पित्तजे ॥ ३५ ॥

रक्तजशिरोरोगप्रतीकारः।

रक्तजे पित्तवत्सर्वं भोजनालेपसेचनम्।
शीतोष्णयोश्च व्यत्यासो विशेषाद्रक्तमोक्षणम् ॥ ३६ ॥

कफजशिरोरोगप्रतीकारः।

कफजे लङ्घनं स्वेदो रूक्षोष्णैः पाचनात्मकैः।
तीक्ष्णावपीडधूमाश्च तीक्ष्णाश्च कवला हिताः ॥ ३७ ॥
अच्छं च पाययेत्सर्पिः पुराणं स्वेदयेत्तथा।
मधूकसारेण शिरः स्विन्नं चास्य विरेचयेत् ॥ ३८ ॥

कफजशिरोरोगे कृष्णादिलेपः।

कृष्णाब्दशुण्ठीमधुकशताह्वोत्पलवालुकैः।
जलपिष्टैः शिरोलेपः सद्यः शूलनिवारणः ॥ ३९ ॥

कफजशिरोरोगे देवदार्वादिलेपः।

देवदारु नतं कुष्ठं नलदं विश्वभेषजम्।
लेपः काञ्जिकसंपिष्टस्तैलयुक्तः शिरोर्तिनुत्॥ ४०॥

कफजशिरोरोगे सरलादिलेपः।

सरलामरदार्व्यम्बुकुष्ठगन्धतृणैः समैः।
सक्षारलवणैः पिष्टैर्लेपः कफशिरोर्तिहा॥ ४१॥

सान्निपातिकशिरोरोगचिकित्सा।

सन्निपातोद्भवे कार्या दोषत्रयहिता क्रिया।
सर्पिःपानं विशेषेण पुराणं च दिशन्ति हि॥ ४२॥

सान्निपातिकशिरोरोगे श्यामादिलेपः।

श्यामानागरसंमिश्राच्छ्वेतस्यन्दनतत्क्षणात्।
नाशं याति त्रिदोषोत्था शिरोर्तिः संप्रलेपनात्॥ ४३॥

सान्निपातिकशिरोरोगे कुष्ठादिलेपः।

सकुष्ठशुण्ठीमधुकैः शताह्वोत्पलमागधैः।
जलपिष्टैः शिरोलेपः सद्यः शूलनिवारणः॥ ४४॥

शिरोरोगे नस्यम्।

शर्करा कुङ्कुमं नस्यं घृतभृष्टं शिरोर्तिजित्।
त्रिफलां च निषेवेत त्रिभागघृतमूर्च्छिताम्॥ ४५॥
त्रिकटुकपुष्पकरबीजकरजनीरास्नातुरङ्गगन्धानाम्।
क्वाथः शिरोर्तिजालं नासापीतो निवारयति॥ ४६॥
नागरकल्कविमिश्रं क्षीरं नस्येन योजितं पुंसाम्।
नानादोषोद्भूतां नाशयति शिरोरुजं तीव्राम्॥ ४७॥

शिरोरोगे शताह्वादितैलम्।

शताह्वैरण्डमूलोग्रावक्रव्याघ्रीफलैः शृतम्।
तैलं नस्यान्मरुच्छ्लेष्मातिमिरोर्ध्वगदापहम्॥ ४८॥

शिरोरोगे जीवकाद्यं तैलम्।

जीवकर्षभकद्राक्षासितायष्टीबलोत्पलैः।
तैलं नस्यं पयःपक्वं वातपित्ते शिरोगदे॥ ४९॥

जीवकर्षभकौ द्राक्षा मधूकं मधुकं बला।
नीलोत्पलं चन्दनं च विदारी शर्करा तथा ॥ ५० ॥
तैलप्रस्थं पचेदेभिः शनैः पयसि षड्गुणे।
जाङ्गलस्य तु मांसस्य तुलार्धस्य रसेन तु ॥ ५१ ॥
सिद्धमेतद्भवेन्नस्यं तैलमर्धावभेदकम्।
बाधिर्यं कर्णशूलं च तिमिरं गलशुण्डिकाम् ॥ ५२ ॥
वातिकं पैत्तिकं चैव शीर्षरोगं नियच्छति।
दन्तचालं शिरःशूलमर्दितं चापकर्षति ॥ ५३ ॥
अत्र षड्बिन्दुतैलमपि श्रेष्ठम् ॥

क्षयजशिरोरोगप्रतीकारः।

क्षयजे क्षयसामान्यः कर्तव्यो बृंहणो विधिः।
पाने नस्ये च सर्पिः स्याद्वातघ्नमधुरैः शृतम् ॥ ५४ ॥

क्रिमिजशिरोरोगप्रतीकारः।

क्रमिजे व्योषनक्ताह्वशिग्रुबीजैश्च नावनम्।
भुजस्तम्भादिरोगेषु सर्वेपूर्ध्वगदेषु च।
सारिवोत्पलयष्ट्याह्वकुष्ठैर्लेपोऽम्लसंयुतैः ॥ ५५ ॥

सूर्यावर्तार्धावभेदयोश्चिकित्सा।

घृतपूरादिसेवा च सूर्यावर्तार्धभेदयोः।
सूर्यावर्ते विधातव्यं नस्यकर्मादि भेषजम् ॥ ५६ ॥
पायसं सगुडं सर्पिर्घृतपूरांश्च भक्षयेत्।
सूर्यावर्ते शिरावेधो नावनं क्षीरसर्पिषः ॥ ५७ ॥
हितः क्षीरघृताभ्यासस्ताभ्यां चैव विरेचनम्।
क्षीरपिष्टैस्तिलैः स्वेदो जीवनीयैश्च शस्यते ॥ ५८ ॥

सूर्यावर्तार्धावभेदयोर्नस्ययोगाः।

सशर्करं कुङ्कुमकाज्यभृष्टं नस्यं विधेयं पवनासृगुत्थे।
भ्रूशङ्खकर्णाक्षिशिरोऽर्धशूले दिनाभिवृद्धिप्रभवे च रोगे ॥

मापमूलस्य नस्येन किंवा श्वेतापराजिता- ।
रसोनस्य शिरःपीडां ध्रुवं हन्त्यतिवेगतः ॥ ६० ॥
सर्वस्मिन् वा शिरोरोगे गुञ्जामूलस्य नावनम् ।
अर्धशीर्षः शमं गच्छेत्पाठामूलस्य नस्यतः ॥ ६१ ॥
शिरीषमूलकफलैरवपीडं च योजयेत् ।
अवपीडो हितो वा स्याद्वचापिप्पलिभिः कृतः ॥ ६२ ॥
शालिपर्ण्यम्भसा क्षिप्रं नस्यमर्धावभेदजित् ।
चक्रमर्दकबीजैर्वा लेपः काञ्जिकपेषितैः ॥ ६३ ॥
महौषधाख्यसुरसवचापिप्पलिभिः कृतः ।
अवपीडः प्रदातव्यः सूर्यावर्तनिषूदनः ॥ ६४ ॥

सूर्यावर्ते उपनाहः ।

जाङ्गलानि तु मांसानि कारयेदुपनाहनम् ।
तेनास्य शाम्यते व्याधिः सूर्यावर्तः सुदारुणः ॥ ६५ ॥

सूर्यावर्तार्धावभेदयोर्मुण्डितिकायोगः ।

पीत्वा मुण्डितिकोत्थं स्वरसं मरीचावचूर्णितं चोष्णम् ।
भक्तादौ सप्ताहात्सूर्यावर्तार्धभेदकौ हन्यात् ॥ ६६ ॥

क्षयजशिरोरोगप्रतीकारः ।

एष एव प्रयोक्तव्यः शिरोरोगे क्षयात्मके ।
पिबेत्सशर्करं क्षीरं नीरं वा नालिकेरजम् ॥ ६७ ॥
सुशीतं चापि पानीयं सर्पिर्वा नस्यतस्तयोः ।

कृमिजशिरोरोगे विडङ्गादितैलम् ।

विडङ्गस्वर्जिकादन्तीहिङ्गुगोमूत्रसंयुतम् ॥ ६८ ॥
संपक्वं सार्षपं तैलं कृमिघ्नं नस्यमुत्तमम् ।
करवीरार्कमूलत्वग्द्रवन्तीगजपिप्पली- ॥ ६९ ॥
सिद्धं शिग्रुकतैलेन नस्यं कृमिविनाशनम् ।

अनन्तवातचिकित्सा ।

अनन्तवाते कर्तव्यः सूर्यावर्तहितो विधिः ॥ ७० ॥

शिरावेधश्च कर्तव्योऽनन्तवातप्रशान्तये ।
आहारश्च विधातव्यो वातपित्तविनाशनः ॥ ७१ ॥

शङ्खकचिकित्सा ।

सूर्यावर्ते हितं यच्च शङ्खके स्वेदवर्जितम् ।
क्षीरसर्पिः प्रशंसन्ति मस्तुपानं च शङ्खके ।
कल्कश्च क्षीरवृक्षाणां शङ्खकस्य प्रलेपनम् ॥ ७२ ॥

शङ्खके एकाष्ठीलादिलेपः ।

एकाष्ठीला पुण्डरीकं मधुकं नीलमुत्पलम् ।
पद्मकं वेतसं मूर्वा लामज्जकमथापि वा ॥ ७३ ॥
दार्वी हरिद्रा मञ्जिष्ठा फेनिलोशीरमेव च ।
एतैरालेपनं कार्यं शङ्खकस्य विनाशनम् ॥ ७४ ॥
एतान्येव तु सर्वाणि कषायमुपसाधयेत् ।
तेन शीतेन कर्तव्यं बहुशः परिषेचनम् ॥ ७५ ॥

शङ्खके शिराव्यधः ।

क्रौञ्चकादम्बहंसानां शरार्याः कच्छपस्य च ।
रसैः संबृंहितस्याथ तस्य शङ्खस्य सन्धिजाः ।
ऊर्ध्वं तिस्रः शिराः प्राज्ञो भिन्द्यादेव न ताडयेत्॥७६॥

इन्द्रलुप्तप्रतीकारः ।

मूलं शक्रसुराया गोमूत्रेण संस्थितं त्र्यहं क्लिन्नम् ।
शमयति सुरेशलिप्तं गोमयघृतप्रलेपेन ॥ ७७ ॥
इन्द्रलुप्तापहो लेपो मधुना बृहतीरसः ।
गुञ्जामूलं फलं वाऽपि भल्लातकरसोऽथ वा ॥ ७८ ॥
भल्लातकैर्वा बृहतीफलैर्वा सुश्लक्ष्णपिष्टैरथ कृष्णलैर्वा ।
मूलैरमीषामथवा प्रलिप्तमल्पैर्दिनैः शाम्यति शक्रलुप्तम् ॥ ७९॥
प्रच्छानपूर्वं परिपिष्टगुञ्जामूलैः समालेपितमिन्द्रलुप्तम् ।
प्रणाशमायात्यचिरेण पुंसां पापं यथा जह्नुसुताभिषेकात् ॥८०॥

दारुणकप्रतीकारः।

भागेन युक्तं मरिचेन यत्स्यात्काश्मीरजेन त्रिगुणेन तैलम्।
अभ्यञ्जनात्तद्विनिहन्ति पुंसामल्पैर्दिनैर्दारुणकं सुघोरम् ॥८१॥
यल्लोहकिट्टोत्पलसारिवाभ्यां समार्कवाभ्यां त्रिफलान्विताभ्याम्
विपच्यते तैलमपास्यति द्राक्छीर्षामयान् दारुणकादिकांस्तत् ॥
कोद्रवपलालसिद्धा मषी प्रलेपे प्रयोजिता शिरसः।
अपहरति रोगमचिराद्दारुणमपि दारुणाभिख्यम् ॥ ८३ ॥
धात्रीफलारग्वधबालपत्रलाक्षाविमिश्रैः प्रपुनाटबीजैः।
आलेपितो नाशमुपैति पुंसां सुदारुणो दारुणकः क्षणेन ॥८४॥
चण्डासुरानतविषाणदलैर्हरिद्रा-
मुस्तान्वितैः शिरसि यः कुरुते प्रलेपम्।
तस्योत्तमाङ्गमपहाय व्रजन्ति दूरं
केशद्रुहः सपदि दारुणकादिरोगाः ॥ ८५ ॥

केशवृद्धिकरा कतिपययोगाः।

मांसी कुष्ठं तिलाः कृष्णाः सारिवा नीलमुत्पलम्।
क्षौद्रं च क्षीरपिष्टानि लेपोऽयं केशवर्धनः ॥ ८६ ॥
भूतकेशी वटारोहा मूलं चैवातिमुक्तकम्।
मासमात्रस्थितास्तैले केशवृद्धिकराः परम् ॥ ८७ ॥
पुटदग्धभूतकेशीशृङ्गाटकबिडाललोमभिर्लेपः।
मधुना शशरक्ताक्तः खलितेरपि बर्बरं कुर्यात् ॥ ८८ ॥
छगलीक्षीररसाञ्जनदग्धैणविषाणलेपनात्केशाः।
रोहन्ति करतलेष्वपि किमुतान्यतमप्रदेशेषु ॥ ८९ ॥
मधुकाञ्जनतिलकुसुमैर्लोहिततर्कारिपुष्पसंयुक्तैः।
साजक्षीरैर्लेपो नखेऽपि लोमोद्गमं कुरुते ॥ ९० ॥
कार्यो दारुणके मूर्ध्नि प्रलेपो मधुसंयुतः।
पियालबीजमधुककुष्ठमाषैः ससैन्धवैः ॥ ९१ ॥

अरूंषिकायां कतिपययोगाः ।

पुराणमथ पिण्याकं पुरीषं कुक्कुटस्य च ।
गोमूत्रपिष्टैर्लेपोऽयं शीघ्रं हन्यादरूंषिकाम् ॥ ९२ ॥
कटुतैलार्कदुग्धाभ्यां मर्दिता पुटपाकजा ।
माषचूर्णमषी हन्याच्छिरोरूंषि प्रलेपतः ॥ ९३ ॥
कपालभृष्टं कुष्ठं वा चूर्णितं तैलसंयुतम् ।
रूंषिकालेपनं कण्डूक्लेददाहार्तिनाशनम् ॥ ९४ ॥

पलिते कतिपययोगाः ।

सम्यक्छुद्धतनूनां कृतत्रिफलोदकानुपानानाम् ।
अन्योऽभिधास्यमानः कार्यः पलिते प्रतीकारः ॥९५॥
काश्मर्यमूलसारप्रसूनफलपत्रतः कषायेण ।
कल्केनाक्षकतैलं पक्वं पलितापहं नस्यम् ॥ ९६ ॥
भृङ्गराजरजो नीली त्रिफलाऽऽम्रास्थ्ययोरजः ।
पिष्टं हन्त्यारनालेन पलितं शीर्षलेपतः ॥ ९७ ॥
मार्कवमुस्तादन्तीसहदेवालोहतुत्थकासीसैः ।
तैलं सकूर्मपित्तैः शृतमाक्षं पलितहृत्स्पर्शात् ॥ ९८ ॥
अयोरजो भृङ्गरजस्त्रिफला कृष्णमृत्तिका ।
स्थितमिक्षुरसे मासं समूलं पलितं जयेत् ॥ ९९ ॥

शिरोरोगे कार्पासमज्जादिनस्यम् ।

कार्पासमज्जात्वक्पुत्तं सुमनःकोरकाणि च ।
नस्यमुष्णाम्बुपिष्टानि सर्वमूर्धरुजापहम् ॥ १०० ॥

खालित्ये कतिपययोगाः ।

स्नुहीपयः पयोऽर्कस्य मार्कवो लाङ्गली विषम् ।
मूत्रमाजं सगोमूत्रं रक्तिका सेन्द्रवारुणी ॥ १०१ ॥
सिद्धार्थतीक्ष्णतैलं च गर्भे दत्त्वा विपाचितम् ।
वह्निना मृदुना पक्वं तैलं खालित्यनाशनम् ॥ १०२ ॥

गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन तु।
कण्डूदारुणहृत्कुष्ठकपालव्याधिनाशनम् ॥ १०३ ॥
प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः।
कार्षिकैस्तैलकुडवं तैर्द्विरामलकीरसः।
साध्यः स प्रतिमर्शः स्यात्सर्वशीर्षगदापहः ॥ १०४ ॥
बृहतीफलरसपिष्टं गुञ्जाफलमूलमिन्द्रलुप्तस्य।
कनकविघृष्टस्य सतो दातव्यं प्रच्छितस्य सदा ॥१०५॥
मधुकेन्दीवरमूर्वातिलाज्यगोक्षीरभृङ्गलेपेन।
अचिराद्भवन्ति केशा घनदृढमूलायता ऋजवः ॥१०६॥
तैलं सयष्टीमधुकक्षीरधात्रीफलैः शृतम्।
नस्ये दत्तं जनयति केशान् श्मश्रूणि चाप्यथ ॥१०७॥

पलिते कतिपययोगाः।

त्रिफला नीलिनीपत्रं लोहभृङ्गरजःसमम्।
अविमूत्रेण संयुक्तं कृष्णीकरणमुत्तमम् ॥ १०८ ॥
त्रिफलाचूर्णसंयुक्तं लोहचूर्णं विनिक्षिपेत्।
ईषत्पक्वे नालिकेरे भृङ्गराजरसान्विते ॥ १०९ ॥
मासमेकं विनिक्षिप्य सम्यक्तस्मात् समुद्धरेत्।
ततः शिरो मुण्डयित्वा लेपं दद्याद्भिषग्वरः ॥ ११० ॥
संवेष्टय कदलीपत्रैर्मोचयेत्सप्तमे दिने।
क्षालयेत्त्रिफलाक्वाथैः क्षीरमांसरसाशनः।
कपालरञ्जनं चैव कृष्णीकरणमुत्तमम् ॥ १११ ॥
लोहमलामलकल्कैः सयवाह्वसुमैर्नरः सदास्नायी।
पलितानीह न पश्यति गङ्गास्नायीव नरकाणि ॥११२॥
निम्बस्य बीजानि विभावितानि भृङ्गस्य तोयेन तथाऽसनस्य।
तैलं तु तेषां विनिहन्ति नस्याद्दुग्धान्नभोक्तुः पलितं समूलम् ११३

निम्बस्य तैलं प्रकृतिस्थमेव नस्यं विधेयं विधिना यथावत् ।
मासेन गोक्षीरभुजो नरस्य जराप्रदुष्टं पलितं निहन्ति ॥११४॥

सर्वशिरोरोगे नस्यार्थं शुण्ठ्याद्यं घृतम् ।

शुण्ठीविडङ्गयष्ट्याह्वभृङ्गतोये शृतं घृतम् ।
नस्यं षड्बिन्दुदानेन सर्वमूर्धगदापहम् ॥ ११५ ॥

खालित्यपलितयोः कतिपययोगाः ।

भृङ्गरजपत्रफलं द्विपदशनामलककृतमषीमिश्रम् ।
खालितेरपि चिकुरचयं जनयत्यभ्यङ्गयोगेन ॥ ११६ ॥

नीलोत्पलाक्षफलमञ्जतिलाजगन्धाः
सार्धं प्रियङ्गुलतया समधुकयष्ट्या ।
संपिष्य यः प्रकुरुते बहुशः प्रलेपं
खालित्यमस्य न पदं विदधाति मूर्ध्नि ॥ ११७ ॥

मांसीबलाकुवलयामलकैः सकुष्ठैः
पिष्टैः प्रलिप्तशिरसो न पतन्ति केशाः ।
स्निग्धायताश्च कुटिलाकृतयो भवन्ति
ते प्रच्युताश्च तरुणालिकुलप्रकाशाः ॥ ११८ ॥

अन्तर्धूमविदग्धमापजमपीमध्येऽर्कदुग्धं क्षिपे-
त्तैलं सर्षपसंभवं च विमलं तेन प्रलिम्पेच्छिरः ।
रोगान्मूर्धसमुद्भवान् बहुविधांस्तद्वच्च वक्त्रोद्भवान्
खालित्यं पलितानि चोपशमयत्येतत्प्रयुक्तं नृणाम् ११९

धौतः श्रीफलसारेण यदि वा गुडवारिणा ।
मूढोऽपि केशनिचयः सुसंस्थानत्वमृच्छति ॥ १२० ॥

शङ्खस्य दग्धस्य पुटानलेन चूर्णं निघृष्टं सह सीसकेन ।
प्रलेपमात्रेण करोति केशान् शशिप्रकाशानपि षट्पदाभान् १२१

पथ्याक्षधात्रीफललोहचूर्णैस्तुरङ्गमारासनमार्कवैश्च ।
कार्ष्ण्यं लभन्ते पलितानि लेपान्नील्यं ससौवीरकभागयुक्तैः १२२

तुल्यैर्गुडेन प्रतिधूपितैश्च लिप्तानि कार्ष्ण्यं पलितानि यान्ति ।
लोहाभ्रबीजत्रिफलाब्जमूलपङ्कैः प्रपिष्टैः सह मार्कवेण ॥१२३॥

शिलाकुसुमकर्चूरनिशाश्यामानतैः समैः ।
पलितानां भवेत्कार्ष्ण्यं बहुशो गुडधूपितैः ॥ १२४ ॥
निर्गुण्डीलाङ्गलिकार्कसाधितं तैलमभ्यङ्गात् ।
शिरसो रुजः समग्रा यदि वाऽपामार्गफलसिद्धम् ॥ १२५

शिरोरोगे पिप्पल्याद्यं नस्यम् ।

पिप्पलीमरिचद्राक्षामधुयष्टिकनागरैः ।
पक्वं गोनवनीतेन नस्यं हन्ति शिरोरुजम् ॥ १२६ ॥

अर्धावभेदके मनःशिलाद्यं नस्यम् ।

नस्यं मनःशिलारोध्रं पिप्पलीमरिचान्वितम् ।
यः करोति हरेदेव तस्यार्धशिरसो व्यथाम् ॥ १२७ ॥

शिरोरोगे श्रीखण्डादियोगः ।

श्रीखण्डकुङ्कुमसुशीरकभृङ्गराज-
द्राक्षाप्रियङ्गुमरिचं च गुडूचिका च ।
यष्टी सनागरमिदं सकलं सखण्डं
दुग्धान्वितं मधुघृतेन शिरोव्यथायाम् ॥ १२८ ॥

शिरोरोगे खर्जूरादियोगः ।

खर्जूरयष्टीमधुकाकजङ्घाद्राक्षान्वितं खण्डमुशीरकं च ।
पिबेत्सुपक्वं नवनीतमेभिर्मध्वन्वितं भ्रान्तशिरोव्यथावान् ॥१२९

शिरोरोगे पटोलमूललेपः ।

पटोलमूलसंभूतं भालस्थलविलेपनम् ।
सद्यः करोति यस्तस्य याति सर्वशिरोव्यथा ॥ १३० ॥

शिरोरोगे बदरीमूलादियोगः ।

ललाटे बदरीमूलपिप्पलीनां प्रलेपनम् ।
हन्ति सर्वत्रतो लग्ना रुजो दैन्यमिव व्यथाम ॥ १३१ ॥

यूकानाशार्थं पारदयोगः ।

नागवल्लीदलोद्भूतरससमर्दितपारदः ।
लिक्षा चीरिका हन्ति यूकाः शिरसि संस्थिताः ॥१३२॥
गोमूत्रेणातिसंघृष्टबिल्वमूलस्य लेपतः ।
नश्यन्ति शिरसो यूकाः सलिक्षा इदमद्भुतम् ॥ १३३ ॥
ताम्बूलपत्ररससमर्दितसूतकेन
श्लक्ष्णीकृतेन विधिना हि विलिप्तचीरम् ।
बध्नाति यः शिरसि तस्य पतन्ति सद्यो
यूका भवन्ति न पुनश्च कदाचिदेव ॥ १३४ ॥

यूकानाशार्थं विडङ्गादितैलम् ।

विडङ्गगोमूत्रमनःशिलाभिः सगन्धकाभिः परिपाचितं यत् ।
तैलं भवेत्सर्षपसंभवं तल्लिक्षाश्च यूकाश्च निहन्ति सद्यः ॥१३५॥

शिरोरोगे शिराव्यधदाहयोर्विधानम् ।

सर्वेषां शीर्षरोगाणां शिरां विध्येदशाम्यताम् ।
कफवातात्मके दाहं जघन्यं वा प्रयोजयेत् ॥ १३६ ॥

इति श्रीवैद्यसोढलप्रणीते गदनिग्रहे तृतीये शालाक्यतन्त्रखण्डे
शिरोरोगाधिकारः प्रथमः ॥ १ ॥

---

## अथ कर्णरोगाधिकारो द्वितीयः ।

अथातः कर्णरोगनिदानं व्याख्यास्यामः ।

कर्णशूललक्षणम् ।

समीरणः श्रोत्रगतोऽन्यथा चरन् समन्ततः शूलमतीव कर्णयोः ।
करोति दोषैश्च यथास्वमावृतः स कर्णशूलप्रविभावितो गदः ॥१॥

कर्णनादलक्षणम् ।

कर्णस्रोतःस्थिते वाते शृणोति विविधान् स्वनान् ।
भेरीमृदङ्गशङ्खानां कर्णनादः स उच्यते ॥ २ ॥

बाधिर्यलक्षणम् ।

यदा शब्दवहं वायुः स्रोत आवृत्य तिष्ठति ।
शुद्धः श्लेष्मान्वितो वाऽपि बाधिर्यं तेन जायते ॥ ३ ॥

कर्णक्ष्वेडलक्षणम् ।

वायुः पित्तादिभिर्युक्तो वेणुघोषोपमं स्वनम् ।
करोति कर्णयोः क्ष्वेडं कर्णक्ष्वेडः स उच्यते ॥ ४ ॥

कर्णस्रावलक्षणम् ।

शिरोभिघातादथवा निमज्जतो
जले प्रपाकादथवापि विद्रधेः ।
स्रवेद्धि पूयं श्रवणोऽनिलार्दितः
स कर्णसंस्राव इति प्रकीर्तितः ॥ ५ ॥

कर्णकण्डूलक्षणम् ।

मारुतः कफसंयुक्तः कर्णकण्डूं करोति च ।

कर्णगूथकलक्षणम् ।

पित्तोष्मशोषितः श्लेष्मा जायते कर्णगूथकः ॥ ६ ॥

कर्णप्रतिनाहलक्षणम् ।

स कर्णगूथो द्रवतां यदा गतो
विलायितो घ्राणमुखं प्रपद्यते ।
तदा स कर्णप्रतिनाहसंज्ञितो
भवेद्विकारः शिरसोऽर्धभेदकृत् ॥ ७ ॥

कृमिकर्णकलक्षणम् ।

यदा विमूर्च्छन्त्यथवापि जन्तवः
सृजन्त्यपत्यान्यथवापि मक्षिकाः ।
तदञ्जनत्वाच्छ्रवणो निरुच्यते
भिषग्भिराद्यैः कृमिकर्णकस्तु सः ॥ ८ ॥

पतङ्गाः शतपद्यश्च कर्णस्रोतः प्रविश्य च ।

अरतिं व्याकुलत्वं च भृशं कुर्वन्ति वेदनाम् ॥ ९ ॥
कर्णौ निस्तुद्यते तस्य तथा फरफरायते ।
कीटे चरति रुक् तीव्रा निःस्पन्दे मन्दवेदना ॥ १०

कर्णविद्रधिलक्षणम् ।

क्षताभिघातप्रभवस्तु विद्रधि-
र्भवेत्तथा दोषकृतोऽपरः पुनः ।
स रक्तपीतारुणमस्रमास्रवे-
त्प्रतोदधूमायनदाहचोषवान् ॥ ११ ॥

कर्णपाकलक्षणम् ।

कर्णपाकस्तु पित्तेन कोथविक्लेदकृद्भवेत् ।

पूतिकर्णकलक्षणम् ।

कर्णविद्रधिपाकाद्वा जायते चाम्बुपूरणात् ॥ १२ ॥
पूयं स्रवति यः पूति स ज्ञेयः पूतिकर्णकः ।
कर्णशोफार्बुदार्शांसि जानीयादुक्तलक्षणैः ॥ १३ ॥

वातजादिभेदेन कर्णरोगलक्षणानि ।

नादोऽतिरुक्कर्णमलस्य शोषः स्रावस्तनुश्चाश्रवणं च वातात् ।
शोफः सरागो दरणं विदाहः सपीतपूतिस्रवणं च पित्तात् ॥१४
वैश्रुत्यकण्डूस्थिरशुक्लशोफस्निग्धस्रुतिः स्वल्परुजः कफाच्च ।
सर्वाणि रूपाणि तु सन्निपातात् स्रावश्च तत्राधिकदोषवर्णः १५

परिपोटकलक्षणम् ।

सौकुमार्याच्चिरोत्सृष्टे सहसाऽतिप्रवर्धिते ।
कर्णशोफो भवेत्पाल्यां सरुजः परिपोटवान् ॥ १६ ॥
कृष्णारुणनिभः स्तब्धः स वातात्परिपोटकः ।

उत्पातलक्षणम् ।

गुर्वाभरणसंयोगात्ताडनोद्घर्षणादपि ॥ १७ ॥
शोफः पाल्यां भवेच्छ्यावो दाहपाकसमन्वितः ।
रक्तो वा रक्तपित्ताभ्यामुत्पातः स गदो मतः ॥ १८॥

उन्मन्थकलक्षणम्।

कर्णं बलाद्वर्धयतः पाल्यां वायुः प्रकुप्यति।
कफं संगृह्य कुरुते शोफं स्तब्धमवेदनम्।
उन्मन्थकः सकण्डूको विकारः कफवातजः॥ १९॥

दुःखवर्धनलक्षणम्।

संवर्ध्यमाने दुर्विद्धे कण्डूदाहरुजान्वितः।
शोफो भवति पाकश्च त्रिदोषो दुःखवर्धनः॥ २०॥

परिलेहीलक्षणम्।

कफासृक्कृमयः क्षुद्राः सर्षपाभा विसर्पिणः।
कुर्वन्ति पाल्यां पिडिका रुजादाहसमन्विताः॥ २१॥
कफासृक्कृमिसंभूतः स विसर्पन्नितस्ततः।
लिहेत्सशष्कुलीं पालीं परिलेहीति स स्मृतः॥ २२॥

इति कर्णरोगनिदानम्।

---

अथातः कर्णरोगचिकित्सितं व्याख्यास्यामः।

कर्णरोगे सामान्यचिकित्सा।

सामान्यं कर्णरोगेषु घृतपानं रसायनम्।
अव्यायामः शिरःस्नानं ब्रह्मचर्यमकत्थनम्॥ २३॥

कर्णशूले नाडीस्वेदयोगः।

बिल्वैरण्डार्कवर्षाभूदधित्थमधुशिग्रुभिः।
वत्सगन्धाश्वगन्धाभ्यां तर्कारीयवरेणुभिः॥ २४॥
आरनालशृतैरेभिर्नाडीस्वेदः प्रयोजितः।
कफवातसमुत्थानं कर्णशूलं निरस्यति॥ २५॥

कर्णशूले कतिपयकर्णपूरणयोगाः।

कपित्थमातुलुङ्गाम्लशृङ्गवेररसैः शुभैः।
सुखोष्णैः पूरयेत्कर्णं कर्णशूलोपशान्तये॥ २६॥

धारयेत्पूरणं कर्णे कर्णमूलं विमर्दयेत् ।
रुजाया मार्दवं यावन्मात्राशतमवेदने ॥ २७ ॥
शृङ्गवेरं च मधुकं सैन्धवं तैलमेव च ।
कदुष्णं कर्णयोर्देयमेतद्वा वेदनापहम् ॥ २८ ॥
लशुनार्द्रकशिग्रूणां मुरङ्ग्या मूलकस्य च ।
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥ २९ ॥
समुद्रफेनचूर्णेन युक्त्या वाप्यवचूर्णयेत् ।
आर्द्रकसूर्यावर्तकशोभाञ्जनकमूलस्वरसाः ॥
मधुतैलसैन्धवयुताः पृथगुष्णाः कर्णशूलहराः ॥ ३० ॥
देवदारुं वचां हिङ्गुं कुष्ठं मरिचसैन्धवम् ।
गोमयस्य रसं तैलं पक्वदोषहरं श्रुतेः ॥ ३१ ॥
वज्रीकाण्डात्त्वचाहीनादग्नितापनपीडनात् ।
यज्जलं तद्रुते कर्णे शूलं शाम्यति देहिनाम् ॥ ३२ ॥
तीक्ष्णशूलातुरे कर्णे सशब्दे क्लेदवाहिनि ।
बस्तमूत्रं क्षिपेत्कोष्णं सैन्धवेन विमिश्रितम् ॥ ३३ ॥
अश्वत्थपत्रखल्लं वा विधाय बहुपत्रकम् ।
अङ्गारपूर्णं तैलाक्तं निदध्याच्छ्रवणोपरि ॥ ३४ ॥
यत्तैलं स्रवते तस्मात्खल्लादङ्गारतापितात् ।
तत्प्राप्तं श्रवणस्रोतः सद्यो गृह्णाति वेदनाम् ॥ ३५ ॥
अर्कस्य पत्रं परिणामपीत-
माज्येन लिप्तं शिखिना च तप्तम् ।
आपीड्य तोयं श्रवणे निषिक्तं
निहन्ति शूलं बहुवेदनं च ॥ ३६ ॥

कर्णशूले दीपिकातैलाद्यास्तैलयोगाः ।

महतः पञ्चमूलस्य काण्डान्यष्टाङ्गुलानि च ।
क्षौमेणावेष्ट्य संसिच्य तैलेनादीपयेत्ततः ॥ ३७ ॥

यत्तैलं च्यवते तेभ्यो धृतेभ्यो भाजनोपरि ।
ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णाति वेदनाम् ॥ ३८ ॥
एवं कुर्याद्भद्रकाष्ठे कुष्ठे च सारनालके ।
मतिमान् दीपिकातैलं कर्णशूलनिवारणम् ॥ ३९ ॥
वंशावलेखसंयुक्तं मूत्रे चाजाविके भिषक् ।
पचेत्तैलं धृतं कर्णे कर्णशूलनिषूदनम् ॥ ४० ॥
कुष्ठशुण्ठीवचादारुशताह्वाहिङ्गुसैन्धवैः ।
बस्तमूत्रशृतं तैलं पूरणं श्रवणार्तिनुत् ॥ ४१ ॥
जातीपत्रयुतं पक्वं गोमूत्रं वस्त्रगालितम् ।
ईषदुष्णं भृतं कर्णे शूलपूतिविनाशनम् ॥ ४२ ॥
हिङ्गुतुम्बरुशुण्ठीभिः साध्यं तैलं तु सार्षपम् ।
कर्णशूले प्रणादे तु पूरणं हितमुच्यते ॥ ४३ ॥

कर्णक्ष्वेडादौ मधुशुक्तयोगः ।

जम्बीराणां फलरसं पिप्पलीमूलसंयुतम् ।
मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत् ॥ ४४ ॥
मासेन तज्जातरसं मधुशुक्तमुदाहृतम् ।
कर्णक्ष्वेडे कर्णनादे कटुतैलेन पूरणम् ।
नादबाधिर्ययोः कुर्याद्वातशूलोक्तमौषधम् ॥ ४५ ॥

कर्णनादेऽपामार्गतैलम् ।

अपामार्गक्षारजले तत्कृतकल्केन साधितं तिलजम् ।
अपहरति कर्णनादं बाधिर्यं कर्णपूरणतः ॥ ४६ ॥

बाधिर्ये दशमूल्यादितैलम् ।

दशमूलीकषायेण तैलप्रस्थं विपाचयेत् ।
तत्कल्केनैव दातव्यं बाधिर्ये परमौषधम् ॥ ४७ ॥

कर्णशूलादौ दशमूलादिकषायः ।

दशमूली वरा भद्रा भार्गी चैषां शृतं जलम् ।
व्योषहिङ्गुयुतं पीतं बाधिर्यं तेन शाम्यति ॥ ४८ ॥

सुदारुणे कर्णशूले क्ष्वेडे नादे च कर्णयोः।
मुखनासाक्षिरोगेषु शीर्षरोगेषु शस्यते॥ ४९॥
एष एव विधिः कार्यः प्रणादे नस्यपूर्वकः।
गुडनागरतोयेन नस्यं स्यादुभयोरपि॥ ५०॥

कर्णस्रावप्रतीकारः।

चूर्णं पञ्चकषायाणां कपित्थरससंयुतम्।
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह॥ ५१॥
सर्जत्वक्चूर्णसंयुक्तः कार्पासीफलजो रसः।
मधुना संस्कृतोऽसौ तु कर्णस्रावे प्रशस्यते॥ ५२॥

कर्णनाडीचिकित्सा।

असाध्यवेदना पूतिं वहन्ती कर्णनाडिका।
नागकर्णीरसैः पूर्णा शमं यात्यतिवेगतः॥ ५३॥
शम्बूकस्य तु मांसेन कटुतैलं विपाचयेत्।
तस्य पूरणमात्रेण कर्णनाडी प्रशाम्यति॥ ५४॥
चूर्णेन गन्धकशिलारजनीभवेन
मुष्टयंशकेन कटुतैलपलाष्टकं यत्।
धत्तूरपत्ररसतुल्यमिदं विपक्वं
नाडीर्जयेच्चिरभवा अपि कर्णजाताः॥ ५५॥

कर्णप्रतिनाहचिकित्सा।

अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत्।
विरिक्तान्ततःशिरसः क्रियां प्राप्तां समाचरेत्॥ ५६॥

कर्णपाकचिकित्सा।

कर्णपाकस्य भैषज्यं कुर्यात्क्षतविसर्पवत्।
नाडीस्वेदोऽथ वमनं धूमो मूर्धविरेचनम्॥ ५७॥

कर्णकण्डूचिकित्सा।

विधिश्च कफहा सर्वः कर्णकण्डूं व्यपोहति।
तैलमाक्षिकसिन्धूत्थैरार्द्रकस्वरसान्वितैः॥ ५८॥

सुखोष्णैः कफवातोत्थं कर्णशूलं प्रशाम्यति ।

पूतिकर्णचिकित्सा ।

हरितालं सगोमूत्रं पूतिकर्णस्य पूरणम् ॥ ५९ ॥
निर्गुण्डर्केण सिद्धं तु तैलं वा कर्णयोजितम् ।
वरुणाम्रकपित्थाम्लजम्बूपल्लवसाधितम् ॥ ६० ॥
पूतिकर्णापहं तैलं जातीपत्ररसोऽथवा ।
घृतं रसाञ्जनं नार्याः क्षीरं क्षौद्रं च मिश्रितम् ॥ ६१ ॥
प्रशस्यते चिरोत्थेऽपि सास्रावे पूतिकर्णके ।
निर्गुण्डीस्वरसस्तैलं सिन्धुधूमरजो गुडः ॥ ६२ ॥
पूरणं पूतिकर्णस्य सुमनोमधुसंयुतः ।
जातीपत्ररसे तैलं विपक्कं पूतिकर्णजित् ॥ ६३ ॥

कृमिकर्णकचिकित्सा ।

सूर्यावर्तकस्वरसं सिन्दुवाररसं तथा ।
लाङ्गलीमूलकरसं त्र्यूषणेनावचूर्णितं ॥ ६४ ॥
पूरयेत्कृमिकर्णे तु जन्तूनां नाशनं परम् ।
कृमिकर्णकनाशार्थं कृमिघ्नं योजयेद्विधिम् ॥ ६५ ॥
वार्ताकधूमश्च हितः सार्षपस्नेह एव च ।
जम्बूपत्रं फलं पक्कं तद्रसेनातिपूरितात् ॥ ६६ ॥
पतन्ति कृमयः कर्णाद्दुर्विनीता इवापदि ।

कर्णगूथकचिकित्सा ।

क्लेदयित्वा तु तैलेन स्वेदेन प्रविलाप्य च ॥ ६७ ॥
शोधयेत्कर्णगूथं तु भिषक्सम्यक्छलाकया ।
धूपनं कर्णदौर्गन्ध्ये गुग्गुलुः श्रेष्ठ उच्यते ॥ ६८ ॥
राजवृक्षादितोयेन सुरसादिजलेन वा ।
कर्णप्रक्षालनं कुर्याच्चूर्णैरेषां च पूरणम् ।

कर्णविद्रधिचिकित्सा ।

विद्रधौ चापि कुर्वीत विद्रध्युक्तं च भेषजम् ॥ ६९ ॥

पित्तविसर्पे पद्मकादिलेपः।

पद्मकोशीरमधुकचन्दनैश्च प्रशस्यते।
लेपो विसर्पपित्तास्रदाहरागनिवारणः॥ ४९॥

पित्तविसर्पे कालीयकादिलेपः।

कालीयकविमिश्रैस्तु सघृतैः शालितण्डुलैः।
प्रलिप्तः पित्तवीसर्पो न पुनर्याति विक्रियाम्॥ ५०॥

पित्तविसर्पे बिसग्रन्थ्यादिलेपः।

बिसग्रन्थिमृणालाभ्यां निशाकाष्ठवटच्छदैः।
पित्तवीसर्पनाशाय वारिपिष्टैः प्रलेपनम्॥ ५१॥

कफविसर्पे काकजङ्घादिलेपः।

काकजङ्घा शिरीषस्य पुष्पं श्लेष्मातकत्वचः।
कृतमालस्य पत्राणि वाजिगन्धा प्रियङ्गवः।
प्रदेहं कफवीसर्पे कदुष्णं च प्रयोजयेत्॥ ५२॥

कफविसर्पे खदिरादिलेपः।

गायत्रीसप्तपर्णाब्दधवारग्वधदारुभिः।
सकुरण्टैर्भवेल्लेपो विसर्पे श्लेष्मसंभवे॥ ५३॥

विसर्पे दशाङ्गलेपः।

शिरीषयष्टीनतचन्दनैलामांसीहरिद्राद्वयकुष्ठतोयैः।
लेपो दशाङ्गः सघृतः प्रदेयो विसर्पकुष्ठव्रणशोफहारी॥ ५४॥

विसर्पे प्रपौण्डरीकादिलेपः।

प्रपौण्डरीकयष्ट्याह्वदार्वीरोध्राब्दचन्दनैः।
सितोत्पलैरकासक्तुमस्तूशीरपद्मकैः।
लेपो रुग्दाहवीसर्पस्फोटशोफनिवारणः॥ ५५॥

विसर्पे नलादिलेपः।

नलवेतसमूलानि गुन्द्रा शैवलशाड्वलम्।
विसर्पे सघृतं पिष्टमेकैकं लेपनं हितम्॥ ५६॥

विसर्पे मसूरादिलेपः।

मसूरैः खण्डितैर्मुद्गैश्चणकैः समकुष्टकैः।

यवैश्च निस्तुषैस्तद्वल्लेपो वीसर्पनाशनः ॥ ५७ ॥

विसर्पे बलादिलेपः ।

बलानागबलापथ्याभूर्जग्रन्थिविभीतकम् ।
वंशपत्राण्यभिमन्थं दद्याद्ग्रन्थिप्रलेपनम् ॥ ५८ ॥

विसर्पे कम्पिल्लकादिलेपः ।

कम्पिल्लकं विडङ्गानि त्वचं दार्व्यास्तथैव च ।
पिष्ट्वा तैलं विपक्तव्यं ग्रन्थिव्रणचिकित्सितम् ॥ ५९ ॥

विसर्पव्रणे दूर्वादिघृतम् ।

दूर्वास्वरससिद्धं च घृतं स्याद्व्रणरोपणम् ।

विसर्पे दार्व्यादिघृतम् ।

दार्वीत्वङ्मधुकं रोध्रं केसरं चावचूर्णितम् ॥ ६० ॥
पटोलपत्रं त्रिफलां कुर्यादर्धपलोन्मितान् ।
पक्वं यष्ट्याह्वकल्केन घृतं स्याद्व्रणरोपणम् ॥ ६१ ॥

विसर्पे प्रपौण्डरीकादिलेपः ।

प्रपौण्डरीकोत्पलगैरिकं च मञ्जिष्ठयष्टीमधुकं विदारी ।
द्वे चन्दने पद्मकपद्मपत्रे सौगन्धिकं स्यात्कुमुदं च तुल्यम् ।
लेपः प्रशस्तः पयसा सुपिष्टः कुमारकाणां सविसर्पकाणाम् ६२

विसर्पे दुरालभादिशीतकषायः ।

दुरालभापर्पटकगुडूचीविश्वभेषजम् ।
निशापर्युषितं दद्यात्तृष्णावीसर्पनाशनम् ॥ ६३ ॥

विसर्पे पटोलपत्रादियूषः ।

पटोलपत्रमुद्गानां रसमामलकस्य च ।
पाययेत घृतोन्मिश्रं नरं वीसर्पपीडितम् ॥ ६४ ॥

विसर्पे पटोलादिक्वाथः ।

पटोलारिष्टदार्वीत्वक्तिक्तात्रायन्तिकामृताः ।
सयष्टीमधुकाः सर्वे विसर्पान् घ्नन्ति पानतः ।

विसर्पे मुस्तादिकषायः।

मुस्तारिष्टपटोलानां क्वाथः सर्वविसर्पजित् ॥ ६५ ॥

विसर्पे खदिराष्टकम्।

खदिरपटोलवृषनिम्बफलत्रितयै-
रमृतान्वितैरपि पयः पिबतः क्वथितम्।
प्रशममुपैति कुष्ठमथ सर्पिरनेन
पचेदपि खदिराष्टकेन विसर्पहरम् ॥ ६६ ॥

विसर्पे पटोलादिकषायः।

पीत्वा पटोलनिम्बैस्तु चन्दनोत्पलमुस्तकैः।
क्वाथं विसर्परोगार्तः क्षिप्रं सुखमवाप्नुयात् ॥ ६७ ॥

विसर्पे सारिवादिकषायः।

सारिवामुस्तकोशीरधात्रीभिः परिसाधितम्।
कषायं च पिबेदाशु सर्ववीसर्पनाशनम् ॥ ६८ ॥

विसर्पे आरग्वधादिकषायः।

आरग्वधस्य पत्राणि त्वचः श्लेष्मातकोद्भवाः।
शिरीषपुष्पं कामाता हिता लेपावचूर्णनैः ॥ ६९ ॥

विसर्पे अमृतादिक्वाथः।

अमृतवृषपटोलं निम्बकल्कैरुपेतं
त्रिफलखदिरसारं व्याधिघातं च तुल्यम्।
क्वथितमिदमशेषं गुग्गुलोर्भागयुक्तं
जयति विषविसर्पं कुष्ठमष्टादशाख्यम् ॥ ७० ॥

विसर्पे द्वितीयोऽमृतादिकषायः।

अमृतवृषपटोलं मुस्तकं सप्तपर्णं
खदिरमसितपत्रं निम्बपत्रं हरिद्रे।
विविधविषविसर्पान् कुष्ठविस्फोटकण्डू-
रपनयति मसूरांश्छीतपित्तज्वरांश्च ॥ ७१ ॥

इति श्रीवैद्यरोडलप्रथिते गदनिग्रहे कायचिकित्साखण्डे विसर्पाधिकार एकोनचत्वारिंशत्तमः समाप्तः ॥ ३९ ॥

## अथ विस्फोटकाधिकारश्चत्वारिंशत्तमः।

अथातो विस्फोटकनिदानं व्याख्यास्यामः।

विस्फोटकानां निदानसंप्राप्तिपूर्वकं सामान्यलक्षणम्।

कट्वम्ललरूक्षोष्णविदाहितीक्ष्णक्षारैरजीर्णाध्यशनातपैश्च।
तथर्तुदोषेण विपर्ययेण कुप्यन्ति दोषाः पवनादयश्च॥ १॥
त्वचमाश्रित्य ते रक्तमांसास्थीनि प्रदूष्य च।
घोरान् कुर्वन्ति विस्फोटान् सर्वान् ज्वरपुरःसरान्॥ २
अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्तजाः।
क्वचित् सर्वत्र वा देहे स्मृता विस्फोटका इति॥ ३॥

विस्फोटकानां वातजादिभेदेन लक्षणानि।

शिरोरुक्छूलभूयिष्ठज्वरतृट्पर्वभेदनम्।
सकृष्णवर्णता चेति वातविस्फोटलक्षणम्॥ ४॥
ज्वरदाहरुजास्रावपाकतृष्णाभिरन्वितम्।
पीतलोहितवर्णं च पित्तविस्फोटलक्षणम्॥ ५॥
छर्द्यरोचकजाड्यानि कण्डूकाठिन्यपाण्डुताः।
अवेदनश्चिरात्पाकी स विस्फोटः कफात्मकः॥ ६॥
कण्डूर्दाहो ज्वरश्छर्दिरेतैश्च कफपैत्तिकः।
वातपित्तकृतो यश्च कुरुते तीव्रवेदनाम्॥ ७॥
कण्डूस्तैमित्यगुरुभिर्जानीयात्कफवातिकम्।
मध्ये निम्नोन्नतोऽन्ते च कठिनोऽल्पप्रपाकवान्॥ ८॥
दाहो रागस्तृपा मोहश्छर्दिर्मूर्छा ज्वरो रुजा।
प्रलापो वमथुस्तन्द्रा सोऽसाध्यः स्यात्रिदोषजः॥ ९॥
रक्ता रक्तसमुत्थाना गुञ्जाफलनिभास्तथा।
वेदितव्यास्तु रक्तेन पैत्तिकेन तु हेतुना।
न ते सिद्धिं समायान्ति सिद्धैर्योगवरैरपि॥ १०॥

विस्फोटकानां साध्यासाध्यविचारः।

एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः।

सर्वरूपान्वितो घोरस्त्वसाध्यो भूर्युपद्रवः ॥ ११ ॥

विस्फोटकोपद्रवाः ।

तृट्श्वासमांससंकोचदाहहिक्कामदज्वराः ।
विसर्पमार्गसंरोधास्तेषां प्रोक्ता उपद्रवाः ॥ १२ ॥

इति विस्फोटकनिदानम् ॥

---

अथातो विस्फोटकचिकित्सितं व्याख्यास्यामः ।

विस्फोटके लङ्घनविधानम् ।

विस्फोटकेषु सर्वेषु लङ्घनं पूर्वमाचरेत् ।
न रसेन विना केचिद्विस्फोटाः संभवन्ति हि ॥ १३ ॥

विस्फोटके पटोलादिक्काथः ।

पटोलामृतभूनिम्बवासकारिष्टपर्पटैः ।
खदिराब्दयुतः क्काथो विस्फोटार्तिज्वरापहः ॥ १४ ॥

विस्फोटके निम्बादिक्काथः ।

निम्बामृताब्दकटुकायूषधन्वयास-
भूनिम्बपर्पटपटोलफलत्रयाणाम् ।
क्काथो नृणामिह भवेद्गतेषु पाकं
विस्फोटकेष्वतिहितः कथितो भिषग्भिः ॥ १५ ॥

विस्फोटके भूनिम्बादिकषायः ।

कर्षद्वयं च भूनिम्बं तदर्धं निम्बमेव च ।
क्काथस्तयोर्त्र्यहं पीतः सर्वविस्फोटनाशनः ॥ १६ ॥

विस्फोटके सहदेवीयोगः ।

सहदेवीकृता पिण्डी सर्वविस्फोटनाशिनी ।

विस्फोटके पटोलादिक्काथः ।

पटोलत्रिफलारिष्टगुडूचीमुस्तचन्दनैः ॥ १७ ॥
समूर्वारोहिणीपाठारजनीभिः सयासकैः ।
कषायं पाययेदेतत्कफपित्तज्वरापहम् ।

कण्डूत्वग्दोषविस्फोटविषवीसर्पनाशनम् ॥ १८ ॥

विस्फोटके हलिन्यादियोगः।

मूलबीजान्विता पिष्टा काञ्जिकेन प्रलेपतः।
हलिनी देवदाली वा दुग्धिका स्फोटनाशिनी ॥१९॥

विस्फोटके करञ्जबीजादिलेपः।

करञ्जतरुबीजानि युक्तानि तिलसर्षपैः।
एरण्डफलयुक्ता वा दुग्धिका स्फोटनाशिनी ॥ २० ॥

विस्फोटके भूनिम्बादिकषायः।

भूनिम्बवासाकटुकापटोलफलत्रिकाचन्दननिम्बसिद्धः।
विसर्पदाहज्वरवक्त्रशोषविस्फोटतृष्णावमिनुत्कषायः ॥२१॥

विस्फोटके कुण्डल्यादि(गुडूच्यादि)योगः।

कुण्डलीपिचुमन्दाम्बुखदिरेन्द्रयवाम्बुदाः।
विस्फोटान्नाशयन्त्याशु वायुर्जलधरानिव ॥ २२ ॥

विस्फोटके त्रिफलादियोगः।

सकफे पित्तयुक्ते तु त्रिफलां योजयेत्पुरा।
दुरालभां पर्पटकं पटोलं कटुकां तथा।
सोष्णं गुग्गुलुसंमिश्रं पिबेद्वा खदिराष्टकम् ॥ २३ ॥

विस्फोटके चन्दनादिलेपः।

चन्दनं नागपुष्पं च तन्दुलीयकसारिवे।
शिरीषवल्कलं जाती लेपः स्याद्दाहनाशनः ॥ २४ ॥
शुकतरुचन्दनमांसीरजनीपद्मकानि तुल्यानि।
पिष्टानि शीततोयैर्लेपः स्यात्सर्वविस्फोटे ॥ २५ ॥

विस्फोटे शिरीषादिकवलग्रहः।

शिरीषपूगमञ्जिष्ठादार्व्यामलकयष्टिकैः।
सजातीपल्लवक्षौद्रैर्विस्फोटे कवलग्रहः ॥ २६ ॥
शिरीषोदुम्बरौ जम्बूः सेकालेपनयोर्हिताः।
श्लेष्मातकत्वचो वाऽपि प्रलेपे सेचने हिताः ॥ २७ ॥

विस्फोटे शिरीषादिलेपः।

शिरीषोशीरनागाह्वहिंस्राभिर्लेपनाद्द्रुतम्।
विसर्पविषविस्फोटाः प्रशाम्यन्ति न संशयः॥ २८॥

विस्फोटे वृषाद्यं घृतम्।

वृषखदिरपटोलनिम्बपत्रत्वगमृतलवामलकीकषायकल्कैः।
घृतमभिनवमेतदाशु पक्वं जयति विसर्पगदास्रकुष्ठगुल्मान्॥२९

त्रिदोषजविस्फोटे पञ्चतिक्तं घृतम्।

पटोलसप्तच्छदनिम्बवासाफलत्रिकच्छिन्नरुहाविपक्वम्।
तत्पञ्चतिक्तं घृतमाशु हन्ति त्रिदोषविस्फोटविसर्पकण्डूः॥३०

विस्फोटके दशमूलादिकषायः।

द्विपञ्चमूली त्रिफला गुडूची किरातकं धन्वयवासकं च।
जले शृतं मागधिकाविमिश्रं त्रिदोषविस्फोटहरं प्रदिष्टम्॥३१॥

विस्फोटे इन्द्रयवलेपः।

विस्फोटव्याधिनाशाय तण्डुलाम्बुप्रपेषितैः।
बीजैः कुटजवृक्षस्य लेपः कार्यो विजानता॥ ३२॥
सुधां पुरातनीं तद्वाद्वारिणा परिपेषिताम्।
लेपनं तैलदिग्धस्य विस्फोटव्याधिनाशनम्॥ ३३॥

पक्वविस्फोटचिकित्सा।

परिपक्वान् विदित्वा तु भसना परिचूर्णयेत्।
शय्यायां तु प्रकुर्वीत दग्ध्वा वाऽरण्यगोमयम्॥ ३४॥
तद्भस्म वाऽसकृद्द्यात्तत्पक्वक्लेदनाशनम्।
रोपणं विहितं तच्च कण्डूघ्नं च प्रकीर्तितम्॥ ३५॥
कल्केन पिचुमन्दस्य मूलकेन तु रोपणम्।
खदिरेण तु कुर्वीत प्रलेपं दाहशान्तये॥ ३६॥

अक्षिजविस्फोटचिकित्सा।

अक्षिगेषु प्रकुर्वीत आश्च्योतनमिदं भिषक्।
शेलुत्वक्त्रिफलादार्वीकाथो रोचनया युतः॥ ३७॥

दार्वीचन्दनरोध्रैः सुमनोद्भैः सेचनं हितं चाक्ष्णोः ।
चन्दनकर्पूराञ्जनरसाञ्जनाख्यैस्तथा चान्यैः ।
हितमक्ष्णोरिदमञ्जनमुक्तं पुष्पादिरोगहरम् ॥ ३८ ॥

मुखजविस्फोटकप्रतीकारः ।

मुखजेषु निम्बखदिरक्काथो मुखपाकभेषजं पश्चात् ।
सवर्णकरं कुरण्टकतैलं तथा कुङ्कुमाद्यं च ॥ ३९ ॥
वमनं प्रधानकर्म स्फोटेषु विरेचनं तथा च परम् ।
न भवति लूनमूला विस्फोटाभ्यन्तरेऽल्पमलाः ॥ ४० ॥

स्नायुकस्य निदानसंप्राप्तिपूर्वकं लक्षणम् ।

शाखासु कुपितो दोषः शोफं कृत्वा विसर्पवत् ।
भिनत्ति तत्क्षते तत्र सोष्मा मांसं विशोष्य च ॥ ४१ ॥
कुर्यात्तन्तुनिभं सूत्रं तत्पिण्डैस्तक्रसक्तुजैः ।
शनैः शनैः क्षताद्याति छेदात्कोपं समावहेत् ॥ ४२ ॥
तत्पाताच्छोफशान्तिः स्यात्पुनः स्थानान्तरे भवेत् ।
स स्नायुक इति ख्यातः क्रियोक्ताऽत्र विसर्पवत् ॥ ४३ ॥

स्नायुकचिकित्सा ।

गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डीस्वरसं त्र्यहम् ।
पिबन् स्नायुकमत्युग्रं हन्त्यवश्यं न संशयः ॥ ४४ ॥
शोभाञ्जनमूलदलैः काञ्जिकलवणसंयुतैर्लेपः ।
स्नायुकरोगं हन्याज्जयेद्वा मोचकत्वचा लेपः ॥ ४५ ॥
रक्तचन्दनपर्पटत्रिफलामूलकामृताः ।
खदिरो वारिपिष्टानि विस्फोटान् घ्नन्ति लेपतः ॥ ४६ ॥
कटुतैलान्वितैर्लेपात् सर्पकञ्चुकभस्मकैः ।
सद्यः शाम्यति गण्डस्थः प्रकोपात्स्फुटति ध्रुवम् ॥ ४७ ॥

इति वैद्यशोढलप्रथिते गदनिग्रहे कायचिकित्साखण्डे विस्फोटकाधिकारश्चत्वारिंशत्तमः समाप्तः ॥ ४० ॥

## अथ मसूरिकाधिकार एकचत्वारिंशत्तमः ।

अथातो मसूरिकानिदानं व्याख्यास्यामः ।

मसूरिकासंप्राप्तिः ।

कट्वम्ललवणक्षारविरुद्धाध्यशनाशनैः ।
दुष्टनिष्पावशाकाद्यैः प्रदुष्टपवनोदकैः ॥ १ ॥
क्रूरग्रहेक्षणाच्चापि देहे दोषाः समुद्धताः ।
जनयन्ति शरीरेऽस्मिन् दुष्टरक्तेन संहताः ॥ २ ॥
मसूराकृतिसंस्थानाः पिडिकाः स्युर्मसूरिकाः ।

मसूरिकापूर्वरूपम् ।

तासां पूर्वं ज्वरः कण्डूर्गात्रभङ्गोऽरतिर्भ्रमः ॥ ३ ॥
त्वचि शोफः सवैवर्ण्यो नेत्ररागस्तथैव च ।

वातादिभेदेन मसूरिकालक्षणम् ।

रुजावन्तश्च रूक्षाश्च मन्दपाकाल्पपूयकाः ॥ ४ ॥
वातज्वराकृतिप्राया वातिकाः स्युर्मसूरिकाः ।
सन्ध्यस्थिपर्वणां भेदः कासकम्पारतिक्लमाः ॥ ५ ॥
शोषस्ताल्वोष्ठजिह्वानां तृष्णा चारुचिसंयुता ।
रक्ताः पीताः सिताः स्फोटाः सदाहास्तीव्रवेदनाः ॥६
भवन्त्यचिरपाकाश्च पित्तकोपसमुद्भवाः ।
विड्भेदश्चाङ्गमर्दश्च दाहस्तृष्णाऽरुचिस्तथा ॥ ७ ॥
मुखपाकोऽक्षिपाकश्च ज्वरस्तीव्रः सुदारुणः ।
रक्तजायां भवन्त्येते विकारा पित्तलक्षणाः ॥ ८ ॥
कफप्रसेकः स्तैमित्यं शिरोरुग्गात्रगौरवम् ।
हृल्लासः सारुचिर्निद्रा तन्द्रालस्यसमन्विता ॥ ९ ॥
श्वेताः स्निग्धाः भृशं स्थूलाः कण्डूरा मन्दवेदनाः ।
मसूरिका कफोत्थाश्च चिरपाकाः प्रकीर्तिताः ॥ १० ॥
नीलाश्चिपिटविस्तीर्णा मध्ये निम्ना महारुजः ।
चिरपाकाः पूयस्रुताः प्रभूताः सर्वदोषजाः ॥ ११ ॥

कण्ठरोधारुचिस्तम्भप्रलापारतिसंयुताः ।
दुश्चिकित्स्याः समुद्दिष्टाः पिडकाश्चर्मसंस्थिताः ॥ १२ ॥

रोमान्तिकालक्षणम् ।

रोमकूपोन्नतिसमा रागिण्यः कफपित्तजाः ।
कासारोचकसंयुक्ता रोमान्त्यो ज्वरपूर्विकाः ॥ १३ ॥

रसादिधातुगतमसूरिकालक्षणम् ।

तोयबुद्बुदसंकाशास्त्वग्गतास्तु मसूरिकाः ।
स्वल्पदोषाः प्रजायन्ते भिन्नास्तोयं स्रवन्ति च ॥ १४ ॥
मांसस्थाः कठिनाः स्निग्धाश्चिरपाका घनत्वचः ।
गात्रशूलतृषाकण्डूज्वरारुचिसमन्विताः ॥ १५ ॥
मेदोजा वर्तुलाकारा मृदवः किंचिदुन्नताः ।
घोरज्वरपरीताश्च स्थूलाः स्निग्धाः सवेदनाः ॥ १६ ॥
संमोहारतिसंतापाः कश्चित्ताभ्यो विनिस्तरेत् ।
क्षुद्रा गात्रसमा रूक्षाश्चिपिटाः किंचिदुन्नताः ॥ १७ ॥
भ्रमरेणेव विद्धानि कुर्वन्त्यस्थीनि तद्गताः ।
पक्काभाः पिटिकाः स्निग्धाः सूक्ष्माश्चात्यर्थवेदनाः ॥१८
मज्जोत्था भृशसंमोहा वेदनारतिसंयुताः ।
छिन्दन्ति मर्मधामानि प्राणानाशु हरन्ति च ॥ १९ ॥
स्तैमित्यारतिसंमोहदाहोन्मादतृषान्विताः ।
शुक्रजायां मसूर्यां च लक्षणानि भवन्ति हि ॥ २० ॥

मसूरिकाणां साध्यासाध्यलक्षणम् ।

त्वग्गता रक्तजाश्चैव पित्तजा कफजास्तथा ।
कफपित्तकृताश्चैव सुखसाध्या मसूरिकाः ॥ २१ ॥
वातजा वातपित्तोत्था कफवातकृताश्च याः ।
असाध्या सन्निपातोत्थास्तासां वक्ष्यामि लक्षणम् ॥२२
प्रवालसदृशाः काश्चित्काश्चिज्जम्बूफलोपमाः ।
लोहजालधृताः काश्चिदतसीफलसन्निभाः ॥ २३ ॥

आसां बहुविधा वर्णा जायन्ते दोषभेदतः ।
कासहिक्काप्रमोहाश्च ज्वरस्तीव्रः सुदारुणः ॥ २४ ॥
प्रलापश्चारतिस्तृष्णा मूर्च्छा दाहोऽतिघूर्णता ।
मुखेन प्रस्रवेद्रक्तं तथा घ्राणेन चक्षुषा ॥ २५ ॥
मसूरिकाभिभूताय यस्यैतानि भिषग्वर ! ।
लक्षणानि प्रदृश्यन्ते न दद्यात्तत्र भेषजम् ॥ २६ ॥
मसूरिकान्ते शोफः स्यात्कूर्परे मणिबन्धके ।
तथांसफलके चापि दुश्चिकित्स्यः सुदारुणः ॥ २७ ॥

इति मदनिमहे मसूरिकानिदानम् ॥

अथातो मसूरिकाचिकित्सितं व्याख्यास्यामः ।

मसूरिकाणां सामान्यचिकित्सा ।

सर्वासां वमनं पूर्वं पटोलारिष्टवासकैः ।
कषायैश्च वचावत्सयष्ट्याह्वफलकल्कितैः ॥ २८ ॥
सक्षौद्रं पाययेद्ब्राह्मीरसं वा हैलमोचिकम् ।
वान्तस्य रेचनं देयं शमनं चाबले नरे ॥ २९ ॥
सुपवीपत्रनिर्यासं हरिद्राचूर्णसंयुतम् ।
रोगार्तो ज्वरविस्फोटमसूरीशान्तये पिबेत् ॥ ३० ॥
उभाभ्यां हृतदोषस्य विशुद्ध्यन्ति मसूरिकाः ।
निर्विकाराल्पपूयाश्च पच्यन्ते चाल्पवेदनाः ॥ ३१ ॥
तर्पणं वातजायां आम्लाजाचूर्णैः सशर्करैः ।
भोजनं तिक्तयूषैश्च मसुदानां रसेन वा ॥ ३२ ॥

वातमसूरिकायां द्विपञ्चमूलादियोगः ।

द्विपञ्चमूलं रास्ना च दार्व्युशीरं दुरालभा ।
सामृतं धान्यकं मुस्तं जयेद्वातसमुत्थिताम् ॥ ३३ ॥

पित्तमसूरिकायां द्राक्षादियोगः।

द्राक्षाकाश्मर्यखर्जूरपटोलारिष्टवासकैः।
लाजामलकदुःस्पर्शैः सितायुक्तं तु पैत्तिके ॥ ३४ ॥

मसूरिकायां शिरीषादिप्रलेपः।

शिरीषोदुम्बराश्वत्थश्लेष्मन्यग्रोधवल्कलैः।
प्रलेपः सघृतः शीघ्रं ज्वरवीसर्पदाहहा ॥ ३५ ॥

कफजायां पित्तजायां च मसूर्यां दुरालभादिकषायः।

दुरालभां पर्पटकं भूनिम्बं कटुरोहिणीम्।
श्लेष्मजायां पित्तजायां पाने निःक्वाथ्य दापयेत् ॥३६॥

त्रिदोषजमसूरिकायां निम्बद्वादशककषायः।

निम्बः पर्पटकः पाठा पटोलं कटुरोहिणी।
वासा दुरालभा धात्री ह्युशीरं चन्दनद्वयम् ॥ ३७ ॥
निम्बद्वादशकः ख्यातः पीतः शर्करयाऽन्वितः।
त्रिदोषां मसुरीं हन्ति ज्वरं वीसर्पसंभवम्।
उत्थिताः प्रविशेयुर्याः पुनस्ता बाह्यतो नयेत् ॥ ३८ ॥

मसूरिकायां पटोलादिकषायः।

पटोलकुण्डलीमुस्तवृषधन्वयवासकैः।
भूनिम्बनिम्बकटुकापर्पटैश्च शृतं जलम् ॥ ३९ ॥
मसूरीं शमयेदामां पक्वां चैव विशोधयेत्।
नातः परतरं किंचिद्विस्फोटज्वरशान्तये ॥ ४० ॥

पटोलमूलारुणतण्डुलीयकं पिबेद्धरिद्रामलककल्कसंयुतम्।
मसूरिकास्फोटविदाहशान्तये तदेव रोमान्तिवमिज्वरापहम्४१
पटोलमूलारुणतण्डुलीयकं तथैव धात्रीखदिरेण संयुतम्।
पिबेज्जलं सुक्वथितं सुशीतं मसूरिकारोगविनाशनं परम् ॥४२॥

मसूरिकायां खदिराष्टककषायः।

खदिरत्रिफलारिष्टपटोलामृतवासकैः।
क्वाथोऽष्टभागो जयति रोमान्तिकमसूरिकाः ॥ ४३ ॥

कुष्ठवीसर्पविस्फोटकण्ड्वादीनपि पानतः ।
अमृतादिकषायस्तु जयेत्पित्तकफात्मिकाम् ॥ ४४ ॥

मसूरिकायां मातुलुङ्गकेसरलेपः ।

सौवीरेण तु संपिष्टं मातुलुङ्गस्य केसरम् ।
प्रलेपात्पाचयेदाशु दाहं चापि नियच्छति ॥ ४५ ॥

मसूरिकायां पाददाहे तण्डुलाम्बुसेकः ।

पाददाहं प्रकुरुते पिटिका पादसंभवा ।
तत्र सेकं प्रशंसन्ति बहुशस्तन्दुलाम्बुना ॥ ४६ ॥

पाककाले [illegible] ।
तस्मात्संबृंहणं कार्यं न तु पथ्यं विशोषणम् ॥ ४७ ॥

मसूरिकायां पाचनयोगाः ।

गुडूचीमधुकं द्राक्षामोरटं दाडिमैः सह ।
पाककाले प्रदातव्यं भेषज्यं गुडसंयुतम् ॥ ४८ ॥
तेन पाकं व्रजन्त्याशु न च वायुः प्रकुप्यति ।
लिह्याद्वा बादरं चूर्णं पाचनार्थं गुडेन वा ॥ ४९ ॥
अनेनाशु विपच्यन्ते वातपित्तकफात्मिकाः ।

मसूरिकोपद्रवचिकित्सा ।

शूलाध्माने रुजस्तस्य कम्पमानस्य वायुना ॥ ५० ॥
धन्वमांसरसाः शस्ता ईषत्सैन्धवसंयुताः ।
दाडिमाम्ररसैर्युक्ता यूषाः स्युररुचौ हिताः ॥ ५१ ॥
पिबेदम्भस्तप्तशीतं भावितं खदिरासनैः ।
शौचे वारि प्रयुञ्जीत गायत्र्या बहुधा शृतम् ॥ ५२ ॥
जातीपत्रं समञ्जिष्ठं दार्वी पूगफलं शमी ।
धात्रीफलं समधुकं क्वथितं मधुसंयुतम् ॥ ५३ ॥
मुखरोगे कण्ठरोगे गण्डूषार्थं प्रशस्यते ।
अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना ॥ ५४ ॥

मधुकं त्रिफला मूर्वा दार्वीत्वङ्नीलमुत्पलम् ।
उशीररोध्रमञ्जिष्ठाः प्रलेपाश्च्योतने हिताः ॥ ५५ ॥
नश्यन्त्यनेन दृग्जाता मसूर्यो न भवन्ति च ।
पञ्चवल्कलचूर्णेन क्लेदनीमवचूर्णयेत् ॥ ५६ ॥
भस्मना केचिदिच्छन्ति केचिद्गोमयरेणुना ।
कृमिपातभयाद्वापि धूपयेत्सरसादिभिः ॥ ५७ ॥
वेदनादाहशान्त्यर्थं स्रुतानां च विशुद्धये ।
सगुग्गुलुं वराक्काथं युञ्ज्याद्वा खादिराष्टकम् ॥ ५८ ॥
कृष्णाभयारजो लिह्यान्मधुना कण्ठशुद्धये ।
तथाऽष्टाङ्गावलेहं वा कवलं वाऽऽर्द्रकादिकम् ॥ ५९ ॥
पञ्चतिक्तं प्रयुञ्जीत पानाभ्यञ्जनभोजनैः ।
कुर्याद्व्रणविधानं च तैलादीन् वर्जयेच्चिरम् ॥ ६० ॥
विसर्पन्तीं सविस्फोटां क्लिन्नां स्राववतीं तथा ।
दशाङ्गलेपचूर्णेन गुण्डयेदगदैर्दहेत् ॥ ६१ ॥
विपन्नैः सिद्धमन्त्रैश्च संप्रमृज्यात्पुनः पुनः ।
तथा शोणितसंसृष्टाः काश्चिच्छोणितमोक्षणैः ॥ ६२ ॥
काश्चिद्विनाऽपि क्रियया सिध्यन्त्याशु मसूरिकाः ।
काश्चित्क्रियाकलापैर्हि न सिध्यन्ति मसूरिकाः ॥ ६३ ॥
साँक्म्यात्कष्टतराः काश्चिद्धनाः सिध्यन्ति मानवाः ।
काश्चिच्च नैव सिध्यन्ति साध्यमानाः सुयत्नतः ॥ ६४ ॥

शिरीषाद्यः।

निशाद्वयोशीरशिरीषमुस्तकैः सरोध्रभद्रश्रियनागकेसरैः ।
संस्वेदविस्फोटविसर्पकुष्ठदौर्गन्ध्यरोमान्तिहरः प्रदेहः ॥ ६५ ॥

मसूरिकायां कतिपययोगाः।

निम्बातिमुक्तकास्फोटबिम्बीवेतसवल्कलम् ।
शृतशीतं प्रयोक्तव्यं तासां प्रक्षालने सदा ॥ ६६ ॥

कुष्ठोशीरं समं वारिपिष्टं तेनाङ्गलेपतः।
निपीते खदिरक्वाथे स दाहो याति गोचरः ॥ ६७ ॥
शीतलीं वारयत्येव गोजिह्वामूलिकाश्रृता।
उच्छिष्टो वाऽथ पुष्पार्के पीतस्तन्दुलवारिणा ॥ ६८ ॥
भूनिम्बेन कृतो निम्बक्वाथः शीतलिकापहः।
वृषामृतावालकैश्च क्वाथः शीतलिकापहः ॥ ६९ ॥

भूनिम्बादिसप्तकः।

भूनिम्बनिम्बविश्वापर्पटह्रीबेरधान्यवृषैः।
क्वाथः प्रातः पीतो विनिहन्ति सकष्टां शीतलीम् ॥ ७० ॥

शीतलिकायां कतिपययोगाः।

चिञ्चादलेन सहितां रजनीं प्रपेष्य
ये शीतलेन सलिलेन समं पिबन्ति।
तेषां भवन्ति नहि शीतलिकाः शरीरे
कार्यं त्विदं प्रथममेव तदुद्भवस्य ॥ ७१ ॥
यावन्त्यः शीतलिका गात्रे यस्योत्थिताः प्रथममेव।
श्लेष्मातकपत्राणि छिन्द्यात्तावन्ति तन्नाम्ना ॥ ७२ ॥
विज्ञाय यः शीतलिकोपसर्गं प्रवृत्तमादौ मधुना विमिश्रम्।
पिबेज्जलं पर्युषितं न तस्य ताः संभवन्ति ज्वरदर्शनेऽपि ॥७३॥
आरण्यकच्छगणभस्म पुनः पुनः प्रयोज्यम्। उदुम्बरफलाकारा कृष्णमुखा कृष्णा वा मृत्युदा ॥ ७४ ॥

इति श्रीवैद्यसोढलग्रथिते गदनिग्रहे कायचिकित्साखण्डे मसूरिकाधिकार एकचत्वारिंशत्तमः समाप्तः ॥ ४१ ॥

समाप्तोऽयं द्वितीयः कायचिकित्साखण्डः।

# गदनिग्रहः ।

## अथ शालाक्यतन्त्रं नाम तृतीयः खण्डः ।

### अथ शिरोरोगाधिकारः प्रथमः ।

अथातः शिरोरोगनिदानं व्याख्यास्यामः ।

शिरोरोगभेदाः ।

शिरोरोगास्तु जायन्ते वातपित्तकफैस्त्रिभिः ।
सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा ॥ १ ॥
सूर्यावर्तानन्तवातार्धावभेदकशङ्खकैः ।
दशप्रकारस्याप्यस्य लक्षणं संप्रवक्ष्यते ॥ २ ॥

दशविधशिरोरोगाणां क्रमेण लक्षणानि ।

यस्यानिमित्तं शिरसो रुजश्च भवन्ति तीव्रा निशि चातिमात्रम् ।
बन्धोपतापैश्च प्रशमश्च यत्र शिरोभितापः स समीरणेन ॥ ३ ॥
यस्योष्णमङ्गारचितं यथैव भवेच्छिरो धूप्यति चाक्षिनासम् ।
शीतेन रात्रौ च भवेच्छमश्च शिरोभिघातः स तु पित्तकोपात् ॥ ४
शिरो भवेद्यस्य कफोपदिग्धं गुरु प्रतिस्तब्धमथो हिमं च ।
शूनाक्षिकूटं वदनं च यस्य शिरोभितापः स कफप्रकोपात् ॥ ५ ॥
शिरोभितापे त्रितयप्रवृत्ते सर्वाणि रूपाणि समुद्भवन्ति ।
रक्तात्मकः पित्तसमानलिङ्गः स्पर्शासहत्वं शिरसो भवेच्च ॥ ६ ॥
असृग्वसाश्लेष्मसमीरणानां शिरोगतानामिह संक्षयेण ।
क्षयप्रवृत्तः शिरसोऽभिघातः कष्टो भवेदुग्ररुजोऽतिमात्रम् ॥ ७ ॥
संस्वेदनच्छर्दनधूमनस्यैरसृग्विमोक्षैश्च विवृद्धिमेति ।
निस्तुद्यते यस्य शिरोऽतिमात्रं संभक्ष्यमाणं स्फुटतीव चान्तः ८

घ्राणाच्च गच्छेत्सलिलं सरक्तं शिरोभिघातः क्रिमिभिः सुघोरः
दोषास्तु दुष्टास्त्रय एव मन्यां संपीड्य घाटासु रुजां सुतीव्राम् ९
कुर्वन्ति योऽक्षिभ्रुवि शङ्खदेशे स्थितिं करोत्याशु विशेषतस्तु ।
गण्डस्य पार्श्वे तु करोति कम्पं हनुग्रहं लोचनजांस्तु रोगान् ॥१०
अनन्तवातं तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम् ।
सूर्योदयं या प्रति मन्दमन्दं चक्षुर्भ्रुवं रुक्समुपैति गाढा ॥११॥
विवर्धते चांशुमता सहैव सूर्यापवृत्तौ विनिवर्तते च ।
सर्वात्मकं कष्टतमं विकारं सूर्यापवृत्तं समुदाहरन्ति ॥ १२ ॥

अन्यः प्रतिनिवृत्तेऽर्के सूर्यावर्तः प्रवर्तते ।
रात्र्यन्ते प्रशमं याति स तु स्याद्वातपित्तजः ॥ १३ ॥
रूक्षाशनाध्यशनप्राग्वातावश्यायमैथुनैः ।
वेगसंधारणायासव्यायामैः कुपितोऽनिलः ॥ १४ ॥
केवलः सकफो वाऽर्धं गृहीत्वा शिरसो नृणाम् ।
मन्याभ्रूशङ्खकर्णाक्षिललाटार्धेऽतिवेदनाम् ।
शस्त्रारणिनिभां कुर्यात्तीव्रां सोऽर्धावभेदकः ॥ १५ ॥
नयनं वाऽथवा श्रोत्रमतिवृद्धो विनाशयेत् ।
रक्तपित्तानिला दुष्टाः शङ्खदेशे च मूर्च्छिताः ॥ १६
तीव्ररुग्दाहरागं हि शोफं कुर्वन्ति दारुणम् ।
स शिरो विषवद्वेगी रुणध्याशु गलं तथा ॥ १७ ॥
त्रिरात्राज्जीवितं हन्ति शङ्खको नामतः परम् ।
त्र्यहाज्जीवति भैषज्यं प्रत्याख्याय च कारयेत् ॥ १८

इति शिरोरोगनिदानम् ॥

---

अथातः शिरोरोगचिकित्सितं व्याख्यास्यामः ।

वातशिरोरोगे सामान्यचिकित्सा ।

वातिके शिरसो रोगे स्नेहस्वेदान् सनावनान् ।
पानान्नमुपनाहांश्च कुर्याद्वातामयापहान् ॥ १९ ॥

वातशिरोरोगे माषादियोगः ।

माषमुद्गकुलत्थानामेकं स्विन्नं घृतान्वितम् ।
अनु कोष्णं पयो भुक्त्वा स्वपेद्वातशिरोर्तिषु ॥ २० ॥

वातशिरोरोगे कुष्ठादिलेपः ।

कुष्ठमेरण्डमूलं च लेपात्काञ्जिकपेषितम् ।
शिरोर्तिं नाशयत्याशु पुष्पं वा मुचकुन्दजम् ॥ २१ ॥

पित्तशिरोरोगे चन्दनादिलेपः ।

चन्दनद्वयसंयुक्तैः कुष्ठवालककेसरैः ।
क्षीराज्ययोजितैर्लेपः क्षिप्रं पित्तशिरोर्तिनुत् ॥ २२ ॥
पञ्चमूलीशृतं क्षीरं नस्यं दद्याच्छिरोगदे ।

शिरोबस्तिविधिः ।

आशिरो व्यायतं चर्म षोडशाङ्गुलमुच्छ्रितम् ॥ २३ ॥
तेनावेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत् ।
निश्चलस्योपविष्टस्य तैलमुष्णं प्रपूरयेत् ॥ २४ ॥
धारयेदारुजः शान्त्यै यामं यामार्धमेव वा ।
शिरोबस्तिर्जयत्येष शिरोरोगं मरुद्भवम् ॥ २५ ॥
हनुमन्याक्षिकर्णार्तिमर्दितं मूर्धकम्पनम् ।
तैलेनापूर्य मूर्धानं पञ्च मात्राशतानि च ॥ २६ ॥
तिष्ठेच्छ्लेष्मणि पित्तेऽष्टौ दश वाते शिरोगदी ।
एष एव विधिः कार्यस्तथा कर्णाक्षिपूरणे ॥ २७ ॥

पित्तशिरोरोगे शतावर्यादिलेपः ।

शतावरीकुष्ठतिलं मधूकं नीलमुत्पलम् ।
दूर्वां पुनर्नवां चापि लेपं साध्ववचारयेत् ॥ २८ ॥

पित्तशिरोरोगे कतिपययोगाः ।

शीततोयानुपानं च क्षीरसेकांश्च शीतलान् ।
पित्तात्मके शिरोरोगे स्निग्धं सम्यग्विरेचयेत् ॥ २९ ॥

घ्राणाच्च गच्छेत्सलिलं सरक्तं शिरोभिघातः कृमिभिः सुघोरः
दोषास्तु दुष्टास्त्रय एव मन्यां संपीड्य घाटासु रुजां सुतीव्राम्
कुर्वन्ति योऽक्षिभ्रुवि शङ्खदेशे स्थितिं करोत्याशु विशेषतस्तु।
गण्डस्य पार्श्वे तु करोति कम्पं हनुग्रहं लोचनजांस्तु रोगान्॥१
अनन्तवातं तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम्।
सूर्योदयं या प्रति मन्दमन्दं चक्षुर्भ्रुवं रुक्समुपैति गाढा॥११
विवर्धते चांशुमता सहैव सूर्यापवृत्तौ विनिवर्तते च।
सर्वात्मकं कष्टतमं विकारं सूर्यापवृत्तं समुदाहरन्ति॥ १२॥
अन्यः प्रतिनिवृत्तेऽर्के सूर्यावर्तः प्रवर्तते।
रात्र्यन्ते प्रशमं याति स तु स्याद्वातपित्तजः॥ १३॥
रूक्षाशनाध्यशनप्राग्वातावश्यायमैथुनैः।
वेगसंधारणायासव्यायामैः कुपितोऽनिलः॥ १४॥
केवलः सकफो वाऽर्धं गृहीत्वा शिरसो नृणाम्।
मन्याभ्रूशङ्खकर्णाक्षिललाटार्धेऽतिवेदनाम्।
शस्त्रारणिनिभां कुर्यात्तीव्रां सोऽर्धावभेदकः॥ १५॥
नयनं वाऽथवा श्रोत्रमतिवृद्धो विनाशयेत्।
रक्तपित्तानिला दुष्टाः शङ्खदेशे च मूर्च्छिताः॥ १६
तीव्ररुग्दाहरागं हि शोफं कुर्वन्ति दारुणम्।
स शिरो विषवद्वेगी रुणध्याशु गलं तथा॥ १७॥
त्रिरात्राज्जीवितं हन्ति शङ्खको नामतः परम्।
त्र्यहाज्जीवति भैषज्यं प्रत्याख्याय च कारयेत्॥ १८

इति शिरोरोगनिदानम्॥

---

अथातः शिरोरोगचिकित्सितं व्याख्यास्यामः।

वातशिरोरोगे सामान्यचिकित्सा।

वातिके शिरसो रोगे स्नेहस्वेदान् सनावनान्।
पानान्नमुपनाहांश्च कुर्याद्वातामयापहान्॥ १९॥

वातशिरोरोगे माषादियोगः ।

माषमुद्गकुलत्थानामेकं खिन्नं घृतान्वितम् ।
अनु कोष्णं पयो भुक्त्वा सपेद्वातशिरोर्तिषु ॥ २० ॥

वातशिरोरोगे कुष्ठादिलेपः ।

कुष्ठमेरण्डमूलं च लेपात्काञ्जिकपेषितम् ।
शिरोर्तिं नाशयत्याशु पुष्पं वा मुचकुन्दजम् ॥ २१ ॥

पित्तशिरोरोगे चन्दनादिलेपः ।

चन्दनद्वयसंयुक्तैः कुष्ठवालककेसरैः ।
क्षीराज्ययोजितैर्लेपः क्षिप्रं पित्तशिरोर्तिनुत् ॥ २२ ॥
पञ्चमूलीशृतं क्षीरं नस्यं दद्याच्छिरोगदे ।

शिरोवस्तिविधिः ।

आशिरो व्यायतं चर्म षोडशाङ्गुलमुच्छ्रितम् ॥ २३ ॥
तेनावेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत् ।
निश्चलस्योपविष्टस्य तैलमुष्णं प्रपूरयेत् ॥ २४ ॥
धारयेदारुजः शान्त्यै यामं यामार्धमेव वा ।
शिरोवस्तिर्जयत्येष शिरोरोगं मरुद्भवम् ॥ २५ ॥
हनुमन्याक्षिकर्णार्तिमर्दितं मूर्धकम्पनम् ।
तैलेनापूर्य मूर्धानं पञ्च मात्राशतानि च ॥ २६ ॥
तिष्ठेच्छ्लेष्मणि पित्तेऽष्टौ दश वाते शिरोगदी ।
एष एव विधिः कार्यस्तथा कर्णाक्षिपूरणे ॥ २७ ॥

पित्तशिरोरोगे शतावर्यादिलेपः ।

शतावरीकुष्ठतिलं मधूकं नीलमुत्पलम् ।
दूर्वां पुनर्नवां चापि लेपं साध्ववचारयेत् ॥ २८ ॥

पित्तशिरोरोगे कतिपययोगाः ।

शीततोयानुपानं च क्षीरसेकांश्च शीतलान् ।
पित्तात्मके शिरोरोगे स्निग्धं सम्यग्विरेचयेत् ॥ २९ ॥

मृद्वीकात्रिफलेक्षूणां रसैः क्षीरैर्घृतैरपि ।
शर्कराक्षीरसलिलैः शिरश्च परिषेचयेत् ॥ ३० ॥
सर्पिषः शतधौतस्य शिरसा धारणं हितम् ।
निमज्जनं च शिरसः शीतले शस्यतेऽम्भसि ॥ ३१ ॥
कुमुदोत्पलपद्मानां शीतानां चन्दनाम्बुभिः ।
स्पर्शाः सुखाश्च पवनाः सेव्या दाहार्तिशान्तये ॥३२॥

पित्तशिरोरोगे चन्दनादिलेपः ।

चन्दनोशीरयष्ट्याह्वबलाव्याघ्रनखोत्पलैः ।
क्षीरपिष्टैः प्रदेहः स्याच्छृतैर्वा परिषेचनम् ॥ ३३ ॥

पित्तशिरोरोगे मृणालादिलेपः ।

मृणालबिसशालूकचन्दनोत्पलकेसरैः ।
स्निग्धशीतैः शिरो दिह्यात्सद्रामलकोत्पलैः ॥ ३४ ॥

पित्तशिरोरोगे यष्ट्यादिघृतम् ।

यष्ट्याह्वचन्दनानन्ताक्षीरसिद्धं घृतं हितम् ।
नावनं शर्कराद्राक्षामधुकैर्वापि पित्तजे ॥ ३५ ॥

रक्तजशिरोरोगप्रतीकारः ।

रक्तजे पित्तवत्सर्वं भोजनालेपसेचनम् ।
शीतोष्णयोश्च व्यत्यासो विशेषाद्रक्तमोक्षणम् ॥ ३६ ॥

कफजशिरोरोगप्रतीकारः ।

कफजे लङ्घनं स्वेदो रूक्षोष्णैः पाचनात्मकैः ।
तीक्ष्णावपीडधूमाश्च तीक्ष्णाश्च कवला हिताः ॥ ३७ ॥
अच्छं च पाययेत्सर्पिः पुराणं स्वेदयेत्तथा ।
मधूकसारेण शिरः स्विन्नं चास्य विरेचयेत् ॥ ३८ ॥

कफजशिरोरोगे कृष्णादिलेपः ।

कृष्णाब्दशुण्ठीमधुकशताह्वोत्पलवालुकैः ।
जलपिष्टैः शिरोलेपः सद्यः शूलनिवारणः ॥ ३९ ॥

कफजशिरोरोगे देवदार्वादिलेपः।

देवदारु नतं कुष्ठं नलदं विश्वभेषजम्।
लेपः काञ्जिकसंपिष्टस्तैलयुक्तः शिरोर्तिनुत् ॥ ४० ॥

कफजशिरोरोगे सरलादिलेपः।

सरलामरदार्व्यम्बुकुष्ठगन्धतृणैः समैः।
सक्षारलवणैः पिष्टैर्लेपः कफशिरोर्तिहा ॥ ४१ ॥

सान्निपातिकशिरोरोगचिकित्सा।

सन्निपातोद्भवे कार्या दोषत्रयहिता क्रिया।
सर्पिःपानं विशेषेण पुराणं च दिशन्ति हि ॥ ४२ ॥

सान्निपातिकशिरोरोगे श्यामादिलेपः।

श्यामानागरसंमिश्राच्छ्वेतस्यन्दनतक्षणात्।
नाशं याति त्रिदोषोत्था शिरोर्तिः संप्रलेपनात् ॥ ४३ ॥

सान्निपातिकशिरोरोगे कुष्ठादिलेपः।

सकुष्ठशुण्ठीमधुकैः शताह्वोत्पलमागधैः।
जलपिष्टैः शिरोलेपः सद्यः शूलनिवारणः ॥ ४४ ॥

शिरोरोगे नस्यम्।

शर्करा कुङ्कुमं नस्यं घृतभृष्टं शिरोर्तिजित्।
त्रिफलां च निषेवेत त्रिभागघृतमूर्च्छिताम् ॥ ४५ ॥
त्रिकटुकपुष्पकरबीजकरजनीरास्नातुरङ्गगन्धानाम्।
क्वाथः शिरोर्तिजालं नासापीतो निवारयति ॥ ४६ ॥
नागरकल्कविमिश्रं क्षीरं नस्येन योजितं पुंसाम्।
नानादोषोद्भूतां नाशयति शिरोरुजं तीव्राम् ॥ ४७ ॥

शिरोरोगे शताह्वादितैलम्।

शताह्वैरण्डमूलोग्रावप्रव्याघ्रीफलैः शृतम्।
तैलं नस्यान्मरुच्छ्लेष्मतिमिरोर्ध्वगदापहम् ॥ ४८ ॥

शिरोरोगे जीवकाद्यं तैलम्।

जीवकर्षभकद्राक्षासितायष्टीबलोत्पलैः।
तैलं नस्यं पयःपक्वं वातपित्ते शिरोगदे ॥ ४९ ॥

जीवकर्षभकौ द्राक्षा मधूकं मधुकं बला ।
नीलोत्पलं चन्दनं च विदारी शर्करा तथा ॥ ५० ॥
तैलप्रस्थं पचेदेभिः शनैः पयसि षड्गुणे ।
जाङ्गलस्य तु मांसस्य तुलार्धस्य रसेन तु ॥ ५१ ॥
सिद्धमेतद्भवेन्नस्यं तैलमर्धावभेदकम् ।
वाधिर्यं कर्णशूलं च तिमिरं गलशुण्डिकाम् ॥ ५२ ॥
वातिकं पैत्तिकं चैव शीर्षरोगं नियच्छति ।
दन्तचालं शिरःशूलमर्दितं चापकर्षति ॥ ५३ ॥
अत्र षड्बिन्दुतैलमपि श्रेष्ठम् ॥

क्षयजशिरोरोगप्रतीकारः ।

क्षयजे क्षयसामान्यः कर्तव्यो बृंहणो विधिः ।
पाने नस्ये च सर्पिः स्याद्वातघ्नमधुरैः शृतम् ॥ ५४ ॥

क्रिमिजशिरोरोगप्रतीकारः ।

कृमिजे व्योषनक्ताह्वशिग्रुबीजैश्च नावनम् ।
भुजस्तम्भादिरोगेषु सर्वेष्वेवंगदेषु च ।
सारिवोत्पलयष्ट्याह्वकुष्ठैर्लेपोऽम्लसंयुतैः ॥ ५५ ॥

सूर्यावर्तार्धावभेदयोश्चिकित्सा ।

घृतपूरादिसेवा च सूर्यावर्तार्धभेदयोः ।
सूर्यावर्ते विधातव्यं नस्यकर्मादि भेषजम् ॥ ५६ ॥
पायसं सगुडं सर्पिर्घृतपूरांश्च भक्षयेत् ।
सूर्यावर्ते शिरावेधो नावनं क्षीरसर्पिषः ॥ ५७ ॥
हितः क्षीरघृताभ्यासस्ताभ्यां चैव विरेचनम् ।
क्षीरपिष्टैस्तिलैः स्वेदो जीवनीयैश्च शस्यते ॥ ५८ ॥

सूर्यावर्तार्धावभेदयोर्नस्ययोगाः ।

सशर्करं कुङ्कुमकाज्यभृष्टं नस्यं विधेयं पवनासृगुत्थे ।
भ्रूशङ्खकर्णाक्षिशिरोऽर्धशूले दिनाभिवृद्धिप्रभवे च रोगे ॥

मापमूलस्य नस्येन किंवा श्वेतापराजिता-।
रसोनस्य शिरःपीडां ध्रुवं हन्त्यतिवेगतः ॥ ६० ॥
सर्वस्मिन् वा शिरोरोगे गुञ्जामूलस्य नावनम्।
अर्धशीर्षः शमं गच्छेत्पाठामूलस्य नस्यतः ॥ ६१ ॥
शिरीषमूलकफलैरवपीडं च योजयेत्।
अवपीडो हितो वा स्याद्वचापिप्पलिभिः कृतः ॥ ६२ ॥
शालिपर्ण्यम्भसा क्षिप्रं नस्यमर्धावभेदजित्।
चक्रमर्दकबीजैर्वा लेपः काञ्जिकपेषितैः ॥ ६३ ॥
महौषधाख्यसुरसवचापिप्पलिभिः कृतः।
अवपीडः प्रदातव्यः सूर्यावर्तनिषूदनः ॥ ६४ ॥

सूर्यावर्ते उपनाहः।

जाङ्गलानि तु मांसानि कारयेदुपनाहनम्।
तेनास्य शाम्यते व्याधिः सूर्यावर्तः सुदारुणः ॥ ६५ ॥

सूर्यावर्तार्धावभेदयोर्मुण्डितिकायोगः।

पीत्वा मुण्डितिकोत्थं स्वरसं मरीचावचूर्णितं चोष्णम्।
भक्तादौ सप्ताहात्सूर्यावर्तार्धभेदकौ हन्यात् ॥ ६६ ॥

क्षयजशिरोरोगप्रतीकारः।

एष एव प्रयोक्तव्यः शिरोरोगे क्षयात्मके।
पिबेत्सशर्करं क्षीरं नीरं वा नालिकेरजम् ॥ ६७ ॥
सुशीतं चापि पानीयं सर्पिर्वा नस्यतस्तयोः।

कृमिजशिरोरोगे विडङ्गादितैलम्।

विडङ्गस्वर्जिकादन्तीहिङ्गुगोमूत्रसंयुतम् ॥ ६८ ॥
संपक्वं सार्षपं तैलं कृमिघ्नं नस्यमुत्तमम्।
करवीरार्कमूलत्वग्द्रवन्तीगजपिप्पली-॥ ६९ ॥
सिद्धं शिग्रुकतैलेन नस्यं कृमिविनाशनम्।

अनन्तवातचिकित्सा।

अनन्तवाते कर्तव्यः सूर्यावर्तहितो विधिः ॥ ७० ॥

शिरावेधश्च कर्तव्योऽनन्तवातप्रशान्तये ।
आहारश्च विधातव्यो वातपित्तविनाशनः ॥ ७१ ॥

शङ्खकचिकित्सा ।

सूर्यावर्ते हितं यच्च शङ्खके स्वेदवर्जितम् ।
क्षीरसर्पिः प्रशंसन्ति मस्तुपानं च शङ्खके ।
कल्कैश्च क्षीरवृक्षाणां शङ्खकस्य प्रलेपनम् ॥ ७२ ॥

शङ्खके एकाष्ठीलादिलेपः ।

एकाष्ठीला पुण्डरीकं मधुकं नीलमुत्पलम् ।
पद्मकं वेतसं मूर्वा लामज्जकमथापि वा ॥ ७३ ॥
दार्वी हरिद्रा मञ्जिष्ठा फेनिलोशीरमेव च ।
एतैरालेपनं कार्यं शङ्खकस्य विनाशनम् ॥ ७४ ॥
एतान्येव तु सर्वाणि कषायमुपसाधयेत् ।
तेन शीतेन कर्तव्यं बहुशः परिषेचनम् ॥ ७५ ॥

शङ्खके शिराव्यधः ।

क्रौञ्चकादम्बहंसानां शरार्याः कच्छपस्य च ।
रसैः संबृंहितस्याथ तस्य शङ्खस्य सन्धिजाः ।
ऊर्ध्वं तिस्रः शिराः प्राज्ञो भिन्द्यादेव न ताडयेत्॥७६॥

इन्द्रलुप्तप्रतीकारः ।

मूलं शक्रसुराया गोमूत्रेण संस्थितं त्र्यहं क्लिन्नम् ।
शमयति सुरेशलिप्तं गोमयघृतप्रलेपेन ॥ ७७ ॥
इन्द्रलुप्तापहो लेपो मधुना बृहतीरसः ।
गुञ्जामूलं फलं वाऽपि भल्लातकरसोऽथ वा ॥ ७८ ॥
भल्लातकैर्वा बृहतीफलैर्वा सुश्लक्ष्णपिष्टैरथ कृष्णलैर्वा ।
मूलैरमीपामथवा प्रलिप्तमल्पैर्दिनैः शाम्यति शक्रलुप्तम् ॥ ७९॥
प्रच्छानपूर्वं परिपिष्टगुञ्जामूलैः समालेपितमिन्द्रलुप्तम् ।
प्रणाशमायात्यचिरेण पुंसां पापं यथा जह्नुसुताभिषेकात् ॥८०॥

दारुणकप्रतीकारः।

भागेन युक्तं मरिचेन यत्स्यात्काश्मीरजेन त्रिगुणेन तैलम्।
अभ्यञ्जनाद्विनिहन्ति पुंसामल्पैर्दिनैर्दारुणकं सुघोरम् ॥८१॥
यष्ठ्याह्वकिट्टोत्पलसारिवाभ्यां समार्कवाभ्यां त्रिफलान्विताभ्याम्
विपच्यते तैलमपास्यति द्राक्छीर्षामयान् दारुणकादिकांस्तत्॥

कोद्रवपलालसिद्धा मषी प्रलेपे प्रयोजिता शिरसः।
अपहरति रोगमचिराद्दारुणमपि दारुणाभिख्यम्॥ ८३॥

धात्रीफलाम्रस्वधवालपत्रलाक्षाविमिश्रैः प्रपुनाटबीजैः।
आलेपितो नाशमुपैति पुंसां सुदारुणो दारुणकः क्षणेन॥८४॥

चण्डासुरानतविषाणदलैर्हरिद्रा-
मुस्तान्वितैः शिरसि यः कुरुते प्रलेपम्।
तस्योत्तमाङ्गमपहाय व्रजन्ति दूरं
केशद्रुहः सपदि दारुणकादिरोगाः॥ ८५॥

केशवृद्धिकरा कतिपययोगाः।

मांसी कुष्ठं तिलाः कृष्णाः सारिवा नीलमुत्पलम्।
क्षौद्रं च क्षीरपिष्टानि लेपोऽयं केशवर्धनः॥ ८६॥
भूतकेशी वटारोहा मूलं चैवातिमुक्तकम्।
मासमात्रस्थितास्तैले केशवृद्धिकराः परम्॥ ८७॥
पुटदग्धभूतकेशीशृङ्गाटकबिडाललोमभिर्लेपः।
मधुना शशरक्ताक्तः खलितेरपि चर्वरं कुर्यात्॥ ८८॥
छगलीक्षीररसाञ्जनदग्धैणविषाणलेपनात्केशाः।
रोहन्ति करतलेष्वपि किमुतान्यतमप्रदेशेषु॥ ८९॥
मधुकाञ्जनतिलकुसुमैर्लोहिततर्कारिपुष्पसंयुक्तैः।
साजक्षीरैर्लेपो नखेऽपि लोमोद्गमं कुरुते॥ ९०॥
कार्यो दारुणके मूर्ध्नि प्रलेपो मधुसंयुतः।
पियालबीजमधुककुष्ठमाषैः ससैन्धवैः॥ ९१॥

अरूंषिकायां कतिपययोगाः ।

पुराणमथ पिण्याकं पुरीषं कुक्कुटस्य च ।
गोमूत्रपिष्टैर्लेपोऽयं शीघ्रं हन्यादरूंषिकाम् ॥ ९२ ॥
कटुतैलार्कदुग्धाभ्यां मर्दिता पुटपाकजा ।
माषचूर्णमषी हन्याच्छिरोरूंषि प्रलेपतः ॥ ९३ ॥
कपालभृष्टं कुष्ठं वा चूर्णितं तैलसंयुतम् ।
रूंषिकालेपनं कण्डूक्लेददाहार्तिनाशनम् ॥ ९४ ॥

पलिते कतिपययोगाः ।

सम्यक्छुद्धतनूनां कृतत्रिफलोदकानुपानानाम् ।
अन्योऽभिधास्यमानः कार्यः पलिते प्रतीकारः ॥९५॥
काश्मर्यमूलसारप्रसूनफलपत्रतः कषायेण ।
कल्केनाक्षकतैलं पक्वं पलितापहं नस्यम् ॥ ९६ ॥
भृङ्गराजरजो नीली त्रिफलाऽऽम्रास्थ्ययोरजः ।
पिष्टं हन्त्यारनालेन पलितं शीर्षलेपतः ॥ ९७ ॥
मार्कवमुस्तादन्तीसहदेवालोहतुत्थकासीसैः ।
तैलं सकर्मपिष्टैः शृतमाक्षं पलितहृत्स्पर्शात् ॥ ९८ ॥
अयोरजो भृङ्गरजस्त्रिफला कृष्णमृत्तिका ।
स्थितमिक्षुरसे मासं समूलं पलितं जयेत् ॥ ९९ ॥

शिरोरोगे कार्पासमज्जादिनस्यम् ।

कार्पासमज्जात्वक्क्षुरतं सुमनःकोरकाणि च ।
नस्यमुष्णाम्बुपिष्टानि सर्वमूर्धरुजापहम् ॥ १०० ॥

खालित्ये कतिपययोगाः ।

स्नुहीपयः पयोऽर्कस्य मार्कवो लाङ्गली विषम् ।
मूत्रमाजं सगोमूत्रं रक्तिका सेन्द्रवारुणी ॥ १०१ ॥
सिद्धार्थतीक्ष्णतैलं च गर्भे दत्त्वा विपाचितम् ।
वह्निना मृदुना पक्वं तैलं खालित्यनाशनम् ॥ १०२ ॥

गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन तु ।
कण्डूदारुणहृत्कुष्ठकपालव्याधिनाशनम् ॥ १०३ ॥
प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः ।
कार्षिकैस्तैलकुडवं तैर्द्विरामलकीरसः ।
साध्यः स प्रतिमर्शः स्यात्सर्वशीर्षगदापहः ॥ १०४ ॥
बृहतीफलरसपिष्टं गुञ्जाफलमूलमिन्द्रलुप्तस्य ।
कनकविघृष्टस्य सतो दातव्यं प्रच्छितस्य सदा ॥१०५॥
मधुकेन्दीवरमूर्वातिलाज्यगोक्षीरभृङ्गलेपेन ।
अचिराद्भवन्ति केशा घनदृढमूलायता ऋजवः ॥१०६॥
तैलं सयष्टीमधुकक्षीरधात्रीफलैः शृतम् ।
नस्ये दत्तं जनयति केशान् श्मश्रूणि चाप्यथ ॥ १०७॥

पलिते कतिपययोगाः ।

त्रिफला नीलिनीपत्रं लोहभृङ्गरजःसमम् ।
अविमूत्रेण संयुक्तं कृष्णीकरणमुत्तमम् ॥ १०८ ॥
त्रिफलाचूर्णसंयुक्तं लोहचूर्णं विनिक्षिपेत् ।
ईषत्पक्वे नालिकेरे भृङ्गराजरसान्विते ॥ १०९ ॥
मासमेकं विनिक्षिप्य सम्यक्तस्मात् समुद्धरेत् ।
ततः शिरो मुण्डयित्वा लेपं दद्याद्भिषग्वरः ॥ ११० ॥
संवेष्ट्य कदलीपत्रैर्मोचयेत्सप्तमे दिने ।
क्षालयेत्त्रिफलाक्वाथैः क्षीरमांसरसाशनः ।
कपालरञ्जनं चैव कृष्णीकरणमुत्तमम् ॥ १११ ॥
लोहमलामलकल्कैः सयवाह्वसुमैर्नरः सदास्नायी ।
पलितानीह न पश्यति गङ्गास्नायीव नरकाणि ॥११२॥
निम्बस्य बीजानि विभावितानि भृङ्गस्य तोयेन तथाऽसनस्य ।
तैलं तु तेषां विनिहन्ति नस्याद्दुग्धान्नभोक्तुः पलितं समूलम् ११३

निम्बस्य तैलं प्रकृतिस्थमेव नस्यं विधेयं विधिना यथावत् ।
मासेन गोक्षीरभुजो नरस्य जराप्रदूतं पलितं निहन्ति ॥११४॥

सर्वशिरोरोगे नस्यार्थं शुण्ठ्याद्यं घृतम् ।

शुण्ठीविडङ्गयष्ट्याह्वभृङ्गतोये शृतं घृतम् ।
नस्यं षड्बिन्दुदानेन सर्वमूर्धगदापहम् ॥ ११५ ॥

खालित्यपलितयोः कतिपययोगाः ।

भृङ्गरजपक्वतैलं द्विपदशनामलककृतमषीमिश्रम् ।
खालितेरपि चिकुरचयं जनयत्यभ्यङ्गयोगेन ॥ ११६ ॥

नीलोत्पलाक्षफलमज्जतिलाजगन्धाः
सार्धं प्रियङ्गुलतया समधूकयष्ट्या ।
संपिष्य यः प्रकुरुते बहुशः प्रलेपं
खालित्यमस्य न पदं विदधाति मूर्ध्नि ॥ ११७ ॥

मांसीबलाकुवलयामलकैः सकुष्ठैः
पिष्टैः प्रलिप्तशिरसो न पतन्ति केशाः ।
स्निग्धायताश्च कुटिलाकृतयो भवन्ति
ते प्रच्युताश्च तरुणालिकुलप्रकाशाः ॥ ११८ ॥

अन्तर्धूमविदग्धमापजमषीमध्येऽर्कदुग्धं क्षिपे-
त्तैलं सर्षपसंभवं च विमलं तेन प्रलिम्पेच्छिरः ।
रोगान्मूर्धसमुद्भवान् बहुविधांस्तद्वच्च वक्त्रोद्भवान्
खालित्यं पलितानि चोपशमयत्येतत्प्रयुक्तं नृणाम् ११९

धौतः श्रीफलसारेण यदि वा गुडवारिणा ।
मूढोऽपि केशनिचयः सुसंस्थानत्वमृच्छति ॥ १२० ॥

शङ्खस्य दग्धस्य पुटानलेन चूर्णं निघृष्टं सह सीसकेन ।
प्रलेपमात्रेण करोति केशान् शशिप्रकाशानपि षट्पदाभान् १२१

पथ्याक्षधात्रीफललोहचूर्णैस्तुरङ्गमारासनमार्कवैश्च ।
कार्ष्ण्यं लभन्ते पलितानि लेपान्नील्यं ससौवीरकभागयुक्तैः १२२

तुल्यैर्गुडेन प्रतिधूपितैश्च लिप्तानि कार्ष्ण्यं पलितानि यान्ति ।
लोहाम्रबीजत्रिफलाब्जमूलपङ्कैः प्रपिष्टैः सह मार्कवेण ॥१२३॥

शिलाकुसुमकर्चूरनिशाश्यामानतैः समैः ।
पलितानां भवेत्कार्ष्ण्यं बहुशो गुडधूपितैः ॥ १२४ ॥

निर्गुण्डीलाङ्गलिकार्कसाधितं तैलमभ्यङ्गात् ।
शिरसो रुजः समग्रा यदि वाऽपामार्गफलसिद्धम् ॥ १२५

शिरोरोगे पिप्पल्याद्यं नस्यम् ।

पिप्पलीमरिचद्राक्षामधुयष्टिकनागरैः ।
पक्वं गोनवनीतेन नस्यं हन्ति शिरोरुजम् ॥ १२६ ॥

अर्धावभेदके मनःशिलाद्यं नस्यम् ।

नस्यं मनःशिलारोध्रं पिप्पलीमरिचान्वितम् ।
यः करोति हरेदेव तस्यार्धशिरसो व्यथाम् ॥ १२७ ॥

शिरोरोगे श्रीखण्डादियोगः ।

श्रीखण्डकुङ्कुमसुशीरकभृङ्गराज-
द्राक्षाप्रियङ्गुमरिचं च गुडूचिका च ।
यष्टी सनागरमिदं सकलं सखण्डं
दुग्धान्वितं मधुघृतेन शिरोव्यथायाम् ॥ १२८ ॥

शिरोरोगे खर्जूरादियोगः ।

खर्जूरयष्टीमधुकाकजङ्घाद्राक्षान्वितं खण्डमुशीरकं च ।
पिबेत्सुपक्वं नवनीतमेभिर्मध्वन्वितं भ्रान्तशिरोव्यथावान् ॥१२९

शिरोरोगे पटोलमूललेपः ।

पटोलमूलसंभूतं भालस्थलविलेपनम् ।
सद्यः करोति यस्तस्य याति सर्वशिरोव्यथा ॥ १३० ॥

शिरोरोगे बदरीमूलादियोगः ।

ललाटे बदरीमूलपिप्पलीनां प्रलेपनम् ।
हन्ति सर्वत्रतो लमा रुजो दैन्यमिव व्यथाम् ॥ १३१ ॥

यूकानाशार्थं पारदयोगः ।

नागवल्लीदलोद्भृतरसमर्दितपारदः ।
तल्लिप्ता चीरिका हन्ति यूकाः शिरसि संस्थिताः ॥१३२॥
गोमूत्रेणातिरांघृष्टबिल्वमूलस्य लेपतः ।
नश्यन्ति शिरसो यूकाः सलिक्षा इदमद्भुतम् ॥ १३३ ॥
ताम्बूलपत्ररसमर्दितसूतकेन
श्लक्ष्णीकृतेन विधिना हि विलिप्तचीरम् ।
बध्नाति यः शिरसि तस्य पतन्ति सद्यो
यूका भवन्ति न पुनश्च कदाचिदेव ॥ १३४ ॥

यूकानाशार्थं विडङ्गादितैलम् ।

विडङ्गगोमूत्रमनःशिलाभिः सगन्धकाभिः परिपाचितं यत् ।
तैलं भवेत्सर्षपसंभवं तल्लिक्षाश्च यूकाश्च निहन्ति सद्यः ॥१३५॥

शिरोरोगे शिराभेधदाहयोर्विधानम् ।

सर्वेषां शीर्षरोगाणां शिरां विध्येदशाम्यताम् ।
कफवातात्मके दाहं जघन्यं वा प्रयोजयेत् ॥ १३६ ॥

इति श्रीवैद्यसोढलप्रणिते गदनिग्रहे तृतीये शालाक्यतन्त्रखण्डे
शिरोरोगाधिकारः प्रथमः ॥ १ ॥

---

## अथ कर्णरोगाधिकारो द्वितीयः ।

अथातः कर्णरोगनिदानं व्याख्यास्यामः ।

कर्णशूललक्षणम् ।

समीरणः श्रोत्रगतोऽन्यथा चरन् समन्ततः शूलमतीव कर्णयोः ।
करोति दोषैश्च यथास्वमावृतः स कर्णशूलप्रविभावितो गदः॥१॥

कर्णनादलक्षणम् ।

कर्णस्रोतःस्थिते वाते शृणोति विविधान् स्वनान् ।
भेरीमृदङ्गशङ्खानां कर्णनादः स उच्यते ॥ २ ॥

बाधिर्यलक्षणम्।

यदा शब्दवहं वायुः स्रोत आवृत्य तिष्ठति।
शुद्धः श्लेष्मान्वितो वाऽपि बाधिर्यं तेन जायते॥ ३॥

कर्णक्ष्वेडलक्षणम्।

वायुः पित्तादिभिर्युक्तो वेणुघोषोपमं स्वनम्।
करोति कर्णयोः क्ष्वेडं कर्णक्ष्वेडः स उच्यते॥ ४॥

कर्णस्रावलक्षणम्।

शिरोभिघातादथवा निमज्जतो
जले प्रपाकादथवापि विद्रधेः।
स्रवेद्धि पूयं श्रवणोऽनिलार्दितः
स कर्णसंस्राव इति प्रकीर्तितः॥ ५॥

कर्णकण्डूलक्षणम्।

मारुतः कफसंयुक्तः कर्णकण्डूं करोति च।

कर्णगूथकलक्षणम्।

पित्तोष्मशोषितः श्लेष्मा जायते कर्णगूथकः॥ ६॥

कर्णप्रतिनाहलक्षणम्।

स कर्णगूथो द्रवतां यदा गतो
विलायितो घ्राणमुखं प्रपद्यते।
तदा स कर्णप्रतिनाहसंज्ञितो
भवेद्विकारः शिरसोऽर्धभेदकृत्॥ ७॥

कृमिकर्णकलक्षणम्।

यदा विमूर्च्छन्त्यथवापि जन्तवः
सृजन्त्यपत्यान्यथवापि मक्षिकाः।
तदञ्जनत्वाच्छ्रवणो निरुच्यते
भिषग्भिराद्यैः कृमिकर्णकस्तु सः॥ ८॥

पतङ्गाः शतपद्यश्च कर्णस्रोतः प्रविश्य च।

अरतिं व्याकुलत्वं च भृशं कुर्वन्ति वेदनाम् ॥ ९ ॥
कर्णौ निस्तुद्यते यस्य तथा फरफरायते ।
कीटे चरति रुक् तीव्रा निःस्पन्दे मन्दवेदना ॥ १० ॥

कर्णविद्रधिलक्षणम् ।

क्षताभिघातप्रभवस्तु विद्रधि-
र्भवेत्तथा दोषकृतोऽपरः पुनः ।
स रक्तपीतारुणमस्रमास्रवे-
त्प्रतोदधूमायनदाहचोषवान् ॥ ११ ॥

कर्णपाकलक्षणम् ।

कर्णपाकस्तु पित्तेन कोथविक्लेदकृद्भवेत् ।

पूतिकर्णकलक्षणम् ।

कर्णविद्रधिपाकाद्वा जायते चाम्बुपूरणात् ॥ १२ ॥
पूयं स्रवति वै पूति स ज्ञेयः पूतिकर्णकः ।
कर्णशोफार्बुदार्शांसि जानीयादुक्तलक्षणैः ॥ १३ ॥

वातजादिभेदेन कर्णरोगलक्षणानि ।

नादोऽतिरुक्कर्णमलस्य शोषः स्रावस्तनुश्चाश्रवणं च वातात् ।
शोफः सरागो दरणं विदाहः सपीतपूतिस्रवणं च पित्तात् ॥१४॥
वैश्रुत्यकण्डूस्थिरशुक्लशोफस्निग्धश्रुतिः स्वल्परुजः कफाच्च ।
सर्वाणि रूपाणि तु सन्निपातात् स्रावश्च तत्राधिकदोषवर्णः १५

परिपोटकलक्षणम् ।

सौकुमार्याच्चिरोत्सृष्टे सहसाऽतिप्रवर्धिते ।
कर्णशोफो भवेत्पाल्यां सरुजः परिपोटवान् ॥ १६ ॥
कृष्णारुणनिभः स्तब्धः स वातात्परिपोटकः ।

उत्पातलक्षणम् ।

गुर्वाभरणसंयोगात्ताडनोद्घर्षणादपि ॥ १७ ॥
शोफः पाल्यां भवेच्छ्यावो दाहपाकसमन्वितः ।
रक्तो वा रक्तपित्ताभ्यामुत्पातः स गदो मतः ॥ १८ ॥

उन्मन्थकलक्षणम् ।

कर्णं बलाद्वर्धयतः पाल्यां वायुः प्रकुप्यति ।
कफं संगृह्य कुरुते शोफं स्तब्धमवेदनम् ।
उन्मन्थकः सकण्डूको विकारः कफवातजः ॥ १९ ॥

दुःखवर्धनलक्षणम् ।

संवर्ध्यमाने दुर्विद्धे कण्डूदाहरुजान्वितः ।
शोफो भवति पाकश्च त्रिदोषो दुःखवर्धनः ॥ २० ॥

परिलेहीलक्षणम् ।

कफासृक्कृमयः क्षुद्राः सर्षपाभा विसर्पिणः ।
कुर्वन्ति पाल्यां पिडिका रुजादाहसमन्विताः ॥ २१ ॥
कफासृक्कृमिसंभूतः स विसर्पन्नितस्ततः ।
लिहेत्सशष्कुलीं पालीं परिलेहीति स स्मृतः ॥ २२ ॥

इति कर्णरोगनिदानम् ।

---

अथातः कर्णरोगचिकित्सितं व्याख्यास्यामः ।

कर्णरोगे सामान्यचिकित्सा ।

सामान्यं कर्णरोगेषु घृतपानं रसायनम् ।
अव्यायामः शिरःस्नानं ब्रह्मचर्यमकत्थनम् ॥ २३ ॥

कर्णशूले नाडीस्वेदयोगः ।

बिल्वैरण्डार्कवर्षाभूदधित्थमधुशिग्रुभिः ।
वस्तगन्धाश्वगन्धाभ्यां तर्कारीयवरेणुभिः ॥ २४ ॥
आरनालशृतैरेभिर्नाडीस्वेदः प्रयोजितः ।
कफवातसमुत्थानं कर्णशूलं निरस्यति ॥ २५ ॥

कर्णशूले कतिपयकर्णपूरणयोगाः ।

कपित्थमातुलुङ्गाम्रशृङ्गवेररसैः शुभैः ।
सुखोष्णैः पूरयेत्कर्णं कर्णशूलोपशान्तये ॥ २६ ॥

धारयेत्पूरणं कर्णे कर्णमूलं विमर्दयेत् ।
रुजाया मार्दवं यावन्मात्राशतमवेदने ॥ २७ ॥
शृङ्गवेरं च मधुकं सैन्धवं तैलमेव च ।
कदुष्णं कर्णयोर्देयमेतद्वा वेदनापहम् ॥ २८ ॥
लशुनार्द्रकशिग्रूणां सुरङ्गा मूलकस्य च ।
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥ २९ ॥
समुद्रफेनचूर्णेन युक्त्या वाप्यवचूर्णयेत् ।
आर्द्रकमूर्वावर्तकशोभाञ्जनकमूलस्वरसाः ॥
मधुतैलसैन्धवयुताः पृथगुष्णाः कर्णशूलहराः ॥ ३०
देवदारु वचां हिङ्गुं कुष्ठं मरिचसैन्धवम् ।
गोमयस्य रसं तैलं पक्वदोषहरं श्रुतेः ॥ ३१ ॥
वज्रीकाण्डात्त्वचाहीनादग्नितापनपीडनात् ।
यज्जलं तद्धृते कर्णे शूलं शाम्यति देहिनाम् ॥ ३२
तीक्ष्णशूलातुरे कर्णे सशब्दे क्लेदवाहिनि ।
बस्तमूत्रं क्षिपेत्कोष्णं सैन्धवेन विमिश्रितम् ॥ ३३
अश्वत्थपत्रखल्लं वा विधाय बहुपत्रकम् ।
अङ्गारपूर्णं तैलाक्तं निदध्याच्छ्रवणोपरि ॥ ३४ ॥
यत्तैलं स्रवते तस्मात्खल्लादङ्गारतापितात् ।
तत्प्राप्तं श्रवणस्रोतः सद्यो गृह्णाति वेदनाम् ॥ ३५

अर्कस्य पत्रं परिणामपीत-
माज्येन लिप्तं शिखिना च तप्तम् ।
आपीड्य तोयं श्रवणे निषिक्तं
निहन्ति शूलं बहुवेदनं च ॥ ३६ ॥

कर्णशूले दीपिकातैलाद्यास्तैलयोगाः ।

शोफः पञ्चमूलस्य काण्डान्यष्टाङ्गुलानि च ।
रक्तो यं वेष्ट्य संसिच्य तैलेनादीपयेत्ततः ॥ ३७ ॥

उन्मन्थकलक्षणम्।

कर्णं बलाद्वर्धयतः पाल्यां वायुः प्रकुप्यति।
कफं संगृह्य कुरुते शोफं स्तब्धमवेदनम्।
उन्मन्थकः सकण्डूको विकारः कफवातजः॥ १९॥

दुःखवर्धनलक्षणम्।

संवर्ध्यमाने दुर्विद्धे कण्डूदाहरुजान्वितः।
शोफो भवति पाकश्च त्रिदोषो दुःखवर्धनः॥ २०॥

परिलेहीलक्षणम्।

कफासृक्कृमयः क्षुद्राः सर्षपाभा विसर्पिणः।
कुर्वन्ति पाल्यां पिडिका रुजादाहसमन्विताः॥ २१॥
कफासृक्कृमिसंभूतः स विसर्पन्नितस्ततः।
लिहेत्सशष्कुलीं पालीं परिलेहीति स स्मृतः॥ २२॥

इति कर्णरोगनिदानम्।

---

अथातः कर्णरोगचिकित्सितं व्याख्यास्यामः।

कर्णरोगे सामान्यचिकित्सा।

सामान्यं कर्णरोगेषु घृतपानं रसायनम्।
अव्यायामः शिरःस्नानं ब्रह्मचर्यमकत्थनम्॥ २३॥

कर्णशूले नाडीस्वेदयोगः।

बिल्वैरण्डार्कवर्षाभूदधित्थमधुशिग्रुभिः।
वस्तगन्धाश्वगन्धाभ्यां तर्कारीयवरेणुभिः॥ २४॥
आरनालशृतैरेभिर्नाडीस्वेदः प्रयोजितः।
कफवातसमुत्थानं कर्णशूलं निरस्यति॥ २५॥

कर्णशूले कतिपयकर्णपूरणयोगाः।

कपित्थमातुलुङ्गाम्लशृङ्गवेररसैः शुभैः।

जलम्।
यति॥ ४८

सुदारुणे कर्णशूले क्ष्वेडे नादे च कर्णयोः।
मुखनासाक्षिरोगेषु शीर्षरोगेषु शस्यते ॥ ४९ ॥
एष एव विधिः कार्यः प्रणादे नस्यपूर्वकः।
गुडनागरतोयेन नस्यं स्यादुभयोरपि ॥ ५० ॥

कर्णस्रावप्रतीकारः।

चूर्णं पञ्चकषायाणां कपित्थरससंयुतम्।
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह ॥ ५१ ॥
सर्जत्वक्चूर्णसंयुक्तः कार्पासीफलजो रसः।
मधुना संस्कृतोऽसौ तु कर्णस्रावे प्रशस्यते ॥ ५२ ॥

कर्णनाडीचिकित्सा।

असह्यवेदना पूतिं वहन्ती कर्णनाडिका।
नागकर्णीरसैः पूर्णा शमं यात्यतिवेगतः ॥ ५३ ॥
शम्बूकस्य तु मांसेन कटुतैलं विपाचयेत्।
तस्य पूरणमात्रेण कर्णनाडी प्रशाम्यति ॥ ५४ ॥
चूर्णेन गन्धकशिलारजनीभवेन
मुष्टयंशकेन कटुतैलपलाष्टकं यत्।
धत्तूरपत्ररसतुल्यमिदं विपक्वं
नाडीर्जयेच्चिरभवा अपि कर्णजाताः ॥ ५५ ॥

कर्णप्रतिनाहचिकित्सा।

अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत्।
विरिक्तान्ततःशिरसः क्रियां प्राप्तां समाचरेत् ॥ ५६ ॥

कर्णपाकचिकित्सा।

कर्णपाकस्य भैषज्यं कुर्यात्क्षतविसर्पवत्।
नाडीस्वेदोऽथ वमनं धूमो मूर्धविरेचनम् ॥ ५७ ॥

कर्णकण्डूचिकित्सा।

विधिश्च कफहा सर्वः कर्णकण्डूं व्यपोहति।
तैलमाक्षिकसिन्धूत्थैरार्द्रकस्वरसान्वितैः ॥ ५८ ॥

सुखोष्णैः कफवातोत्थं कर्णशूलं प्रशाम्यति ।

पूतिकर्णचिकित्सा ।

हरितालं सगोमूत्रं पूतिकर्णस्य पूरणम् ॥ ५९ ॥
निर्गुण्डर्केण सिद्धं तु तैलं वा कर्णयोजितम् ।
वरुणाम्रकपित्थाम्लजम्बूपल्लवसाधितम् ॥ ६० ॥
पूतिकर्णापहं तैलं जातीपत्ररसोऽथवा ।
घृतं रसाञ्जनं नार्याः क्षीरं क्षौद्रं च मिश्रितम् ॥ ६१ ॥
प्रशस्यते चिरोत्थेऽपि सास्रावे पूतिकर्णके ।
निर्गुण्डीस्वरसस्तैलं सिन्धुधूमरजो गुडः ॥ ६२ ॥
पूरणं पूतिकर्णस्य सुमनोमधुसंयुतः ।
जातीपत्ररसे तैलं विपक्वं पूतिकर्णजित् ॥ ६३ ॥

कृमिकर्णकचिकित्सा ।

सूर्यावर्तकस्वरसं सिन्दुवाररसं तथा ।
लाङ्गलीमूलकरसं त्र्यूपणेनावचूर्णिते ॥ ६४ ॥
पूरयेत्कृमिकर्णे तु जन्तूनां नाशनं परम् ।
कृमिकर्णकनाशार्थं कृमिघ्नं योजयेद्विधिम् ॥ ६५ ॥
वार्ताकधूमश्च हितः सार्षपस्नेह एव च ।
जम्बूपत्रं फलं पक्वं तद्रसेनातिपूरितात् ॥ ६६ ॥
पतन्ति कृमयः कर्णाद्दुर्विनीता इवापदि ।

कर्णगूथकचिकित्सा ।

क्लेदयित्वा तु तैलेन स्वेदेन प्रविलाप्य च ॥ ६७ ॥
शोधयेत्कर्णगूथं तु भिषक्सम्यक्छलाकया ।
धूपनं कर्णदौर्गन्ध्ये गुग्गुलुः श्रेष्ठ उच्यते ॥ ६८ ॥
राजवृक्षादितोयेन सुरसादिजलेन वा ।
कर्णप्रक्षालनं कुर्याच्चूर्णैरेषां च पूरणम् ।

कर्णविद्रधिचिकित्सा ।

विद्रधौ चापि कुर्वीत विद्रध्युक्तं च भेषजम् ॥ ६९ ॥

कर्णशूले कतिपययोगाः।

तैलाक्तवस्त्रशकलावृतदेवदारु-
काष्ठाद्विनिःसरति यज्ज्वलनप्रतप्तात्।
तच्चैलमाशु हरति श्रुतिरन्ध्रपीडां
श्रीवृक्षकाष्ठशकलेऽप्ययमेव कल्पः॥ ७०॥
तप्ताङ्गारोपरिक्षिप्तवस्त्रबद्धे कणापुटे।
यो धूमस्तद्धुते कर्णे पूतिशूलं विनश्यति॥ ७१॥
सिन्धूत्थहिङ्गुसुरदारुवचाः सकुष्ठ-
विश्वौषधाः समघृता विनिधाय पक्कम्।
तैलं सगोमयरसं श्रुतिपूरणेन
हन्ति प्रसह्य सकलानपि कर्णरोगान्॥ ७२॥
आवेष्ट्य सूर्यतरुपत्रचयेन वह्ना-
वुत्तापितात्कथयसि यत्सलिलं रसोनात्।
यद्वा स्नुहीशकलतो गलितं तदाशु
कर्णव्यथां हरति पूरणतः प्रभाते॥ ७३॥
बस्तमूत्रयुतसैन्धवचूर्णं कर्णपूरणविधौ विनियुक्तम्।
नाडिकाद्वयमवस्थितमर्तिं श्रोत्रयोर्हरति पाकसमुत्थाम्॥ ७४॥

कर्णपालिवर्धकाः कतिपययोगाः।

शतावरीवाजिगन्धापयस्यैरण्डबीजकैः।
तैलं विपक्वं सक्षीरं पालिनां पुष्टिकृत्परम्।
अश्वगन्धा तथाऽलाबुश्चन्दनं सर्षपाः समाः॥ ७५॥
माहिषं नवनीतं च कल्कः कर्णविवर्धनः।
पालिपुष्टिकरं तैलं लामीद्रक्षण(?)साधितम्॥ ७६॥
जातीदलप्रसवपीडनजेन पूर्णः
कर्णो रसोनसुरभीसलिलेन वापि।
पूत्यामयं त्यजति तत्क्षणसंप्रनष्ट-
तीव्रव्यथापरिचयप्रतिपन्नसौख्यः॥ ७७॥

मुशलीकन्दक्षोदो माहिषनवनीतमिश्रितोऽभ्यङ्गात्।
वर्धयति कर्णपालीं सप्ताहं धान्यराशिधृतः॥ ७८॥
गुञ्जाफलैर्विदलितैः क्वथितान्माहिष्याः
क्षीरात्क्रमेण जनितं घृतमादृतानाम्।
अभ्यञ्जनादनुदिनं कुरुते मृदुत्वं
विस्तीर्णतां च परमामिह कर्णपाल्याः॥ ७९॥
कटुकतुम्बकबीजसमुद्भवं खरजलेऽष्टगुणे सविषं शृतम्।
भवति तैलमलं श्रवणोचितं श्रवणपाशकवृद्धिविधायकम्॥८०॥
कुष्ठाश्वगन्धागजपिप्पलीनां चूर्णं समानां नवनीतपक्वम्।
कर्णप्रवृद्धिं स्तनतुङ्गतां च काठिन्यमुच्चैर्विदधाति लेपात्॥८१॥

बाधिर्ये काकजङ्घायोगः।

समूलकाकजङ्घाया रसस्तैलेन पाचितः।
तेन पूरितकर्णस्य बाधिर्यं शाम्यति ध्रुवम्॥ ८२॥

क्रिमिकर्णकप्रतीकारः।

कृष्णभ्रमरिकापत्ररसस्तैलसमन्वितः।
सकाञ्जिको वा निःक्षिप्तः कर्णजन्तुविनाशकृत्॥ ८३॥
शिग्रुमूलरसे तैले पाचिते मधुनान्विते।
भृते कर्णेऽतिवेगेन शूलं शाम्यति देहिनः॥ ८४॥
सतैलकपित्थेन सव्रणा कर्णपालिका।
लिप्ता पश्चाद्वचाचूर्णसंयुता निर्व्रणा भवेत्॥ ८५॥

इति श्रीवैद्यसोढलप्रथिते गदनिग्रहे तृतीये शालाक्यतन्त्रखण्डे कर्णरोगाधिकारो द्वितीयः॥ २॥

---

## अथ नेत्ररोगाधिकारस्तृतीयः।

अथातो नेत्ररोगनिदानं व्याख्यास्यामः।

नेत्ररोगसंप्राप्तिः।

उष्णाभितप्तस्य जले प्रवेशाद्दूरेक्षणात्स्वप्नविपर्ययाच्च।
स्वेदाद्रजोधूमनिषेवणाच्च बहिर्विघाताद्वमनातियोगात्॥ १॥

द्रवान्नपानान्निशि सेविताच्च विण्मूत्रशुक्रानिलसंग्रहाच्च ।
प्रसक्तसंरोदनकोपशोकाच्छिरोभिघातादतिमद्यपानात् ॥ २ ॥
तथा ऋतूनां च विपर्ययेण क्लेशाभिघातादतिमैथुनाच्च ।
बाष्पग्रहात्सूर्यनिरीक्षणाच्च नेत्रे विकाराञ्जनयन्ति दोषाः ॥३॥

सर्वनयनगतसप्तदशरोगलक्षणानि ।

वातात्पित्तात्कफाद्रक्तादभिष्यन्दश्चतुर्विधः ।
प्रायेण जायते घोरः सर्वनेत्रामयाकरः ॥ ४ ॥

निस्तोदनस्तम्भनरोमहर्षसंघर्षपारुष्यशिरोभितापाः ।
विशुष्कभावः शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति ॥५
दाहप्रपाकौ शिशिराभिनन्दा धूमायनं बाष्पसमुच्छ्रयश्च ।
उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति ॥ ६ ॥
उष्णाभिनन्दा गुरुताऽक्षिशोफः कण्डूपदेहावतिशीतता च ।
स्रावो बहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति॥७
ताम्राश्रुता लोहितनेत्रता च राज्यः समन्तादतिलोहिताश्च ।
पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति ८

वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम् ।
तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदनाः ॥ ९ ॥
उत्पाट्यत इवात्यर्थं नेत्रं निर्मथ्यते तथा ।
शिरसोऽर्धं च तं विद्यादधिमन्थं स्वलक्षणैः ॥ १० ॥

हन्याद्दृष्टिं सप्तरात्रात्कफोत्थोऽधीमन्थोऽसृक्संभवः पञ्चरात्रात् ।
षड्रात्राद्वातिको वै निहन्यान्मिथ्याचारात्पैत्तिकः सद्य एव ॥११

उदीर्णवेदनं नेत्रं शोथरागसमन्वितम् ।
घर्षनिस्तोदशूलाश्रुयुक्तमामान्वितं विदुः ॥ १२ ॥
मन्दवेदनता कण्डूः संरम्भाश्रुप्रशान्तता ।
प्रशस्तवर्णता चाक्ष्णोः संपक्वं दोषमादिशेत् ॥ १३ ॥

कण्डूपदेहाश्रुयुतः पक्वोदुम्बरसन्निभः।
संरम्भी पच्यते यस्तु नेत्रपाकः स शोफजः।
शोफहीनानि लिङ्गानि नेत्रपाके त्वशोफजे ॥ १४ ॥
उपेक्षणादक्षि यदाऽधिमन्थो वातात्मकः सादयति प्रसह्य।
रुजाभिरुग्राभिरसाध्य एष हताधिमन्थः खलु नाम रोगः॥१५
वारं वारं च पर्येति भ्रुवौ नेत्रे च मारुतः।
रुजश्च विविधास्तीव्राः स ज्ञेयो वातपर्ययः ॥ १६ ॥
यत्कूणितं दारुणरूक्षवर्त्म संदह्यते चाविलदर्शनं यत्।
सुदारुणं यत्प्रतिबोधने च शुष्काक्षिपाकोपहतं तदक्षि॥ १७।
यस्यावटूकर्णशिरोहनुस्थो मन्यागतो वाऽप्यनिलोऽन्यतो वा।
कुर्याद्रुजं वै भ्रुवि लोचने च तमन्यतोवातमुदाहरन्ति ॥ १८।
श्यावं लोहितपर्यन्तं सर्वं चाक्षि प्रपच्यते।
सदाहशोफं सास्रावमम्लाध्युषितमम्लतः ॥ १९ ॥
अवेदनं चापि सवेदनं वा यस्याक्षिराज्यो हि भवन्ति ताम्राः
मुहुर्विरज्यन्ति च याः स ताद्दग्व्याधिः शिरोत्पात इति प्रदिष्टः॥
मोहाच्छिरोत्पात उपेक्षितस्तु जायेत रोगस्तु शिराप्रहर्षः।
ताम्राभमस्रं स्रवति प्रगाढं तथा न शक्नोत्यभिवीक्षितुं च॥२१

कृष्णभागगतचतुर्विधनेत्ररोगलक्षणानि।

निमग्नरूपं तु भवेद्धि कृष्णे सूच्येव विद्धं प्रतिभाति यद्वै।
स्रावं स्रवेदुष्णमतीव यच्च तत्सव्रणं शुक्रमुदाहरन्ति ॥ २२ ॥
दृष्टेः समीपे न भवेत्तु यच्च न चावगाढं न च संस्रवेद्धि।
अवेदनं वा न च युग्मशुक्रं तत् सिद्धिमायाति कदाचिदेव॥२३
स्यन्दात्मकं कृष्णगतं सचोषं शङ्खेन्दुकुन्दप्रतिमावभासम्।
वैहायसाभ्रप्रतिमप्रकाशं तदव्रणं साध्यतमं वदन्ति ॥ २४ ॥
गम्भीरजातं बहुलं च शुक्रं शिरोत्थितं चापि वदन्ति कृच्छ्रम्।
विच्छिन्नमध्यं पिशितावृतं च चलं शिरासूक्ष्ममदृष्टिकृच्च॥२५॥

द्वित्वग्गतं लोहितमन्ततश्च चिरोत्थितं चापि विवर्जनीयम् ।
उष्णाश्रुपातः पिडिका च नेत्रे यस्मिन् भवेन्मुद्गनिभं च शुक्रम् ॥
तदप्यसाध्यं प्रवदन्ति केचिदन्यच्च यच्चित्तिरिपक्षतुल्यम् ।
श्वेतः समाक्रामति सर्वतो हि दोषेण यस्यासितमण्डलं तु ॥२७
तमक्षिपाकात्ययमक्षिरोगं सर्वात्मकं वर्जयितव्यमाहुः ।
अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छिलाश्रुः ॥
विगृह्य कृष्णं प्रचयोऽभ्युपैति तच्चाजकाजातमिति व्यवस्येत् ।

दृष्टिभागगतद्वादशनेत्ररोगाणां लक्षणानि ।

प्रथमे पटले दोषो यस्य दृष्ट्यां व्यवस्थितः ।
अव्यक्तानि स रूपाणि कदाचिदथ पश्यति ॥ २९ ॥
दृष्टिर्भृशं विह्वलति द्वितीयं पटलं गते ।
मक्षिकामशकांश्चैव जालकानि च पश्यति ॥ ३० ॥
मण्डलानि पताकांश्च मरीचीः कुण्डलानि च ।
परिप्लवांश्च विविधान् वर्षमभ्रं तमांसि च ॥ ३१ ॥
दूरस्थानि च रूपाणि मन्यते स समीपतः ।
समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात् ॥ ३२ ॥
यत्नवानपि चात्यर्थं सूचीपाशं न पश्यति ।
ऊर्ध्वं पश्यति नाधस्तात्तृतीयं पटलं गते ॥ ३३ ॥
महान्त्यपि च रूपाणि छादितानीव चाम्बरैः ।
कर्णनासाक्षिहीनानि विकृतानीव पश्यति ॥ ३४ ॥
यथादोषं च रज्येत दृष्टिर्दोषे बलीयसि ।
अधःस्थिते समीपस्थं दूरस्थं चोपरि स्थिते ॥ ३५ ॥
पार्श्वस्थे च तथा दोषे पार्श्वस्थं नैव पश्यति ।
समन्ततः स्थिते दोषे संकुलानीव पश्यति ।
दृष्टिमध्यगते दोषे महद्ध्रस्वं च पश्यति ॥ ३६ ॥
द्विधा स्थिते द्विधा पश्येद्बहुधा चानवस्थिते ।

दृष्ट्यां दोषे स्थिते तिर्यगेकं पश्यति वै द्विधा ॥ ३७ ॥
तिमिराख्यः स वै दोषश्चतुर्थं पटलं गतः ।
रुणद्धि सर्वतो दृष्टिं लिङ्गनाशमतः परे ॥ ३८ ॥
अस्मिन्नपि तमोभूते नातिरूढे महागदे ।
चन्द्रादित्यौ सनक्षत्रावन्तरिक्षे च विद्युतः ॥ ३९ ॥
निर्मलानि च तेजांसि भ्राजिष्णूनि च पश्यति ।
स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः ॥ ४० ॥
वातेनापि च रूपाणि भ्रमन्तीव हि पश्यति ।
आविलान्यरुणाभानि व्याविद्धानीव मानवः ॥ ४१ ॥
पित्तेनादित्यखद्योतशक्रचापतडिद्गुणान् ।
नृत्यन्तश्चैव शिखिनः सर्वं नीलं च पश्यति ॥ ४२ ॥
कफेन रूपाणि तथा स्निग्धानि च सितानि च ।
सलिलप्लावितानीव परिजाड्यानि मानवः ।
पश्यद्रक्तेन रक्तानि तमांसि विविधानि च ॥ ४३ ॥
ससितान्यपि कृष्णानि पीतान्यपि च मानवः ।
सन्निपातेन चित्राणि विप्लुतानीव पश्यति ॥ ४४ ॥
बहुधा वा द्विधा वापि सर्वाण्येव समन्ततः ।
हीनाधिकाङ्गान्यथवा ज्योतींष्यपि च भूयसा ॥ ४५ ॥
पित्तं कुर्यात्परिम्लायि मूर्च्छितं पित्ततेजसा ।
पीता दिशस्तु खद्योतानादित्यं चापि पश्यति ॥ ४६ ॥
विकीर्यमाणान् खद्योतैर्वृक्षांस्तेजोभिरेव च ।
वक्ष्यामि षड्विधं रागैर्लिङ्गनाशमतः परम् ॥ ४७ ॥
रागोऽरुणो मारुतजः प्रदिष्टो म्लायी च नीलश्च तथैव पित्तात् ।
कफात्सितः शोणितजः सरक्तः समस्तदोषप्रभवो विचित्रः ॥ ४८
अरुणं मण्डलं दृष्ट्यां स्थूलकाचारुणप्रभम् ।
परिम्लायिनि रोगे स्यान्म्लायि नीलं च मण्डलम् ॥ ४९ ॥

दोषक्षयात् स्वयं तत्र कदाचित् स्यात्तु दर्शनम्।
अरुणं मण्डलं वाताच्चञ्चलं परुषं तथा॥ ५०॥
पित्ततो मण्डलं नीलं कांस्याभं पीतमेव च।
श्लेष्मणा बहुलं स्निग्धं शङ्खकुन्देन्दुपाण्डरम्॥ ५१॥
चलत्पद्मपलाशस्थः शुक्लो बिन्दुरिवाम्भसः।
मृद्यमाने तु नयने मण्डलं तद्विसर्पति॥ ५२॥
प्रवालपद्मपत्राभं मण्डलं शोणितात्मकम्।
दृष्टिरागो भवेच्चित्रो लिङ्गनाशे त्रिदोषजे।
यथास्वं दोषलिङ्गानि सर्वेष्वेव भवन्ति हि॥ ५३॥

पित्तेन दुष्टेन गतेन दृष्टिं पीता भवेद्यस्य नरस्य दृष्टिः।
पीतानि रूपाणि च तेन पश्येत् स वै नरः पित्तविदग्धदृष्टिः५
प्राप्ते तृतीयं पटलं तु दोषे दिवा न पश्येन्निशि वीक्षते सः।
रात्रौ स शीतानुगृहीतदृष्टिः पित्ताल्पभावादपि तानि पश्येत्
तथा नरः श्लेष्मविदग्धदृष्टिस्तान्येव शुक्लानि च मन्यते सः।
त्रिषु स्थितोऽल्पः पटलेषु दोषो नक्तान्ध्यमापादयति प्रसह्य५
दिवा स सूर्यानुगृहीतदृष्टिः पश्येच्च रूपाणि कफाल्पभावात्।
शोकज्वरायासशिरोभितापैरभ्याहता यस्य नरस्य दृष्टिः॥५७
धूम्रांस्तथा पश्यति सर्वभावान् स धूमदर्शीति नरः प्रदिष्टः।
यो ह्रस्वजाड्यो दिवसेषु कृच्छ्राद्ध्रस्वानि रूपाणि च तेन पश्येत्
विद्योतते यस्य नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत्।
चित्राणि रूपाणि दिवा स पश्येत् स वै विकारो नकुलान्ध्यसंज्ञः।
दृष्टिर्विरूपा श्वसनोपसृष्टा संकोचमभ्यन्तरतस्तु याति।
रुजावगाढा च तमक्षिरोगं गम्भीरिकेति प्रवदन्ति तज्ज्ञाः॥६
बाह्यौ पुनर्द्वाविह संप्रदिष्टौ निमित्ततश्चाप्यनिमित्ततश्च।
निमित्ततस्तत्र शिरोऽभितापाज्ज्ञेयस्त्वभिष्यन्दनिदर्शनः सः६
सुरर्षिगन्धर्वमहोरगाणां संदर्शनेनापि च भास्करस्य।

हन्येत दृष्टिर्मनुजस्य यस्य स लिङ्गनाशस्त्वनिमित्तसंज्ञः ॥६२॥
तत्राक्षि विस्पष्टमिवावभाति वैडूर्यवर्णा विमला च दृष्टिः ।
विकीर्यते सीदति भिद्यते च नृणामभीघातहता तु दृष्टिः॥६३॥

शुक्लभागगतैकादशनेत्ररोगलक्षणानि ।

प्रस्तार्यर्म तनु स्तीर्णं श्यावं रक्तनिभं सिते ।
सश्वेतं मृदु शुक्लार्म यच्छुक्ले वर्धते चिरात् ॥ ६४ ॥
पद्माभं मृदु रक्तार्म यन्मांसं चीयते सिते ।
पृथु मृद्वधिमांसार्म बहलं च यकृन्निभम् ।
स्थिरं प्रसारि मांसाढ्यं शुष्कं स्नाय्वर्म पञ्चमम् ॥ ६५ ॥
श्यावाः स्युः पिशितनिभास्तु बिन्दवो ये
शुक्त्याभाः सितनियताः स शुक्तिसंज्ञः ।
एको यः शशरुधिरोपमश्च बिन्दुः
शुक्लस्थो भवति तमर्जुनं वदन्ति ॥ ६६ ॥
कफमारुतकोपेन शुक्ले मांसं समुन्नतम् ।
पिष्टवत्पिष्टकं विद्धि मलाक्तादर्शसन्निभम् ॥ ६७ ॥
ज्वालाभः कठिनशिरो महान् सरक्तः
सन्तानः स्मृत इह जालसंज्ञितस्तु ।
शुक्लस्थाः सितपिडिका शिरावृता या-
स्ता ब्रूयादसितसमीपजाः शिराजाः ।
कांस्याभो मृदुरथ वारिबिन्दुकल्पो
विज्ञेयो नयनसिते बलाससंज्ञः ॥ ६८ ॥

नेत्रसन्धिगतनवरोगाणां लक्षणानि ।

पक्वः शोफः सन्धिजो यः सतोदः स्रवेत्पूयं सो हि पूयालसाख्यः।
ग्रन्थिः स्थूलो दृष्टिसन्धावपाकी कण्डूप्रायो नीरुजस्तूपनाहः६९
गत्वा सन्धीनश्रुमार्गेण दोषाः कुर्युः स्रावान् लक्षणैः स्वैरुपेतान्।
तं हि स्रावं नेत्रनाडीति चैके तस्य लिङ्गं कीर्तयिष्ये चतुर्धा ॥

पाकात्सन्धौ संस्रवेद्यस्तु पूयं पूयास्रावोऽसौ गदः सर्वजस्तु।
श्वेतं सान्द्रं पिच्छिलं यः स्रवेत्तु श्लेष्मास्रावोऽसौ विकारो मतस्तु॥
रक्तास्रावः शोणितोत्थो विकारः स्रवेदुष्णं तत्र रक्तं प्रभूतम्।
हरिद्राभं पीतमुष्णं जलाभं पित्तास्रावः संस्रवेत्सन्धिमध्यात्॥
ताम्रा तन्वी दाहशूलोपपन्ना ज्ञेया वैद्यैः पर्वणी वृत्तशोफा।
जाता सन्धौ कृष्णशुक्लेऽलजी स्यात्तस्मिन्नेव ख्यापिता पूर्वलिङ्गैः॥
कृमिग्रन्थिर्वर्त्मनः पक्ष्मणश्च कण्डूं कुर्युः कृमयः सन्धिजाताः।
नानारूपा वर्त्मशुक्लान्तसन्धौ चरन्त्यन्तर्लोचनं दूषयन्तः॥७४॥

वर्त्मगतैकविंशतिनेत्ररोगाणां लक्षणानि।

अभ्यन्तरमुखी ताम्रा बाह्यतो वर्त्मनश्च या।
सोत्सङ्गोत्सङ्गपिडिका सर्वजा स्थूलकण्डुरा॥ ७५॥
वर्त्मान्ते पिडिका ध्माता भिद्यन्ते च स्रवन्ति च।
कुम्भीकबीजसदृशाः कुम्भीकाः सान्निपातिकाः॥७६॥
स्राविण्यः कण्डुरा गुर्व्यो रक्तसर्षपसन्निभाः।
रुजावत्यश्च पिडिकाः पोथक्य इति संज्ञिताः॥ ७७॥
पिडिका या खरा स्थूला सूक्ष्माभिरभिसंवृता।
वर्त्मस्था शर्करा नाम सरोगो वर्त्मदूषकः॥ ७८॥
एर्वारुबीजप्रतिमाः पिडिका मन्दवेदनाः।
श्लक्ष्णाः खराश्च वर्त्मस्थास्तदर्शोवर्त्म कीर्त्यते॥ ७९
दीर्घाङ्कुरः खरः स्तब्धो दारुणोऽभ्यन्तरोद्भवः।
व्याधिरेषोऽभिविख्यातः शुष्कार्शो नाम नामतः॥८०
दाहतोदवती ताम्रा पिडिका या तु वर्त्मजा।
मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साऽञ्जननामिका॥८१
वर्त्मोपचीयते यस्य पिडिकाभिः समन्ततः।
सवर्णाभिः स्थिराभिश्च विद्याद्बहलवर्त्म तत्॥ ८२॥
कण्डूमताऽल्पतोदेन वर्त्मशोफेन यो नरः।

न स संछादयेदक्षि यत्रासौ वर्त्मबन्धकः ॥ ८३ ॥
मृद्वल्पवेदनं ताम्रं यद्वर्त्म सममेव च।
अकस्माच भवेद्रक्तं क्लिष्टवर्त्मेति तद्विदुः ॥ ८४ ॥
क्लिष्टं पुनः पित्तयुतं शोणितं विदहेद्यदा।
ततः क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्दमः ॥ ८५ ॥
वर्त्म यद्बाह्यतोऽन्तश्च श्यावं शूनं च जायते।
तदाहुः श्याववर्त्मेति वर्त्मरोगविशारदाः ॥ ८६ ॥
अरुजं बाह्यतः शूनं वर्त्म यस्य नरस्य हि।
प्रक्लिन्नवर्त्म तद्विद्यात्क्लिन्नमत्यर्थमन्ततः ॥ ८७ ॥
यस्य धौतानि धौतानि संबध्यन्ते पुनः पुनः।
वर्त्मान्यपरिपक्वानि अपरिक्लिन्नवर्त्म तत् ॥ ८८ ॥
विमुक्तसन्धि निश्चेष्टं वर्त्म यस्य न मील्यते।
एतद्वातहतं वर्त्म जानीयादक्षिचिन्तकः ॥ ८९ ॥
वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम्।
आचक्षीतार्बुदमिति सरक्तमवलम्बितम् ॥ ९० ॥
निमेषिणीः शिराः वायुः प्रविष्टः सन्धिसंश्रयाः।
प्रचालयति वर्त्मानि निमेषं नाम तं विदुः ॥ ९१ ॥
वर्त्मस्थो यो विवर्धेत लोहितो मृदुरङ्कुरः।
तद्रक्तजं शोणितार्शश्छिन्नं छिन्नं प्रवर्धते ॥ ९२ ॥
अपाकी कठिनः स्थूलो ग्रन्थिर्वर्त्मभवोऽरुजः।
लगणो नाम स व्याधिर्लिङ्गतः परिकीर्तितः ॥ ९३ ॥
त्रयो दोषा बहिः शोफं कुर्युश्छिद्राणि वर्त्मनः।
प्रस्रवन्त्यन्तरुदकं बिसवद्बिसवर्त्म तत् ॥ ९४ ॥
वाताद्या वर्त्मसंकोचं जनयन्ति मला यदा।
तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तं विदुः ॥ ९५ ॥

पक्ष्मगतरोगद्वयलक्षणम् ।

प्रचालितानि वातेन पक्ष्माण्यक्षि विशन्ति हि ।
घृष्यन्त्यक्षि मुहुस्तानि संरम्भं जनयन्ति च ॥ ९६ ॥
असिते सितभागे च मूलकोशात्पतन्त्यपि ।
पक्ष्मकोपः स विज्ञेयो व्याधिः परमदारुणः ॥ ९७ ॥
वर्त्मपक्ष्माशयगतं पित्तं रोमाणि शातयेत् ।
कण्डूं दाहं च कुरुते पक्ष्मशातं तमादिशेत् ॥ ९८ ॥

इति नेत्ररोगनिदानम् ॥

---

अथातो नेत्ररोगचिकित्सितं व्याख्यास्यामः ।

अभिष्यन्दे सामान्यचिकित्सा ।

लङ्घनालेपनस्वेदशिरोव्यधविरेचनैः ।
उपाचरेदभिष्यन्दानञ्जनाश्च्योतनादिभिः ॥ ९९ ॥

नेत्ररोगे लङ्घनम् ।

अक्षिकुक्षिभवा रोगाः प्रतिश्यायव्रणज्वराः ।
पञ्चैते पञ्चरात्रेण रोगा नश्यन्ति लङ्घनात् ॥ १०० ॥

नेत्ररोगे पाचनम् ।

स्वेदः प्रलेपास्तिक्तान्नं सेको दिनचतुष्टयम् ।
लङ्घनं चाक्षिरोगाणामामानां पाचनं परम् ॥ १०१ ॥

आमे नेत्ररोगेऽञ्जनादिनिषेधः ।

श्रीवासातिविषारोध्रैश्चूर्णितैरल्पसैन्धवैः ।
अव्यक्तेऽक्षिगदे कार्यं प्रोतस्थैर्गुण्ठनं वहिः ॥ १०२ ॥
अञ्जनं पूरणं क्वाथपानमामे न शस्यते ।

आश्च्योतनयोग्यावस्था ।

यद्याक्षिरोगं मन्येत सरुजं व्यक्तलक्षणम् ॥ १०३ ॥
वेदनानिग्रहार्थं च कुर्यादाश्चो[illegible]

वातजनेत्ररोगे बिल्वाद्य[illegible]

आश्च्योतनं मारुतजे क्वाथो [illegible]

कोष्णैः सैरण्डबृहतीतर्कारीमधुशिग्रुभिः।

नेत्ररोगे सेचनार्थमेरण्डादिक्षीरम्।

एरण्डपल्लवे मूले त्वचि चाजं पयः शृतम्॥ १०५॥
कण्टकार्याश्च मूलेषु सुखोष्णं सेचने हितम्।

अञ्जनयोग्यः कालः।

ततः संपक्वदोषस्य प्रातमञ्जनमाचरेत्॥ १०६॥
हेमन्ते शिशिरे चैव मध्याह्नेऽञ्जनमिष्यते।
पूर्वाह्ने चापराह्ने च ग्रीष्मे शरदि चेष्यते॥ १०७॥
वर्षास्वनभ्रे नात्युष्णे वसन्ते तु सदैव हि।

अञ्जनद्रव्यमात्रा।

हरेणुमात्रां कुर्वीत वर्तिं तीक्ष्णाञ्जने भिषक्॥ १०८॥
प्रमाणं मध्यमेऽध्यर्धं द्विगुणं च मृदौ भवेत्।
विडङ्गमात्रं ह्रस्वं तु मध्यं द्वावुत्तमं त्रयम्॥ १०९॥
रसक्रियाया वर्तीनां प्रमाणं परिकीर्तितम्।
वैरेचनिकचूर्णं तु द्विशलाकं विधीयते॥ ११०॥
मृदौ तु त्रिशलाका स्याच्चतस्रः स्नैहिकाञ्जने।

अञ्जनशलाकार्थे प्रशस्ता धातवः, अञ्जनशलाकालक्षणं च।

सुवर्णरौप्यताम्रायःकांस्यनागमयाः कृताः॥ १११॥
शलाका अञ्जने शस्ता अष्टाङ्गुलमिताः शुभाः।
वक्त्रतो मुकुलाकारा कलायपरिमण्डलाः॥ ११२॥

अञ्जनविधिः।

वामे करतले कृत्वा सजलं निकषोपमम्।
दक्षिणेनाञ्जनं गृह्य करेण निकषेच्छनैः॥ ११३॥
तेन कल्केन मतिमान् शलाकाग्रं प्रलिप्य च।
उत्थाप्य चोत्तरं वर्त्म वामेनाङ्गुलपर्वणा।
वर्त्मशुक्लान्तरे चाल्पां शलाकां संप्रवर्तयेत्॥ ११४॥

वाताक्षिरोगे बृहत्यादियोगः।

बृहत्येरण्डमूलत्वक्शिग्रोर्मूलं ससैन्धवम्।
अजाक्षीरेण पिष्टा स्याद्वर्तिर्वाताक्षिरोगनुत् ॥ ११५ ॥

अभिष्यन्दे हरिद्राद्यञ्जनम्।

हरिद्रे मधुकं द्राक्षा देवदारु च पेषयेत्।
आजेन पयसा पिष्टमभिष्यन्दे तदञ्जनम् ॥ ११६ ॥

पित्ताक्षिरोगे प्रपौण्डरीकादिसेकः।

प्रपौण्डरीकयष्ट्याह्वनिशामलकपद्मकैः।
शीतैर्मधुसमायुक्तैः सेकः पित्ताक्षिरोगजित् ॥ ११७

नेत्रशोफादौ द्राक्षाद्याश्चोतनम्।

द्राक्षामधुकमञ्जिष्ठाजीवनीयैः शृतं पयः।
प्रातराश्चोतनं पथ्यं शोफशूलाक्षिरोगिणाम् ॥ ११८

कफजनेत्ररोगप्रतीकारः।

कफजे लङ्घनस्वेदौ नस्यं तिक्तादिभोजनम्।
तीक्ष्णैः प्रधमनं कुर्यात्तीक्ष्णैश्चैवोपनाहनम् ॥ ११९ ॥

फणिज्झकास्फोतककपित्थबिल्वपत्तूरपीलुम्वरसार्जभृङ्गैः।
स्वेदं विदध्यादथवा च लेपं बर्हिष्ठशुण्ठीसुरदारुकुष्ठैः ॥ १२०

नेत्रशोफादौ शुण्ठ्यादिपिण्डः।

शुण्ठीनिम्बदलैः पिण्डः सुखोष्णैः सह सैन्धवैः।
धार्यश्चक्षुषि पिण्डोऽयं शोफकण्डूव्यथापहः ॥ १२१ ॥

कफजनेत्रशूले पारिजातादियोगः।

वल्कलं पारिजातस्य तैलं काञ्जिकसैन्धवम्।
कफजाताक्षिशूलघ्नं गिरिमं कुलिशं यथा ॥ १२२ ॥

नेत्ररोगे सैन्धवाद्याश्चोतनम्।

सिन्धूत्थरोध्रसितजीरकतिन्तिडीक-
पत्रं नवं दृषदि चूर्णितमम्बरस्थम्।
आश्चोतनं नयनयोरसकृत्प्रयुक्त-
मेतद्धि रुक्श्वयथुरोगविकारहारि ॥ १२३ ॥

ससैन्धवं रोध्रमथाज्यभृष्टं सौवीरपिष्टं सितवस्त्रबद्धम्।
आश्चोतनं तन्नयनस्य कुर्यात्कण्डूं च दाहं च रुजं च हन्यात्॥

कफजनेत्ररोगे रसाञ्जनाद्याश्चोतनम्।

रसाञ्जनं हरिद्रे द्वे श्वदंष्ट्रा विश्वभेषजम्।
आश्चोतनं कफहरं सुखोष्णं मधुसंयुतम्॥ १२५॥

वातरक्तजनेत्ररोगे एरण्डमूलाद्याश्चोतनम्।

एरण्डमूलं सफलप्ररोहं विजर्जरं क्षीरयुतं गवां च।
स्याद्वातरक्तापहमुग्रमेतदाश्चोतनं सद्भिषजो वदन्ति॥ १२६॥

पित्तरक्तजनेत्ररोगे प्रपौण्डरीकाद्याश्चोतनम्।

प्रपौण्डरीकं मधुकं हरिद्रा छागं पयो वाऽप्यथवापि नार्याः।
आश्चोतनं शर्करया विमिश्रं पित्तानिलार्तेर्विनिवृत्तये तु॥ १२७

वातकफजनेत्ररोगे तगराद्याश्चोतनम्।

नतं श्वदंष्ट्रा बृहतीद्वयं च ह्रीबेरमित्येकशतं त्वजानाम्।
क्षीरोदके सैन्धवसंप्रयुक्तमाश्चोतनं वातकफापहं स्यात्॥ १२८

पित्तरक्तवातजनेत्ररोगे दार्व्याद्याश्चोतनम्।

दार्वीहरिद्रात्रिफलं समुस्तं सशर्करं माक्षिकसंप्रयुक्तम्।
आश्चोतनं मानुषदुग्धमिश्रं पित्तास्रवाते तु भिषग्विदध्यात्॥
निम्बस्य पत्रैः परिलिप्य रोध्रं स्वेदाग्निना चूर्णमथापि कल्कम्।
आश्चोतनं मानुषदुग्धयुक्तं पित्तास्रवातापहमुग्रमुक्तम्॥ १३०॥

दोषविशेषेण क्रियाविशेषः।

सुखोष्णैर्वातजः पित्तरक्तजो मृदुशीतलैः।
तीक्ष्णरूक्षोष्णविशदैः प्रशाम्यति कफात्मकः॥ १३१॥
तीक्ष्णोष्णमृदुशीतानां व्यत्यासात्सान्निपातिकः।
कोष्णमाश्चोतनं मिश्रैर्भेषजैः सान्निपातिके॥ १३२॥

आश्चोतनकालो मात्रा च।

तस्य कालो दिवा सर्वो यामश्च प्रथमो निशि।
प्रकुञ्चः श्लैष्मिके व्याधौ पाणिशुक्तिश्च वातिके॥१३३॥

आश्चोतनप्रमाणं स्याद् द्वे शुक्ती चाष्टपञ्चिके ।
अथवाऽऽश्चोतनं यावद्दीयमानं सहेन्नरः ॥ १३४ ॥
अहोरात्रे तच्च सकृद्द्विस्त्रिर्वासरमुच्यते ।
लेखने सप्त चाष्टौ वा बिन्दवः स्नैहिके दश ॥ १३५ ॥
आश्चोतने प्रयोक्तव्या द्वादशैव तु रोपणे ।

आश्चोतनसम्यग्योगलक्षणानि ।

सम्यगाश्चोतने युक्ते वैमल्यं नेत्रयोर्भवेत् ॥ १३६ ॥
वेदनोपशमो व्याधिनिवृत्तिर्नेत्रलाघवम् ।

आश्चोतनस्य मिथ्यातियोगलक्षणानि ।

मिथ्याकृतेऽथवा वृद्धिर्गौरवाविलनेत्रता ॥ १३७ ॥
अतीवाश्चोतिते नेत्रे रागदोषपरिस्रवाः ।

रक्ताभिष्यन्दे सेकादियोगः ।

तिरीटत्रिफलायष्टिशर्कराभद्रमुस्तकैः ॥ १३८ ॥
पिष्टैः शीताम्बुना सेको रक्ताभिष्यन्दनाशनः ।

रक्ताभिष्यन्दे कसेर्वाद्याश्चोतनम् ।

कसेरुमधुकानां च चूर्णमम्बरसंयुतम् ॥ १३९ ॥
न्यस्तमप्स्वन्तरिक्षासु हितमाश्चोतनं भवेत् ।

रक्ताभिष्यन्दप्रतीकारः ।

तिक्तस्य सर्पिषः पानं बहुशश्च विरेचनम् ॥ १४० ॥
अक्ष्णोरपि समन्ताच्च पातनं च जलौकसाम् ।
पित्ताभिष्यन्दशमनो विधिश्चाप्युपपादितः ॥ १४१ ॥

सर्वनेत्ररोगे शिग्रुपत्रयोगः ।

शिग्रुपत्ररसैः सेकः सर्वनेत्ररुजापहः ।
शिग्रुपल्लवनिर्यासः सुघृष्टस्ताम्रसंपुटे ।
घृतेन धूपितो हन्ति शोफहर्षाश्रुवेदनाः ॥ १४२ ॥
वातपित्तकफसन्निपातजां नेत्रयोर्बहुविधामपि व्यथाम् ।
शीघ्रमेव जयति प्रयोजितः शिग्रुपल्लवरसः समाक्षिकः ॥१४३॥

सर्वनेत्ररोगे पथ्यादिलेपः।

पथ्यागैरिकसिन्धूत्थदार्वीतार्क्ष्यैः समांशकैः।
जलपिष्टैर्बहिर्लेपः सर्वनेत्रामयापहः॥ १४४॥

वेदनानिग्रहार्थं तमालपत्रादिलेपः।

पत्रं स्थौणेयकं कुष्ठं मालतीभाविताऽस्तिलाः।
वेदनानिग्रहे लेपः कोष्णोऽयं स्नेहसंयुतः॥ १४५॥

नेत्रशूले श्वेतरोध्रप्रयोगः।

श्वेतरोध्रं घृतभृष्टं चूर्णितं तान्तवस्तुतम्।
उष्णाम्बुना विमृदितं सेकः शूलहरः परः॥ १४६॥

सर्वनेत्ररोगे प्रपौण्डरीकादिसेकः।

प्रपौण्डरीकयष्ट्याह्वदार्वीरोध्राब्दचन्दनैः।
एरण्डाम्बुयुतः सेकः सर्वनेत्ररुजापहः॥ १४७॥

नेत्रकोपे निम्बपत्रादिवटिका।

पिष्टैर्निम्बस्य पत्रैरतिविमलतरैर्जातिसिन्धूत्थमिश्रै-
रन्तर्गर्तं दधाना पटुतरगुटिका भृष्टरोध्रेण घृष्टा।
तूलैः सौवीरसान्द्रैरतिशयमृदुभिर्वेष्टिता सा समन्ता-
च्चक्षुःकोपोपशान्तिं चिरमुपरि दृशो भ्राम्यमाणा करोति॥
यथास्यौषधचूर्णस्य मात्रां बदरसंमिताम्।
विशुद्धे मृदुनि क्षौमे बद्ध्वा चाक्षि स्पृशेन्नरः।
परिदाहोऽश्रुपातश्च रागः शोथश्च शाम्यति॥ १४९॥

नवनेत्रकोपे ताम्बूलादियोगः।

ताम्बूलशिग्रुकरवीरशिरीषदन्ती-
श्यामादधित्थसुरसासुमनार्जकानाम्।
प्रत्येकशो मधुयुतः स्वरसोऽञ्जनेन
कोपं नवं नयनयोः सहसैव हन्ति॥ १५०॥

अक्षिकोपे करवीरादियोगः।

सद्यः प्रकुपिते नेत्रे करवीराग्रपल्लवैः।
अञ्जयेच्छान्तये यावन्मुखं हि तिक्तकं भवेत् ॥ १५१॥

अक्षिकोपे तुत्थादिचूर्णाञ्जनम्।

तुत्थकमधुकामलकं बदरीपत्रं च संपुटे दग्धम्।
उत्कुपितमात्रलोचनरोगप्रतिघाति तच्चूर्णम् ॥ १५२ ॥

नेत्रशोफादौ बिल्वपत्रादियोगः।

बिल्वपत्ररसः पूतः साज्यः सिन्धुबलान्वितः।
शोथे वराटिकाघृष्टो धूपितो गोमयाग्निना ॥ १५३ ॥
पयसाऽऽलोडितः श्लक्ष्णः पूरणाच्छोथशूलनुत्।
अभिष्यन्देऽधिमन्थे च स्रावे रक्ते च शस्यते ॥ १५४ ॥

अक्षिकोपेऽरण्यकुलत्थयोगः।

वस्त्रबद्धं शकृद्वारिस्विन्नारण्यकुलत्थजम्।
चूर्णं सद्योऽक्षिकोपघ्नं निशीथे योजितं सकृत् ॥ १५५॥
सलवणकटुतैलं काञ्जिकं कांस्यपात्रे
घटितमुपलघृष्टं धूपितं गोमयाग्नौ।
सपवनकफकोपं छागदुग्धावसिक्तं
जनयति न च शूलं स्रावशोफं सरागम् ॥ १५६ ॥

अभिष्यन्दचिकित्साया अधिमन्थेऽप्यतिदेशः।

अयमेव विधिः सर्वो मन्थादिष्वपि शस्यते।

अधिमन्थे दाहविधानम्।

अशान्ते सर्वथा मन्थे भ्रुवोरुपरि दाहयेत् ॥ १५७ ॥

नेत्रपाकचिकित्सा

जलौकापातनं शस्तं नेत्रपाके विरेचनम्।
शिराव्यधं वा कुर्वीत सेकान् लेपांश्च शुक्रवत् ॥ १५८

षडङ्गगुग्गुलुः।

विभीतकशिवाधात्रीपटोलारिष्टवासकैः।
क्वाथो गुग्गुलुना पेयः शोथाक्षिपाकशूलहा ॥ १५९ ॥

पिल्लं च सव्रणं शुक्रं रागादींश्च विनाशयेत् ।
एतैरेव घृतं पक्वं रोगांस्तांस्ताञ्जयेद्भृशम् ॥ १६० ॥

रक्तस्रावे वासादियोगः ।

आटरूपाभयानिम्बधात्रीमुस्ताक्षकल्कैः ।
रक्तस्रावं कफं हन्ति चक्षुष्यं वासकादिकम् ॥ १६१ ॥

अभिष्यन्दादौ त्रिफलाक्वाथः ।

पथ्यास्तिस्रो बिभीतकाः षड् धात्र्यो द्वादशेति च ।
प्रस्थार्धसलिले क्वाथ्यमष्टभागावशेषितम् ॥ १६२ ॥
पीत्वाऽभिष्यन्दमास्रावं रागं च तिमिरं जयेत् ।
संरम्भशूलरागाश्रुनाशनं दृक्प्रसादनम् ॥ १६३ ॥

सर्वनेत्ररोगे दार्वीसेकः ।

षोडशभिः सलिलपलैः पलं तथैकं कटङ्कटेर्याः सिद्धम् ।
सेकोऽष्टभागशिष्टः क्षौद्रयुतः सर्वदोषहरः ॥ १६४ ॥

नेत्राभिघातचिकित्सा ।

नेत्रे त्वभिहते कुर्याच्छीतमाश्चोतनं हितम् ।
दृष्टिप्रसादजननं विधिमाशु कुर्यात्
स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः ।
स्वेदाग्निधूमभयशोकरुजाभितापै-
रभ्याहतामपि तथैव भिषक्चिकित्सेत् ॥ १६५ ॥

तिमिरे चित्रकादिकषायः ।

चित्रकमूलत्रिफलापटोलयवसाधितं पिबेदम्बु ।
सघृतं निशि चक्षुष्यं तिमिरं च विशेषतो हन्ति ॥ १६६ ॥

सर्वनेत्ररोगे वासादिकषायः ।

वासानिम्बपटोलपत्रकटुकागाङ्गेयवत्सादनी-
भूनिम्बेन्द्रयवाग्निदारुरजनीधात्र्यक्षपथ्याह्वयम् ।
शुण्ठीवत्सकरक्तचन्दनयुतं निष्क्वाथ्यमष्टांशकं
प्रातःपीतं विनिहन्ति नेत्रजनितान्रोगानशेषान्बहून् ॥

तिमिरपटलकण्डूनीलिकासन्दमन्थान्
द्विविधमपि च शुक्रं सव्रणं चाव्रणं च ।
सुचिरजमथ पिल्लं पिष्टकं चार्जुनं च
द्रुततरमुपहन्यादाहशूलाश्रुरोगान् ॥ १६८ ॥

आगन्तुजनेत्ररोगचिकित्सा ।

आगन्तुदोषं प्रसमीक्ष्य कार्यं वक्त्रोष्मणा स्वेदनमादितस्तु ।
आश्चोतनं स्त्रीपयसा च सद्यो यच्चापि पित्तक्षतजापहं स्यात् ॥
सूर्योपरागानलविद्युदादिविलोकनेनोपहतेक्षणस्य ।
संतर्पणस्निग्धहिमादिकार्यं सायं निषेव्यास्त्रिफलाप्रयोगाः १७०

अभिघातजाक्षिशूले नेत्रपूरणम् ।

निशाब्दत्रिफलादार्वीसितामधुकसंयुतम् ।
अभिघाताक्षिशूलघ्नं नारीक्षीरेण पूरणम् ॥ १७१ ॥

अभिघातजनेत्ररोगस्य साध्यासाध्यविचारः ।

प्रथमे पटले दोषः साध्यः स्यादभिघातजः ।
द्वितीये पटले याप्यस्तृतीये तु न सिध्यति ॥ १७२ ॥

शुष्कपाके सैन्धवाद्यञ्जनम् ।

सैन्धवं दारु शुण्ठी च मातुलुङ्गरसो घृतम् ।
स्तन्योदकाभ्यां कर्तव्यं शुष्कपाके तदञ्जनम् ॥ १७३ ॥

अम्लाध्युषितचिकित्सा ।

अम्लाध्युषितशान्त्यर्थं कुर्याल्लेपान् सुशीतलान् ।
तैल्वकं त्रैफलं सर्पिर्जीर्णं वा केवलं पिबेत् ॥ १७४ ॥
शिरावेधं विना कार्यः पित्तस्यन्दहरो विधिः ।

शिरोत्पातचिकित्सा ।

सर्पिः क्षौद्रं चाञ्जनं स्याच्छिरोत्पातस्य भेषजम् ॥ १७५ ॥
तद्वत्सैन्धवकासीसं स्तन्यपिष्टं प्रपूजितम् ।

शिराहर्षचिकित्सा ।

शिराहर्षेऽञ्जनं कुर्यात्फाणितं मधुसंयुतम् ॥ १७६ ॥

मधुना तार्क्ष्यशैलं वा कासीसं वा समाक्षिकम् ।
वेतसाम्लस्तन्ययुक्तं फाणितं तु ससैन्धवम् ॥ १७७ ॥

नेत्ररोगे तर्पणविधिः ।

गव्यक्षीरोत्थितं सर्पिस्तर्पणार्थं विधीयते ।
दृष्टिप्रसादनं श्रेष्ठं तिमिरस्यापकर्षकम् ॥ १७८ ॥
अभिष्यन्दाधिमन्थाभ्यां कर्षितेऽक्ष्णि बलावहम् ।
दोषानुत्सादयत्याशु तथैवाशु नियच्छति ॥ १७९ ॥
उत्तानशायिनः कार्यं निश्चलस्य यथासुखम् ।
प्रतिसूर्याग्निरहिते नीरजोधूममारुते ॥ १८० ॥
गृहे सुखे निराबाधे वीतक्रोधभयस्य च ।
माषपिष्टमयाधारं दृढीकृत्यापरिश्रवम् ॥ १८१ ॥
अर्धाङ्गुलोर्ध्वविस्तारं मूले ऽङ्गुलमेव च ।
प्रमाणेनाक्षिकोशस्य यच्च स्यान्नाक्षिरोगकृत् ॥ १८२ ॥
पक्ष्माणि यावन्मज्जन्ति रोमान्तादाश्रुतस्तथा ।
ततो वस्त्रेण पीतेन नीलेन हरितेन वा ॥ १८३ ॥
यत्नैराच्छाद्य नयने ततः पश्येद्यथासुखम् ।
यावत्सहस्रमात्रा स्याद्धारयेन्मारुतामये ॥ १८४ ॥
पित्तजे रक्तजे चाष्टौ कफजे षट्शतानि च ।
सन्निपातात्मके षट् च पञ्च स्वस्थविधौ तथा ॥ १८५॥
ततश्चापाङ्गतः स्नेहं स्रावयित्वाऽक्षि रोहयेत् ।
प्रायोगिकेण धूमेन कफं चास्य विशोधयेत् ॥ १८६ ॥
स्वस्थचित्ते विधातव्यं ह्यन्तरं तर्पणं भवेत् ।
अहन्यहनि वातोत्थे पित्तरक्ते दिनान्तरे ॥ १८७ ॥
तर्पणं सन्निपातोत्थे ह्यन्तरं त्र्यन्तरं कफे ।
कदुष्णं कफवाते तु शीतलं पित्तशोणिते ॥ १८८ ॥

---

१ 'पत्रैराच्छाद्य' ख. ।

सुखस्वप्नावबोधत्वं वैशद्यं चाक्षिपाटवम् ।
निवृत्तिर्व्याधिसंशान्तिः क्रियालाघवमेव च ॥ १८९ ॥
तर्पणे तृप्तिलिङ्गानि श्लेष्मातादि लक्षयेत् ।

व्रणशुक्रे षडङ्गगुग्गुलुः ।

व्रणशुक्रप्रशान्त्यर्थं षडङ्गं गुग्गुलुं पिबेत् ।

व्रणशुक्रे कतकाद्यञ्जनम् ।

कतकस्य फलं शङ्खं तिल्वकं रौप्यमेव च ॥ १९० ॥
कांस्ये निघृष्टं स्तन्येन घ्नतशुक्राक्षिरागजित् ।

व्रणशुक्रे चन्दनाद्या वर्तिः ।

चन्दनं गैरिकं लाक्षा मालतीकलिकान्विता ॥ १९१ ॥
व्रणशुक्रहरा वर्तिः शोणितस्य प्रसादनी ।

शुक्रे तमालपत्राद्या वर्तिः ।

तमालपत्रं गोदन्तं शङ्खः फेनोऽस्थि गार्दभम् ॥ १९२ ॥
ताम्रं च बस्तमूत्रेण वर्तिः शुक्रविनाशिनी ।

व्रणशुक्रे रत्नाद्या वर्तिः ।

रत्नानि दन्ताः शृङ्गाणि धातवस्त्र्यूषणं त्रुटिः ॥ १९३ ॥
करञ्जबीजं लशुनं व्रणसादि च भेषजम् ।
सव्रणव्रणगम्भीरत्वक्स्थशुक्रघ्नमञ्जनम् ॥ १९४ ॥

शुक्रे वृहत्याद्यञ्जनम् ।

वार्ताकीरजनीशङ्खशिलामरिचसैन्धवैः ॥
[illegible] ॥ १९५ ॥

क्षतशुक्रादौ पुण्डरीकयोगः।

एकं वा पुण्डरीकं च छागक्षीरावसेचितम् ॥ १९७ ॥
रोगांश्च वेदनां हन्यात्क्षतपाकात्ययाजकान्।

क्षतशुक्रेऽवसादनो गणः।

कासीसं सैन्धवं किण्वं कुरुविन्दो मनःशिला ॥ १९८ ॥
कुक्कुटाण्डकपालानि सुमनोमुकुलानि च।
फले शैरीषकारञ्जे धातुचूर्णानि यानि च ॥ १९९ ॥
व्रणेपून्नतमांसेषु प्रशस्तान्यवसादने।

शुक्रे भद्रमुस्तायोगः।

छागमूत्रेण संघृष्टभद्रमुस्ताञ्जनेन हि।
चिरकालोद्भवं पुष्पं रक्तत्वं चापि नश्यति ॥ २०० ॥

शुक्रे धात्रीफलादिसेचनकषायः।

धात्रीफलं निम्बकपित्थपत्रं यष्ट्याह्वरोध्रं कदरं तिलाश्च।
क्वाथः सुशीतो नयनेऽभिषिक्तः सर्वप्रकारं विनिहन्ति शुक्रम्॥

नेत्रपाके जातीपुष्पाद्यञ्जनम्।

जात्याः पुष्पं सैन्धवं शृङ्गवेरं कृष्णाबीजं कीटशत्रोश्च सारम्।
एतत्पिष्ट्वा नेत्रपाकेऽञ्जनार्थं क्षौद्रोपेतं निर्विशङ्कैः प्रयोज्यम् ॥

शुक्रे तुत्थयोगः।

तुत्थकं वारिणा घृष्टं शुक्रं हन्त्याक्षिपूरणात्।

शुक्रघ्नी वर्तिः।

समुद्रफेनदक्षाण्डत्वविसन्धूत्थैः सशङ्खकैः ॥ २०३ ॥
शिग्रुबीजयुतैर्वर्तिः शुक्रघ्नी शिग्रुवारिणा।

शुक्रादौ विलेखनाञ्जनम्।

दक्षाण्डत्वक्शिलाशङ्खकाचचन्दनगैरिकैः ॥ २०४ ॥
तुल्यैरञ्जनयोगोऽयं पुष्पार्मादिविलेखनः।

शुक्रे शिरीषादिप्रघर्षणम्।

शिरीषबीजमरिचपिप्पलीसैन्धवैरपि ॥ २०५ ॥

शुक्रप्रघर्षणं कार्यमथवा सैन्धवेन च।

शुक्रे करञ्जादिवर्तिः।

गृहीत्वा नक्तमालस्य पलचूर्णं सुसाधितम् ॥ २०६ ॥
रसेन हि पलाशस्य कुसुमोत्थेन बुद्धिमान्।
वर्तिर्नेत्राञ्जने योज्या आसन्नकुसुमापहा ॥ २०७ ॥

क्षतशुक्रे दन्तवर्तिः।

दन्तैर्दन्तिवराहोष्ट्रगवाश्वाजखरोद्भवैः।
सशङ्खमौक्तिकाम्भोधिफेनमरिचपादकैः ॥ २०८ ॥
क्षतशुक्रमपि व्यापि दन्तवर्तिर्निवर्तयेत्।

शुक्रे सेचनयोगः।

क्षुण्णपुन्नागपत्रेण परिभावितवारिणा ॥ २०९ ॥
श्यामाकाथाम्बुना वाऽथ सेचनं शुक्रनाशनम्।

शुक्रे शङ्खादिचूर्णाञ्जनम्।

शङ्खस्य भागाश्चत्वारस्ततोऽर्धेन मनःशिला ॥ २१० ॥
मनःशिलार्धं मरिचं मरिचार्धेन सैन्धवम्।
एवं चूर्णाञ्जनं श्रेष्ठं शुक्रलेखनमुत्तमम् ॥ २११ ॥

शुक्रे स्वर्णमाक्षिकाद्याश्चत्वारोऽञ्जनयोगाः।

ताप्यं मधूकसारो वा बीजं चाक्षस्य सैन्धवम्।
मधुनाऽञ्जनयोगाः स्युश्चत्वारः शुक्रशान्तये ॥ २१२॥

शुक्रे कृष्णीकरणमञ्जनम्।

तालस्य नालिकेरस्य तथैवारुष्करस्य च।
करवीरस्य वंशानां कृत्वा क्षारं परिश्रुतम् ॥ २१३ ॥
करभास्थिकृतं चूर्णं क्षारेण परिभावितम्।
सप्तकृत्वोऽष्टकृत्वो वा श्लक्ष्णचूर्णं तु कारयेत् ॥ २१४॥
एतच्छुक्रेषु साध्येषु कृष्णीकरणमुत्तमम्।
यानि शुक्राण्यसाध्यानि तेषां परममञ्जनम् ॥ २१५ ॥

अजकाजाते सैन्धवादियोगः ।

सैन्धवं वाजिपादं वा गोरोचनसमन्वितम् ।
शेलुत्वग्रससंयुक्तं पूरणं चाजकापहम् ॥ २१६ ॥

शुक्रादौ शशकाद्यं घृतम् ।

शशकस्य कषायेण सर्पिषः कुडवं पचेत् ।
यष्टीप्रपौण्डरीकस्य कल्केन पयसा समम् ॥ २१७ ॥
छगल्याः, पूरणाच्छुक्रक्षतपाकाजकात्ययान् ।
हन्ति भ्रूशङ्खशूलं च दाहं रागं विशेषतः ॥ २१८ ॥

तिमिरादौ कृष्णाद्यं तैलम् ।

कृष्णाविडङ्गमधुयष्टिकसिन्धुजन्म-
विश्वौषधैः पयसि सिद्धमिदं छगल्याः ।
तैलं नृणां तिमिरशुक्रशिरोक्षिशूल-
पाकात्ययाञ्जयति नस्यविधौ प्रयुक्तम् ॥ २१९ ॥

शुक्रादौ शोणितस्रावः ।

न विना शोणितं शुक्रक्षतपाकात्ययाजकाः ।
भवन्ति रुधिरं तेषु जलौकोभिरतो हरेत् ॥ २२० ॥

तिमिरस्य साध्यासाध्यादिविचारः ।

मूलं दृष्टिविनाशाय तिमिरं समुदाहृतम् ।
ऋषिभिस्त्वरितं तस्मात्तस्य कुर्याच्चिकित्सितम् ॥२२१॥
एकदेशे तु यो दोषो दृष्ट्यां तिष्ठति पिण्डितः ।
यत्संस्थानः स भवति तादृशं तेन पश्यति ॥ २२२ ॥
तृतीये पटले काचं चतुर्थे नीलिकाद्वयम् ।
साध्यमप्राप्तरागं स्यात्तिमिरं हि क्रियावतः ।
याप्यं संप्राप्तरागं स्याद्वर्ज्यं पाटलतां गतम् ॥ २२३ ॥

तिमिरे पथ्यम् ।

त्रिफला घृतं मधु यवाः पादाभ्यङ्गः शतावरी मुद्गाः ।
चक्षुष्यः संक्षेपाद्वर्गः कथितो भिषग्भिरयम् ॥ २२४ ॥

जीवन्तीशाकं सुनिषण्णकं च सतण्डुलीयं वरवास्तुकं च।
चिल्ली तथा मूलकपोतिका च दृष्टेर्हितं शाकुनजाङ्गलं च २२५
पटोलकर्कोटककारवेल्लवृन्ताककर्कोरिकरीरजानि।
शाकानि शिग्रुर्नलकानि चैव हितानि दृष्टेर्घृतसाधितानि २२६

तिमिरे त्रिफलायोगाः।

तिमिरं रागतां याति रागः काचत्वमेव च।
काचात्संजायते नीली तदाऽन्धो जायते नरः॥ २२७॥
लिह्यात्सदा च त्रिफलां सुचूर्णितां
घृतप्रगाढां तिमिरे च पित्तजे।
समीरजे तैलयुतां कफात्मके
मधुप्रगाढां विदधीत युक्तितः॥ २२८॥
कल्कः कार्योऽथवा चूर्णं त्रिफलाया निषेवितम्।
मधुना हविषा वाऽपि समस्ततिमिरान्तकृत्॥ २२९॥
त्रैफलेनाथ हविषा लिहानस्त्रिफलां निशि।
यष्टीमधुकसंयुक्तां मधुना च परिप्लुताम्॥ २३०॥
मासमेकं हिताहारः पिबन्नामलकोदकम्।
सौपर्णं लभते चक्षुरित्याह भगवान्निमिः॥ २३१॥
त्रिफलाक्वाथकल्केन सपयस्कं घृतं शृतम्।
तिमिराण्यचिराद्धन्यात्कृतं पीतं निशामुखे॥ २३२॥
शतावरीपायस एव केवलस्तथा कृतो वाऽऽमलकेषु पायसः।
प्रभूतसर्पिस्त्रिफलोदकोत्तरो यवौदनं वा तिमिरं व्यपोहति२३३
त्रिफलाऽयोरजोयष्टीसर्पिःक्षौद्रसमन्विता।
दिनान्ते शीलिता वृष्या सर्वनेत्रगदाञ्जयेत्॥ २३४॥
घृतं पुराणं त्रिफलां शतावरीं पटोलमुद्गामलकं यवानपि।
निषेवमाणस्य नरस्य यत्नतो भयं सुघोरात्तिमिरान्न विद्यते२३५
यस्त्रैफलं चूर्णमपथ्यवर्जी
सायं समश्नाति हविर्मधुभ्याम्।

स मुच्यते नेत्रगतैर्विकारै-
र्भृत्यैर्यथा क्षीणधनो नरेन्द्रः ॥ २३६ ॥

जाता रोगा विनश्यन्ति न भवन्ति कदाचन ।
त्रिफलायाः कषायेण प्रातर्नयनधारणात् ॥ २३७ ॥
जलगण्डूषैः प्रातर्बहुशोऽम्भोभिः प्रपूर्य मुखम् ।
निर्दयमुक्षन्नक्षि क्षपयति तिमिराणि ना सद्यः ॥ २३८ ॥

भुक्त्वा पाणितलं घृष्य चक्षुषोर्यदि दीयते ।
अचिरेणैव तद्वारि तिमिराणि व्यपोहति ॥ २३९ ॥

तिमिरादौ सुखावती वर्तिः ।

कतकस्य फलं शङ्खं सैन्धवं त्र्यूषणं सिता ।
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला ॥ २४० ॥
सर्वमेतत्समं कृत्वा छागीक्षीरेण पेषयेत् ।
तिमिरं पटलं काचं मलं चार्म व्यपोहति ॥ २४१ ॥
कण्डूक्लेदार्बुदं हन्ति शुक्रं चाशु सुखावती ।

तिमिरादौ वृहच्चन्द्रोदया वर्तिः ।

हरीतकी वचा कुष्ठं पिप्पली मरिचानि च ।
विभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला ॥ २४२ ॥
सर्वमेतत्समं कृत्वा छागीक्षीरेण पेषयेत् ।
नाशयेत्तिमिरं शुक्रं पटलान्यर्बुदानि च ॥ २४३ ॥
अधिकानि च मांसानि यच्च रात्रौ न दृश्यते ।
अपि द्विवार्षिकं पुष्पं मासेनैकेन नाशयेत् ॥ २४४ ॥
वर्तिश्चन्द्रोदया नाम नृणां दृष्टिविशोधिनी ।

तिमिरादौ लघुचन्द्रोदया वर्तिः ।

रसाञ्जनं सशैलेयं कुङ्कुमं समनःशिलम् ।
शङ्खं सश्वेतमरिचं शर्करा चात्र सप्तमी ॥ २४५ ॥
एषा चन्द्रोदया नाम वर्तिर्विदेहनिर्मिता ।
हन्यात्पिल्लं च कण्डूं च तिमिरं चापि सेविता ॥ २४६ ॥

तिमिरादौ लघुभानुमती वर्तिः ।

बीजं करञ्जवृक्षस्य निस्तुषं द्विदलीकृतम् ।
चूर्णितं भावयेत्सम्यक्तुल्याञ्जनदशांशकम् ॥ २४७ ॥
जातीरसे त्रिसप्ताहं पिष्ट्वा तेनैव कल्पिता ।
वर्तिर्भानुमती नाम छायायां परिशोषिता ॥ २४८ ॥
तोयघृष्टाऽञ्जनाद्धन्ति तिमिरं भास्करो यथा ।
सुखस्वप्नावबोधं च कुरुते शीलिता ध्रुवम् ॥ २४९ ॥

बृहद्भानुमती वर्तिः ।

शुक्लोपला जलनिधिप्रभवश्च फेनः
शैलेयचन्दनयुता खलु शङ्खनाभिः ।
भागानिमान् समरिचान् समनःशिलांशान्
कुर्याद्रसाञ्जनचतुर्गुणसंप्रयुक्तान् ॥ २५० ॥
नक्तान्ध्यपिल्लतिमिरक्षतकाचकण्डू-
शुक्लाक्षिपाककफदोषकृतांश्च रोगान् ।
भानुर्यथैव तिमिराण्यपहन्ति नूनं
मध्वायुता जयति भानुमतीह वर्तिः ॥ २५१ ॥

कुमारीवर्तिः ।

स्याद्भया तुत्थसमा तुत्थाद्प्यष्टमो मरिचभागः ।
वर्तिरियं हि कुमारी गतमपि चक्षुर्निवर्तयति ॥ २५२ ॥

तिमिरे चतुर्दशाङ्गी वर्तिः

मधुकरसाञ्जनताम्रत्रिकटुविडङ्गपुण्डरीकाणि ।
सलवणतुत्थत्रिफलारोध्राणि नमोऽम्बुपिष्टानि ॥ २५३ ॥
वर्तिश्चतुर्दशाङ्गी नयनामयनाशिनी शिलास्तम्भे ।
लिखिता हिताय जगतस्तिमिरापहा विशेषेण ॥ २५४ ॥

तिमिरे पञ्चशतावर्तिः ।

नीलोत्पलपत्रशतं मुद्गशतं यवशतं च निस्तुषकम् ।
मालत्याः कुसुमशतं पिप्पल्यास्तन्दुलशतं च ॥ २५५ ॥

पञ्चशतैषा वर्तिर्लिखिता यवनैः शिलास्तम्भे ।
अन्धमनन्धं कुरुते यस्य च नोत्पाटिते नयने ॥ २५६ ॥

तिमिरे विमलावर्तिः ।

एकः पिप्पलिभागो द्विगुणा त्वभया यकृच्च त्रिगुणम् ।
अभयातुल्यं तार्क्ष्यं विमला तिमिरापहा वर्तिः ॥ २५७ ॥

तिमिरे अपराजिता वर्तिः

अभयानां पलं दद्यात्तुत्थकाच्च शुभात्पलम् ।
तार्क्ष्यशैलार्धकर्षश्च तत्समं मरिचं सितम् ॥ २५८ ॥
अभयावर्तिरित्येषा जलपिष्टाऽपराजिता ।
कण्डूतिमिरकाचार्मपिछाभिष्यन्दनाशिनी ॥ २५९ ॥

तिमिरे दृष्टिप्रदावर्तिः

हरीतकी हरिद्रा च पिप्पल्यो मरिचानि च ।
कण्डूतिमिरजिद्वर्तिर्न क्वचित्प्रतिहन्यते ॥ २६० ॥

तिमिरे दृष्टिप्रदा वर्तिः ।

त्रिफलाकुक्कुटाण्डत्वक्कासीसमयसो रजः ।
नीलोत्पलं विडङ्गानि फेनं च सरितां पतेः ॥ २६१ ॥
आजेन पयसा पिष्ट्वा भावयेत्ताम्रभाजने ।
सप्तरात्रस्थितं भूयो पिष्ट्वा क्षीरेण वर्तयेत् ॥ २६२ ॥
एषा दृष्टिप्रदा वर्तिरन्धस्याभिन्नचक्षुषः ।

तिमिरे कुसुमिका वर्तिः

अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलितन्दुलाः ।
जातीपुष्पाणि पञ्चाशन्मरिचानि च षोडश ॥ २६३ ॥
एषा कुसुमिका वर्तिर्गतं चक्षुर्निवर्तयेत् ।

तिमिरादौ श्रीनागार्जुनी चतुर्दशाङ्गी वर्तिः

त्रिफलाव्योषसिन्धूत्थयष्टीतुत्थरसाञ्जनम् ।
प्रपौण्डरीकं जन्तुघ्नं रोध्रं ताम्रं चतुर्दशम् ॥ २६४ ॥
द्रव्याण्येतानि संचूर्ण्य वर्तिः कार्या नभोऽम्बुना ।
नागार्जुनेन लिखिता स्तम्भे पाटलिपुत्रके ॥ २६५ ॥

तिमिरे गुञ्जामूलयोगः।

गुञ्जामूलं बस्तमूत्रेण पिष्टं निर्घृष्टं वा वारिणा भद्रमुस्ता।
आन्ध्यं सद्यस्तिमिरं हन्ति पुंसामत्युद्गाढं नेत्रयोरञ्जनेन॥ ३७७

पटले द्रोणपुष्पीयोगः।

हरति पटलमक्ष्णोस्तन्दुलाम्बुप्रपिष्टा
सिचयगलितसारा नावनाद्द्रोणपुष्पी।
शमयति च रसोऽस्या नेत्रयोरञ्जनेन
प्रसभमपि चिरोत्थं कामलारोगमाशु॥ ३७८॥

कामलायां कतिपययोगाः।

अङ्कोलमूलमथवाऽर्कजटा भपिष्टा
सच्छेन तन्दुलजलेन सुसंप्रयत्नात्।
स्यात्कामलामयहरी कृतनावनाना-
माघ्रातमात्रमपि जालिनिकाफलं वा॥ ३७९॥

जीमूतकेन सहितं निशि स्थितं वारि कामलां हरति।
शिशिरजलपिष्टमथवा नस्येन कुमारिकामूलम्॥ ३८०॥

हिङ्गुना द्रोणपुष्प्या वा रसेनाञ्जितलोचनः।
अचिरात्कामलाव्याधिं नरो विजयते ध्रुवम्॥ ३८१॥

अञ्जनं कामलार्तानां द्रोणपुष्पीरसः शुभः।
शङ्खगैरिकधात्रीणां चूर्णं वा संप्रकल्पयेत्॥ ३८२॥

गुडार्द्रकयुता हन्ति कामलां त्रिफलासिता।
जालिनीफलमाघ्रातं नस्यं वा तण्डुलाम्भसा।
एरण्डमूलिका पीता मधुना हन्ति कामलाम्॥ ३८३॥

पित्ते काकमाचीफलधूपः।

काकमाचीफलैकेन घृतयुक्तेन बुद्धिमान्।
धूपयेत्पिल्लरोगार्तं पतन्ति क्रिमयोऽचिरात्॥ ३८४॥

---

१ नेत्ररोगचिकित्सायां कामलाचिकित्साभिधानं कामलया नेत्रयोः पीतत्वसंभवात्।

प्रक्लिन्नवर्त्मनि रसाञ्जनाद्यञ्जनम् ।

रसाञ्जनं सर्जरसो जातीपुष्पं मनःशिला ।
समुद्रफेनो लवणं गैरिकं मरिचानि च ॥ ३८५ ॥
एतत्समांशं मधुना पिष्टं प्रक्लिन्नवर्त्मनि ।
साञ्जनं क्लेदकण्डूघ्नं पक्ष्मणां च प्ररोहणम् ॥ ३८६ ॥

नेत्रकण्ड्वां नादेयाद्यञ्जनम् ।

नादेयमग्र्यं मरिचं सितं च नेपालजाता च समप्रमाणा ।
समातुलुङ्गद्रव एष योगः कण्डूं निहन्यात्सकृदञ्जनेन ॥३८७॥

पिल्ले गुहामूलाद्यञ्जनम् ।

ताम्रपात्रे गुहामूलं सिन्धूत्थमरिचान्वितम् ।
आरनालेन संपिष्टमञ्जनं पिल्लनाशनम् ॥ ३८८ ॥

पिल्ले मञ्जिष्ठाद्यञ्जनम् ।

मञ्जिष्ठामधुकोत्पलोदधिमलत्वक्सेव्यगोरोचना-
मांसीचन्दनशङ्खपत्रगिरिमृत्तालैः सपुष्पाञ्जनैः ।
सर्वैरेव समांशमञ्जनमिदं शस्तं सदा चक्षुषो-
र्हन्ति क्लेदमथाशु शोणितरुजः पिल्लार्मशुक्रापहम्॥३८९

पिल्ले तुत्थकाद्यञ्जनम् ।

तुत्थकस्य पलं श्वेतमरिचानि च विंशतिः ।
त्रिंशता काञ्जिकपलैः पिष्ट्वा ताम्रे निधापयेत् ।
पिल्लानपिल्लान् कुरुते बहुवर्षोत्थितानपि ॥ ३९० ॥

पिल्ले पुष्पकासीसाद्यञ्जनम् ।

पुष्पकासीसचूर्णं वा सुरसारसभावितम् ।
ताम्रे दशाहं तत्पिल्लपक्ष्मरोगजिदञ्जनात् ॥ ३९१ ॥

पिल्ले हरितालाद्यञ्जनम् ।

आलस्य भागो द्विगुणं च ताम्रं ताम्रात्तु सौवीरकमर्धतस्तु ।
पल्लेषु रोमाणि करोत्यभीक्ष्णमेका शलाका विनिपात्यमाना ॥

पिल्ले पलाशवृन्तयोगः ।

पलाशवृन्तमाहृत्य दध्ना कांस्ये निघापयेत् ।
आश्चोतनं श्लेष्महरं पक्ष्मणां च प्ररोहणम् ॥ ३९४ ॥

पक्ष्मोपरोधचिकित्सा ।

याप्यः पक्ष्मोपरोधस्तु रोमोद्धरणलक्षणैः ।
वर्त्मन्युपचितं लेख्यं स्राव्यमुत्क्लिष्टशोणितम् ॥ ३९५॥
प्रवृद्धान्तर्मुखं लोम सहिष्णोरुद्धरेच्छनैः ।
संदंशेनोद्धरेद्दृष्ट्यालक्ष्यरोमाणि बुद्धिमान् ॥ ३९६ ॥
सूच्यग्रेणाग्निवर्णेन रोमकूपं विनिर्दहेत् ।
प्रदेहाः शीतला नस्यक्रिया पक्ष्मोपरोधजित् ॥ ३९७॥
रक्षन्नक्षि दहेत्पक्ष्म वस्त्रहेमशलाकया ।
पक्ष्मकोपे पुनर्नैवं कदाचिद्रोमसंभवः ॥ ३९८ ॥
संदंशेनोद्धरेत्पक्ष्ममभ्यस्थान् प्रति बालकान् ।
लाटतैलभृते कूपे नेत्रयोर्न तदुद्भवः ॥ ३९९ ॥

पूयालसे लोहादियोगः ।

अयोरजस्ताम्ररजः सुपिष्टं सपिप्पलीकाम्लकवेतसं च ।
क्षौद्रेण युक्तं लवणेन चैव पूयालसं हन्त्यचिरेण युक्तम्॥४००

नक्तान्ध्ये गोधायकृदञ्जनम् ।

विपाच्य गोधायकृदर्धपाटितं प्रपूरितं मागधिकाभिरग्निना ।
निषेवितं तद्यकृदञ्जनेन वा निहन्ति नक्तान्ध्यमसंशयं खलु४०१

नक्तान्ध्ये छागयकृद्योगः ।

तथा यकृच्छागभवं हुताशने विपाच्य सम्यङ्मगधासमन्वितम् ।
निषेवितं तन्मनुजैरसंशयं जयेत्क्षपान्ध्यं सकृदञ्जनेन वा ४०२

---

१ 'हन्ति तदञ्जनेन' ख. ।

नक्तान्ध्ये पिप्पलीयोगः ।

कणा छागयकृन्मध्ये पक्वा तद्रसपेषिता ।
अचिराद्धन्ति नक्तान्ध्यं तद्वत्सक्षौद्रमूषणम् ॥ ४०३ ॥

तिमिरे गण्डूपदाद्यञ्जनम् ।

संगृह्योपरतानलक्तकरसेनामृज्य गण्डूपदान्
लाक्षारञ्जिततूलवर्तिनिहितान्यष्टीमधून्मिश्रितान् ।
प्रज्वाल्योत्तमसर्पिषाऽनलशिखासन्तानकं कज्जलं
दूरासन्ननिशान्ध्यकाचतिमिरप्रध्वंसकृद्याञ्जनात् ॥

निशान्ध्ये कतिपययोगाः ।

तार्क्ष्यगैरिकतालीसैर्निशान्ध्यहितमञ्जनम् ।
दध्ना निघृष्टं मरिचं रात्र्यन्धाञ्जनमुत्तमम् ॥ ४०५ ॥
क्षणदान्धदृष्टिजननी कपित्थमृदुपत्रपिष्टपूपलिका ।
मधुनि कृतमञ्जनं वा तत्फलवृन्तेन घृष्टेन ॥ ४०६ ॥
मधु रजनी दारुनिशा रसाञ्जनं जातिपल्लवस्वरसः ।
अयमुपशमयति योगः सवितेव तमः क्षपास्वान्ध्यम् ॥४०७॥
मरिचं नील्यपामार्गः कासमर्दः पुनर्नवा ।
एतच्छिफात्रयं घृष्टं छगलीपयसा सह ॥ ४०८ ॥
ताम्रपात्रे भृते नेत्रे निशान्ध्यं याति वेगतः ।
मधु कर्णमलं चाक्ष्णि पातितं तद्विनाशकृत् ॥ ४०९ ॥
विभीतफलमज्जायाश्चूर्णं मधुसमन्वितम् ।
एतन्नेत्रे भृतं हन्ति कुभृत्यः स्वामिनं यथा ॥ ४१० ॥

नेत्ररोगेऽञ्जनार्थं शलाका ।

श्रेष्ठाजलं भृङ्गरसं सविषाज्यमजापयः ।
यष्टीरसं च यत्सीसं सप्तकृत्वः पृथक्पृथक् ॥ ४११ ॥
तप्तं तप्तं पायितं तच्छलाका नेत्रे युक्ता साञ्जनानञ्जना वा ।
तैमिर्यार्मस्रावपैच्छिल्यपक्ष्मं कण्डूं जाड्यं रक्तराजीं च

त्रिफलसलिलयोगे भृङ्गराजद्रवे च
हविषि च विषकल्के क्षीर आजे मधुन्ये।
प्रतिदिनमथ तप्तं सप्तधा सीसमेत-
त्प्रणिहितमथ पश्चात्कारयेत्तच्छलाकाम् ॥ ४१३ ॥
तिमिरपटलकण्डूस्रावरक्तप्रकोपान्
किरिकिरिभिरुपेतं वर्त्म पिल्लत्रिदोषान्।
असितसितसमुत्थान् सन्धिवर्माभिजातान्
हरति नयनरोगान् सेव्यमाना शलाका ॥ ४१४ ॥

लिङ्गनाशव्यधनविधिः।

रूपाणां लिङ्गिनी नाम तन्नाशाल्लिङ्गनाशनः।
सर्वेषु लिङ्गनाशेषु वेध्यः पक्वः कफात्मकः ॥ ४१५ ॥
(मृद्यमाने च नयने मण्डलं यद्विसर्पति।)
न चेदर्धेन्दुघर्माम्बुबिन्दुमुक्ताकृतिः स्थिरः ॥ ४१६ ॥
विषमो वा तनुर्मध्ये राजिमान् वा बहुप्रभः।
दृष्टिस्थो लक्ष्यते दोषः सरुजो वा सलोहितः ॥ ४१७ ॥
कासश्वासक्षतक्षीणकर्णशूलादिरोगिणाम्।
गर्भिणीक्षामभीरूणां तृष्णाभुक्तवतस्तथा ॥ ४१८ ॥
मद्यलौल्यजराजीर्णक्षयशोफविकारिणाम्।
ऊनविंशतिवर्षस्य नाशीत्यभ्यधिकस्य च ॥ ४१९ ॥
न चासंपक्वदोषस्य लिङ्गनाशं तु वेधयेत्।
पटोलाद्येन संस्नेह्य त्रिफलाद्येन सर्पिषा ॥ ४२० ॥
लिङ्गनाशे कफोद्भूते यथावद्विधिपूर्वकम्।
विद्धा दैवकृते छिद्रे नेत्रं स्तन्येन सेचयेत् ॥ ४२१ ॥
ततो दृष्टेषु रूपेषु शलाकामाहरेच्छनैः।
नयनं सर्पिषाऽभ्यज्य वस्त्रपट्टेन वेष्टयेत् ॥ ४२२ ॥

ततो गृहे निराबाधे शयीतोत्तान एव च।
उद्गारकासक्षवथुनिष्ठीवोत्कम्पनानि च॥ ४२३॥
तत्कालं नाचरेदूर्ध्वं यन्त्रणा स्नेहपीतवत्।
त्र्यहात्त्र्यहाच्च धावेत कषायैरनिलापहैः॥ ४२४॥
वायोर्भयात्त्र्यहादूर्ध्वं स्वेदयेदक्षि पूर्ववत्।
दशरात्रं च संयम्य हितं दृष्टिप्रसादनम्॥ ४२५॥
पश्चात्क्रमेण सेवेत लघ्वन्नं चापि मात्रया।
रागशोफार्बुदं रोषो बुद्बुदं केकराक्षिता॥ ४२६॥
अधिमन्थादयश्चान्ये रोगाः स्युर्दुष्टवेधजाः।
अहिताहारतो वाऽपि यथास्वं तानुपाचरेत्॥ ४२७॥
रुजायामक्षिरोगे वा भूयो योगान्निबोध मे।
कल्किता सघृता दूर्वा यवगैरिकसारिवाः॥ ४२८॥
मुखलेपे प्रयोक्तव्या रुजारागोपशान्तये।
पयस्यासारिवापत्रमञ्जिष्ठामधुकैरपि॥ ४२९॥
अजाक्षीरान्वितैर्लेपः सुखोष्णः पथ्यभोजिनः।
शाम्यत्येवं न चेच्छूलं स्निग्धस्विन्नस्य मोक्षयेत्॥४३०॥
ततः शिरां हरेच्चापि मतिमान् कीर्तितं यथा।
दृष्टेरतः प्रसादार्थमञ्जने शृणु मे शुभे॥ ४३१॥

पुष्पवर्तिः।

मेषशृङ्गस्य पुष्पाणि शिरीषधवयोरपि।
मालत्याश्चैव तुल्यानि मुक्ता वैडूर्यमेव च॥ ४३२॥
अजाक्षीरेण संपिष्य ताम्रे सप्ताहमावपेत्।
प्रविधाय च तद्वर्तिं योजयेदञ्जने भिषक्॥ ४३३॥

स्रोतोञ्जनाद्या वर्तिः।

स्रोतोजं विद्रुमं फेनः सागरस्य मनःशिला।
मरिचानि च वा वर्तीः कारयेत्पूर्ववद्भिषक्॥ ४३४॥

रसाञ्जनघृतक्षौद्रतालैः संस्वर्णगैरिकैः।
गोशकृद्रससंयुक्तं पिचोपहतदृष्टये ॥ ४३५ ॥

वृहत्त्रिफलाद्यं घृतम्।

त्रिफलाया रसः प्रस्थः प्रस्थो भृङ्गरसस्य च।
वृषस्य च रसः प्रस्थः शतावर्याश्च तत्समः ॥ ४३६ ॥
अजाक्षीरं गुडूच्याश्चामलक्याः स्वरसस्तथा।
प्रस्थं प्रस्थं समाहृत्य सर्वैरेभिर्घृतं पचेत् ॥ ४३७ ॥
कल्कः सिताकणाद्राक्षात्रिफलानीलमुत्पलम्।
मधुकं क्षीरकाकोली मधुपर्णी निदग्धिका ॥ ४३८ ॥
तत्साधुसिद्धं विज्ञाय शुचौ भाण्डे निधापयेत्।
ऊर्ध्वपानमधःपानं मध्ये पानं च शस्यते ॥ ४३९ ॥
यावन्तो नेत्ररोगास्तान् पानादेवापकर्षति।
आरक्ते रक्तदुष्टे च रक्ते चातिस्रुते तथा ॥ ४४० ॥
नक्तान्ध्ये तिमिरे काचे नीलिकापटलार्बुदे।
अभिष्यन्देऽधिमन्थे च पक्ष्मकोपे च दारुणे ॥ ४४१ ॥
नेत्ररोगेषु सर्वेषु वातपित्तकफेषु च।
अदृष्टिं मन्दृदृष्टिं च वातपित्तप्रदूषिताम् ॥ ४४२ ॥
स्रवतो वातपित्ताभ्यां सकण्डासन्नदूरदृक्।
गृध्रदृष्टिकरं सद्यो बलवर्णाग्निवर्धनम्।
सर्वनेत्रामयं हन्यात्रिफलाद्यं महाघृतम् ॥ ४४३ ॥

नेत्रशूले लवणस्रुतिः।

सैन्धवं दधिसंघृष्टं ताम्रे नीलत्वमागतम्।
लवणस्रुतिरेवासौ पूरणान्नेत्रशूलहृत् ॥ ४४४ ॥
एकमेव हरेत्क्षिप्रं पंचूल्यं सम्यगञ्जनात्।
हण्डिकालेपचूर्णं तु दुर्वारमपि देहिनाम् ॥ ४४५ ॥

नेत्रस्रावे मरीचाद्यञ्जनम्।

मरिचांशः शिलार्धेन योजितः सुप्रचूर्णितः।
नेत्रस्रावं हरत्याशु नराणामयमञ्जनात् ॥ ४४६ ॥
यः संजातबलो दोषः शङ्खरोप्यशशिप्रभः।
पद्मपत्राम्बुबिन्द्वाभस्तं च नीली व्यपोहति ॥ ४४७ ॥

पटले शृङ्गवेराद्यञ्जनम्।

शृङ्गवेरं भृङ्गराजं यष्टीतैलेन मर्दितम्।
नस्यमेतेन दातव्यं महापटलनाशनम् ॥ ४४८ ॥

दिवा तीक्ष्णाञ्जनप्रयोगनिषेधः।

दिवा न तु प्रयोक्तव्यं नेत्रयोस्तीक्ष्णमञ्जनम्।
विरेकदुर्बला दृष्टिरादित्यं प्राप्य सीदति ॥ ४४९ ॥
तस्मात्स्राव्यं निशायां तु ध्रुवमञ्जनमिष्यते।
रात्रेश्चाम्भोगुणाच्चापि पुष्यत्यञ्जनकर्पितम् ॥ ४५० ॥
यथा हि कनकादीनां मणीनां विविधात्मनाम्।
धौतानां विमला शुद्धिस्तैलचेलकचादिभिः ॥ ४५१ ॥
एवं नेत्रेषु मर्त्यानामञ्जनाश्चोतनादिभिः।
दृष्टिर्निराकुला भाति निर्मले नभसीन्दुवत् ॥ ४५२ ॥

अञ्जनभेदाः।

त्रिधैवाञ्जनसंयोगो गुटिकारसचूर्णतः।
योज्या नेत्रे स्वच्छवस्त्रबद्धरोध्रादिपोटली ॥ ४५३ ॥
रोध्रचूर्णसमं निम्बपत्रचूर्णमनेन च।
बद्ध्वा पोटलिकां नीरे क्षिप्त्वा तामथ पीडयेत् ॥ ४५४ ॥
तद्रसो निर्मलो नेत्रपूरितः क्षणमात्रतः।
श्लेष्मरोगं निहन्त्याशु नैर्मल्यं कुरुते तथा ॥ ४५५ ॥

नेत्ररोगे हरिद्रादिपिण्डिका।

हरिद्रारोध्रबब्बूलपुष्पाणि पुष्पतूरिका।
फलत्रिकं कृता पिण्डैर्हन्ति नेत्रोद्भवां व्यथाम् ॥ ४५६ ॥

कफजनेत्ररोगे सैन्धवाद्यञ्जनम् ।

लवणं सैन्धवं तक्रं मरिचं कांस्यभाजने ।
निघृष्य नेत्रयोर्दत्तं हन्ति रोगं कफोद्भवम् ॥ ४५७ ॥
स्त्रीपयो यावको हिङ्गुत्रयं नेत्रभृतं द्रुतम् ।
दहत्यक्ष्णोः स्थितं दुःखं शुष्कं दारु यथाऽनलः ॥ ४५८ ॥

सर्वनेत्ररोगे पारदाद्यञ्जनम् ।

सूतकं गन्धकोपेतं चाङ्गेरीरसमूर्च्छितम् ।
अञ्जनं दृष्टिदं नृणां सर्वनेत्रामये हितम् ॥ ४५९ ॥
अपामार्गशिफा घृष्टा मधुना सैन्धवेन च ।
ताम्रपात्रे भृता नेत्रे हन्ति पीडां तदुद्भवाम् ॥ ४६० ॥

नवनेत्रकोपे ताम्बूलादिरसयोगः ।

[illegible]
[illegible]
प्रत्येकशो मधुयुतः स्वरसोऽञ्जनेन
कोपं नवं नयनयोः सहसैव हन्ति ॥ ४६१ ॥

नेत्ररोगे धात्रीरसयोगः ।

तरुस्थितनखोद्भिन्नपक्वामलकवारिणा ।
नेत्रयुग्मे भृते पीडा शीघ्रं शाम्यति देहिनः ॥ ४६२ ॥

अक्षिशूले सैन्धवादियोगः ।

आयसे ताम्रपात्रे वा सैन्धवं दधिमर्दितम् ।
कांस्यघृष्टे निशाकृष्णे त्वञ्जनं चाक्षिशूलहृत् ॥ ४६३ ॥

सर्वनेत्ररोगे रसाञ्जनादिलेपः ।

रसाञ्जनाभयादारुगैरिकं सैन्धवान्वितम् ।
जलपिष्टैर्बहिर्लेपः सर्वनेत्रामयापहः ॥ ४६४ ॥

---

१ 'गन्धकं फेनं' ख. ।

सर्वनेत्ररोगे सौगताञ्जनम् ।

निशाद्वयाभयाकृष्णामांसीकुष्ठं विचूर्णितम् ।
सर्वनेत्रामयान् हन्यादेतत्सौगतमञ्जनम् ॥ ४६५ ॥

तिमिरे पिप्पल्याद्यञ्जनम् ।

कणा करञ्जबीजानि त्रिफला च रसाञ्जनम् ।
रोध्रं स्वर्णफलं शुण्ठी काञ्जिकेनातिपेषयेत् ॥ ४६६ ॥
छायाशुष्कस्य तस्याथ गुटिका वारिचूर्णिता ।
निशान्ध्यं हन्ति तिमिरं कण्डूं चाम्लकसंयुता ॥ ४६७

तिमिरे शङ्खनाभ्याद्या वर्तिः ।

शङ्खनाभी वचा पथ्या मरिचं कुष्ठमक्षजा ।
मज्जतः समभागेन संपिष्ट्वा नरवारिणा ॥ ४६८ ॥
वटिकां कारयेत्तेन छायाशुष्कां तदञ्जनात् ।
तिमिरं पिच्चिटं पुष्पं पटलं संप्रणश्यति ॥ ४६९ ॥

सर्वनेत्ररोगे त्रिफलादियोगः ।

त्रिफला लोहचूर्णं च पटोली मधुयष्टिका ।
सर्वमेकांशतः पथ्या बिभीतामलकं क्रमात् ॥ ४७० ॥
द्वित्र्यक्षिभागिकं रुद्रभागाः स्युस्तवराजकात् ।
सर्पिषा भक्षिते यान्ति विचूर्णेऽक्षिरुजोऽखिलाः॥४७१॥

नक्तान्ध्ये हरिद्राद्यञ्जनम् ।

जातीपत्ररसे पिष्टं निशायुग्मं रसाञ्जनम् ।
निशान्ध्यं नाशयत्येव यथा पापं जिनः स्मृतः ॥ ४७२ ॥

शुक्रे काचाद्यञ्जनम् ।

काचचन्दनदक्षाण्डत्वगेलामधुसैन्धवैः ।
वारिपिष्टैः समैर्नेत्रे पुष्पादिहरमञ्जनम् ॥ ४७३ ॥

पुष्पे चन्द्रप्रभावर्तिः ।

त्रिफला सैन्धवं लोहं चूर्णं त्रिकटुकं समम् ।
छगलीपयसा पक्वं छायाशुष्कं च वट्टुटी ॥ ४७४ ॥

दुग्धघृष्टा भृता नेत्रे पुष्पहृत्काञ्जिकेन सा ।
तिमिरं मधुना हन्ति पटलं च शिवाम्भसा ॥ ४७५ ॥
निशान्ध्यं कामलां हन्ति काकमाचीरसप्लुता ।
रम्भाम्भसा च श्वयथुं गुटी चन्द्रप्रभाभिधा ॥ ४७६ ॥

तिमिरादौ गुडूच्यादियोगः ।

तिमिरकाचार्मकण्डूचक्षुःप्रकोपपुष्पपटलानि ।
अपहरति नेत्ररोगान् गुडूचिरससैन्धवं मधुना ॥ ४७७ ॥
सैन्धवं वारिणा पिष्टं मधुकं बृहतीफलम् ।
निहन्त्येष रसो नस्यान्निद्रां घूर्णं च वेगतः ॥ ४७८ ॥

पुष्पे भद्रमुस्ताञ्जनम् ।

छागमूत्रेण संपिष्टभद्रमुस्ताञ्जनेन वै ।
चिरकालोद्भवं पुष्पं रक्तत्वं च विहन्यते ॥ ४७९ ॥

काचादौ जातिपुष्पादिगुटिका ।

प्रत्यग्रजातिपुष्पाणि याचको रक्तचन्दनम् ।
गुटिका हन्ति काचान्ध्यं तिमिरं पटलं तथा ॥ ४८० ॥

नेत्ररोगाणां सामान्यचिकित्सा ।

[illegible]
॥

अतः परं च त्रिफलाकषायः पाने पटोलादिफलत्रिकाद्ये ।
घृते हिते कायविशोधनं च सरक्तसंशोधनमञ्जनादि ॥४८२॥

नेत्ररोगे पुनर्नवायोगः ।

घृतेन पुष्पं मधुनाऽश्रुपातं तैलेन कण्डूं तिमिरं जलेन ।
रात्र्यन्धतां काञ्जिकयोगयुक्त्या पुनर्नवा नेत्रनवं करोति॥४८३

पुष्पे तुत्थाद्यञ्जनम् ।

तुत्थं च काचं च समुद्रफेनं मनःशिला माक्षिकलोहचूर्णम् ।
नारं कपालं सह कुक्कुटाण्डमाजन्मजातं विनिहन्ति पुष्पम् ॥

पुष्पे गर्दभखुरयोगः।

रासभस्य खुरं दग्ध्वा तच्चूर्णं नेत्रपूरितम्।
पुष्पहृन्मत्स्यपित्तं च लोचनस्थं निशान्ध्यहृत्॥ ४८५॥

नेत्रपीडायां स्वेदयोगः।

काञ्जिके प्रक्षिपेत्तप्तामिष्टिकां तद्भवेन च।
बाष्पेण स्वेदयेच्चक्षुर्महापीडोपशान्तये॥ ४८६॥
वमनीवरपत्राणि दुग्धेनोत्क्वाथ्य यत्नतः।
स्वेदयेच्चक्षुषी सम्यङ्नेत्रपीडोपशान्तये॥ ४८७॥
शर्यातिं चसुकन्यां च च्यवनं शक्रमश्विनौ।
ये भुक्त्वा संस्मरिष्यन्ति तेषां चक्षुर्न हीयते॥ ४८८॥

इति श्रीवैद्यसोढलप्रथिते गदनिग्रहे तृतीये शालाक्यतन्त्रखण्डे
नेत्ररोगाधिकारस्तृतीयः॥ ३॥

---

## अथ नासारोगाधिकारश्चतुर्थः।

### अथातो नासिकारोगनिदानं व्याख्यास्यामः।

पीनसलक्षणम्।

आनह्यते यस्य विशुष्यते च प्रक्लिद्यते धूप्यति चापि नासा।
न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्टं व्यवस्येत्तमपीनसेन॥ १॥
तं चानिलश्लेष्मभवं विकारं ब्रूयात्प्रतिश्यायसमानलिङ्गम्।

पूतिनासलक्षणम्।

दोषैर्विदग्धैर्गलतालुमूले संमूर्च्छितो यस्य समीरणस्तु।
निरेति पूतिर्मुखनासिकाभ्यां तं पूतिनासं प्रवदन्ति रोगम्॥२

नासापाकलक्षणम्।

घ्राणाश्रितं पित्तमरूंषि कुर्याद्यस्मिन्विकारे बलवांश्च पाकः।
तं नासिकापाकमिति व्यवस्येद्विक्लेदकोथावथवाऽपि यत्र॥३॥

पूतिरक्तलक्षणम्।

दोषैर्विदग्धैरथवाऽपि जन्तोर्ललाटदेशेऽभिहितस्य तैस्तैः।

नासा स्रवेत्पूयमसृग्विमिश्रं तं पूतिरक्तं प्रवदन्ति रोगम् ॥ ४॥

क्षवथुलक्षणम् ।

घ्राणाश्रिते मर्मणि संप्रदुष्टो यस्यानिलो नासिकया निरेति ।
कफानुयातो बहुशोऽतिशब्दस्तं रोगमाहुः क्षवथुं विधिज्ञाः॥५
तीक्ष्णोपयोगादतिजिघ्रतो वा भावान् कटूनर्कनिरीक्षणाद्वा ।
सूत्रादिभिर्वा तरुणास्थिमर्मण्युद्घट्टितेऽन्यः क्षवथुर्निरेति ॥ ६ ॥

भ्रंशथुलक्षणम् ।

प्रभ्रश्यते नासिकयोर्हि यस्य सान्द्रो विदग्धो लवणः कफश्च ।
प्राक्संचितो मूर्धनि सूर्यतप्तस्तं भ्रंशथुं रोगमुदाहरन्ति ॥ ७ ॥

दीप्तलक्षणम् ।

घ्राणे भृशं दाहसमन्विते तु विनिश्चरेद्धूम इवेह वायुः ।
नासा प्रदीप्तेव च यस्य जन्तोर्व्याधिं तु तं दीप्तमुदाहरन्ति ॥८

प्रतिनाहलक्षणम् ।

उच्छ्वासमार्गं तु कफः सवातो रुन्ध्यात्प्रतीनाहमुदाहरेत्तम् ।

नासास्रावलक्षणम् ।

घ्राणाद्घनः पीतसितस्तनुर्वा दोषः स्रवेत्स्रावमुदाहरेत्तम् ॥९॥

नासापरिशोषलक्षणम् ।

घ्राणाश्रिते श्लेष्मणि मारुतेन पित्तेन गाढं परिशोषिते च ।
कृच्छ्राच्छ्वसेदूर्ध्वमधश्च जन्तुर्यस्मिन् स नासापरिशोष उक्तः ॥

पीनसस्यामपक्वलक्षणम् ।

[illegible]
॥ ११ ॥

आमलिङ्गान्वितः श्लेष्मा घनः खेषु निमज्जति ।
स्वरवर्णविशुद्धिश्च परिपक्वस्य लक्षणम् ॥ १२ ॥

प्रतिश्यायलक्षणम् ।

संधारणाजीर्णरजोतिभाष्यक्रोधर्तुवैषम्यशिरोभितापैः ।
प्रजागरातिस्वपनाम्बुशीतैरवश्यया मैथुनबाष्पशोकैः ॥ १३ ॥

संस्त्यानदोषे शिरसि प्रवृद्धो वायुः प्रतिश्यायमुदीरयेच्च ।
चयं गता मूर्धनि मारुतादयः पृथक्समस्तास्तु तथैव शोणितम्
प्रकोप्यमाणा विविधैः प्रकोपणैस्ततः प्रतिश्यायकरा भवन्ति हि ।
क्षवप्रवृत्तिः शिरसोऽभिपूर्णता स्तम्भोऽङ्गमर्दः परिहृष्टरोमता ।
उपद्रवाश्चाप्यपरे पृथग्विधा नृणां प्रतिश्यायपुरःसरा स्मृताः१५

आनद्धा पिहिता नासा तनुस्रावप्रसेकिनी ।
गलताल्वोष्ठशोषश्च निस्तोदः शङ्खयोस्तथा ॥ १६ ॥
भवेत्स्वरोपघातश्च प्रतिश्याये‌ऽनिलात्मके ।
उष्णः सपीतकः स्रावो घ्राणात्स्रवति पैत्तिके ॥ १७ ॥
कृशोऽतिपाण्डुः संतप्तो भवेत्तृष्णाभिपीडितः ।
सधूममग्निं सहसा वमतीव च मानवः ॥ १८ ॥
घ्राणात्कफः कफकृते श्वेतपाण्डुर्व्रजेद्बहुः ।
शुक्लावभासः शूनाक्षो भवेद्गुरुशिरो नरः ॥ १९ ॥
कण्ठताल्वोष्ठशिरसां कण्डूभिरभिपीडितः ।
भूत्वा भूत्वा प्रतिश्यायो योऽकस्मात्संनिवर्तते ॥ २० ॥
संपक्वो वाऽप्यपक्वो वा स सर्वप्रभवः स्मृतः ।
लिङ्गानि चैव सर्वेषां पीनसानां हि सर्वजे ।
प्रक्लिद्यते पुनर्नासा पुनश्च परिशुष्यति ॥ २१ ॥
पुनरानह्यते चापि पुनर्विव्रियते तथा ।
निःश्वासश्चातिदुर्गन्धो नरो गन्धं न वेत्ति च ॥ २२ ॥
एवं दुष्टप्रतिश्यायं जानीयात्कृच्छ्रसाधनम् ।
रक्तजे च प्रतिश्याये रक्तस्रावः प्रवर्तते ॥ २३ ॥
ताम्राक्षश्च भवेज्जन्तुरुरोघातप्रपीडितः ।
दुर्गन्धोच्छ्वासवदनो गन्धानपि न वेत्ति सः ॥ २४ ॥
सर्व एव प्रतिश्याया नरस्याप्रतिकारिणः ।
दुष्टतां यान्ति कालेन तदाऽसाध्या भवन्ति हि ॥२५॥

मूर्च्छन्ति चात्र क्रिमयः स्निग्धश्वेतालयाऽणवः ।
क्रिमिजो यः शिरोरोगस्तुल्यं तेनास्य लक्षणम् ॥ २६ ॥
बाधिर्यमान्ध्यमघ्रत्वं घोरांश्च नयनामयान् ।
शोथाग्निसादकासान्या वृद्धाः कुर्वन्ति पीनसाः ॥ २७ ॥
अर्बुदं सप्तधा शोफाश्चत्वारोऽर्शश्च पञ्चविधम् ।
चतुर्विधं रक्तपित्तमुक्तं घ्राणेऽपि तद्विदः ॥ २८ ॥

इति नासारोगनिदानम् ।

---

अथातो नासारोगचिकित्सितं व्याख्यास्यामः ।

वातिकप्रतिश्यायचिकित्सा ।

वातिके तु प्रतिश्याये पिबेत्सर्पिर्यथाक्रमम् ।
पञ्चभिर्लवणैः सिद्धं प्रथमेन गणेन वा ॥ २९ ॥
नस्यादिषु विधिं कृत्स्नमवेक्षेतार्दितेरितम् ।

पित्तरक्तोत्थप्रतिश्यायचिकित्सा ।

पित्तरक्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम् ॥ ३० ॥
परिषेकान् प्रदेहांश्च कुर्यादपि च शीतलान् ।

कफजप्रतिश्यायचिकित्सा ।

कफजे सर्पिषा स्निग्धं तिलमाषविपक्वया ॥ ३१ ॥
यवाग्वा वामयित्वा वा कफघ्नं क्रममाचरेत् ।

प्रतिश्याये धूमपानयोगाः ।

दार्वीङ्गुदीनिकुम्भैश्च किणिह्याः सुरसेन च ॥ ३२ ॥
वर्तयोऽथ कृता योज्या धूमपाने यथाविधि ।
घृततैलसमायुक्तं शिग्रुधूमं पिबेन्नरः ॥ ३३ ॥
प्रतिश्यायहरं प्रोक्तं कासहिक्कानिवारणम् ।
अथवा सघृतान् सक्तून् कृत्वा मल्लकसंपुटे ॥ ३४ ॥
नवप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत् ।

प्रतिश्याये जयापत्रयोगः।

पुटपक्कं जयापत्रं सिन्धुतैलसमन्वितम् ॥ ३५ ॥
प्रतिश्यायेषु सर्वेषु शीलितं परमौषधम्।

प्रतिश्याये सामान्यचिकित्सा।

शिरसोऽभ्यञ्जनस्वेदनस्यकट्वम्लभोजनैः ॥ ३६ ॥
वमनैर्घृतपानैश्च तान् यथास्वमुपाचरेत्।

प्रतिश्यायेऽवपीडनस्ययोगः।

पिप्पल्यः शिग्रुबीजानि विडङ्गं मरिचानि च ॥ ३७ ॥
अवपीडः प्रशस्तोऽयं प्रतिश्यायनिवारणः।

प्रतिश्याये व्योषादियोगः।

व्योषं पृथक्समस्तं वा जम्बीरार्द्रकनागरम् ॥ ३८ ॥
गुडं शुक्तं प्रतिश्यायी प्राग्भक्तमुपयोजयेत्।

प्रतिश्याये पञ्चमूलतोयम्।

पञ्चमूलबलाकोलकुलत्थयवनागरैः ॥ ३९ ॥
प्रतिश्यायेऽन्नपानेषु कार्यस्तोयपरिग्रहः।

नवप्रतिश्याये पाचनयोगौ।

ऊषणं गुडसंयुक्तं स्निग्धं दध्यम्लभोजनम् ॥ ४० ॥
नवप्रतिश्यायहरं विशेषात्कफपाचनम्।
व्योषक्षवकजम्बीरशिग्रुकाणां च भक्षणात् ॥ ४१ ॥
आशु याति परीपाकं प्रतिश्यायः कफात्मकः।
ततः पक्कं कफं ज्ञात्वा हरेच्छीर्षविरेचनैः ॥ ४२ ॥

पीनसे दधियोगः।

गुडमरिचविमिश्रं पीतमाशु प्रकामं
हरति दधि नराणां पीनसं दुर्निवारम्।
यदि च सघृतमन्नं क्षुण्णगोधूमवह्नेः
कृतमपहृतदोषं तत्कुतोऽस्यावकाशः ॥ ४३ ॥

पीनसे कतिपययोगानामतिदेशः ।

पञ्चमूलीशृतं क्षीरं स्याच्चित्रकहरीतकी ।
सर्पिर्गुडः षडङ्गश्च यूषः पीनसशान्तये ॥ ४४ ॥

पीनसे व्योषाद्यं चूर्णम् ।

व्योषचित्रकतालीसतिन्तिडीकाम्लवेतसम् ।
सचव्याजाजितुल्यांशमेलात्वक्पत्रपादिकम् ॥ ४५ ॥
व्योषादिकमिदं चूर्णं पुराणगुडसंयुतम् ।
पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ॥ ४६ ॥

कफपीनसे पाठाद्यं तैलम् ।

पाठाद्विरजनीमूर्वापिप्पलीजातिपल्लवैः ।
दन्त्या च तैलं संसिद्धं नस्यं स्यात्कफपीनसे ॥ ४७ ॥

नासारोगे शिग्रुकतैलम् ।

शिग्रुदन्तीवचाव्योषक्षुद्रास्वरससैन्धवैः ।
नस्यदानाज्जयेत्सिद्धं तैलं नासागतान् गदान् ॥ ४८ ॥
लाङ्गलीकन्दसुरसव्योषकुष्ठैः सकट्फलैः ।
नस्यं तु पीनसं हन्यात्पूतिनासं च दारुणम् ॥ ४९ ॥

पूतिनासे सुरसादितैलम् ।

सुरसव्योषकुष्ठैस्तु लाक्षाकट्फलयोजितैः ।
सविडङ्गैः पचेत्तैलं सार्षपं पूतिनाशनम् ॥ ५० ॥

नासारोगे विडङ्गाद्यं तैलम् ।

विडङ्गसिन्धुयष्ट्याह्वदेवदारुकटुत्रिकैः ।
पचेन्नासामयार्तिघ्नं तैलं नस्यप्रयोगतः ॥ ५१ ॥

पूतिनासे त्रिकट्वाद्यं तैलम् ।

त्रिकटुकविडङ्गसैन्धवबृहतीफलशिग्रुसुरसदन्तीभिः ।
तैलं गोजलसिद्धं नस्यं स्यात्पूतिनासस्य ॥ ५२ ॥

पीनसे कलिङ्गाद्यवपीडस्तैलं च ।

कलिङ्गहिङ्गुमरिचं लाक्षासुरसकट्फलम् ।
कुष्ठोग्राशिग्रुजन्तुघ्नमवपीडः प्रशस्यते ॥ ५३ ॥

तैरेव मूत्रसंपिष्टैः कटुतैलं विपाचयेत् ।
अपीनसे पूतिनासे शमनं कीर्तितं परम् ॥ ५४ ॥

हिङ्ग्वादितैलम् ।

हिङ्गुव्योषविडङ्गकट्फलवचारुक्तीक्ष्णगन्धायुतै-
र्लाक्षाहेमवतीकलिङ्गकयवैः पुष्पोद्भवैः सौरसैः ।
इत्येभिः कटुतैलमेतदनले मन्दे समूत्रं शृतं
पीतं नासिकया यथाविधि भवेन्नासामयिभ्यो हितम् ॥५५

नासापाकचिकित्सा ।

पञ्चवल्कलिकालेपः सेकश्चैव प्रशस्यते ।
नासापाकरुजार्तानां नराणां संप्रशान्तये ॥ ५६ ॥
नासापाके पित्तहृद्यद्विधानं कार्यं सर्वं बाह्यमाभ्यन्तरं च ।
हार्यं रक्तं क्षीरवृक्षत्वचश्च योज्याः सेके साज्यकाश्च प्रदेहाः५७

पूतिरक्तचिकित्सा ।

पूयास्रे रक्तपित्तघ्नाः कषाया नावनानि च ।

क्षवथौ शुण्ठ्याद्यं तैलम् ।

शुण्ठीकुष्ठकणाबिल्वद्राक्षाकल्ककषायवत् ।
साधितं तैलमाज्यं वा नस्यं क्षवथुरुक्प्रणुत् ॥ ५८ ॥

क्षवथुचिकित्सा ।

घृतगुग्गुलुमिश्रस्य सिक्थकस्य प्रयत्नतः ।
धूमं क्षवथुरोगघ्नं भ्रंशथुघ्नं च बुद्धिमान् ॥ ५९ ॥

दीप्तचिकित्सा ।

दीप्ते रोगे पैत्तिके पैत्तिकं च कार्यं कुर्यात्स्वादु यच्छीतलं च ।

नासानाहचिकित्सा ।

नासानाहे स्नेहपानं प्रधानं स्निग्धा धूमा मूर्धबस्तिश्च नित्यम्॥

नासार्शश्चिकित्सा ।

रक्तकरवीरपुष्पं जात्यसनमल्लिकानां च ।
एतैः समं तु तैलं नासार्शोनाशनं दृष्टम् ॥ ६१ ॥

गृहधूमकणादारुक्षारनक्ताह्वसैन्धवैः।
सिद्धं शिखरिबीजैश्च तैलं नासार्शसे हितम् ॥ ६२ ॥

नासाप्रवृत्तरक्तपित्तचिकित्सा।

हरीतकीदाडिमपुष्पदूर्वालाक्षारसो नस्यविधानयोगात्।
निवारयत्येव चिरप्रवृद्धं नृणां तु नासान्तरशोणितौघम् ॥६३॥
संपेषितः पर्युषितोदकेन पटान्तनिश्चोतितनिर्मलश्च।
घ्राणोद्भवार्शांसि निहन्ति सद्यो नस्येन कन्दः कटुतुम्बिकायाः
वारिपिष्टं त्रयं दूर्वा कुसुम्भी दाडिमीफलम्।
नस्यतो नासिकारक्तं स्तम्भयेत्प्रवहद्द्रुतम् ॥ ६५ ॥
जम्बूपत्ररसो दूर्वा रसो दाडिमपुष्पयुक्।
नासायां नस्यतो रक्तं पतद्वारयतेऽनिशम् ॥ ६६ ॥
निपतद्वारयेद्रक्तं नासायां गोघृतान्विता।
शर्करा नस्यतोऽवश्यमापदं कालिका यथा ॥ ६७ ॥
शङ्खगैरिकयोः कल्कं धातक्या मधुकस्य वा।
घ्राणग्रावास्रजित्प्रोक्तं योषित्क्षीरेण नावनम् ॥ ६८ ॥
नस्यो दाडिमपुष्पोत्थो रसो दूर्वोद्भवोऽथवा।
आम्रास्थिजः पलाण्डोर्वा नासिकापूतिरक्तजित् ॥६९॥

पूतिनासे व्याघ्र्याद्यं तैलम्।

व्याघ्रीदन्तीवचाशिग्रुसुरसव्योषसैन्धवैः।
पाचितं नावनात्तैलं पूतिनासगदापहम् ॥ ७० ॥

पीनसे कतिपययोगाः।

मरीचगुडमिश्रेण दधिपानेन शाम्यति।
पीनसो वल्लगोधूमक्षिप्रभोजनतोऽथवा ॥ ७१ ॥

नासारोगे गृहधूमाद्यं तैलम्।

गृहधूमकणादारुक्षारनक्ताह्वसैन्धवैः।
सिद्धं शिरीषबीजैश्च तैलं नासागदापहम् ॥ ७२ ॥

अभया दाडिमीपुष्पं लाङ्गली पिष्टमम्भसा।
नस्यतो हन्ति नासाया रक्तस्रावमविद्रुतम् ॥ ७३ ॥
शय्यारूढो जलं शीतं निद्राकाले च यः पिबेत्।
तस्य पीनसजं दुःखं शमं याति दिनत्रये ॥ ७४ ॥

इति श्रीवैद्यशोढलप्रथिते गदनिग्रहे तृतीये शालाक्यखण्डे नासारोगचिकित्साधिकारश्चतुर्थः ॥

---

## अथ मुखरोगाधिकारः पञ्चमः।

अथातो मुखरोगनिदानं व्याख्यास्यामः।

मुखरोगसंख्या।

मुखरोगाः सप्तषष्टिः सप्तस्वायतनेषु च।

तत्राष्टावोष्ठयोः, पञ्चदश दन्तमूलेषु, अष्टौ दन्तेषु, पञ्च जिह्वायां, नव तालुनि, अष्टादश कण्ठे, चत्वारः सर्वेष्वायतनेषु।

ओष्ठगताष्टरोगलक्षणम्।

तत्रोष्ठप्रकोपाः—वातपित्तकफसन्निपातरक्तमांसमेदोभिघातनिमित्ताः ॥

कर्कशौ परुषौ स्तब्धौ कृष्णौ तीव्ररुगन्वितौ।
दाल्येते परिपाट्येते ओष्ठौ मारुतकोपतः ॥ १ ॥
आचितौ पिटिकाभिस्तु सर्षपाकृतिभिर्भृशम्।
सदाहपाकसंस्रावौ नीलौ पीतौ च पित्ततः ॥ २ ॥
सवर्णाभिस्तु चीयेते पिटिकाभिरवेदनौ।
कण्डूमन्तौ कफाच्छूनौ पिच्छिलौ शीतलौ गुरू ॥ ३ ॥
सकृत्कृष्णौ सकृत्पीतौ सकृच्छ्वेतौ तथैव च।
सन्निपातेन विज्ञेयावनेकपिडकान्वितौ ॥ ४ ॥
खर्जूरफलवर्णाभिः पिटिकाभिर्निपीडितौ।
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥ ५ ॥

मांसदुष्टौ गुरू स्थूलौ मांसपिण्डवदुद्गतौ ।
जन्तवश्चात्र मूर्च्छन्ति नरस्योभयतो मुखात् ॥ ६
मेदसा घृतमण्डाभौ कण्डूमन्तौ स्थिरौ मृदू ।
अच्छं स्फटिकसंकाशं स्रावं प्रस्रवतो गुरू ॥ ७
क्षतजाभौ विदीर्येते पाट्येते चाभिघाततः ।
ग्रथितौ च समाख्यातावोष्ठौ कण्डूसमन्वितौ ॥

दन्तमूलगतपञ्चदशरोगलक्षणम् ।

अथ दन्तमूलगतास्तु-शीतादो, दन्तपुप्पुटको, दन्त सौषिरो, महासौषिरो, परिदर, उपकुशो, दन्तवैदर्भो, अधिमांसो, नाड्यः पञ्चेति ॥

शोणितं दन्तवेष्टेभ्यो यस्याकस्मात्प्रवर्तते ।
दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥ ९
दन्तमांसानि शीर्यन्ते पचन्ति च परस्परम् ।
शीतादो नाम स व्याधिः कफशोणितसंभवः ॥
दन्तयोस्त्रिषु वा यस्य श्वयथुः सरुजो महान् ।
दन्तपुप्पुटको ज्ञेयः कफरक्तनिमित्तजः ॥ ११
स्रवन्ति पूयरुधिरं चला दन्ता भवन्ति च ।
दन्तवेष्टः स विज्ञेयो दुष्टशोणितसंभवः ॥ १२
श्वयथुर्दन्तमूलेषु रुजावान् कफरक्तजः ।
लालास्रावी स विज्ञेयः कण्डूमान् सौषिरो गदः
दन्ताश्चलन्ति वेष्टेभ्यस्तालुरप्यवदीर्यते ।
दन्तमांसानि पच्यन्ते मुखं च परिपीड्यते ॥ १
यस्मिन् स सर्वजो व्याधिर्महासौषिरसंज्ञितः ।
दन्तमांसानि शीर्यन्ते यस्मिन् ष्ठीवति चाप्यसृक्
पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः ।
वेष्टेषु दाहः पाकश्च तेभ्यो दन्ताश्चलन्ति च ॥

आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनाः ।
आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते ॥ १७
यस्मिन् सोपकुशो नाम पित्तरक्तकृतो गदः ।
घृष्टेषु दन्तमूलेषु संरम्भो जायते महान् ॥ १८ ॥
भवन्ति च चला दन्ताः स वैदर्भोऽभिघातजः ।
मारुतेनाधिको दन्तो जायते तीव्रवेदनः ॥ १९ ॥
वर्धनः स मतो व्याधिर्जाते रुक्च प्रशाम्यति ।
हानव्ये पश्चिमे दन्ते महान् शोफो महारुजः ॥ २
लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ।
शनैः शनैः प्रकुरुते वायुर्दन्तसमाश्रितः ॥ २१ ॥
दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः ॥ २२

दन्तगताष्टरोगलक्षणम् ।

दन्तगतास्तु—दालनः, क्रिमिदन्तको, दन्तहर्षो, भञ्जन शर्करा, कपालिका, श्यावदन्तको, हनुमोक्षश्चेति ॥

दाल्यन्ते बहुधा दन्ता यस्मिन् तीव्ररुगन्विताः ।
दालनः स तु विज्ञेयो गन्धवाहनिमित्तजः ॥ २३
कृष्णश्छिद्री चलः स्रावी ससंरम्भो महारुजः ।
अनिमित्तरुजो वाताद्विज्ञेयः क्रिमिदन्तकः ॥ २४ ॥
दशनाः शीतमुष्णं च सहन्ते स्पर्शनं न च ।
यस्य तं दन्तहर्षं तु व्याधिं मारुतसंभवम् ॥ २५ ॥
शर्करेव स्थिरीभूतो मलो दन्तेषु यस्य वै ।
सा दन्तानां गुणघ्नी तु विज्ञेया दन्तशर्करा ॥ २६
दलन्ति दन्तवल्कानि यदा शर्करया सह ।
ज्ञेया कपालिका सैव दशनानां विनाशिनी ॥ २७
पित्तेनासृग्विमिश्रेण दग्धो दन्तस्त्वशेषतः ।
श्यावतां नीलतां चाऽपि गतः स श्यावदन्तकः ॥२

ोन तैस्तैर्भावैर्हि हनुसन्धिर्विसंहतः ।
मोक्ष इति ज्ञेयो व्याधिरर्दितलक्षणः ॥ २९ ॥

जिह्वागतपञ्चरोगलक्षणम् ।

जह्वागतास्तु—कण्टकास्त्रिविधास्त्रिभिर्दोषैरलस उपजि-
ति ।
लेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा ।
ला परिदह्यते च चिता सरक्तैरपि कण्टकैश्च ॥ ३० ॥
र्वी बहला चिता च मांसोद्गमैः शाल्मलिकण्टकाभैः ।
यः श्वयथुः प्रगाढः सोऽलाससंज्ञः कफरक्तमूर्तिः ३१
तु स्तम्भयति प्रवृद्धो मूले च जिह्वा भृशमेति पाकम् ।
ः श्वयथुस्तु जिह्वामुन्नम्य जातः कफरक्तयोनिः ।
कफदाहयुक्ता प्रकथ्यतेऽसावुपजिह्विकेति ॥ ३२ ॥

तालुगतनवरोगलक्षणम् ।

तास्तु—गलशुण्डिका, तुण्डिकेरी, अध्रुषो, मांस-
अर्बुदं, मांससङ्घातः, तालुपुप्पुटः, तालुशोषः,
इति ॥
म्यां तालुमूलात्प्रवृद्धो दीर्घः शोफो ध्मातबस्तिप्रकाशः
सश्वासकृत्संप्रदिष्टो व्यवसेयः कण्ठशुण्डीति नाम्ना ॥
मूलस्तोददाहप्रपाकी प्रागुक्ताभ्यां तुण्डिकेरी मता तु ।
ब्धो लोहितस्तालुदेशे रक्ताज्ज्ञेयः सोऽध्रुषो रुग्ज्वराढ्यः
कूर्मोत्सन्नोऽवेदनो शीघ्रजन्मा
रक्ताज्ज्ञेयः कच्छपः श्लेष्मणा च ।
पद्माकारं तालुमध्ये तु शोफं
विद्याद्रक्तादर्बुदं प्रोक्तलिङ्गम् ॥ ३५ ॥
श्लेष्मणा नीरुजं वा ताल्वन्तःस्थं मांससंघातमाहुः ।
यी कोलमात्रः कफात्स्यान्मेदोयुक्तात्पुप्पुटस्तालुदेशे ॥

शोषोऽत्यर्थं दीर्यते चापि तालुः
श्वासो वातात्तालुशोषः सपित्तात्।
पित्तं कुर्यात्पाकमत्यर्थघोरं
तालुन्येनं तालुपाकं वदन्ति ॥ ३७ ॥

कण्ठगताष्टदशरोगलक्षणम्।

अथ कण्ठगतास्तु–रोहिण्यः पञ्च, कण्ठशालूकं, अधिजिह्वा, वलयो, बलासः, एकवृन्दो, वृन्दः, शतघ्नी, गिलायुः, गलविद्रधिः, गलौघः, स्वरघ्नो, मांसतानो, विदारी चेति ॥

गलेऽनिलः पित्तकफौ च मूर्च्छितौ
पृथक्समस्ताश्च तथैव शोणितम्।
प्रदूष्य मांसं गलरोधिनोऽङ्कुरान्
सृजन्ति यान् साऽसुहरा च रोहिणी ॥ ३८ ॥

जिह्वां समन्ताद्भृशवेदना ये
मांसाङ्कुराः कण्ठनिरोधिनः स्युः।
तां रोहिणीं वातकृतां वदन्ति
वातात्मकोपद्रवगाढयुक्ताम् ॥ ३९ ॥

क्षिप्रोद्गमा क्षिप्रविदाहपाका
तीव्रज्वरा पित्तनिमित्तजा स्यात्।
स्रोतोनिरोधिन्यपि मन्दपाका
गुर्वी स्थिरा सा कफसंभवा वै ॥ ४० ॥

गम्भीरपाकाऽप्रतिवार्यवीर्या
त्रिदोषलिङ्गा त्रयसंभवा स्यात्।
स्फोटाचिता पित्तसमानलिङ्गा
साध्या प्रदिष्टा रुधिरात्मिकेयम् ॥ ४१ ॥

कोलास्थिमात्रः कफसंभवो यो
ग्रन्थिर्गले कण्टकशूकभूतः।

खरः स्थिरः शस्त्रनिपातसाध्य-
स्तं कण्ठशालूकमिति ब्रुवन्ति ॥ ४२ ॥
जिह्वाग्ररूपः श्वयथुः कफोत्थो
जिह्वाप्रबन्धोपरि रक्तमिश्रः ।
ज्ञेयोऽधिजिह्वः खलु रोग एष
विवर्जयेदागतपाकमेनम् ॥ ४३ ॥
बलास एवायतमुन्नतं च
शोफं करोत्यन्नगतिं निवार्य ।
तं सर्वथैवाप्रतिवारवीर्यं
विवर्जनीयं वलयं वदन्ति ॥ ४४ ॥
गले तु शोफं कुरुतः प्रवृद्धौ
कफानिलौ श्वासरुजोपपन्नम् ।
मर्मच्छिदं दुस्तरमेनमाहु-
र्बलाससंज्ञं निपुणा विकारम् ॥ ४५ ॥
वृत्तोन्नतोऽन्तः श्वयथुः सदाहः
सकण्डुरोऽपाक्यमृदुर्गुरुश्च ।
नाम्नैकवृन्दः परिकीर्तितोऽसौ
व्याधिर्बलासक्षतजप्रसूतः ॥ ४६ ॥
समुन्नतं वृत्तममन्ददाहं
तीव्रज्वरं वृन्दमुदाहरन्ति ।
तं चापि पित्तक्षतजप्रकोपा-
द्विद्यात्सतोदं पवनात्मकं तु ॥ ४७ ॥
वर्तिर्घना कण्ठनिरोधिनी या
चिताऽतिमात्रं पिशितप्ररोहैः ।
नानारुजोच्छ्रायकरी त्रिदोषा-
ज्ज्ञेया शतघ्नीव शतघ्न्यसाध्या ॥ ४८ ॥

ग्रन्थिर्गले त्वामलकास्थिमात्रः
स्थिरोऽल्परुक् स्यात्कफरक्तमूर्तिः।
संलक्ष्यते सक्तमिवाशनं च
स शस्त्रसाध्यस्तु गिलायुसंज्ञः ॥ ४९ ॥

सर्वं गलं व्याप्य समुत्थितो यः
शोथो रुजः सन्ति च यत्र सर्वाः।
स सर्वदोषैर्गलविद्रधिस्तु
तस्यैव तुल्यः खलु सर्वजस्य ॥ ५० ॥

शोथो महानन्नजलावरोधी
तीव्रज्वरो वायुगतेर्निहन्ता।
कफेन जातो रुधिरान्वितेन
गले गलौघः परिकीर्त्यतेऽसौ ॥ ५१ ॥

यस्ताम्यमानः श्वसिति प्रसक्तं
भिन्नस्वरः शुष्कविमुक्तकण्ठः।
कफोपदिग्धेष्वनिलायनेषु
ज्ञेयः स रोगः श्वसनात्स्वरघ्नः ॥ ५२ ॥

प्रतानवान् यः श्वयथुः सुकष्टो
गलोपरोधं कुरुते क्रमेण।
स मांसतानः कथितोऽवलम्बी
प्राणप्रणुत्सर्वकृतो विकारः ॥ ५३ ॥

सदाहतोदं श्वयथुं सरक्त-
मन्तर्गले पूतिविशीर्णमांसम्।
पित्तेन विद्याद्वदने विदारीं
पार्श्वे विशेषात्स तु येन शेते ॥ ५४ ॥

---

१ "ऽतिरुक्" ख.।

मुखपाकलक्षणानि।

सर्वसरास्तु—वातपित्तकफशोणितजाताः॥

स्फोटैः सतोदैर्वदनं समन्ता-
द्यस्याचितं सर्वसरः स वातात्।
रक्तैः सदाहैस्तनुभिः सपीतै-
र्यस्याचितं चापि स पित्तकोपात्॥ ५५॥
कण्डूयुतैरल्परुजैः सवर्णै-
र्यस्याचितं चापि स वै कफेन।
रक्तेन पित्तोदित एक एव
कैश्चित्प्रदिष्टो मुखरोगसंज्ञः॥ ५६॥

इति मुखरोगनिदानम्।

---

अथातो मुखरोगचिकित्सितं व्याख्यास्यामः।

वातजौष्ठप्रकोपचिकित्सा।

ओष्ठप्रकोपे वातोत्थे शाल्वणेनोपनाहनम्।
वस्तिकर्मणि नस्ये च तैलं वातहरैः शृतम्॥ ५७॥
स्वेदोऽभ्यङ्गः स्नेहपानं रसायनमपीष्यते।
श्रीवेष्टकं सर्जरसं गुग्गुलुं सुरदारु च।
यष्टीमधुकचूर्णं च विदध्यात्प्रतिसारणम्॥ ५८॥

पित्तजौष्ठप्रकोपचिकित्सा।

वेधं शिराणां वमनं विरेकं तिक्तस्य पानं रसभोजनं च।
पित्तोपसृष्टेष्वधरेषु कुर्याच्छीतान् प्रलेपान् परिषेचनं च॥५९॥
रक्तपित्ताभिघातोत्थं जलौकोभिरुपाचरेत्।
पित्तविद्रधिवच्चापि क्रियाः कुर्यादशेषतः॥ ६०॥

कफजौष्ठप्रकोपचिकित्सा।

शिरोविरेचनं धूमः स्वेदः कवलधारणम्।
हृतरक्ते प्रयोक्तव्यमोष्ठपाके कफात्मके॥ ६१॥

त्रिकटु स्वर्जिकाक्षारः क्षारश्च यवशूकजः।
क्षौद्रयुक्तं विधातव्यमेतच प्रतिसारणम्॥ ६२॥

मेदोजौष्ठप्रकोपचिकित्सा।

मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः।
प्रियङ्गुत्रिफलालोध्रं सक्षौद्रं प्रतिसारणम्।
हितं च त्रिफलाचूर्णं मधुयुक्तं प्रलेपने॥ ६३॥

ओष्ठत्वग्भेदे योगद्वयम्।

मञ्जिष्ठकम्पिल्लकतुत्थदार्वीजीवन्तिकल्कैः पयसा समांशैः।
पक्त्वा पयः सर्जरसं ससिक्थं दद्यात्तदोष्ठत्वचभेदहन्तृ॥ ६४॥
तैलं घृतं सर्जरसं ससिक्थं गुडं तथा सैन्धवगैरिके च।
पक्त्वा समांशं दशनच्छदानां त्वग्भेदहन्तृ व्रणरोपणं च॥६५॥

मुखरोगेषु रक्तस्रावणविधिः।

मुखदन्तमूलगलजाः प्रायो रोगाः कफास्रभूयिष्ठाः।
तस्मात्तेषामसकृद्रुधिरं विस्रावयेदुष्टम्॥ ६६॥

शीतादचिकित्सा।

शीतादे हृतरक्ते तु लेपनं गौरसर्षपैः।
निःक्वाथ्य त्रिफलां मुस्तां गण्डूषः सरसाञ्जनः॥६७॥

दन्तरक्तस्रावे पीतकं चूर्णम्।

कुष्ठं दार्वी रोध्रमब्दं समङ्गा पाठा तिक्ता तेजिनी पीतिका च।
चूर्णं शस्तं घर्षणं तद्द्विजानां रक्तस्रावं हन्ति कण्डूं रुजं च॥६८॥
चलदन्तस्थिरकरं धार्यं बकुलचर्वणम्।

दन्तपुप्पुटकचिकित्सा।

दन्तपुप्पुटके कार्यं तरुणे रक्तमोक्षणम्॥ ६९॥
सपञ्चलवणक्षारं सक्षौद्रं प्रतिसारणम्।

दन्तहर्षचिकित्सा।

दन्तानां तोदहर्षौ च जायेते वाततस्तयोः॥ ७०॥
उष्णतैलाढ्यवातघ्ना निर्यूहाः कवलग्रहाः।
माक्षिकं पिप्पलीसर्पिर्मिश्रितं धारयेन्मुखे॥ ७

दन्तशूलहरं प्रोक्तं प्रधानमिदमौषधम्।

दन्तवेष्टकचिकित्सा।

विस्राविते दन्तवेष्टे व्रणं तु प्रतिसारयेत्॥ ७२॥
रोध्रपतङ्गमधुकलाक्षाचूर्णैर्मधूत्तरैः।
गण्डूषे क्षीरिणो योज्याः सक्षौद्रसितशर्कराः॥ ७३॥
जातीपत्रपुनर्नवातिलकणाकोरण्टकुष्ठं वचा-
शुण्ठीदीप्यहरीतकीसमधृतं चूर्णं मुखे धारयेत्।
वातघ्नं कफनाशनं कृमिहरं दुर्गन्धनिर्नाशनं
शूलघ्नं श्वयथुघ्नरक्तशमनं दन्तांश्च वज्रायते॥ ७४॥

सौषिरचिकित्सा।

सौषिरे हृतरक्ते तु रोध्रमुस्तरसाञ्जनैः।
सक्षौद्रः शस्यते लेपो गण्डूषे क्षीरिणो हिताः॥ ७५॥

उपकुशचिकित्सा।

संशोध्योभयतो विध्येच्छिरां चोपकुशे ततः।
काकोदुम्बरिकागोजीपत्रैर्विस्रावयेद्भिषक्॥ ७६॥
क्षौद्रयुक्तैश्च लवणैः सव्योषैः प्रतिसारयेत्।
पिप्पल्यः सर्षपाः श्वेता नागरं नैचुलं फलम्॥ ७७॥
सुखोदकेन संमर्द्य कवलं तस्य योजयेत्।
कल्कैः पटोलचन्दनमञ्जिष्ठानिम्बमधुकरजनीनाम्।
तैलं सिद्धं शमयेद्गण्डूषैः सौषिरोपकुशौ॥ ७८॥

परिदरचिकित्सा।

क्रियां परिदरे कुर्याच्छीतादोक्तां विचक्षणः।
शस्त्रेण दन्तवर्द्मे दन्तमूलानि शोधयेत्॥ ७९॥
ततः क्षीरं प्रयुञ्जीत क्रियाः सर्वाः सुशीतलाः।

अधिदन्तचिकित्सा।

उद्धृत्याधिकदन्तं तु ततोऽग्निमवचारयेत्॥ ८०॥

क्रिमिदन्तकवच्चापि विधिः कार्यो विजानता।

अधिमांसचिकित्सा।

छित्वाऽधिमांसं सक्षौद्रैरेतैश्चूर्णैरुपाचरेत् ॥ ८१ ॥
पाठावचातेजवतीस्वर्जिकायावशूकजैः।
क्षौद्रद्वितीयाः पिप्पल्यः कवलश्चात्र कीर्तितः ॥ ८२ ॥
पटोलनिम्बत्रिफलाकषायश्चात्र धावनम्।
शिरोविरेकश्च हितो धूमो वैरेचनश्च यः ॥ ८३ ॥

दन्तनाडीचिकित्सा।

नाडीव्रणहरं कर्म दन्तनाडीषु कारयेत्।
यद्दन्तमधिजायेत नाडीदन्तं तमुद्धरेत् ॥ ८४ ॥
छित्त्वा मांसानि शस्त्रेण यदि नोपरिजो भवेत्।
शोधयित्वा दहेच्चापि क्षारेण ज्वलनेन वा ॥ ८५ ॥
गतिर्हिनस्ति हन्वस्थि दशने समुपेक्षिते।
तस्मात्समूलं दशनमुद्धरेद्भग्नमस्थि च ॥ ८६ ॥
उद्धृते तूत्तरे दन्ते शोणितं यत्प्रसिच्यते।
रक्तातियोगात्पूर्वोक्ता घोरा रोगा भवन्ति हि ॥ ८७॥
चलमप्युत्तरं दन्तमतो नापहरेद्भिषक्।
कषायं जातिमदनकटुकास्वादुकण्टकैः ॥ ८८ ॥
रोध्रखदिरमञ्जिष्ठायष्ट्याह्वैश्चापि यत्कृतम्।
तैलं संशोधनं हन्यात्तद्धि दन्तगतां गतिम् ॥ ८९ ॥
कषायं परतः कृत्वा पिष्ट्वा रोध्रादि कल्कवम्।
कण्टकी मदनो योज्यः स्वादुकण्टा विकङ्कतः ॥ ९० ॥
शङ्खिन्यङ्कोलसुमनःकरवीरसुवर्चलाः।
शोधनानि कषायाणि वर्गश्चारग्वधादिकः ॥ ९१ ॥
सुखोष्णः स्नेहकवलः सर्पिषस्त्रैवृतस्य वा।
निर्यूहश्चानिलघ्नानां दन्तहर्षप्रमर्दनः ॥ ९२ ॥

स्नैहिकश्च हितो धूमो नस्यं स्नैहिकमेव च ।

दन्तशर्कराचिकित्सा ।

अहिंसन् दन्तमूलानि शर्करामुद्धरेद्भिषक् ॥ ९३ ॥
लाक्षाचूर्णैर्मधुयुतैस्ततस्तां प्रतिसारयेत् ।
दन्तहर्षक्रियां चापि कुर्यान्निरवशेषतः ॥ ९४ ॥

कपालिकाचिकित्सा ।

कपालिका कृच्छ्रसाध्या तत्राप्येषा क्रिया हिता ।

क्रिमिदन्तकचिकित्सा ।

जयेद्विस्रावणैः स्विन्नमचलं क्रिमिदन्तकम् ॥ ९५ ॥
तथाऽवपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः ।
भद्रदार्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः ।
हिङ्गु कोष्णं च मतिमान् कृमिदन्ते प्रदापयेत् ॥ ९६ ॥
बृहतीभूमिकदम्बकपञ्चाङ्गुलकण्टकिक्काथैः ।
गण्डूषस्तैलयुतः कृमिदन्ते वेदनोपशमः ॥ ९७ ॥
सर्प[illegible]गोधात्[illegible]निर्गुण्डीखादिरनिम्बपीलूनाम् ।
तैलं रुजं द्विजानां [illegible]
नीली धात्री स्नुही बिम्बी हेमक्षीरश्च ॥ ९८ ॥
आसामन्यतमान्मूलं धारणात्कृमिदन्तापश्चमी ।
संपीड्य दशनैर्गाढं मूलं सम्यक्प्रधारितम् ॥ ९९ ॥
नाशयेद्दुग्धिकायास्तु कृमीन् दन्तसमुद्भवान् ॥ १००॥

सौषिरे विदार्यादितैलम् ।

चलमुद्धृत्य वा स्थानं दहेद्वै सौषिरस्य च ।
ततो विदारीयष्ट्याह्वशृङ्गाटककसेरुभिः ।
तैलं दशगुणक्षीरसिद्धं नस्ये प्रपूजितम् ॥ १०१ ॥

हनुमोक्षचिकित्सा ।

हनुमोक्षे समुद्दिष्टां कुर्यादर्दितवत्क्रियाम् ।

दन्तरोगेऽपथ्यानि ।

फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् ॥ १०

तथाऽतिकठिनान् भक्ष्यान् दन्तरोगी विवर्जयेत् ।

कण्टकचिकित्सा ।

ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक्चिकित्सितम् ॥१०३॥
कण्टकेष्वनिलोत्थेषु तत्कार्यं भिषजा खलु ।
पित्तजेषु निघृष्टेषु निःस्रुते दुष्टशोणिते ॥ १०४ ॥
प्रतिसारणगण्डूषा नस्यं च मधुरं हितम् ।
कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये ॥ १०५ ॥
पिप्पल्यादिर्मधुयुतः कार्यं च प्रतिसारणम् ।
गृह्णीयात्कवलं चापि गौरसर्षपसैन्धवैः ॥ १०६ ॥
पटोलनिम्बवार्ताकक्षारयूषैश्च भोजयेत् ।

उपजिह्वाचिकित्सा ।

उपजिह्वां तु संलिख्य क्षारेण प्रतिसारयेत् ॥ १०७ ॥
शिरोविरेकगण्डूषधूमैश्चैनामुपाचरेत् ।
मालत्यग्रसमुत्थश्च पल्लवो वारिपेषितः ।
नाशयेल्लेपनेनैव नराणामुपजिह्विकाम् ॥ १०८ ॥

उपजिह्वायां व्योषाद्यं तैलम् ।

व्योषक्षाराभयावह्नि चूर्णमेतत्प्रघर्षणम् ।
उपजिह्वाप्रशान्त्यर्थमेभिस्तैलं विपाचयेत् ॥ १०९ ॥

गलशुण्डीचिकित्सा ।

तालुमूले कफासृग्भ्यां जायते गलशुण्डिका ।
छित्त्वा तां व्योषसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत् ११०
गलशुण्डी शमं याति वज्रीक्षीरेण लेपिता ।
कुष्ठोषणवचासिन्धुकणापाठाम्लवेतसैः ॥ १११ ॥
सक्षौद्रैर्भिषजा कार्यं गलशुण्ड्याः प्रघर्षणम् ।
स्नुक्क्षीरं काष्ठिकाग्रेण कृत्वा तु गलशुण्डिकाम् ॥११२
स्पृशेदाशु विनाशाय तथा चैवोपजिह्विकाम् ।
गलशुण्डीं तु संछिद्य कुर्यात्प्राप्तमिदं क्रमम् ॥ ११३ ॥

मरिचातिविषापाठावचाकुष्ठकुटन्नटैः ।
क्षौद्रयुक्तैः सलवणैस्ततस्तं प्रतिसारयेत् ॥ ११४ ॥
वचामतिविषां रास्नां पाठां कटुकरोहिणीम् ।
निःक्वाथ्य पिचुमन्दं च कवलं तत्र दापयेत् ॥ ११५॥
क्षारसिद्धेषु मुद्गेषु यूषश्चाप्यशने हितः ।

दालनादिचिकित्सा ।

दालने कृमिसंघाते तुण्डिके तालुपुप्पुटे ॥ ११६ ॥
एष एव विधिः कार्यो विशेषः शस्त्रकर्मणि ।

तालुपाकचिकित्सा ।

तालुपाके प्रकर्तव्यं विधानं पित्तसाधनम् ॥ ११७ ॥

तालुशोषचिकित्सा ।

स्नेहस्वेदस्तालुशोषे विधिश्चानिलनाशनः ।

कण्ठरोहिणीचिकित्सा ।

साध्यानां रोहिणीनां च हितं शोणितमोक्षणम् ॥११८
छर्दनं धूमपानं च गण्डूषो नस्यकर्म च ।
वातिकीं तु हृते रक्ते लवणैः प्रतिसारयेत् ॥ ११९ ॥
सुखोष्णैस्तैलकवलान् कारयेचाप्यभीक्ष्णशः ।
पतङ्गशर्कराक्षौद्रैः पैत्तिकीं प्रतिसारयेत् ॥ १२० ॥
द्राक्षापरूषकक्वाथो हितश्च कवलग्रहः ।
आगारधूमकटुकैः कफजां प्रतिसारयेत् ॥ १२१ ॥
श्वेताविडङ्गदन्तीषु तैलं सिद्धं ससैन्धवम् ।
नस्यकर्मणि दातव्यं केवलं च कफोच्छ्रये ॥ १२२ ॥
पित्तवद्वारयेद्वैद्यो रोहिणीं रक्तसंभवाम् ।

कण्ठशालूकचिकित्सा ।

विस्राव्य कण्ठशालूकं साधयेत्तुण्डिकेरिवत् ॥ १२३ ॥
एककालं तथाऽन्नं च भुञ्जीत स्निग्धमल्पशः ।

अधिजिह्वाचिकित्सा ।

उपजिह्विकवचापि प्रकुर्यादधिजिह्वके ॥ १२४ ॥

उन्नम्य जिह्वामाकृष्टां बडिशेनाधिजिह्विकाम्।
छेदयेन्मण्डलाग्रेण तीक्ष्णोष्णैर्घर्षणादिभिः ॥ १२५ ॥

एकवृन्दचिकित्सा।

एकवृन्दं तु संलिख्य विधिं शोधनमाचरेत्।

गिलायुचिकित्सा।

गिलायुश्चापि यो व्याधिस्तं च शस्त्रेण साधयेत् ॥१२६

गलविद्रधिचिकित्सा।

अमर्मस्थमपक्वं च भेदयेद्गलविद्रधिम्।
कण्ठरोगेष्वसृङ्मोक्षस्तीक्ष्णैर्नस्यादिकर्म च ॥ १२७ ॥
क्वाथपानं च दार्वीत्वङ्निम्बतार्क्ष्यकलिङ्गजम्।
हरीतकीकषायो वा पेयो माक्षिकसंयुतः ॥ १२८ ॥
कटुकातिविषापाठादारुमुस्तकलिङ्गकाः।
गोमूत्रक्वथिताः पेयाः कण्ठरोगविनाशनाः ॥ १२९ ॥

कण्ठरोगेषु, यवाग्रजाद्या गुटिका।

यवाग्रजं तेजवतीं सपाठां रसाञ्जनं दारुनिशां सकृष्णाम्।
क्षौद्रेण कुर्याद्गुटिकां मुखेन तां धारयेत्सर्वगलामयेषु ॥१३०॥

कण्ठरोगेषु पञ्चकोलाद्या गुटिका।

पञ्चकोलकतालीसपत्रैलामरिचत्वचः।
पलाशमुष्ककक्षारौ यवक्षारश्च चूर्णितम् ॥ १३१ ॥
द्विगुणेन गुडेनैता गुटिकाः कोलमात्रकाः।
सप्ताहं संस्थिता भव्ये तप्ते मुष्ककभस्मनि।
कण्ठरोगेषु सर्वेषु धार्याः स्युरमृतोपमाः ॥ १३२ ॥

मुखपाकचिकित्सा।

वातात्सर्वसरं चूर्णैर्लावणैः प्रतिसारयेत्।
तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥ १३३ ॥

---

१ 'संभेद' ख.। २ 'चूर्णैलावणैः' ख.।

पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः ।
सर्वः पित्तहरः कार्यो विधिर्मधुरशीतलः ॥ १३४ ॥
प्रतिसारणगण्डूषान् धूमं संशोधनानि च ।
कफात्मके सर्वसरे कर्म कुर्यात्कफापहम् ॥ १३५ ॥
मुखपाके शिरावेधः शिरःकायविरेचनम् ।
कार्यं च बहुधा नित्यं जातीपत्रस्य चर्वणम् ॥ १३६ ॥
जातीपत्रामृताद्राक्षापाठादार्वीफलत्रिकैः ।
क्वाथः क्षौद्रयुतः शीतो [illegible] ...फगुव ॥ १३७
पटोलनिम्बजम्ब्वाम्र... [illegible]

मुखरोगे द्राक्षादिकषायः ।

द्राक्षा पटोलं मधुकं सनिम्बं त्रिवृद्धरिद्रा सुमनःप्रवालाः ।
ससैन्धवं क्षौद्रयुतं वदन्ति सुखोष्णकल्कं व्रणशोधनीयम् १४५
द्राक्षागुडूचीसुमनःप्रवालदार्वीयवासत्रिफलाकषायः ।
क्षौद्रेण युक्तः कवलग्रहोऽयं मुखस्य पाकं शमयत्युदीर्णम् १४६

मुखपाके तिलादिगण्डूषः ।

तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च ।
सक्षौद्रो दग्धवक्रस्य गण्डूषो मुखपाकनुत् ॥ १४७ ॥

स्वरभङ्गे जातीपत्रादिलेहः ।

जातीपत्रं कणा लाजा मातुलुङ्गदलं मधु ।
एला लेहे भवेन्नादः किन्नरस्वरतोऽधिकः ॥ १४८ ॥

व्यङ्गे जातीपत्रादिलेपः ।

जातीपत्राणि जातेश्च फलं संपिष्य वारिणा ।
तस्य लेपे कृते याति मुखे दुर्व्यङ्गलाञ्छनम् ॥ १४९ ॥

मुखरोगे लाक्षारसाद्यं तैलम् ।

तैलं लाक्षारसं क्षीरं पृथक्प्रस्थं समं पचेत् ।
चतुर्गुणेरिमक्राथे द्रव्यैश्च पलसंमितैः ॥ १५० ॥
रोध्रकट्फलमञ्जिष्ठापद्मकेसरपद्मकैः ।
चन्दनोत्पलयष्ट्याह्वैस्तैलगण्डूषधारणम् ॥ १५१ ॥
दालनं दन्तचालं च दन्तमोक्षं कपालिकाम् ।
शीतादं पूतिवक्त्रं च अरुचिं विरसास्यताम् ।
हन्यादाशु गदानेतान् कुर्याद्दन्तानपि दृढान् ॥ १५२ ॥

मुखरोगे खदिरादिगुटिका ।

खदिरस्य तुलां सम्यग्जलद्रोणे विपाचयेत् ।
शेषाष्टभागे तत्रैव प्रतिवापं प्रदापयेत् ॥ १५३ ॥

मुखरोगे जात्याद्या गुटिका ।

जातीकर्पूरपूगानि कङ्कोलकफलानि च ।
इत्येषां गुटिका कार्या मुखसौभाग्यवर्धिनी ।

पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः।
सर्वः पित्तहरः कार्यो विधिर्मधुरशीतलः ॥ १३४ ॥
प्रतिसारणगण्डूषान् धूमं संशोधनानि च।
कफात्मके सर्वसरे क्रमं कुर्यात्कफापहम् ॥ १३५ ॥
मुखपाके शिरावेधः शिरःकायविरेचनम्।
काय च बहुधा नित्यं जातीपत्रस्य चर्वणम् ॥ १३६ ॥
जातीपत्रामृताद्राक्षापाठादार्वीफलत्रिकैः।
क्वाथः क्षौद्रयुतः शीतो गण्डूषो मुखपाकनुत् ॥ १३७
पटोलनिम्बजम्ब्वाम्रमालतीधवपल्लवाः।
पञ्चपल्लवकः श्रेष्ठः कषायो मुखधावने ॥ १३८ ॥
स्वरसः क्वथितो दार्व्या घनीभूतो रसक्रिया।
सक्षौद्रो मुखरोगासृग्दोषनाडीव्रणापहः ॥ १३९ ॥

मुखरोगे सप्तच्छदादिक्वाथः।

सप्तच्छदोशीरपटोलमुस्तहरीतकीतिक्तकरोहिणीभिः।
यष्ट्याह्वराजद्रुमचन्दनैश्च क्वाथं पिबेत्पाकहरं मुखस्य ॥ १४० ॥

मुखरोगे पटोलादिक्वाथः।

पटोलशुण्ठीत्रिफलाविशालात्रायन्तितिक्ताद्विनिशामृतानाम्।
पीतः कषायो मधुना निहन्ति मुखस्थितश्चास्यगदानशेषान् ॥
क्वथिता त्रिफलापाठामृद्वीकाजातिपल्लवाः।
निषेव्या भक्षणीया वा त्रिफला मुखपाकहा ॥ १४२ ॥

मुखरोगे पटोलादिकषायः।

पटोलमुस्तामलकोत्पलानि दुरालभाचन्दनसारिवाश्च।
शृतानि शीतानि मुखामयेषु पेयानि सक्षौद्रसितोपलानि १४३

मुखरोगे किराततिक्तादिकषायः।

किराततिक्तं कटुरोहिणी च जातिप्रवालाः सपटोलनिम्बाः।
भिन्ने मुखे माक्षिकसंप्रयुक्ता कषाययोगाः प्रतिसारणानि १४४

मुखरोगे द्राक्षादिकषायः ।

द्राक्षा पटोलं मधुकं सनिम्बं त्रिवृद्धरिद्रा सुमनःप्रवालाः ।
ससैन्धवं क्षौद्रयुतं वदन्ति मुखोष्णकल्कं व्रणशोधनीयम् १४५
द्राक्षागुडूचीसुमनःप्रवालदार्वीयवासत्रिफलाकषायः ।
क्षौद्रेण युक्तः कवलग्रहोऽयं मुखस्य पाकं शमयत्युदीर्णम् १४६

मुखपाके तिलादिगण्डूषः ।

तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च ।
सक्षौद्रो दग्धवक्त्रस्य गण्डूषो मुखपाकनुत् ॥ १४७ ॥

स्वरभङ्गे जातीपत्रादिलेहः ।

जातीपत्रं कणा लाजा मातुलुङ्गदलं मधु ।
एला लेहे भवेन्नादः किन्नरस्वरतोऽधिकः ॥ १४८ ॥

व्यङ्गे जातीपत्रादिलेपः ।

जातीपत्राणि जातेश्च फलं संपिष्य वारिणा ।
तस्य लेपे कृते याति मुखे दुर्व्यङ्गलाञ्छनम् ॥ १४९ ॥

मुखरोगे लाक्षारसाद्यं तैलम् ।

तैलं लाक्षारसं क्षीरं पृथक्प्रस्थं समं पचेत् ।
चतुर्गुणेरिमक्काथे द्रव्यैश्च पलसंमितैः ॥ १५० ॥
रोध्रकट्फलमञ्जिष्ठापद्मकेसरपद्मकैः ।
चन्दनोत्पलयष्ट्याह्वैस्तैलगण्डूषधारणम् ॥ १५१ ॥
दालनं दन्तचालं च दन्तमोक्षं कपालिकाम् ।
शीतादं पूतिवक्त्रं च अरुचिं विरसास्यताम् ।
हन्यादाशु गदानेतान् कुर्याद्दन्तानपि दृढान् ॥ १५२ ॥

मुखरोगे खदिरादिगुटिका ।

खदिरस्य तुलां सम्यग्जलद्रोणे विपाचयेत् ।
शेषाष्टभागे तत्रैव प्रतिवापं प्रदापयेत् ॥ १५३ ॥

मुखरोगे जात्याद्या गुटिका ।

जातीकर्पूरपूगानि कङ्कोलकफलानि च ।
इत्येषां गुटिका कार्या मुखसौभाग्यवर्धिनी

दन्तौष्ठमुखरोगेषु जिह्वाताल्वामयेषु च ॥ १५४ ॥

मुखरोगे कतिपययोगाः ।

निशाजीवन्तिकादारुमञ्जिष्ठाशालितन्दुलैः ।
मुखरोगहरं पक्वं दुग्धं सिक्थघनान्वितम् ॥ १५५ ॥
कुम्भीरपादसंयुक्तं क्षीरं पक्वं सुशीतलम् ।
एतत्पादप्रलेपेन दन्ता नैव चलन्ति हि ॥ १५६ ॥
सिक्थकं यावकोपेतं कटुतैलेन पाचितम् ।
उष्णे विपादिकां हन्ति लेपतो वेगतोऽखिलाम्॥१५७

कनकभुजगवल्लीमालतीपत्रदूर्वा-
रसबलिकुनटीभिर्मर्दितस्तैलयुक्तः ।
अपहरति रसेन्द्रो मर्दनात्कुष्ठकण्डू-
स्फुटनकठिनमङ्गे श्यामलत्वं त्वचायाः ॥ १५८

मुखरोगे खदिरादिगुटिका ।

गायत्रिसारतुलयोरिमवल्कलानां
सार्धं तुलायुगलमम्बुघटैश्चतुर्भिः ।
निःक्वाथ्य पादमवशेष्य सुवस्त्रपूतं
भूयः पचेदथ शनैर्मृदुपावकेन ॥ १५९ ॥
तस्मिन् घनत्वमुपगच्छति चूर्णमेषां
श्लक्ष्णं क्षिपेच्च कवलग्रहभागिकानाम् ।
एलामृणालसितचन्दनचन्दनाम्बु-
श्यामातमालविकसाघनलोहयष्टी- ॥ १६० ॥
लज्जाफलत्रयरसाञ्जनधातकीभ-
श्रीपुष्पगैरिककटङ्कटकट्फलानाम् ।
पद्माटलोध्रवटरोहयवासकानां
मांसीनिशासुरभिवल्कलसंयुतानाम् ॥ १६१ ॥
कङ्कोलजातिफलकोललवङ्गकानि
चूर्णीकृतानि विदधीत पलांशकानि ।

शीतेऽवतार्य घनसारचतुःपलं च
क्षिप्त्वा कलायसदृशीर्गुटिकाः प्रकुर्यात् ॥ १६२ ॥
शुष्का मुखे विनिहिता विनिवारयन्ति
रोगान् गलोष्ठरसनाद्विजतालुजातान्।
कुर्यान्मुखे सुरभितां पटुतां रुचिं च
स्थैर्यं परं दशनगं रसनालघुत्वम् ॥ १६३ ॥

ओष्ठस्फुटने जीवन्तिकादिक्षीरम्।

जीवन्तिकामदनतुत्थकचित्रवल्ली-
दार्वीयुतं कलमशालिसमन्वितं च।
दुग्धं शृतं शमयति स्फुटनोपसर्ग-
मालेपनादधरसंश्रयमाशु पुंसाम् ॥ १६४ ॥

मुखाद्रक्तप्रवृत्तौ काकोदुम्बरिकामूलयोगः।

काकोदुम्बरिकामूलं पिष्टं तन्दुलवारिणा।
पानान्निवारयत्याशु प्रवृत्तं वदनादसृक् ॥ १६५ ॥

मुखरोगे जातीपत्रयोगः।

संचर्वितैर्वक्त्रधृतैः प्रशान्तिं वक्त्रामयो गच्छति जातिपत्रैः।
दन्तास्तु बीजैर्बकुलद्रुमस्य स्थानच्युता अप्यचला भवन्ति१६६

मुखदौर्गन्ध्ये मुस्तादियोगः।

मुस्तैलवालुमधुकैर्गदधान्यकाभ्यां
त्रुट्या च संनिहितया वदनान्तराले।
स्वाभाविकोऽपि मुखमुज्झति पूतिगन्धो
वार्ता तु मद्यलशुनादिभवस्य कैव ॥ १६७ ॥

मुखरोगे हरीतकीयोगः।

गोमूत्रमध्ये क्वथिता प्रगाढं मिश्रयन्विता बालककुष्ठयुक्ता।
निहन्ति पथ्या निहिता मुखान्तर्दौर्गन्ध्यमन्यानपि वक्त्रदोषान्॥

मुखदौर्गन्ध्ये कुष्ठादियोगः।

गदमरुबकजातीकोशजातीफलत्व-
ग्विरचितगुटिकाभिर्वक्त्रमध्ये धृताभिः।

तं ग्रन्थिभिस्त्वामलकप्रमाणैर्मत्स्याण्डजालप्रतिमैस्तथाऽन्यैः।
अनन्यवर्णैरुपचीयमानं चयप्रकर्षादपचीं वदन्ति ॥ १० ॥
कण्ड्वन्वितास्तेऽल्परुजः प्रभिन्नाः स्रवन्ति नश्यन्ति भवन्ति चान्ये
मेदःकफाभ्यां खलु रोग एष सुदुस्तरो वर्षगणानुबन्धी ॥११॥

वातजातिभेदेनार्बुदलक्षणानि।

गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमभिप्रदूष्य।
वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम् ॥१२॥
कुर्वन्ति मांसोपचयं सशोफं तमर्बुदं शास्त्रविदो वदन्ति।
वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा च ॥१३॥
तज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि सदा भवन्ति।
दोषः प्रदुष्टो रुधिरं शिरास्तु संपीड्य संकोच्य गतस्तु पाकम्॥
सास्रावमुन्नह्यति मांसपिण्डं मांसाङ्कुरैराचितमाशुवृद्धिम्।
स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकं स्यात्॥ १५ ॥
रक्तक्षयोपद्रवपीडितत्वात् पाण्डुर्भवेदर्बुदपीडितस्तु।
मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टं प्रकरोति शोफम् ॥१६॥
अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम्।
प्रदुष्टमांसस्य नरस्य बाढमेतद्भवेन्मांसपरायणस्य ॥ १७ ॥
मांसार्बुदं त्वेतदसाध्यमुक्तं

अर्बुदानामसाध्यलक्षणानि।

साध्येष्वपीमानि विवर्जयेत्तु।
संप्रस्रुतं मर्मणि यच्च जातं स्रोतःसु वा यच्च भवेदचाल्यम्॥१८॥
संजायते यच्च हि पूर्वजाते ज्ञेयं तदध्यर्बुदमर्बुदज्ञैः।
यद्द्वन्द्वजातं युगपत्क्रमाद्वा द्विरर्बुदं तच्च भवेदसाध्यम् ॥ १९ ॥

अर्बुदानां पाकाभावे हेतुः।

न पाकमायान्ति कफाधिकत्वान्मेदोबहुत्वाच्च विशेषतस्तु।
दोषस्थिरत्वाद्ग्रथनाच्च तेषां सर्वार्बुदान्येव निसर्गतस्तु ॥ २० ॥

वातजातिभेदेन गलगण्डलक्षणानि ।

वातः कफश्चैव भृशं प्रवृद्धौ मन्ये तु संगृह्य तथैव मेदः ।
कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः२१
तोदान्वितः कृष्णशिरावनद्धः कृष्णारुणो वा पवनात्मकस्तु ।
मेदोन्वितश्चोपचितश्च कालाद्भवेत्प्रतिस्तब्धतरोऽरुजश्च ॥ २२ ॥
पारुष्ययुक्तश्चिरवृद्ध्यपाको यदृच्छया पाकमियात्कदाचित् ।
वैरस्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रशोषः ॥ २३ ॥
स्थिरः सवर्णोऽल्परुगुग्रकण्डूः शीतो महांश्चापि कफात्मकश्च ।
चिराभिवृद्धिं कुरुते चिराच्च प्रपच्यते मन्दरुजः कदाचित्॥२४॥
माधुर्यमास्यस्य च यस्य जन्तोर्भवेत्तथा तालुगलप्रलेपः ।
स्निग्धो मृदुः पाण्डुरनिष्टगन्धो मेदोभवः स्वल्परुजोऽतिकण्डूः॥
प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः ।
स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेन शब्दं कुरुते च नित्यम्॥

गलगण्डानामसाध्यलक्षणम् ।

कृच्छ्राच्छ्वसन्तं मृदुःसर्वगात्रं संवत्सरातीतमरोचकार्तम् ।
क्षीणं च वैद्यो गलगण्डिनं तु भिन्नस्वरं चैव विवर्जयेच्च ॥२७॥
निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले ।
महान्वा यदि वा ह्रस्वस्तं गण्डमिति निर्दिशेत् ॥ २८ ॥

ग्रन्थ्यपच्यर्बुदगलगण्डनिदानं समाप्तम् ॥

---

अथातो ग्रन्थ्यपच्यर्बुदगलगण्डचिकित्सितं व्याख्यास्यामः ।

गण्डमालायां वरुणमूलक्वाथः ।

मधुनाऽऽढ्योऽसकृत्पीतः क्वाथो वरुणमूलजः ।
गण्डमालां निहन्त्याशु चिरकालानुबन्धिनीम् ॥ २९ ॥

गण्डमालादौ अलम्बुषास्वरसः ।

अलम्बुषादलोद्भूतात्स्वरसाद्द्वे पले पिबेत् ।
अपच्या गण्डमालाया कामलायाश्च शान्तये ॥ ३० ॥

---

१ 'संवृत्त' क. ।

तं ग्रन्थिभिस्त्वामलकप्रमाणैर्मत्स्याण्डजालप्रतिमैस्तथाऽन्यैः।
अनन्यवर्णैरुपचीयमानं चयप्रकर्षादपचीं वदन्ति॥ १०॥
कण्ड्वन्वितास्तेऽल्परुजः प्रभिन्नाः स्रवन्ति नश्यन्ति भवन्ति चान्ये
मेदःकफाभ्यां खलु रोग एष सुदुस्तरो वर्षगणानुबन्धी॥११॥

वातजातिभेदेनार्बुदलक्षणानि।

गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमभिप्रदूष्य।
वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम्॥१२॥
कुर्वन्ति मांसोपचयं सशोफं तमर्बुदं शास्त्रविदो वदन्ति।
वातेन पित्तेन कफेन वापि रक्तेन मांसेन च मेदसा च॥१३॥
तज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि सदा भवन्ति।
दोषः प्रदुष्टो रुधिरं शिरास्तु संपीड्य संकोच्य गतस्तु पाकम्॥
सास्रावमुन्नह्यति मांसपिण्डं मांसाङ्कुरैराचितमाशुवृद्धिम्।
स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकं स्यात्॥ १५॥
रक्तक्षयोपद्रवपीडितत्वात् पाण्डुर्भवेदर्बुदपीडितस्तु।
मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टं समुपैति शोफम्॥१६॥
अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम्।
प्रदुष्टमांसस्य नरस्य बाढमेतद्भवेन्मांसपरायणस्य॥ १७॥
मांसार्बुदं त्वेतदसाध्यमुक्तं

अर्बुदानामसाध्यलक्षणानि।

साध्येष्वपीमानि विवर्जयेत्तु।
संप्रस्रुतं मर्मणि यच्च जातं स्रोतःसु वा यच्च भवेदचाल्यम्॥१८॥
संजायते यच्च हि पूर्वजाते ज्ञेयं तदध्यर्बुदमर्बुदज्ञैः।
यद्द्वन्द्वजातं युगपत्क्रमाद्वा द्विरर्बुदं तच्च भवेदसाध्यम्॥ १९॥

अर्बुदानां पाकाभावे हेतुः।

न पाकमायान्ति कफाधिकत्वान्मेदोबहुत्वाच्च विशेषतस्तु।
दोषस्थिरत्वाद्ग्रथनाच्च तेषां सर्वार्बुदान्येव निसर्गतस्तु॥ २०॥

वातजातिभेदेन गलगण्डलक्षणानि।

वातः कफश्चैव भृशं प्रवृद्धौ मन्ये तु संगृह्य तथैव मेदः।
कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः२१
तोदान्वितः कृष्णशिरावनद्धः कृष्णारुणो वा पवनात्मकस्तु।
मेदोन्वितश्चोपचितश्च कालाद्वर्धत्यतिस्तब्धतरोऽरुजश्च ॥२२॥
पारुष्ययुक्तश्चिरवृद्ध्यपाको यदृच्छया पाकमियात्कदाचित्।
वैरस्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रशोषः ॥२३॥
स्थिरः सवर्णोऽल्परुगुग्रकण्डूः शीतो महांश्चापि कफात्मकश्च।
चिराभिवृद्धिं कुरुते चिराच्च प्रपच्यते मन्दरुजः कदाचित्॥२४॥
माधुर्यमास्यस्य च यस्य जन्तोर्भवेत्तथा तालुगलप्रलेपः।
स्निग्धो मृदुः पाण्डुरनिष्टगन्धो मेदोभवः स्वल्परुजोऽतिकण्डूः॥
प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः।
स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेन शब्दं कुरुते च नित्यम्॥

गलगण्डानामसाध्यलक्षणम्।

कृच्छ्राच्छ्वसन्तं मृदुःसर्वगात्रं संवत्सरातीतमरोचकार्तम्।
क्षीणं च वैद्यो गलगण्डिनं तु भिन्नस्वरं चैव विवर्जयेच्च॥२७॥
निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले।
महान्वा यदि वा ह्रस्वस्तं गण्डमिति निर्दिशेत्॥२८॥

ग्रन्थ्यपच्यर्बुदगलगण्डनिदानं समाप्तम्॥

---

अथातो ग्रन्थ्यपच्यर्बुदगलगण्डचिकित्सितं व्याख्यास्यामः।

गण्डमालायां वरुणमूलक्वाथः।

मधुनाऽऽढ्योऽसकृत्पीतः क्वाथो वरुणमूलजः।
गण्डमालां निहन्त्याशु चिरकालानुबन्धिनीम्॥२९॥

गण्डमालादौ अलम्बुषास्वरसः।

अलम्बुषादलोद्भूतात्स्वरसाद्वे पले पिबेत्।
अपच्या गण्डमालाया कामलायाश्च शान्तये॥३०॥

---

१ 'सग्रस' क.।

तं ग्रन्थिभिस्त्वामलकप्रमाणैर्मत्स्याण्डजालप्रतिमैस्तथाऽन्यैः।
अनन्यवर्णैरुपचीयमानं चयप्रकर्षादपचीं वदन्ति ॥ १० ॥
कण्ड्वन्वितास्तेऽल्परुजः प्रभिन्नाः स्रवन्ति नश्यन्ति भवन्ति चान्ये
मेदःकफाभ्यां खलु रोग एष सुदुस्तरो वर्षगणानुबन्धी ॥११॥

वातजातिभेदेनार्बुदलक्षणानि।

गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमभिप्रदूष्य।
वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम् ॥१२॥
कुर्वन्ति मांसोपचयं सशोफं तमर्बुदं शास्त्रविदो वदन्ति।
वातेन पित्तेन कफेन वापि रक्तेन मांसेन च मेदसा च ॥१३॥
तज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि सदा भवन्ति।
दोषः प्रदुष्टो रुधिरं शिरास्तु संपीड्य संकोच्य गतस्तु पाकम्॥
सास्रावमुन्नह्यति मांसपिण्डं मांसाङ्कुरैराचितमाशुवृद्धिम्।
स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकं स्यात्॥ १५ ॥
रक्तक्षयोपद्रवपीडितत्वात् पाण्डुर्भवेदर्बुदपीडितस्तु।
मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टं समुपैति शोफम् ॥१६॥
अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम्।
प्रदुष्टमांसस्य नरस्य बाढमेतद्भवेन्मांसपरायणस्य ॥ १७ ॥
मांसार्बुदं त्वेतदसाध्यमुक्तं

अर्बुदानामसाध्यलक्षणानि।

साध्येष्वपीमानि विवर्जयेत्तु।
संप्रस्रुतं मर्मणि यच्च जातं स्रोतःसु वा यच्च भवेदचाल्यम्॥१८॥
संजायते यच्च हि पूर्वजाते ज्ञेयं तदध्यर्बुदमर्बुदज्ञैः।
यद्वन्द्वजातं युगपत्क्रमाद्वा द्विरर्बुदं तच्च भवेदसाध्यम् ॥ १९ ॥

अर्बुदानां पाकाभावे हेतुः।

न पाकमायान्ति कफाधिकत्वान्मेदोबहुत्वाच्च विशेषतस्तु।
दोषस्थिरत्वाद्ग्रथनाच्च तेषां सर्वार्बुदान्येव निसर्गतस्तु ॥ २० ॥

वातजातिभेदेन गलगण्डलक्षणानि।

वातः कफश्चैव भृशं प्रवृद्धौ मन्ये तु संगृह्य तथैव मेदः।
कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः॥२१॥
तोदान्वितः कृष्णशिरावनद्धः कृष्णारुणो वा पवनात्मकस्तु।
मेदोन्वितश्चोपचितश्च कालाद्भवेत्प्रतिस्तब्धतरोऽरुजश्च॥२२॥
पारुष्ययुक्तश्चिरवृद्ध्यपाको यदृच्छया पाकमियात्कदाचित्।
वैरस्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रशोषः॥२३॥
स्थिरः सवर्णोऽल्परुगुग्रकण्डूः शीतो महांश्चापि कफात्मकश्च।
चिराभिवृद्धिं कुरुते चिराच्च प्रपच्यते मन्दरुजः कदाचित्॥२४॥
माधुर्यमास्यस्य च यस्य जन्तोर्भवेत्तथा तालुगलप्रलेपः।
स्निग्धो मृदुः पाण्डुरनिष्टगन्धो मेदोभवः स्वल्परुजोऽतिकण्डूः॥
प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः।
स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेन शब्दं कुरुते च नित्यम्॥

गलगण्डानामसाध्यलक्षणम्।

कृच्छ्राच्छ्वसन्तं मृदुःसर्वगात्रं संवत्सरातीतमरोचकार्तम्।
क्षीणं च वैद्यो गलगण्डिनं तु भिन्नस्वरं चैव विवर्जयेच्च॥२७॥
निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले।
महान्वा यदि वा ह्रस्वस्तं गण्डमिति निर्दिशेत्॥२८॥

ग्रन्थ्यपच्यर्बुदगलगण्डनिदानं समाप्तम्॥

---

अथातो ग्रन्थ्यपच्यर्बुदगलगण्डचिकित्सितं व्याख्यास्यामः।

गण्डमालायां वरुणमूलक्वाथः।

मधुनाऽऽढ्योऽसकृत्पीतः क्वाथो वरुणमूलजः।
गण्डमालां निहन्त्याशु चिरकालानुबन्धिनीम्॥२९॥

गण्डमालादौ अलम्बुषास्वरसः।

अलम्बुषादलोद्भूतात्स्वरसाद्वे पले पिबेत्।
अपच्या गण्डमालाया कामलायाश्च शान्तये॥३०॥

---

१ 'संमूल' क.।

तं ग्रन्थिभिस्त्वामलकप्रमाणैर्मत्स्याण्डजालप्रतिमैस्तथाऽन्यैः ।
अनन्यवर्णैरुपचीयमानं चयप्रकर्षादपचीं वदन्ति ॥ १० ॥
कण्ड्वन्वितास्तेऽल्परुजः प्रभिन्नाः स्रवन्ति नश्यन्ति भवन्ति चान्ये
मेदःकफाभ्यां खलु रोग एष सुदुस्तरो वर्षगणानुबन्धी ॥११॥

वातजातिभेदेनार्बुदलक्षणानि ।

गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमभिप्रदूष्य ।
वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम् ॥१२॥
कुर्वन्ति मांसोपचयं सशोफं तमर्बुदं शास्त्रविदो वदन्ति ।
वातेन पित्तेन कफेन वापि रक्तेन मांसेन च मेदसा च ॥१३॥
तज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि सदा भवन्ति ।
दोषः प्रदुष्टो रुधिरं शिरास्तु संपीड्य संकोच्य गतस्तु पाकम्॥
सास्रावमुन्नह्यति मांसपिण्डं मांसाङ्कुरैराचितमाशुवृद्धिम् ।
स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकं स्यात् ॥ १५ ॥
रक्तक्षयोपद्रवपीडितत्वात् पाण्डुर्भवेदर्बुदपीडितस्तु ।
मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टं प्रसुपैति शोफम् ॥१६॥
अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम् ।
प्रदुष्टमांसस्य नरस्य बाढमेतद्भवेन्मांसपरायणस्य ॥ १७ ॥
मांसार्बुदं त्वेतदसाध्यमुक्तं

अर्बुदानामसाध्यलक्षणानि ।

साध्येष्वपीमानि विवर्जयेत्तु ।
संप्रस्रुतं मर्मणि यच्च जातं स्रोतःसु वा यच्च भवेदचाल्यम्॥१८॥
संजायते यच्च हि पूर्वजाते ज्ञेयं तदध्यर्बुदमर्बुदज्ञैः ।
यद्द्वन्द्वजातं युगपत्क्रमाद्वा द्विरर्बुदं तच्च भवेदसाध्यम् ॥ १९ ॥

अर्बुदानां पाकाभावे हेतुः ।

न पाकमायान्ति कफाधिकत्वान्मेदोबहुत्वाच्च विशेषतस्तु ।
दोषस्थिरत्वाद्ग्रथनाच्च तेषां सर्वार्बुदान्येव निसर्गतस्तु ॥ २० ॥

पिष्टानि छागमूत्रेण गण्डमालाप्रलेपनम्।
अक्षैः सुप्रच्छितां धौतां गण्डमालां प्रलेपयेत्॥ ३९॥

गण्डमालायामारग्वधमूलयोगः।

आरग्वधशिफां क्षिप्रं सम्यक्तन्दुलवारिणा।
पिष्ट्वा नस्यप्रलेपाभ्यां गण्डमालां समुद्धरेत्॥ ४०॥

गण्डमालायां काञ्चनारयोगः।

पलमर्धपलं वाऽपि सार्धं वा तन्दुलाम्बुना।
काञ्चनारत्वचं पीत्वा गण्डमालामपोहति॥ ४१॥

गलगण्डे इन्द्रवारुणीमूलयोगः।

पिष्ट्वा तन्दुलतोयेन घृतमात्रापरिप्लुतम्।
मूलं तु शक्रवारुण्या गण्डमालापहं पिबेत्॥ ४२॥

गण्डमालायां गिरिकर्णीमूलयोगः।

प्रातः पिबेच्छिफां पिष्ट्वा गण्डमालां व्यपोहति।
गिरिकर्ण्याः सितायास्तु घृतेन परिमिश्रिताम्॥ ४३॥

गण्डमालायां कतिपययोगाः।

पाययेदभयारिष्टं गण्डीरारिष्टमेव वा।
पिप्पलीवर्धमानं वा गण्डमालासु योजयेत्॥ ४४॥

गण्डादौ सर्षपादिलेपः।

सर्षपाः शिग्रुबीजानि शणबीजातसीयवाः।
मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत्॥ ४५॥
गण्डानि ग्रन्थयश्चैव गण्डमाला सुदारुणा।
आलेपात्तेन शाम्यन्ति विलयं यान्ति चाचिरात्॥४६॥

गण्डमालायां नस्यार्थं तैलम्।

गण्डमालापहं तैलं सिद्धमाखोटकत्वचा।
बिम्ब्यश्वमारनिर्गुण्डीसाधितं वापि नावनात्॥ ४७॥

गण्डमालायां नस्ययोगः।

निर्गुण्डीस्वरसैर्वापि लाङ्गलीकन्दकल्कितम्।
तैलं नस्येन हन्त्याशु गण्डमालां सुदारुणाम्॥ ४८॥

गण्डमालायां काञ्चनारयोगः।

पिष्टा चोष्णाम्बुना पेयाः काञ्चनारत्वचः शुभाः।
विश्वभेषजसंयुक्ता गण्डमालापहाः पराः ॥ ३१ ॥

गण्डमालायां निर्गुण्डीमूलनस्यम्।

गण्डमालामयार्तानां नस्यकर्मणि योजयेत्।
निर्गुण्ड्यास्तु शिफां सम्यग्वारिणा परिपेषिताम् ॥३२

गण्डमालायां नस्ययोगौ।

कोशातकीनां स्वरसेन नस्यं तुम्ब्यास्तु वा पिप्पलिसंयुतेन।
तैलेन वाऽरिष्टभवेन कुर्याद्वचोपकुल्ये सह माक्षिकेण ॥ ३३

गण्डमालायां छुच्छुन्दरीतैलम्।

अभ्यङ्गान्नाशयेन्नृणां गण्डमालां सुदारुणाम्।
छुच्छुन्दर्या विपक्वं तु क्षणात्तैलवरं ध्रुवम् ॥ ३४ ॥

गण्डमालायां त्रिफलायोगः।

सकाञ्चनारा त्रिफला जले शृता
प्रशस्यते मागधिकावचूर्णिता।
सगण्डमालागलगण्डरोगिणां
फलत्रिकाढ्यं यवमुद्गभोजनम् ॥ ३५ ॥

गण्डमालायां मञ्जिष्ठाद्यं तैलम्।

मञ्जिष्ठाविषयुक्तेन पुण्डरीकान्वितेन तु।
सैन्धवेन पचेत्तैलं गण्डमालाविनाशनम् ॥ ३६ ॥

गण्डमालायां कटुतुम्ब्याद्यं तैलम्।

तुम्बीरसेन कटुकेन चतुर्गुणेन
कल्कीकृतैर्मगधजादिगणौषधैश्च।
तैलं शृतं हरति देहिषु गण्डमाला-
मत्युल्बणानपि गले गलगण्डरोगान् ॥ ३७ ॥

गण्डमालायां निम्बपत्रादिलेपः।

क्षुण्णानि निम्बपत्राणि क्षुण्णैर्भल्लातकैः सह।
शरावसंपुटे दग्ध्वा सह सिद्धार्थकैः समैः ॥ ३८ ॥

पिष्टानि छागमूत्रेण गण्डमालाप्रलेपनम् ।
अक्षैः सुप्रच्छितां धौतां गण्डमालां प्रलेपयेत् ॥ ३९ ॥

गण्डमालायामारग्वधमूलयोगः ।

आरग्वधशिफां क्षिप्रं सम्यक्तन्दुलवारिणा ।
पिष्ट्वा नस्यप्रलेपाभ्यां गण्डमालां समुद्धरेत् ॥ ४० ॥

गण्डमालायां काञ्चनारयोगः ।

पलमर्धपलं वाऽपि सार्धं वा तन्दुलाम्बुना ।
काञ्चनारत्वचं पीत्वा गण्डमालामपोहति ॥ ४१ ॥

गलगण्डे इन्द्रवारुणीमूलयोगः ।

पिष्ट्वा तन्दुलतोयेन घृतमात्रापरिप्लुतम् ।
मूलं तु शक्रवारुण्या गण्डमालापहं पिबेत् ॥ ४२ ॥

गण्डमालायां गिरिकर्णीमूलयोगः ।

प्रातः पिबेच्छिफां पिष्ट्वा गण्डमालां व्यपोहति ।
गिरिकर्ण्याः सितायास्तु घृतेन परिमिश्रिताम् ॥ ४३ ॥

गण्डमालायां कतिपययोगाः ।

पाययेदभयारिष्टं गण्डीरारिष्टमेव वा ।
पिप्पलीवर्धमानं वा गण्डमालासु योजयेत् ॥ ४४ ॥

गण्डादौ सर्षपादिलेपः ।

सर्षपाः शिग्रुबीजानि शणबीजातसीयवाः ।
मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत् ॥ ४५ ॥
गण्डानि ग्रन्थयश्चैव गण्डमाला सुदारुणा ।
आलेपात्तेन शाम्यन्ति विलयं यान्ति चाचिरात् ॥ ४६ ॥

गण्डमालायां नस्यार्थं तैलम् ।

गण्डमालापहं तैलं सिद्धमाखोटकत्वचा ।
बिम्व्यश्वमारनिर्गुण्डीसाधितं वापि नावनात् ॥ ४७ ॥

गण्डमालायां नस्ययोगः ।

निर्गुण्डीस्वरसैर्वापि लाङ्गलीकन्दकल्कितम् ।
तैलं नस्येन हन्त्याशु गण्डमालां सुदारुणाम् ॥ ४८ ॥

गण्डमालायां काञ्चनारयोगः ।

पिष्टा चोष्णाम्बुना पेयाः काञ्चनारत्वचः शुभाः ।
विश्वभेषजसंयुक्ता गण्डमालापहाः पराः ॥ ३१ ॥

गण्डमालायां निर्गुण्डीमूलनस्यम् ।

गण्डमालामयार्तानां नस्यकर्मणि योजयेत् ।
निर्गुण्ड्यास्तु शिफां सम्यग्वारिणा परिपेषिताम् ॥३२

गण्डमालायां नस्ययोगौ ।

कोशातकीनां स्वरसेन नस्यं तुम्ब्यास्तु वा पिप्पलिसंयुतेन
तैलेन वाऽरिष्टभवेन कुर्याद्वचोपकुल्ये सह माक्षिकेण ॥ ३३

गण्डमालायां छुच्छुन्दरीतैलम् ।

अभ्यङ्गान्नाशयेन्नृणां गण्डमालां सुदारुणाम् ।
छुच्छुन्दर्या विपक्वं तु क्षणात्तैलवरं ध्रुवम् ॥ ३४ ॥

गण्डमालायां त्रिफलायोगः ।

सकाञ्चनारा त्रिफला जले शृता
प्रशस्यते मागधिकावचूर्णिता ।
सगण्डमालागलगण्डरोगिणां
फलत्रिकाढ्यं यवमुद्गभोजनम् ॥ ३५ ॥

गण्डमालायां मञ्जिष्ठाद्यं तैलम् ।

मञ्जिष्ठाविषयुक्तेन पुण्डरीकान्वितेन तु ।
सैन्धवेन पचेत्तैलं गण्डमालाविनाशनम् ॥ ३६ ॥

गण्डमालायां कटुतुम्ब्याद्यं तैलम् ।

तुम्बीरसेन कटुकेन चतुर्गुणेन
कल्कीकृतैर्मगधजादिगणौषधैश्च ।
तैलं शृतं हरति देहिषु गण्डमाला-
मत्युल्बणानपि गले गलगण्डरोगान् ॥ ३७ ॥

गण्डमालायां निम्बपत्रादिलेपः ।

क्षुण्णानि निम्बपत्राणि क्षुण्णैर्भल्लातकैः सह ।
शरावसंपुटे दग्ध्वा सह सिद्धार्थकैः समैः ॥ ३८ ।

पिष्टानि छागमूत्रेण गण्डमालाप्रलेपनम् ।
अक्षैः सुप्रच्छितां धौतां गण्डमालां प्रलेपयेत् ॥ ३९ ॥

गण्डमालायामारग्वधमूलयोगः ।

आरग्वधशिफां क्षिप्रं सम्यक्तन्दुलवारिणा ।
पिष्ट्वा नस्यप्रलेपाभ्यां गण्डमालां समुद्धरेत् ॥ ४० ॥

गण्डमालायां काञ्चनारयोगः ।

पलमर्धपलं वाऽपि सार्धं वा तन्दुलाम्बुना ।
काञ्चनारत्वचं पीत्वा गण्डमालामपोहति ॥ ४१ ॥

गलगण्डे इन्द्रवारुणीमूलयोगः ।

पिष्ट्वा तन्दुलतोयेन घृतमात्रापरिप्लुतम् ।
मूलं तु शक्रवारुण्या गण्डमालापहं पिबेत् ॥ ४२ ॥

गण्डमालायां गिरिकर्णीमूलयोगः ।

प्रातः पिबेच्छिफां पिष्ट्वा गण्डमालां व्यपोहति ।
गिरिकर्ण्याः सितायास्तु घृतेन परिमिश्रिताम् ॥ ४३ ॥

गण्डमालायां कतिपययोगाः ।

पाययेदभयारिष्टं गण्डीरारिष्टमेव वा ।
पिप्पलीवर्धमानं वा गण्डमालासु योजयेत् ॥ ४४ ॥

गण्डादौ सर्षपादिलेपः ।

सर्षपाः शिग्रुबीजानि शणबीजातसीयवाः ।
मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत् ॥ ४५ ॥
गण्डानि ग्रन्थयश्चैव गण्डमाला सुदारुणा ।
आलेपात्तेन शाम्यन्ति विलयं यान्ति चाचिरात् ॥ ४६ ॥

गण्डमालायां नस्यार्थं तैलम् ।

गण्डमालापहं तैलं सिद्धमाखोटकत्वचा ।
बिम्ब्यश्वमारनिर्गुण्डीसाधितं वापि नावनात् ॥ ४७ ॥

गण्डमालायां नस्ययोगः ।

निर्गुण्डीस्वरसेर्वापि लाङ्गलीकन्दकल्कितम् ।
तैलं नस्येन हन्त्याशु गण्डमालां सुदारुणाम् ॥ ४८ ॥

कण्ठमालायां पूपलिकायोगः ।

पनकार्पासिकामूलं तन्दुलैः सह योजितम् ।
पक्त्वा पूपलिकां खादेदपचीनाशनाय च ॥ ४९ ॥

अपच्यां शोभाञ्जनादिलेपः ।

शोभाञ्जनं देवदारु काञ्जिकेन तु पेषयेत् ।
कोष्णप्रलेपतो हन्यादपचीमपि निश्चयम् ॥ ५० ॥

अपच्यां शस्त्रचिकित्सा ।

पार्ष्णिं प्रति द्वादश चाङ्गुलानि मित्वेन्द्रबस्तिं परिवर्ज्य सम्यक् ।
विदार्य मत्स्याण्डनिभानि वैद्यो निष्कृष्य जालान्यनलं विदध्यात्
मणिबन्धोपरिष्टाद्वा कुर्याद्रेखात्रयं भिषक् ।
अङ्गुलान्तरितं सम्यगपचीनां प्रशान्तये ॥ ५२ ॥

अपच्यां जीमूतकादिघृतम् ।

जीमूतकैः कोशवतीफलैश्च दन्तीद्रवन्तीत्रिवृताशु चैव ।
सर्पिः कृतं हन्त्यपचीं प्रवृद्धां द्विधा प्रवृत्तं तदुदारवीर्यम्॥५३॥

अपच्यां लेपयोगाः ।

गुन्द्रकटाक्षगुडान्वितगोधूमक्षोदबन्धनाद्रात्रौ ।
तैलनिघृष्टरविमूलैरालेपस्तदनु दिवसान्तम् ॥ ५४ ॥
तदनुज्चालनपूर्वं करम्भबन्धः शस्यते रात्रौ ।
प्रातर्विकङ्कतस्य कङ्गुणिमूलस्य वा लेपः ॥ ५५ ॥
पनसशिफा लेपो वा वायसनिम्बस्य चूर्णपिण्डी वा ।
अपचीमपि कण्ठगतां पूययुतां हरति योगोऽयम्॥५६॥

अपच्यां निर्गुण्ड्याद्यं वमनम् ।

निर्गुण्डिजातीदलदेवदारुजीमूतकं माक्षिकसैन्धवाढ्यम् ।
अद्भिः प्रतप्तं वमनं प्रधानं कुष्ठापचीपृत्तममादिशन्ति ॥५७॥

अपच्यां शिरोविरेचनयोगाः ।

कैडर्यबिम्बीकरवीरसिद्धं तैलं हितं मूर्धविरेचने च ।
मधूकसारश्च हितोऽवपीडे फलं च शिग्रोः खरमञ्जरेर्वा ॥ ५८

ग्रन्थ्यामग्निक्षारोपदेशः।

ग्रन्थीनमर्मप्रभवानपक्वानुद्धृत्य चाग्निं निदधीत पश्चात्।
क्षारेण पक्वान् प्रतिसारयेच्च तैलं तु संलिख्य यथोपदिष्टम्॥५९

अश्वत्थकाण्डं निचुलं गवां दन्तं च दाहयेत्।
सप्ताहाद्दलसंपृक्तं भस्म हन्त्यपचीव्रणान्॥ ६० ॥

गलगण्डे पथ्यम्।

यवमुद्गपटोलानि कटु रूक्षं च भोजनम्।
छर्दिं सरक्तमुक्तिं च गलगण्डे प्रयोजयेत्॥ ६१ ॥

गलगण्डे निचुलादिलेपः।

निचुलं शिग्रुमूलानि दशमूलमथापि वा।
आलेपनं च गण्डेषु सुखोष्णं तु प्रशस्यते॥ ६२ ॥

देवदारु विशाले च कफगण्डे प्रलेपनम्।
तन्दुलोदकपिष्टेन मूलेन परिलेपितः।
हस्तिकर्णपलाशस्य गलगण्डः प्रशाम्यति॥ ६३ ॥

गलगण्डे नस्ययोगः।

जीर्णकर्कारुकरसो विडसैन्धवसंयुतः।
नस्येन हन्ति तरुणं गलगण्डमसंशयम्॥ ६४ ॥

गलगण्डे जलकुम्भीक्षारयोगः।

जलकुम्भीकजं भस्म पक्वं गोमूत्रगालितम्।
पिबेत्कोद्रवतक्राशी गलगण्डोपशान्तये॥ ६५ ॥

गलगण्डे मण्डूरयोगः।

महिषीमूत्रविमिश्रं लोहमलं संस्थितं घटे मासम्।
अन्तर्धूमविदग्धं लिह्यान्मधुना च गलगण्डी॥ ६६ ॥

गलगण्डे सूर्यावर्तादिलेपः।

सूर्यावर्तरसोनाभ्यां गलगण्डोपनाहनम्।
स्फोटास्रावैः शमयति गलगण्डं न संशयः॥ ६७ ॥

गलगण्डे अमृतवल्ल्याद्यं तैलम्।

तैलं पिबेचामृतवल्लिनिम्बहिंसाद्वयावृक्षकपिप्पलीभिः।
सिद्धं बलाभ्यां तु सदेवदारु हिताय नित्यं गलगण्डरोगी ६८

गलगण्डे शिरावेधः।

जिह्वायाः पार्श्वतोऽधस्ताच्छिरा द्वादश कीर्तिताः।
तासां स्थूलशिरे द्वे तु छिन्द्यात्कष्टे शनैः शनैः ॥६९॥
बडिशेनैव संगृह्य कुशपत्रेण बुद्धिमान्।
स्रुते रक्ते व्रणे तस्मिन्दद्यात्सगुडमाक्षिकम् ॥ ७० ॥
भोजनं चानभिष्यन्दि यूषः कौलत्थ इष्यते।
उपर्युपरि छिन्द्याच्चद्गलगण्डे शिरात्रयम्।
कर्णयुग्मबहिःसन्धिमन्याभ्याशे स्थितं च यत् ॥ ७१ ॥

कटुतुम्बीतैलम्।

विडङ्गक्षारसिन्धूत्थरास्नाग्निव्योपदारुभिः ॥ ७२ ॥
कटुतुम्बीफलरसे कटुतैलं विपाचितम्।
चिरोत्थमपि नस्येन गलगण्डं विनाशयेत् ॥ ७३ ॥

वातजगलगण्डचिकित्सा।

संस्वेद्य गण्डं पवनोत्थमादौ नाड्याऽनिलघ्नौषधपत्रभङ्गैः।
अम्लैस्तु मूत्रैर्विविधैः पयोभिरुष्णैश्च तैलैः पिशितैश्च विद्वान्॥
विस्रावयेत्स्विन्नमतन्द्रितश्च रूढव्रणे चाप्युपरोपणं तु।
शणातसीमूलकशिग्रुकिण्वैः पियालमज्जानुयुतैस्तिलैश्च ॥ ७५ ॥
कोलामृताशिग्रुपुनर्नवार्कगजादिनामाकरहाटकुष्ठैः।
एकैषिकावृक्षकतिल्वकैश्च सुराम्लपिष्टैरसकृत्प्रदिह्यात् ॥ ७६ ॥

कफजगलगण्डचिकित्सा।

स्नेहोपनाहैः कफसंभवं तु संस्वेद्य विस्रावणमेव कुर्यात्।
ततोऽजगन्धातिविषाविशल्याविषाणिकाकुष्ठशताह्वयाभिः ॥७७
पलाशभस्मोदकपेषिताभिर्दिह्यात्सुगुञ्जाभिरशीतलाभिः।

मेदोजगलगण्डचिकित्सा।

मेदःसमुत्थे तु यथोपदिष्टां विध्येच्छिरां स्निग्धवतो नरस्य ७८

श्यामासुधालोहकरीपदन्तीरसाञ्जनैश्चापि हिताः प्रदेहाः ।
मूत्रेण चालोड्य हिताय सारान् प्रातः पिबेत्सारमहीरुहाणाम्॥
खदिरार्कासनादीनि सुधाश्यामारसाञ्जनम् ।
दग्ध्वा ह्युद्धृत्य मेदःस्थे गण्डे दद्यात्प्रलेपनम्॥ ८० ॥
तिक्तालाबुफले पक्वे सप्ताहमुषितं जलम् ।
मद्यं वा गलगण्डघ्नं पानाच्च पथ्यसेविनः ॥ ८१ ॥

वातार्बुदचिकित्सा ।

कर्कारुकैर्वारुकनालिकेरपिण्याकपञ्चाङ्गुलबीजचूर्णैः ।
वातार्बुदं क्षीरघृताम्लसिद्धैरुष्णैः सतैलैरुपनाहयेच्च ॥ ८२ ॥
वातार्बुदे चाप्युपनाहनानि स्निग्धैश्च मांसैरथ वेसवारैः ।
स्वेदं विदध्यात्कुशलस्तु नाड्या शृङ्गेण रक्तं बहुशो हरेच्च ॥८३

पित्तार्बुदचिकित्सा ।

स्नेहोपनाहा मृदवस्तु पथ्याः पित्तार्बुदे कायविरेचनं च ।
निघृष्य चोदुम्बरशाकगोजीपत्रैर्भृशं क्षौद्रयुतैः प्रलिम्पेत् ।
श्लक्ष्णीकृतैः सर्जरसप्रियङ्गुपत्तङ्गरोध्रार्जुनयष्टिकाह्वैः ॥ ८४ ॥

कफजार्बुदचिकित्सा ।

शुद्धस्य जन्तोः कफजेऽर्बुदे तु रक्तोऽवसिक्ते तु ततोऽर्बुदं तत् ॥
द्रव्याणि यान्यूर्ध्वमधश्च दोषान् हरन्ति तैः कल्ककृतैः प्रदिह्यात्।
लेपनं शङ्खचूर्णेन सह मूलकभस्मना ।
कफार्बुदापहं कुर्याद्ग्रन्थ्यादिषु विशेषतः ॥ ८६ ॥
निष्पावपिण्याककुलत्थकल्कैर्मांसप्रगाढैर्दधिमर्दितैस्तु ।
लेपं विदध्यात्कृमयो यथाऽत्र मुञ्चन्त्यपत्यान्यथ मक्षिका वा ॥
अल्पावशिष्टं कृमिभिः प्रजग्धं लिखेत्ततोऽग्निं विदधीत पश्चात् ।
यदल्पमूलं त्रपुताम्रसीसैः संवेष्ट्य पत्रैरथवाऽऽयसैर्वा ॥ ८८ ॥
क्षाराग्निशस्त्राण्यवचारयेच्च मुहुर्मुहुः प्राणमवेक्ष्यमाणः ।
यदृच्छया चोपगतं तु पाकं पाकक्रमेणोपचरेद्यथोक्तम् ॥८९॥

सशेपदोषाणि हि योऽर्बुदानि करोति तस्याशु पुनर्भवन्ति।
तस्मादशेषाणि समुद्धरेत्तु हन्युः सशेषाणि यथा विषाणि॥९०॥
आस्फोतजातीकरवीरपत्रैः कषायपिष्टैर्व्रणशोधनार्थम्।
शुद्धे च तैलं विदधीत भार्गीविडङ्गपाठात्रिफलाविपक्वम् ॥९१

उपोदिकारसाभ्यक्तास्तत्पत्रपरिवेष्टिताः।
प्रणश्यन्त्यचिरान्नृणां पिटिकार्बुदजातयः।
लवणेनाथवा स्वेदात् सीसकेन तथैव च ॥ ९२ ॥

मेदोर्बुदचिकित्सा।

हरिद्रारोध्रपत्तङ्गगृहधूममनःशिलाः।
मधुप्रगाढो लेपोऽयं मेदोर्बुदहरः परः ॥ ९३ ॥

मेदोर्बुदं स्निग्धमथो विदार्य विशोध्य सीव्येद्गतरक्तमाशु।
पश्चाद्धरिद्रादिक एष लेपः करञ्जतैलं विदधीत शुद्धे ॥ ९४ ॥

शर्करार्बुदचिकित्सा।

एतामेव क्रियां कुर्यादशेषां शर्करार्बुदे।

अर्बुदे सामान्यचिकित्सा।

उपोदिकाकाञ्जिकतक्रपिष्टा तयोपनाहो लवणेन मिश्रः।
दृष्टोऽर्बुदानां प्रशमाय कैश्चिद्दिने दिने मर्मशरीरजानाम्॥९५॥

स्नुहीगण्डीरिकास्वेदाः शमयन्त्यर्बुदानि च।
काञ्जिकक्षारलवणशिग्रुमूलाविकामलैः ॥ ९६ ॥
स्विन्नं त्रिचतुरो वारान्मृदितं बहुशोऽर्बुदम्।
उपोदिकायाः पत्रैस्तु सुपिष्टैः पिण्डमर्बुदे ॥ ९७ ॥
दत्त्वा चाच्छाद्य पत्रेण बध्नीयात्पट्टकेन तम्।
अहोरात्रस्थितं मुक्त्वा प्राक्पिण्डमवतार्य च ॥ ९८ ॥
दत्त्वा पिण्डान्तरं बद्ध्वा तथैव परिधापयेत्।
एवं नित्याभियुक्तस्य क्रमेणानेन तद्गतम्।
विनैव शस्त्रक्षाराभ्यामर्बुदं प्रशमं व्रजेत् ॥ ९९ ॥

अर्बुदेषु ग्रन्थिचिकित्साया अतिदेशः।

ग्रन्थ्यर्बुदानां च यतोऽविशेषः प्रदेशहेत्वाकृतिदोषदूष्यैः।
ततश्चिकित्सेद्भिषगर्बुदानि विधानविद्ग्रन्थिचिकित्सितेन १००

ग्रन्थेः सामान्यचिकित्सा।

ग्रन्थिष्वामेषु कुर्वीत शोफोद्दिष्टां क्रियां भिषक्।
पक्कासुत्पाट्य संशोध्य रोपयेद्व्रणभेषजैः॥ १०१॥

वातजग्रन्थिचिकित्सा।

हिंस्रा सरोहिण्यमृता च भार्गी श्योनाकबिल्वारलुकृष्णगन्धाः।
गोपित्तपिष्टाः सह तालपत्र्या ग्रन्थौ विधेयोऽनिलजे प्रलेपः॥

पित्तजग्रन्थिचिकित्सा।

जलायुका पित्तकृते हितास्तु क्षीरोदकाभ्यां परिषेचनं च।
काकोलिवर्गस्य सुशीतलानि पिबेत्कषायाणि सशर्कराणि १०३
द्राक्षारसेनेक्षुरसेन वापि चूर्णं पिबेद्वापि हरीतकीनाम्।
मधूकजम्ब्वर्जुनवेतसानां त्वग्भिः प्रदेहानवचारयेद्वा॥१०४॥

कफजग्रन्थिचिकित्सा।

हृतेषु दोषेषु यथानुपूर्व्या ग्रन्थौ भिषक् श्लेष्मसमुत्थिते तु।
स्विन्नस्य विम्लापनमेव कार्यमङ्गुष्ठलोहोपलवेणुदण्डैः॥१०५॥
विकङ्कतारग्वधकाकणन्तिकाकाकादनीतापसवृक्षमूलैः।
प्रलेपयेदेनमलाबुभार्गीकरञ्जकालामदनैश्च विद्वान्॥ १०६॥

मेदोजग्रन्थिचिकित्सा।

मेदःसमुत्थे तिलकल्कदिग्धं कृत्वोपरिष्टाद्द्विगुणं पटान्तम्।
हुताशतप्तेन मुहुः प्रमृज्य लोहेन धीमान्दहयेद्धिताय॥१०७॥
तथैव दर्व्या जतुलिप्तया वा प्रलिप्तया स्वेदनमस्य कार्यम्।
अमर्मजातं शममप्रयातमपक्कमेवापहरेद्विदार्य॥ १०८॥
दहेत् स्थिते चासृजि सिद्धकर्मा सद्यः क्षतोक्तं च विधिं विदध्यात्।
दन्ती चित्रकमूलत्वक् सुह्यर्कपयसी गुडः।
भल्लातकास्थि कासीसं लेपो भिन्द्याच्छिलामपि॥१०९

ग्रन्थींस्त्वमर्मप्रभवांपकानुद्धृत्य चाग्निं विदधीत वैद्यः ।
क्षारेण चैतान् प्रतिसारयेच्च संलिख्य संलिख्य यथोपदेशम् ॥

शिराग्रन्थिचिकित्सा ।

शिराग्रन्थौ नवे पेयं तैलं साहचरं तथा ।
उपनाहोऽनिलहरैर्बस्तिकर्म शिराव्यधः ॥ १११ ॥

गण्डमालायां कतिपययोगाः ।

मूलं हि सुरवारुण्या गोमूत्रयुतं महीन्द्रकर्ण्या वा ।
अपहरति गण्डमालां पीतं सुश्लक्ष्णपरिपिष्टम् ॥११२॥
अर्कक्षीरजपापुष्पतैललाक्षारसैः समैः ।
गण्डमाला शमं याति प्रलिप्ता सप्तभिर्दिनैः ॥ ११३ ॥

अपच्यां गिरिकर्णीमूलयोगः ।

पुष्ये गृहीतं गिरिकर्णिकाया मूलं सिताया गलके निबद्धम् ।
गव्येन लीढं यदि वा घृतेन निहन्ति घोरामपचीं तदेव ११४
श्लेष्मान्तककाथरसेन यद्वा सतैलनिष्पावकृताशनस्य ।
नस्यप्रयोगात्कपिकच्छुमूलमिश्रो रसो जिङ्गिणिकाद्रुमोत्थः ॥
ग्रीवाश्रुजस्कन्धभवानशेषान्निहन्ति रोगानपि बद्धमूलान् ।
उदुम्बरक्षीरयुतं स्वगुप्तामूलं समं जिङ्गिणिकारसेन ।
सरामठं हन्त्यवबाहुकाख्यं नस्यप्रयोगात्पुरुषस्य रोगम्॥११६॥

पिटिकायां कतिपययोगाः ।

दण्डोत्पलकमूलेन पिटिकाः संप्रलेपिताः ।
तन्दुलोदकघृष्टेन नाशमायान्त्यसंशयम् ॥ ११७ ॥
क्षीरमौदुम्बरं यत्नाल्लाकुचं वा प्रयोजयेत् ।
पिटिकासु समस्तासु लेपनं संप्रशान्तये ॥ ११८ ॥
रसो मण्डूकपर्ण्यास्तु प्रलेपात्पिटिकामयम् ।
धत्तूरकशिफां क्षुण्णां बद्ध्वा च संप्रणाशयेत् ॥ ११९ ॥
नराणामर्कमूलेन पाकं गत्वा प्रणश्यति ।
गोमूत्रपरिपिष्टेन पिटिकाः संप्रलेपिताः ॥ १२० ॥

मूलानि बीजान्यथवा प्रपिष्टान्यथारनालेन समं हलिन्याः।
हरन्ति लेपेन तु दुष्टकीटसंपर्कजाताः पिटिकाः क्षणेन ॥१२१
सुरदालीकटुतुम्ब्योरन्यतरस्याः प्रपेषितं मूलम्।
बीजं वा चुक्रयुतं कीटकपिटिकोपसर्गहरम् ॥ १२२ ॥
नक्तमालतरुबीजमिश्रितैः सर्षपैस्तिलयुतैश्च पेषितैः।
यान्ति दुष्टपिटिकाः प्रतिक्षणं लेपितैर्विलयमाशु देहिनाम् ॥
निकुम्भवातारिफलैर्जलेन संपेषितैर्यः कुरुते प्रलेपम्।
तस्योपशान्तिं पिटिकाः प्रयान्ति समस्तदोषप्रभवाः क्षणेन ॥

ज्वालागर्दभे तण्डुलीयादिलेपः।

पयोदरावनीलिन्योर्मूलैः पिष्टैर्घृतान्वितैः।
ज्वालागर्दभनाशाय प्रलेपं सकृदाचरेत् ॥ १२५ ॥

शीतलिकाचिकित्सा।

उत्तण्डस्य तु मूलं पिबन्ति जलेन ये पिष्टम्।
गोजिह्विकाजटां वा तेषां नश्यन्ति शीतलिकाः ॥१२६

इति श्रीवैद्यशोढलप्रथिते गदनिग्रहे चतुर्थे शल्यखण्डे ग्रन्थ्यपच्यर्बुदगलगण्डगण्डमालाधिकारः प्रथमः ॥ १ ॥

---

## अथ श्लीपदाधिकारो द्वितीयः।

अथातः श्लीपदनिदानं व्याख्यास्यामः।

श्लीपदसामान्यलक्षणम्।

मेदोमांसाश्रयं शोफं पादयोः श्लीपदं वदेत्।
स्वलिङ्गदर्शिभिर्दोषैस्त्रिधा स्याच्च कफोत्तरम् ॥ १ ॥
यः सज्वरो वंक्षणजो भृशार्तिः शोफो नृणां पादगतः क्रमेण।
तच्छ्लीपदं स्यात्करकर्णनेत्रशिश्नौष्ठनासास्वपि केचिदाहुः ॥२॥

---

१ 'पादगतश्च यः स्यात्' ख.।

वातजादिभेदेन श्लीपदलक्षणानि ।

वातजं कृष्णरूक्षं तु स्फुटते तीव्रवेदनम् ।
अनिमित्तरुजं तस्य बहुशो ज्वर एव च ॥ ३ ॥
पित्तजं पीतसंकाशं दाहज्वरयुतं मृदु ।
कफजं स्निग्धवर्णं च श्वेतं पाण्डु गुरु स्थिरम् ॥ ४ ॥

श्लीपदासाध्यलक्षणानि ।

वल्मीकमिव संजातं कण्टकैरुपचीयते ।
अब्दमेकं गतं तच्च वर्जनीयं विशेषतः ॥ ५ ॥
सास्रावमत्युन्नतसर्वलिङ्गं सकण्डुरं श्लेष्मयुतं विवर्ज्यम् ।

श्लीपदे कफप्राधान्यनिरूपणम् ।

त्रीण्यप्येतानि जानीयाच्छ्लीपदानि कफोच्छ्रयात् ।
गुरुत्वं च महत्त्वं च यस्मान्नास्ति विना कफात् ॥ ६ ॥
पुराणोदकभूयिष्ठाः सर्वर्तुषु च शीतलाः ।
ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ॥ ७ ॥

इति श्लीपदनिदानं समासम् ।

---

अथातः श्लीपदचिकित्सितं व्याख्यास्यामः ।

वातजश्लीपदचिकित्सा ।

स्नेहस्वेदोपपन्नं तु श्लीपदेऽनिलजे भिषक् ।
कृत्वा गुल्फोपरि शिरां विध्येत चतुरङ्गुले ॥ ८ ॥
मासमेरण्डतैलं च पिबेन्मूत्रेण संयुतम् ।
पयसोदनमश्नीयाच्छागरकथितेन च ॥ ९ ॥

पित्तजश्लीपदचिकित्सा ।

गुल्फस्याधः शिरां विध्येच्छ्लीपदे पित्तसंभवे ।
पित्तघ्नीं च क्रियां कुर्यात्पित्तार्बुदविसर्पवत् ॥ १० ॥
मञ्जिष्ठां मधुकं रास्नामहिंस्रां सपुनर्नवाम् ।
पिष्ट्वाऽऽरनालैर्लेपोऽयं पित्तश्लीपदशान्तये ॥ ११ ॥

---

१ 'सर्वात्मकं महत्तच्च' ख. ।

कफजश्लीपदचिकित्सा।

शिरां सुविहितां विध्येदङ्गुष्ठे श्लेष्मश्लीपदे।
मधुयुक्तानि चाभीक्ष्णं कषायाणि पिबेन्नरः॥ १२॥
पिष्ट्वा वाऽप्यभयाकल्कं मूत्रेणान्यतमेन वा।
पिबेत्सार्षपतैलं वा श्लीपदानां निवृत्तये॥ १३॥
पूतीकरञ्जपत्राणां रसं वाऽपि यथाबलम्।
अनेनैव विधानेन पुत्रजीवकजं रसम्।
प्रयुञ्जीत भिषक्प्राज्ञः कालसात्म्यविचारवित्॥ १४॥

श्लीपदे काकादन्यादिक्षारः।

काकादनीं काकजङ्घां बृहतीं कण्टकारिकाम्।
कदम्बपुष्पीं मन्दारीं लम्बां शुकनसं तथा॥ १५॥
दग्ध्वा मूत्रेण तद्भस्म स्रावयेत्क्षारकल्पवत्।
तत्र दद्यात्प्रतीवापं काकोदुम्बरिकासमम्॥ १६॥
मदनस्य फलक्वाथं शुकाख्यास्वरसं तथा।
एषः क्षारस्तु पानीयः श्लीपदं हन्ति सेवितः॥ १७॥
अपचीं गलगण्डं च ग्रहणीदोषमेव च।
भक्तस्यानशनं चैव हन्यात्सर्वविषाणि च॥ १८॥
एष्वेव तैलं संसिद्धं नस्याभ्यङ्गेषु पूजितम्।
एतान्येवामयान् हन्ति ये च दुष्टव्रणा नृणाम्॥१९॥
धत्तूरैरण्डनिर्गुण्डीवर्षाभूशिग्रुसर्षपैः।
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम्॥ २०॥

श्लीपदे वृद्धदारुकसमं चूर्णम्।

त्रिकटुत्रिफलाचव्यदार्वीवरुणगोक्षुरम्।
अलम्बुषां गुडूचीं च समभागानि चूर्णयेत्॥ २१॥
सर्वेषां चूर्णमाहृत्य वृद्धदारस्य तत्समम्।
काञ्जिकेन तु तत्पेयं कर्षमात्रप्रमाणतः॥ २२॥

जीर्णे चापरिहारं स्याद्भोजनं सार्वकामिकम् ।
नाशयेच्छ्लीपदं शाल्यमामवातं च दारुणम् ।
कुष्ठगुल्मारुचिहरं वातश्लेष्मरुजापहम् ॥ २३ ॥

श्लीपदे लघुवृद्धदारुकाद्यं चूर्णम् ।

पिप्पलीत्रिफलादारुनागरं सपुनर्नवम् ।
भागैर्द्विपालिकैरेषां तत्समं वृद्धदारुकम् ॥ २४ ॥
काञ्जिकेन पिबेच्चूर्णं कर्षमात्रप्रमाणतः ।
जीर्णे चापरिहारं स्याद्भोजनं सार्वकामिकम् ॥ २५ ॥
श्लीपदं वातरोगांश्च हन्यात्प्लीहानमेव च ।
अग्निं च कुरुते घोरं भस्मकं च नियच्छति ॥ २६ ॥

श्लीपदे सामान्यचिकित्सा ।

लङ्घनालेपनस्वेदरेचनै रक्तमोक्षणैः ।
प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत् ॥ २७ ॥

श्लीपदे कतिपययोगाः ।

शतमूलीशिफातैलं तैलमेरण्डसंभवम् ।
द्वयमेतत्प्रलेपेन श्लीपदं हन्ति कोमलम् ॥ २८ ॥
कटुकाममृतां शुण्ठीं विडङ्गं दारुचित्रकम् ।
हन्ति वा लेपनान्नित्यं भद्रमुस्तं सचित्रकम् ॥ २९ ॥
विडङ्गमरिचार्केषु नागरे चित्रके तथा ।
भद्रदारौ तुगाख्यां च सर्वेषु लवणेषु च ॥ ३० ॥
तैलं पक्वं पिबेद्वाऽपि यवान्नं च हितं सदा ।
पिबेत्सर्षपतैलं वा श्लीपदानां निवृत्तये ॥ ३१ ॥
विश्वौषधं वा कथितं गुडूचीं शृतां सुराह्वं कथितं पिबेद्वा ।
समाक्षिकं श्लीपदरोगवान् यः सिद्धार्थकास्तस्य हिता प्रलेपे ॥
वन्ध्याकर्कोटिकामूलं स्तन्येन परिपेषितम् ।
नाशयत्याशु दुर्वारं श्लीपदं नस्यकर्मणा ॥ ३३ ॥

असाध्यमपि यात्यस्तं श्लीपदं चिरकालजम् ।
मूलेन सहदेवायास्तालमिश्रेण लेपितम् ॥ ३४ ॥
मृगशृङ्गयुतं पिष्ट्वा सर्जमाज्यसमन्वितम् ।
लेपनं संप्रकुर्वीत श्लीपदामयनाशनम् ॥ ३५ ॥
जिङ्गिण्यास्तु दलैः सम्यक्तुपाम्बुपरिपेषितैः ।
लेपः श्लीपदनाशाय कर्तव्यः संप्रजानता ॥ ३६ ॥
क्षीरेण प्रातरुत्थाय पिबेद्यस्तु बलाद्वयम् ।
स क्षिप्रं श्लीपदाजन्तुरसाध्यादपि मुच्यते ॥ ३७ ॥
सहदेवाविमिश्रेण चन्दनेन प्रलेपितम् ।
श्लीपदं नश्यति क्षिप्रं सोमराजीजलेन वा ॥ ३८ ॥
वार्ताकपत्रसंमिश्रैः सर्षपैः परिपेपितैः ।
लेपनं संप्रशंसन्ति श्लीपदघ्नं भिषग्वराः ॥ ३९ ॥
कुबेरकविमिश्रेण मृगशृङ्गान्वितेन तु ।
साज्येनालेपितं क्षिप्रं श्लीपदं संप्रणश्यति ॥ ४० ॥
शाखोटकवृक्षत्वक्कतुर्गुणाम्भः शृता चरणशेषा ।
गोमूत्रतुल्यपीता श्लीपदमाशूत्थितं हन्ति ॥ ४१ ॥
खदिरासनशालानां सारकल्कं पिबेन्नरः ।
प्रातर्गवां हि मूत्रेण सक्षौद्रं श्लीपदं जयेत् ॥ ४२ ॥

इति श्रीसोढलवैद्यग्रथिते गदनिग्रहे तृतीये शल्यखण्डे श्लीपदाधिकारो द्वितीयः ॥ २ ॥

---

## अथ व्रणशोफच्छिव्रणीयाधिकारस्तृतीयः ।

अथातो व्रणशोफच्छिव्रणीयनिदानं व्याख्यास्यामः ।

व्रणशोथनिदानं भेदाश्च ।

एकदेशोत्थितः शोफो व्रणानां पूर्वलक्षणम् ।
षड्विधः स पृथक्सर्वदोषास्रागन्तुजः स्मृतः ॥ १ ॥

शोफाः षडेते विज्ञेयाः प्रागुक्तैः शोफलक्षणैः ।
विशेषः कथ्यते तेषां पक्वापक्वादिनिश्चये ॥ २ ॥

व्रणशोथानां विशेषलक्षणम् ।

विषमः पच्यते वातात्, पित्तोत्थश्चाचिरं, चिरम् ।
कफजः, पित्तवच्छोफो रक्तागन्तुसमुद्भवः ॥ ३ ॥

आमशोफलक्षणम् ।

मन्दोष्मताऽल्पशोफत्वं काठिन्यं त्वक्सवर्णता ।
मन्दवेदनता चैव शोफानामामलक्षणम् ॥ ४ ॥

पच्यमानशोफलक्षणम् ।

दह्यते दहनेनेव क्षारेणेव प्रपच्यते ।
पिपीलिकागणेनेव दश्यते छिद्यते तथा ॥ ५ ॥
भिद्यते चैव शस्त्रेण दण्डेनेवावताड्यते ।
पीड्यते पाणिनेवान्तः सूचीभिरिव तुद्यते ॥ ६ ॥
सोषाचोषो विवर्णः स्यादङ्गुल्येवावपद्यते ।
आसने शयने स्थाने शान्तिं वृश्चिकविद्धवत् ॥ ७ ॥
न गच्छेदाततः शोफो भवेदाध्मातवस्तिवत् ।
ज्वरस्तृष्णाऽरुचिश्चैव पच्यमानस्य लक्षणम् ॥ ८ ॥

पक्वशोफलक्षणम् ।

वेदनोपशमः शोफो लोहितोऽल्पो न चोन्नतः ।
प्रादुर्भावो वलीनां च तोदकण्डूर्मुहुर्मुहुः ॥ ९ ॥
उपद्रवाणां प्रशमो निम्नता स्फुटनं त्वचाम् ।
वस्ताविवाम्बुसंचारः स्याच्छोफेऽङ्गुलिपीडिते ॥ १०
पूयस्य पीडयत्येकमन्तमन्ते च पीडिते ।
भक्ताकाङ्क्षा भवेच्चैव शोफानां पक्वलक्षणम् ॥ ११ ॥

नर्तेऽनिलाद्रुङ् विना च पित्तं पाकः कफं चापि विना न पूय
तस्माद्धि सर्वे परिपाककाले गच्छन्ति शोफास्त्रिभिरेव पाकम्

अविनिःसृतस्य पूयस्य विकारकारित्वम्।

कक्षं समासाद्य यथैव वह्निर्वाय्वीरितः संदहति प्रसह्य।
तथैव पूयोऽप्यविनिःसृतो हि मांसं शिराः स्नायु च खादतीह॥

आमं विदह्यमानं च सम्यक्पक्वं च यो भिषक्।
जानीयात्स भवेद्वैद्यः शेषास्तस्करवृत्तयः॥ १४॥

व्रणभेदाः।

द्विधा व्रणः स विज्ञेयः शारीरागन्तुभेदतः।
दोषैराद्यस्तयोरन्यः शस्त्रादिक्षतसंभवः॥ १५॥

वातजादिभेदेन व्रणलक्षणानि।

स्तब्धः कठिनसंस्पर्शो मन्दस्रावो महारुजः।
तुद्यते स्फुटति श्यावो व्रणो मारुतसंभवः॥ १६॥
तृष्णादाहज्वरक्लेददाहदुष्टविदारणैः।
व्रणं पित्तकृतं विद्याद्गन्धैः स्रावैश्च पूतिकैः॥ १७॥
बहुपिच्छो गुरुः स्निग्धो स्तिमितो मन्दवेदनः।
पाण्डुवर्णोऽल्पसंक्लेदश्चिरपाकी कफव्रणः॥ १८॥
रक्तो रक्तस्रुती रक्ताद्द्वित्रिजः स्यात्तदन्वयैः।

व्रणानां साध्यासाध्यविचारः।

त्वङ्मांसजः सुखे देशे तरुणस्यानुपद्रवः॥ १९॥
धीमतोऽभिनवः काले सुखे साध्यः सुखं व्रणः।
गुणैरन्यतरैर्हीनस्ततः कृच्छ्रो व्रणः स्मृतः॥ २०॥
सर्वैर्विहीनोऽसाध्यस्तु तथैवोपद्रवान्वितः।
पूतिपूयोऽतिदुष्टासृक्स्राव्युत्सङ्गी चिरस्थितः॥ २१॥
दुष्टव्रणोऽतिगन्धादिः शुद्धलिङ्गविपर्ययः।

शुद्धव्रणलक्षणम्।

जिह्वातलाभोऽतिमृदुः स्निग्धो विगतवेदनः॥ २२॥
सुव्यवस्थो निरास्रावः शुद्धो व्रण इति स्मृतः।

रुह्यमानव्रणलक्षणम् ।

कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः ॥ २३ ॥
स्थिराश्च पिडिकावन्तो रोहतीति तमादिशेत् ।

सम्यग्रूढव्रणलक्षणम् ।

रूढवर्त्मानमग्रन्थिमशूनमरुजं व्रणम् ॥ २४ ॥
त्वक्सवर्णं समतलं सम्यग्रूढं तमादिशेत् ।

व्रणानामसाध्यलक्षणानि ।

कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ॥ २५ ॥
व्रणाः कृच्छ्रेण सिद्ध्यन्ति येषां चापि व्रणे व्रणाः ।
वसां मेदोऽथ मज्जानं मस्तुलुङ्गं च यः स्रवेत् ॥ २६ ॥
आगन्तुजो व्रणः सिद्ध्येन्न सिद्ध्येद्दोषसंभवः ।
मद्यागुर्वाज्यसुमनःपद्मचन्दनचम्पकैः ॥ २७ ॥
सगन्धा दिव्यगन्धाश्च मुमूर्षूणां व्रणाः स्मृताः ।
ये च मर्मसु संभूता भवन्त्यत्यर्थवेदनाः ॥ २८ ॥
दह्यन्ते चान्तरत्यर्थं बहिःशीताश्च ये व्रणाः ।
प्राणमांसक्षयश्वासकासारोचकपीडिताः ॥ २९ ॥
प्रवृद्धपूयरुधिरा व्रणा येषां च मर्मसु ।
क्रियाभिः सम्यगारब्धा न सिध्यन्ति च ये व्रणाः ।
वर्जयेदेव तान् वैद्यः संरक्षन्नात्मनो यशः ॥ ३० ॥

इति व्रणशोफद्विव्रणीयनिदानम् ॥

---

अथातो व्रणशोफद्विव्रणीयचिकित्सितं व्याख्यास्यामः ।

व्रणशोफे रक्तावसेचनम् ।

पूर्वरूपं भिषग्बुद्ध्वा व्रणानां शोफमादितः ।
रक्तावसेचनं कुर्यादजातव्रणशान्तये ॥ ३१ ॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः ।
ससर्पिष्कैः प्रदेहः स्याच्छोफनिर्वापणः परः ॥ ३२ ॥

वातशोफे मातुलुङ्गादिलेपः ।

मातुलुङ्गाग्निमन्थौ च भद्रदारु महौषधम् ।
अहिंसा चैव रास्ना च प्रलेपो वातशोफहा ॥ ३३ ॥

पित्तशोफे दूर्वादिलेपः ।

दूर्वा च नलमूलं च मधुकं चन्दनं तथा ।
शीतलाश्च गणाः सर्वे प्रलेपः पित्तशोफहा ॥ ३४ ॥

आगन्तुजादिव्रणचिकित्सा ।

आगन्तुजे रक्तजे च एष एव विधिर्हितः ।
विधिर्विषघ्नो विषजे पित्तघ्नोऽभिहितस्तथा ॥ ३५ ॥

कफशोफे अजगन्धादिलेपः ।

अजगन्धाऽजशृङ्गी च काला सरलया सह ।
एकैषिकाऽश्वगन्धा च प्रलेपः श्लेष्मशोफहा ॥ ३६ ॥

कफवातशोफे पुनर्नवादिलेपः ।

पुनर्नवादारुशिग्रुदशमूलमहौषधैः ।
कफवातकृते शोफे लेपः कोष्णो विधीयते ॥ ३७ ॥

प्रलेपविधिः ।

न रात्रौ लेपनं कुर्यान्न चापि पतितं तथा ।
न च पर्युषितं शुष्यमाणं नैवोपोधारयेत् ॥ ३८ ॥
शुष्यमाणमुपेक्षेत प्रलेपं पीडनं प्रति ।
न चाभिमुखमालिम्पेत्तेन दोषः प्रसिच्यते ॥ ३९ ॥

शोफविम्लापनम् ।

अभेद्ये स्वेदयित्वा तु वेणुनाड्या शनैः शनैः ।
विम्लापनार्थं कुर्वीत तलेनाङ्गुष्ठकेन च ॥ ४० ॥

शोफे रक्तमोक्षणविधिः ।

रक्तावसेचनं कुर्यादादावेव विचक्षणः ।
शोफे महति संरब्धे वेदनावति वा व्रणे ॥ ४१ ॥

यो न याति शमं लेपात् स्वेदसेकापतर्पणैः ।
सोऽपि नाशं व्रजत्याशु शोफः शोणितमोक्षणात् ॥४२
एकतश्च क्रियाः सर्वा रक्तमोक्षणमेकतः ।
रक्तं हि व्यम्लतां याति तच्च नास्ति न चास्ति रुक् ४३

शोफे पाचनोपनाहविधिः ।

न प्रशाम्यति यः शोफः प्रलेपादिविधानतः ।
द्रव्याणि पाचनीयानि दद्यात्तत्रोपनाहने ॥ ४४ ॥
सतिला सातसीबीजा दध्यम्ला सक्तुपिण्डिका ।
सकिण्वकुष्ठलवणा शस्ता स्यादुपनाहने ॥ ४५ ॥
शणमूलकशिग्रूणां बीजानि तिलसर्षपाः ।
सक्तवः किण्वमुष्णानि द्रव्याण्येतानि पाचनम् ॥ ४६॥
तैलेन सर्पिषा वाऽपि ताभ्यां वा सक्तुपिण्डिका ।
सुखोष्णा शोफपाकार्थमुपनाहः प्रशस्यते ॥ ४७ ॥

शोफानां पाचनभेदनार्थं हस्तिदन्तयोगः ।

हस्तिदन्तं जले घृष्टं बिन्दुमात्रं प्रलेपयेत् ।
अत्यर्थकठिने शोफे लेपः पाचनभेदनः ॥ ४८ ॥

शोफपीडनवर्गः ।

द्रव्याणां पिच्छिलानां च त्वङ्मूलानि प्रपीडनम् ।
यवगोधूममाषाणां चूर्णानि च समांशतः ॥ ४९ ॥

शोफदारणवर्गः ।

चिरबिल्वोऽग्निको दन्ती चित्रको हयमारकः ।
कपोतकङ्कगृध्राणां पुरीषाणि च दारणम् ॥ ५० ॥
क्षारद्रव्याणि वा यानि क्षारो वा दारणं परम् ।

व्रणप्रक्षालनार्थं कतिपययोगाः ।

ततः प्रक्षालने क्वाथः पटोलारिष्टपत्रजः ॥ ५१ ॥
अविशुद्धे, विशुद्धे तु न्यग्रोधादित्वगुद्भवः ।
पञ्चमूलद्वयं वाते न्यग्रोधादिश्च पैत्तिके ॥ ५२ ॥

आरग्वधादिको योज्यः कफजे सर्वकर्मसु।

व्रणरोपणाः कतिपययोगाः।

अपेतपूतिमांसानां मांसस्थानामरोहताम् ॥ ५३ ॥
कल्कः संरोपणः कार्यस्तिलानां मधुकान्वितः।
निम्बपत्रमधुभ्यां तु युक्तः संशोधनः स्मृतः ॥ ५४ ॥
पूर्वाभ्यां सर्पिषा वाऽपि युक्तश्चाप्युपरोपणः।
निम्बपत्रतिलैः कल्को मधुना क्षतशोधनः ॥ ५५ ॥
रोपणः सर्पिषा युक्तो यवकल्केऽप्ययं विधिः।
निम्बपत्रघृतक्षौद्रदार्वीमधुकसंयुता ॥ ५६ ॥
वर्तिस्तिलानां कल्को वा शोधयेद्रोपयेद्व्रणम्।
निम्बपत्रं तिला दन्ती त्रिवृत्सैन्धवमाक्षिकम् ॥ ५७ ॥
तिलकल्कः सलवणो द्वे हरिद्रे त्रिवृद्घृतम्।
मधुकं निम्बपत्राणि लेपो वा व्रणशोधनः ॥ ५८ ॥
त्रिवृता खदिरो दार्वी न्यग्रोधादिः पलङ्कषा।
निम्बबब्बूलपत्राणि कषायः शोधने हितः ॥ ५९ ॥
यष्टी तिलाः सुपिष्टा वा सघृता व्रणरोपणाः।
एकं वा सारिवामूलं सर्वव्रणविशोधनम् ॥ ६० ॥
सप्तदलदुग्धकल्कः शमयति दुष्टव्रणं प्रलेपेन।
मधुयुक्ता शरपुङ्खा सर्वव्रणरोपणी कथिता ॥ ६१ ॥
व्रणान् विशोधयेद्वर्त्या सूक्ष्मास्यान् सन्धिमर्मजान्।
कृतया त्रिफलादन्तीलाङ्गलीमधुसैन्धवैः ॥ ६२ ॥
सुपर्वीपत्रपत्तूरकर्णमोटकुठेरकाः।
पृथगेते प्रलेपेन गम्भीरव्रणरोपणाः ॥ ६३ ॥
पञ्चवल्कलचूर्णैर्वा शुक्तिचूर्णसमायुतैः।
धातकीरोध्रचूर्णैर्वा तथा रोहन्ति ते व्रणाः ॥ ६४ ॥

सदाहा वेदनावन्तो ये व्रणा मारुतोत्तराः ।
तेषामुमां तिलांश्चैव भृष्टान् पयसि निर्वृतान् ॥ ६५

तेनैव पयसा पिष्ट्वा दद्यादालेपनं भिषक् ।

अग्निदग्धव्रणचिकित्सा ।

पित्तविद्रधिवीसर्पशमनं लेपनादिकम् ॥ ६६ ॥
अग्निदग्धे व्रणे सम्यक् प्रयुञ्जीत चिकित्सकः ।

व्रणधूपनयोगाः ।

वाताभिभूतान् सास्रावान् धूपयेदुग्रवेदनान् ।
यवाज्यभूर्जमदनश्रीवेष्टकसुराह्वयैः ॥ ६७ ॥

[illegible]

[illegible] ॥ ६

तिलाः पयः सिता क्षौद्रं तैलं मधुकचन्दनम् ।
लेपेन क्षीरित्वग्द्राक्षायुक्तं निर्वापयेद्व्रणम् ॥ ६९ ॥

व्रणे कृमिघ्नो विधिः ।

करञ्जारिष्टनिर्गुण्डीरसो हन्याद्व्रणे कृमीन् ।
कलायविदलीपत्रं कोशाम्राम्स्थि च पूरणात् ॥ ७०
सुरसादिरसासेको लेपनं लशुनेन वा ।
निम्बकुम्भीकजात्यर्कसप्तपर्णाश्वमारकाः ॥ ७१ ॥
कृमिघ्ना मूत्रसंयुक्ताः सेकालेपनधावनैः ।
प्रच्छाद्य मांसपेश्या वा कृमीनपहरेद्व्रणात् ॥ ७२

व्रणे गुग्गुलुयोगः ।

ये क्लेदपाकस्रुतिगन्धवन्तो व्रणा महान्तः सरुजः सशोफाः
प्रयान्ति ते गुग्गुलुमिश्रितेन पीतेन शान्तिं त्रिफलारसेन ॥

व्रणे त्रिफलागुग्गुलुः ।

त्रिफलाचूर्णसंयुक्तो गुग्गुलुर्वटकीकृतः ।
निषेवितो विबन्धघ्नो व्रणशोधनरोपणः ॥ ७४ ॥

व्रणे दशकगुग्गुलुः ।

अमृतापटोलमूलत्रिफलात्रिकटुकक्रमिघ्नानाम् ।
सर्वसमो गुग्गुलुकः प्रतिवासरमेकपरिमाणम् ।
जेतुं व्रणवातासृग्गुल्मोदरश्वयथुपाण्डुरोगांश्च ॥ ७५ ॥

व्रणे गुग्गुल्वष्टकम् ।

विडङ्गत्रिफलाव्योषचूर्णं गुग्गुलुना समम् ।
सर्पिषा वटकान् कृत्वा खादेद्वा हितभोजनः ॥ ७६ ॥
दुष्टव्रणापचीमेहकुष्ठनाडीविशोधनान् ।

व्रणे सवर्णीकरणा योगाः ।

मनःशिला समञ्जिष्ठा लाक्षा च रजनीद्वयम् ॥ ७७ ॥
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परः ।
अयोरजः सकासीसं त्रिफलाकुसुमानि च ॥ ७८ ॥
प्रलेपः कुरुते कार्ष्ण्यं सद्य एव नवत्वचि ।
कालीयकलताम्रास्थिहेमकालायसोत्तमः ॥ ७९ ॥
लेपः सगोमयरसः सवर्णकरणः परः ॥

इति शोढलवैद्यग्रथिते गदनिग्रहे तृतीये शल्यखण्डे व्रणशोथद्विव्रणाधिकारस्तृतीयः ॥ ३ ॥

---

## अथ सद्योव्रणाधिकारश्चतुर्थः ।

अथातः सद्योव्रणशस्त्रघातनिदानं व्याख्यास्यामः ।

सद्योव्रणभेदाः ।

नानाधारमुखैः शस्त्रैर्नानास्थाननिपातिभिः ।
भवन्ति नानाकृतयो व्रणास्तांस्तान्निबोधत ॥ १ ॥
छिन्नं भिन्नं तथा विद्धं क्षतं पिच्चितमेव च ।
घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम् ॥ २ ॥

छिन्नलक्षणम् ।

तिर्यक्छिन्नो ऋजुर्वापि व्रणो यस्त्वायतो भवेत् ।
गात्रस्य पातनं तद्धि छिन्नमित्यभिधीयते ॥ ३ ॥

कासश्छर्दिरतीसारो हिक्का श्वासः सवेपथुः ।
षोडशोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकैः ॥ २६ ॥

इति सद्योव्रणशस्त्रघातनिदानं समाप्तम् ॥

---

अथातः सद्योव्रणशस्त्रघातचिकित्सितं व्याख्यास्यामः ।

सद्योव्रणे सामान्यचिकित्सा ।

यच्चाऽऽगन्तुव्रणं सद्यो घृतक्षौद्रसमन्वितम् ।
शीतक्रिया प्रयोक्तव्या पित्तरक्तोष्मनाशिनी ॥ २७ ॥
सद्यःक्षतव्रणं वैद्यः सशूलं परिषेचयेत् ।
यष्टीमधुकयुक्तेन किंचिदुष्णेन सर्पिषा ॥ २८ ॥
अपामार्गस्य संसिक्तं पत्रोत्थेन रसेन तु ।
सद्योव्रणेषु रक्तं हि प्रवृत्तं परितिष्ठति ॥ २९ ॥
उदगाग्रागतं मूलं मालत्यास्तन्दुलाम्बुना ।
संपिष्टं लेपनं दद्यात्सद्यःक्षतविरोहणम् ॥ ३० ॥
कर्पूरपूरितं बद्धं सघृतं संप्ररोहति ।
सद्यः शस्त्रक्षतं पुंसां व्यथापाकविवर्जितम् ॥ ३१ ॥
चणकैश्चर्वितैरामैरार्द्रं संप्रलेपितः ।
रोहत्याशु व्रणः पुंसां व्यथापाकविवर्जितः ॥ ३२ ॥
आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते ।
पक्वाशयस्थे देयं च विरेचनमसंशयम् ॥ ३३ ॥
क्वाथो वंशत्वगेरण्डश्वदंष्ट्राश्मभिदा कृतः ।
सहिङ्गुसैन्धवः पीतः कोष्ठस्थं स्रावयेदसृक् ॥ ३४ ॥
पञ्चकोलकुलत्थानां निःस्नेहेन रसेन वा ।
भुञ्जीतान्नं यवागूं वा पिबेत्सैन्धवसंयुताम् ॥ ३५ ॥
अत्यर्थमसृग् स्रवति प्रायशो यत्र वै क्षते ।
ततो रक्तक्षयाद्वायौ कुपितेऽतिरुजा भवेत् ॥ ३६ ॥

स्नेहपानपरीषेकस्नेहलेपोपनाहनम्।
स्नेहबस्तिं च युञ्जीत वातघ्नौषधसाधितम्॥ ३७॥
इति साप्ताहिकः प्रोक्तः सद्योव्रणहितो विधिः।
सप्ताहात्परतः कार्या शारीरव्रणवत्क्रिया॥ ३८॥

सद्योव्रणे गौरं घृतं तैलं च।

गौरी हरिद्रा मञ्जिष्ठा मांसी मधुकमेव च।
प्रपौण्डरीकं ह्रीबेरं भद्रमुस्तं सचन्दनम्॥ ३९॥
जातीनिम्बपटोलं च करञ्जः कटुरोहिणी।
मधूच्छिष्टं समधुकं महामेदा तथैव च॥ ४०॥
पञ्चवल्कलतोयेन घृतप्रस्थं विपाचयेत्।
एतद्गौरं महावीर्यं सर्वव्रणविशोधनम्॥ ४१॥
आगन्तुसहजाश्चैव सुचिरोत्थाश्च ये व्रणाः।
विषमामपि नाडीं तु शोधयेच्छीघ्रमेव च॥ ४२॥

सद्योव्रणे करञ्जाद्यं घृतं तैलं च।

नक्तमालस्य पत्राणि तरुणानि फलानि च।
सुमनायाश्च पत्राणि पटोलारिष्टयोस्तथा॥ ४३॥
द्वे हरिद्रे मधूच्छिष्टं मधुकं तिक्तरोहिणी।
मञ्जिष्ठा चन्दनोशीरमुत्पलं सारिवा त्रिवृत्॥ ४४॥
एतेषां कार्षिकैर्भागैः स्नेहप्रस्थं विपाचयेत्।
दुष्टव्रणप्रशमनं तथा नाडीविशोधनम्।
सद्यश्छिन्नव्रणघ्नं तु करञ्जाद्यमिदं शुभम्॥ ४५॥

अग्निदग्धे मधूच्छिष्टाद्यं घृतम्।

मधूच्छिष्टं समधुकं रोध्रं सर्जरसं तथा।
मञ्जिष्ठां चन्दनं मूर्वां पिष्ट्वा सर्पिर्विपाचयेत्॥ ४६॥
सर्वेषामग्निदग्धानामेतद्रोपणमुत्तमम्।

अग्निदग्धव्रणे पाटलातैलम्।

सिद्धं कल्ककषायाभ्यां पाटल्याः कटुतैलकम्।
दग्धव्रणरुजास्रावदाहविस्फोटनाशनम्॥ ४७॥

सद्योव्रणे चन्दनाद्यं तैलं घृतं च ।

चन्दनं वटशुङ्गाश्च मञ्जिष्ठा मधुकं तथा ।
प्रपौण्डरीकं दूर्वा च पत्राङ्गं धातकी तथा ॥ ४८ ॥
एतैस्तैलं विपक्तव्यं सर्पिःक्षीरसमायुतम् ।
अग्निदग्धे व्रणे श्रेष्ठं म्रक्षणाद्रोपणं परम् ॥ ४९ ॥
येनैव विधिना तैलं घृतं तेनैव साधयेत् ।
रक्तपित्तोत्तरं ज्ञात्वा सर्पिरेवावचारयेत् ॥ ५० ॥

व्रणग्रन्थिलक्षणं चिकित्सा च ।

आरूढे रूढमात्रे च व्रणे सर्वरसाशिनः ।
आर्द्रे वा बन्धरहिते गात्रेऽश्मादिहते तथा ॥ ५१ ॥
वातोऽस्रमसृतं दुष्टं संशोष्य ग्रथितं व्रणम् ।
कुर्यात्सदाहं कण्ड्वाढ्यं व्रणग्रन्थिरिति स्मृतः ।
क्षीरं तत्र प्रयुञ्जीत दुष्टव्रणहरं परम् ॥ ५२ ॥

अग्निदग्धव्रणचिकित्सा ।

यवान् प्रतप्ते प्रणिधाय तैले तिलोद्भवे श्लक्ष्णमयीं विगृह्य ।
तल्लिप्तमग्निप्रविदग्धमङ्गं तत्तैललिप्तं च रुजं जहाति ॥ ५३ ॥
सिक्थसर्जरसोशीरजीरपक्वघृतेन वै ।
लेपनाच्चाग्नि दग्धस्य वेदना निर्हरेत्क्षणात् ॥ ५४ ॥

शस्त्रक्षते कतिपययोगाः ।

शस्त्रक्षते दशनचर्वितबाणपुङ्खा-
मूलोद्भवं विनिदधीत रसं प्रयत्नात् ॥
दण्डोत्पलायाः स्वरसेन पूर्णो रिक्तीकृतो यः परिपूरितश्च ।
पश्चान्निबद्धो व्रणपट्टकेन क्षिप्रं स संरोहति शस्त्रघातः ॥ ५५
लज्जालुकेपुपुङ्खाभार्गीणां मध्यतः प्रलेपेन ।
एकस्या जलपिष्टं मूलं शस्त्रक्षतेषु हितम् ॥ ५६ ॥
दिनत्रयं वायसजङ्घया यः शस्त्रप्रहारे कुरुते प्रलेपम् ।
अजातपूयो व्यथया विहीनः संरोहमभ्येति स तस्य शीघ्रम् ॥

आर्द्रेण लज्जालुकिसंभवेन मूलेन तैलं परिपाचितं यत्।
तत्सेचितः पाकविवर्जितो द्राक्संरोहमागच्छति शस्त्रघातः ५८
तिलतैलमपामार्गमूलेनाम्भोन्वितेन यत्।
सिद्धं तत्सेचितः शस्त्रव्रणो न कुरुते व्यथाम् ॥ ५९ ॥
गोष्ठाम्लिकारण्यकुमारिकायाः कन्दस्तथा वेश्मकुमारिकायाः।
गोपालपीतं च मयूरकश्चेत्येतैर्विपाच्यं घृतमंशतुल्यैः ॥ ६० ॥
स्वेदेन तच्छस्त्रनिपातजातामार्तिं नराणामचिरेण हन्ति।
पुत्रः पितॄणां नरके स्थितानां यथा तृडादीनुदकादिदानैः ६१
निपीडितैः करपुटेन मयूरकस्य
पत्रैर्विनिःसरति यः स्वरसोऽतिसान्द्रः।
तत्पूरिते सततवेगमपि क्षणेन
रक्तं निरुद्धमवतिष्ठति शस्त्रघाते ॥ ६२ ॥
व्रणसंरोहणो लेपो घृतक्षीरद्रुमाङ्कुरैः।
त्रिफलावटशुङ्गाज्यत्रायन्तीरोध्रतोऽथवा ॥ ६३ ॥
मूलं सर्वं तु वृन्ताक्याः संचर्व्य पिण्डिबन्धनात्।
खड्गादिव्रणसंरोहः सप्ताहेन ध्रुवं भवेत् ॥ ६४ ॥
कपोतदक्षविड्युक्तः क्षारो ग्रन्थिविदारकः।
दन्तीचित्रकमूलार्कत्वक्स्नुहीपयसा गुडः ॥ ६५ ॥
तिलसैन्धवयष्ट्याह्वनिम्बपत्रनिशायुगैः।
त्रिवृद्घृतयुतैः पिष्टैः प्रलेपो व्रणशोधनः ॥ ६६ ॥

अथ व्रणगतशल्यनिष्कासनम्।

पिष्टेन लाङ्गलक्याः कन्देन विलेपिते व्रणस्य मुखे।
निर्याति जवाच्छल्यं चिरकालं प्रनष्टमपि ॥ ६७ ॥
व्रणपर्यन्तालेपान्मूलं जलपिष्टशक्रवारुण्याः।
कर्षति नष्टं शल्यं कदाचिदजशृङ्गिकामूलम् ॥ ६८ ॥

इति श्रीसोढलवैद्यग्रथिते गदनिग्रहे चतुर्थे शल्यखण्डे सद्योव्रणाधिकारश्चतुर्थः ॥ ४ ॥

## अथ भग्नाधिकारः पञ्चमः ।

### अथातो भग्ननिदानं व्याख्यास्यामः ।

भग्नभेदाः सन्धिमुक्तस्य सामान्यलक्षणं च ।

भग्नं समासाद्द्विविधं वदन्ति काण्डे च सन्धौ च हि तत्र सन्धौ ।
उत्पिष्टविश्लिष्टविवर्तितं च तिर्यग्गतं क्षिप्तमधश्च षोढा ॥ १ ॥
प्रसारणाकुञ्चनवर्तनोग्रा रुक्स्पर्शविद्वेषणमेतदुक्तम् ।
सामान्यतः सन्धिगतस्य लिङ्गमुत्पिष्टसन्धेः श्वयथुः समन्तात् ॥
विशेषतो रात्रिभवा रुजा च विश्लिष्टसन्धौ च रुजा च नित्यम् ।
विवर्तिते पार्श्वरुजा च तीव्रा तिर्यग्गते तीव्ररुजो भवन्ति ॥ ३
क्षिप्तेऽतिशूलं विषमश्च सन्धिः क्षिप्ते त्वधो रुग्विघटश्च सन्धेः ।

द्वादशविधकाण्डभग्ननिरूपणम् ।

काण्डे त्वतः कर्कटकाश्वकर्णविचूर्णितं पिच्चितमस्थिच्छल्लितं ४
काण्डाख्यभग्नं ह्यतिपातितं च मज्जागतं च स्फुटितं च वक्रम् ।
छिन्नं द्विधा द्वादशधा च काण्डे स्रस्ताङ्गता शोफरुजातिवृद्धिः ॥
संपीड्यमाने भवतीह शब्दः स्पर्शासहः स्पन्दनतोदशूलाः ।
सर्वास्ववस्थासु न शर्मलाभो भग्नस्य काण्डे खलु चिह्नमेतत् ।
भग्नं तु काण्डे बहुधा प्रयाति समासतो नामभिरेव तुल्यम् ॥ ६ ॥

भग्नस्य साध्यासाध्यविचारः ।

अल्पाशिनोऽनात्मवतो जन्तोर्वातात्मकस्य च ।
उपद्रवैर्वा जुष्टस्य भग्नं कृच्छ्रेण सिध्यति ॥ ७ ॥
भिन्नं कपालं कट्यां तु सन्धिमुक्तं तथा च्युतम् ।
जघनं प्रति पिष्टं च वर्जयेच्च विचक्षणः ॥ ८ ॥
असंश्लिष्टं कपालं च ललाटे चूर्णितं च यत् ।
भग्नं स्तनान्तरे शङ्खे पृष्ठे मूर्धनि वर्जयेत् ॥ ९ ॥

अस्थिविशेषेण भग्नविभेदः ।

आदितो यच्च दुर्जातमस्थिसन्धिरथापि च ।

सम्यग्यमितमप्यस्थि दुर्निक्षेपनिबन्धनात् ॥ १० ॥
संक्षोभाद्वापि यद्गच्छेद्विक्रियां तच्च वर्जयेत् ।

मध्ये वयसि भग्नस्य साध्यत्वनिरूपणम् ।

मध्यस्य वयसोऽवस्थास्त्रिसो याः परिकीर्तिताः ।
तासु स्थिरो भवेज्जन्तुरुपक्रान्तो विजानता ॥ ११ ॥

अस्थिविशेषेण भग्नविशेषः ।

तरुणास्थीनि नाम्यन्ते भज्यन्ते नलकानि तु ।
कपालानि विभिद्यन्ते स्फुटन्ति रुचकानि तु ॥ १२ ॥

इति भग्ननिदानं समाप्तम् ॥

---

अथातो भग्नचिकित्सितं व्याख्यास्यामः।

भग्ने सामान्यचिकित्सा ।

आदौ भग्नं विदित्वा तु सेचयेच्छीतवारिणा ।
पङ्केनालेपनं कुर्याद्बन्धनं च कुशान्वितम् ॥ १३ ॥
अवनामितमुन्नम्येत्प्रोन्नतं चावपीडयेत् ।
आञ्छेदतिक्षिप्तमधोगतं चोपरि वर्तयेत् ॥ १४ ॥
आलेपनार्थं मञ्जिष्ठा मधुकं चाम्लपेषितम् ।
शतधौतघृतोन्मिश्रं शालिपिष्टं च लेपयेत् ॥ १५ ॥
न्यग्रोधादिकषायं तु सुशीतं परिषेचने ।
पञ्चमूलीविपक्वं तु क्षीरं दद्यात्सवेदने ॥ १६ ॥
मांसं मांसरसः क्षीरं सर्पिर्यूषः सतीनजः ।
बृंहणं चान्नपानं च देयं भग्नाय जानता ॥ १७ ॥
गृष्टिक्षीरं रसं सर्पिर्मधुरौषधसाधितम् ।
शीतलं लाक्षया युक्तं प्रातर्भग्नः पिबेन्नरः ॥ १८ ॥
रसोनमधुलाक्षाज्यसिताकल्कं समश्नताम् ।
छिन्नभिन्नच्युतास्थीनां सन्धानमचिराद्भवेत् ॥ १९ ॥

## अथ भग्नाधिकारः पञ्चमः।

### अथातो भग्ननिदानं व्याख्यास्यामः।

भग्नभेदाः षड्विधसन्धिभग्नलक्षणं च।

भग्नं समासाद्द्विविधं तमाहुः काण्डे च सन्धौ च हि तत्र सन्धौ।
उत्पिष्टविश्लिष्टविवर्तितं च तिर्यक्प्रतिक्षिप्तमधश्च षोढा ॥ १ ॥
प्रसारणाकुञ्चनवर्तनोग्रा रुक्स्पर्शविद्वेषणमेतदुक्तम्।
सामान्यतः सन्धिगतस्य लिङ्गमुत्पिष्टसन्धेः श्वयथुः समन्तात्॥
विशेषतो रात्रिभवा रुजा च विश्लिष्टसन्धौ च रुजा च नित्यम्।
विवर्तिते पार्श्वरुजा च तीव्रा तिर्यग्गते तीव्ररुजो भवन्ति ॥ ३
क्षिप्तेऽतिशूलं विषमश्च सन्धिः क्षिप्ते त्वधो रुग्विघटश्च सन्धेः।

द्वादशविधकाण्डभग्ननिरूपणम्।

काण्डे त्वतः कर्कटकाश्वकर्णविचूर्णितं पिच्चितमस्थिच्छल्लिः ४
काण्डाख्यभग्नं ह्यतिपातितं च मज्जागतं च स्फुटितं च वक्रम्।
छिन्नं द्विधा द्वादशधा च काण्डे स्रस्ताङ्गता शोफरुजातिवृद्धिः॥
संपीड्यमाने भवतीह शब्दः स्पर्शासहः स्पन्दनतोदशूलाः।
सर्वास्ववस्थासु न शर्मलाभो भग्नस्य काण्डे खलु चिह्नमेतत्।
भग्नं तु काण्डे बहुधा प्रयाति समासतो नामभिरेव तुल्यम्॥६॥

भग्नस्य साध्यासाध्यविचारः।

अल्पाशिनोऽनात्मवतो जन्तोर्वातात्मकस्य च।
उपद्रवैर्वा जुष्टस्य भग्नं कृच्छ्रेण सिध्यति ॥ ७ ॥
भिन्नं कपालं कट्यां तु सन्धिमुक्तं तथा च्युतम्।
जघनं प्रति पिष्टं च वर्जयेच्च विचक्षणः ॥ ८ ॥
असंश्लिष्टं कपालं च ललाटे चूर्णितं च यत्।
भग्नं स्तनान्तरे शङ्खे पृष्ठे मूर्धनि वर्जयेत् ॥ ९ ॥

अस्थिविशेषेण भग्नविशेषः।

आदितो यच्च दुर्जातमस्थिसन्धिरथापि च।

सम्यग्यमितमप्यस्थि दुर्निक्षेपनिबन्धनात् ॥ १० ॥
संक्षोभाद्वापि यद्गच्छेद्विक्रियां तच्च वर्जयेत् ।

मध्ये वयसि भग्नस्य साध्यत्वनिरूपणम् ।

मध्यस्य वयसोऽवस्थास्त्रिस्रो याः परिकीर्तिताः ।
तासु स्थिरो भवेज्जन्तुरुपक्रान्तो विजानता ॥ ११ ॥

अस्थिविशेषेण भग्नविशेषः ।

तरुणास्थीनि नाम्यन्ते भज्यन्ते नलकानि तु ।
कपालानि विभिद्यन्ते स्फुटन्ति रुचकानि तु ॥ १२ ॥

इति भग्ननिदानं समाप्तम् ॥

---

अथातो भग्नचिकित्सितं व्याख्यास्यामः ।

भग्ने सामान्यचिकित्सा ।

आदौ भग्नं विदित्वा तु सेचयेच्छीतवारिणा ।
पङ्केनालेपनं कुर्याद्बन्धनं च कुशान्वितम् ॥ १३ ॥
अवनामितमुन्नम्येदुन्नतं चावपीडयेत् ।
आञ्छेदतिक्षिप्तमधोगतं चोपरि वर्तयेत् ॥ १४ ॥
आलेपनार्थं मञ्जिष्ठा मधुकं चाम्लपेषितम् ।
शतधौतघृतोन्मिश्रं शालिपिष्टं च लेपयेत् ॥ १५ ॥
न्यग्रोधादिकषायं तु सुशीतं परिषेचने ।
पञ्चमूलीविपक्वं तु क्षीरं दद्यात्सवेदने ॥ १६ ॥
मांसं मांसरसः क्षीरं सर्पिर्यूषः सतीनजः ।
बृंहणं चान्नपानं च देयं भग्नाय जानता ॥ १७ ॥
गृष्टिक्षीरं ससं सर्पिर्मधुरौषधसाधितम् ।
शीतलं लाक्षया युक्तं प्रातर्भग्नः पिबेन्नरः ॥ १८ ॥
रसोनमधुलाक्षाज्यसिताकल्कं समश्नताम् ।
छिन्नभिन्नच्युतास्थीनां सन्धानमचिराद्भवेत् ॥ १९ ॥

भग्ने लाक्षादिगुग्गुलुः।

लाक्षास्थिसंहृत्ककुभाश्वगन्धाश्चूर्णीकृता नागबला पुरश्च।
समक्तमुक्तास्थिरुजं निहन्यादङ्गानि कुर्यात्कुलिशोपमानि॥२०॥

भग्ने आभाद्यो गुग्गुलुः।

आभाफलत्रिकव्योषैः सर्वैरेभिः समीकृतैः।
तुल्यो गुग्गुलुरायोज्यो भग्नसन्धिप्रसाधकः॥ २१॥

सव्रणभग्नचिकित्सा।

सव्रणस्य च भग्नस्य व्रणं सर्पिर्मधूत्तरैः।
प्रतिसार्य कषायैश्च शेषं भग्नवदाचरेत्॥ २२॥

अभिघातजश्वयथुचिकित्सा।

सद्योऽभिघातजनिता रागयुताः श्वयथवः प्रशाम्यन्ति।
पिष्टलवणोपलेपादम्लीकाफलरसाभ्यां च॥ २३॥
वातव्याधिविनिर्दिष्टान् स्नेहानत्रापि योजयेत्।

भग्नेऽपथ्यानि।

कट्वम्ललवणं तीक्ष्णं क्षारं मैथुनमातपम्।
व्यायामं च न सेवेत भग्नो रूक्षान्नमेव च॥ २४॥

इति श्रीशोढलवैद्यग्रथिते गदनिग्रहे चतुर्थे शल्यखण्डे भग्नाधिकारः पञ्चमः॥ ५॥

---

## अथ नाडीव्रणाधिकारः षष्ठः।

अथातो नाडीव्रणनिदानं व्याख्यास्यामः।

नाडीव्रणस्य निदानपूर्विका सम्प्राप्तिः।

यः शोफमाममतिपक्वमुपेक्षतेऽज्ञो
यो वा व्रणं प्रचुरपूयमसाधुवृत्तः।
अभ्यन्तरं प्रविशति प्रविदार्य तस्य
स्थानानि पूर्वविहितानि ततः स पूयः॥ १॥

तस्यातिमात्रगमनाद्गतिरिष्यते तु
नाडीव यद्वहति तेन मता तु नाडी।
दोषैस्त्रिभिर्भवति सा पृथगेकशश्च
संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या ॥ २ ॥

वातजादिभेदेन नाडीव्रणलक्षणानि।

तत्रानिलात्परुषसूक्ष्ममुखी सशूला
फेनानुविद्धमधिकं स्रवति क्षपासु।
पित्ताच्च तृड्ज्वरकरी परिदाहयुक्ता
पीतं स्रवत्यधिकमुष्णमहःसु चापि ॥ ३ ॥
ज्ञेया कफाद्बहुघनार्जुनपिच्छिलास्रा
स्तब्धा सकण्डुररुजा रजनीप्रवृद्धा।
दोषद्वयाभिहितलक्षणदर्शनेन
तिस्रो गतीर्व्यतिकरप्रभवास्तु विद्यात् ॥ ४ ॥
दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा
यस्यां भवन्त्यभिहितानि च लक्षणानि।
तामादिशेत्पवनपित्तकफप्रकोपा-
द्घोरां गतिं त्वसुहरामिव कालरात्रिम् ॥ ५ ॥
नष्टं कदाचिदणुमार्गमुदीरितेषु
स्थानेषु शल्यमचिरेण गतिं करोति।
सा फेनिलं त्वसितमच्छमसृग्विमिश्रं
स्रावं करोति सहसा सरुजा च नित्यम् ॥ ६ ॥

नाडीव्रणस्य साध्यासाध्यत्वविचारः।

नाडी त्रिदोषप्रभवा न सिध्ये-
च्छेषाश्चतस्रः खलु यत्नसाध्याः।

इति नाडीव्रणनिदानम् ॥

---

अथातो नाडीव्रणचिकित्सितं व्याख्यास्यामः ।

नाडीव्रणे सामान्यचिकित्सा ।

नाडीनां गतिमन्विष्य शस्त्रेणापाट्य कर्मवित् ।
सर्वं व्रणक्रमं कुर्याच्छोधनारोपणादिकम् ॥ ७ ॥
कृशदुर्बलभीरूणां नाडी मर्माश्रिता च या ।
क्षारसूत्रेण तां छिन्द्यान्न तु शस्त्रेण बुद्धिमान् ॥ ८ ॥

वातजनाडीचिकित्सा ।

नाडीं वातकृतां साधु पाटितां शोधितां भिषक् ।
प्रत्यक्पुष्पाफलयुतैस्तिलैः पिष्टैश्च लेपयेत् ॥ ९ ॥

पित्तजनाडीचिकित्सा ।

पैत्तिकीं तिलमञ्जिष्ठानागदन्तीनिशाद्वयैः ।

कफजनाडीचिकित्सा ।

श्लैष्मिकीं तिलयष्ट्याह्वनिकुम्भारिष्टसैन्धवैः ।
निशाभ्यां तिलमध्वाद्यैर्लेपयेच्छिन्नशोधिताम् ॥ १० ॥

नाडीव्रणे वर्तिरूपवर्तियोगाः ।

घोण्टाफलत्वङ्मदनात्फलानि
पूगाख्यलाचम्लवणं च मुख्यम् ।
स्नुह्यर्कदुग्धेन सह प्रकल्को
वर्तीकृतो हन्त्यचिरेण नाडीम् ॥ ११ ॥
वर्तीकृतं माक्षिकसंप्रयुक्तं नाडीप्रयुक्तं लवणोत्तमं वा ।
दुष्टव्रणे यद्विहितं च तैलं तत्सेव्यमानं गतिमाशु हन्ति ॥१२॥
आरग्वधनिशाकालाचूर्णाज्यक्षौद्रसंयुता ।
सूत्रवर्तिर्व्रणे योज्या शोधनी गतिनाशिनी ॥ १३ ॥
जात्यर्कशम्याककरञ्जदन्तीसिन्धूत्थसौवर्चलयावशूकैः ।
वर्तिः कृता हन्त्यचिरेण नाडीं स्नुक्क्षीरपिष्टा सह चित्रकेण १४

नाडीव्रणे भल्लातकादितैलम् ।

भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्धं विडङ्गरजनीद्वयचित्रकैश्च ।

स्यान्मार्कवस्य च रसेन निहन्ति तैलं
नाडीं कफानिलकृतामपचीं व्रणांश्च ॥ १५ ॥

नाडीव्रणे चुचूफललेपः।

पिष्टं चुञ्चूफलं लेपान्नाडीव्रणहरं परम्।

नाडीव्रणे बृहत्क्षारपाकः।

द्रोणे पलाशकदलीखरमञ्जरीणां
क्षारस्य षड्भिरहिमैरुदकार्मणैश्च।
तावत्पचेद्भवति भस्मजलं हि याव-
त्तत्पिच्छमच्छमरुणं परिगृह्य यत्नात् ॥ १६ ॥
क्षौमेण कम्बलिकया पटवासकैर्वा
मूत्रावलोडितमथ स्नुतमम्बरेण।
तप्तस्य शङ्खशकलस्य पलान्यथाष्टौ
क्षिप्त्वाऽत्र भस्मपयसि प्रतिपिष्टकल्कैः ॥ १७ ॥
दन्तीद्रवन्त्यतिविषाविडतालमूली-
कङ्कुष्ठरामठवचाचिरबिल्वपत्रैः।
सस्वर्जिकाज्वलनलाङ्गलिकाकलिङ्ग-
द्रव्यार्धपालिकमितैरिति साधमेभिः ॥ १८ ॥
संसाध्यते तु भिषजा स तथा विपक्वः
क्षारो यथा भवति नैव तनुर्न सान्द्रः।
नाडीभगन्दरगुदामयगण्डमाला-
ग्रन्थ्यर्बुदादिषु नृणां विहितो भिषग्भिः ॥ १९ ॥

क्षारसूत्रेण नाडीच्छेदनविधिः।

एषण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम्।
सूचीं विदध्याद्गत्यन्ते चोन्नम्याशु विनिर्हरेत् ॥ २० ॥
सूत्रस्यान्ते समानीय गाढं बन्धं समाचरेत्।
ततः क्षारबलं वीक्ष्य सूत्रमन्यत्प्रवेशयेत् ॥ २१ ॥

पाषाणगर्दभलक्षणम् ।

श्लेष्मवातसमुद्भूतः श्वयथुर्हनुसंधिजः ।
स्थिरो मन्दरुजः स्निग्धो ज्ञेयः पाषाणगर्द

पनसिकालक्षणम् ।

कर्णस्याभ्यन्तरे जातां पिटिकामुग्रवेदनाम्
स्थिरां पनसिकां तां तु वि

जालगर्दभलक्षणम् ।

विसर्पवत्सर्पति यः शोफस्तनुरपाकवान् ।
दाहज्वरकरः पित्तात्स ज्ञेयो जालगर्दभः ।

इरिवेल्लिकालक्षणम् ।

पिटिकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्वराम्
सर्वात्मिकां सर्वलिङ्गां दिरिवेल्लि

कक्षालक्षणम् ।

बाहुपार्श्वांसकक्षासु कृष्णस्फोटां सवेदनाम्
पित्तप्रकोपसंभूतां कक्षामिति विनिर्दिशेत् ॥

गन्धनामालक्षणम् ।

एकामेतादृशीं दृष्ट्वा पिटिकां स्फोटसन्निभाम्
त्वग्गतां पित्तकोपेन गन्धनामां प्रचक्षते ॥ १

विस्फोटकलक्षणम् ।

अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्ततः
कचित्सर्वत्र वा देहे विस्फोटक इति स्मृतः ॥

अग्निरोहिणीलक्षणम् ।

कक्षाभागेषु ये स्फोटा जायन्ते मांसदारणाः
अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः ॥ १९
सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम्
तामग्निरोहिणीं विद्यादसाध्यां स ातिकी

रक्षोघ्नशर्वरीद्वयमञ्जिष्ठागैरिकाज्यवत्सपयः- ।
सिद्धेन लिप्यमानं मुखबिम्बं चन्द्रवद्भाति ॥ ११३ ॥

व्यङ्गादौ हरिद्रादितैलम् ।

हरिद्राद्वययष्ट्याह्वकालीयककुचन्दनैः ।
प्रपौण्डरीकमञ्जिष्ठापद्मपद्मककुङ्कुमैः ॥ ११४ ॥
कपित्थतिन्दुकप्लक्षवटपत्रैः पयोन्वितैः ।
लेपयेत्कल्कितैरेभिस्तैलं वाऽभ्यञ्जनं पचेत् ॥ ११५ ॥
विप्लवं नीलिकाव्यङ्गांस्तिलकान्मुखदूषकान् ।
नित्यसेवी जयेत्क्षिप्रं मुखं कुर्यान्मनोरमम् ॥ ११६ ॥

कनकतैलम्

मधुकस्य कषायेण तैलस्य कुडवं पचेत् ।
कल्कैः प्रियङ्गुमञ्जिष्ठाचन्दनोत्पलकेसरैः ॥ ११७ ॥
कनकं नाम तत्तैलं स्वर्णाभमुखकारकम् ।
अतीव नीलिकाव्यङ्गशोधनं परमोत्तमम् ॥ ११८ ॥
क्षिप्रं शीताम्बुना नश्युर्मुखव्यङ्गानि देहिनाम् ।
यान्ति रोचनया लिप्तान्यवश्यायनिघृष्टया ॥ ११९ ॥

मुखलेपप्रमाणम् ।

अङ्गुलस्य चतुर्भागो मुखलेपो विधीयते ।
मध्यमस्तु त्रिभागः स्यादुत्तमोऽर्धाङ्गुलो भवेत् ॥१२०॥

देहकान्त्यादिवर्धनाः कतिपययोगाः ।

अगस्त्यपुष्पचूर्णेन माहिषं श्रपयेत्पयः ।
तदुत्थनवनीतं हि देहजं स्फुटितं जयेत् ॥ १२१ ॥
माहिषं नवनीतं तु खलेन परिमिश्रितम् ।
गोमूत्रसहितं कृत्वा क्षारेण लवणेन च ॥ १२२ ॥
तदेकत्र समालोड्य वह्निना तापयेच्छनैः ।
गात्रमुद्वर्तयेत्तेन सम्यक् स्फुटितशान्तये ॥ १२३ ॥

यः पत्राङ्गमृणालपद्मकगदैः कोलास्थिमज्जान्वितैः
स्वर्णत्वग्दलयोरथकुङ्कुमनिशायुग्मैः सकालेयकैः ।
श्यामाशाबररोचनामधुलवापुत्रीमयूररति-
श्लक्ष्णैः साधुभिराहितः स कुरुते लेपो मुखे गौरताम् ॥१०५॥

यत्पकं मधुसारपद्मकनिशारोध्रैः सकालेयकैः
कल्कैः सर्षपसंयुतैस्तदमलीकुर्यात्कृतं वाससा ।
पश्चात्सिक्थकभूरिकुङ्कुमयुतं शीतेऽम्भसि स्थापितं
पकं मृदनले मुखस्य शिशिरे कान्तिं विधत्ते पराम् ॥१०६॥

मञ्जिष्ठामधुचन्दनैः सलाक्षैः काश्मीरप्रभवयुतैः सकर्षमात्रैः ।
तैलस्य प्रमितपलाष्टकं विपकं यत्क्षीरे द्विगुणमिते भवत्यजायाः ॥

अभ्यङ्गादनुदिवसं विधीयमानं
नारीणां वितरति सप्तभिर्दिनैस्तत् ।
वक्त्राब्जेऽप्यतनुकपोलभित्तिभाग-
प्रस्फूर्जद्रुचिसुभगत्वमत्युदारम् ॥ १०८ ॥

अम्भःक्षालितटङ्कणेन मसृणोत्पिष्टेन यल्लेपितं
ताम्रं तत्परिताप्य सूक्ष्मकणिकाभावं क्रमात्प्रापयेत् ।
धौते तत्र चतुर्गुणं विनिहितं तैलं सुरभ्याः पयो
विन्यस्याष्टगुणं पचेत्सुनिपुणो नात्यन्ततीव्रेऽनले ॥ १०९ ॥

कर्षे तैलपले क्षिपेदथ मधूच्छिष्टस्य काश्मीरज-
स्याष्टांशं विनिधाय तेन शिशिरे वक्त्रं समालेपयेत् ।
एवं व्यङ्गकलङ्कबिन्दुवलिभिर्निर्मुक्तमत्युज्ज्वलं
तत्स्यात्पार्वणचन्द्रबिम्बविजयि प्रस्फारचारुद्युति ॥ ११० ॥

मातुलुङ्गजटासर्पिः शिलागोशकृतो रसः ।
मुखकान्तिकरो लेपः पिटिकातिलकापहः ॥ १११ ॥

कालेयकोत्पलामयदधिसरबदरास्थिमध्यफलिनीभिः ।
लिप्तं भवति हि वदनं शशिप्रभं सप्तरात्रेण ॥ ११२ ॥

रक्षोघ्नशर्वरीद्वयमञ्जिष्ठागैरिकाज्यवत्सपयः- ।
सिद्धेन लिप्यमानं मुखबिम्बं चन्द्रवद्भाति ॥ ११३ ॥

व्यङ्गादौ हरिद्रादितैलम् ।

हरिद्राद्वययष्ट्याह्वकालीयककुचन्दनैः ।
प्रपौण्डरीकमञ्जिष्ठापद्मपद्मककुङ्कुमैः ॥ ११४ ॥
कपित्थतिन्दुकप्लक्षवटपत्रैः पयोन्वितैः ।
लेपयेत्कल्कितैरेभिस्तैलं वाऽभ्यञ्जनं पचेत् ॥ ११५ ॥
विप्लवं नीलिकाव्यङ्गांस्तिलकान्मुखदूषकान् ।
नित्यसेवी जयेत्क्षिप्रं मुखं कुर्यान्मनोरमम् ॥ ११६ ॥

कनकतैलम्

मधुकस्य कषायेण तैलस्य कुडवं पचेत् ।
कल्कैः प्रियङ्गुमञ्जिष्ठाचन्दनोत्पलकेसरैः ॥ ११७ ॥
कनकं नाम तत्तैलं स्वर्णाभमुखकारकम् ।
अतीव नीलिकाव्यङ्गशोधनं परमोत्तमम् ॥ ११८ ॥
क्षिप्रं शीताम्बुना नश्युर्मुखव्यङ्गानि देहिनाम् ।
यान्ति रोचनया लिप्तान्यवश्यायनिघृष्टया ॥ ११९ ॥

मुखलेपप्रमाणम् ।

अङ्गुलस्य चतुर्भागो मुखलेपो विधीयते ।
मध्यमस्तु त्रिभागः स्यादुत्तमोऽर्धाङ्गुलो भवेत् ॥१२०॥

देहकान्त्यादिवर्धनाः कतिपययोगाः ।

अगस्त्यपुष्पचूर्णेन माहिषं श्रपयेत्पयः ।
तदुत्थनवनीतं हि देहजं स्फुटितं जयेत् ॥ १२१ ॥
माहिषं नवनीतं तु खलेन परिमिश्रितम् ।
गोमूत्रसहितं कृत्वा क्षारेण लवणेन च ॥ १२२ ॥
तदेकत्र समालोड्य वह्निना तापयेच्छनैः ।
गात्रमुद्वर्तयेत्तेन सम्यक् स्फुटितशान्तये ॥ १२३ ॥

हरीतकीं तु संपेष्य गात्रमुद्वर्तयेन्नरः।
पश्चात्स्नानं प्रकुर्वीत देहस्वेदोपशान्तये ॥ १२४ ॥
वब्बूलस्य फलैः सम्यग्वारिणा परिपेषितैः।
गात्रमुद्वर्तयित्वा तु हरीतक्या सुपिष्टया ॥ १२५ ॥
भूयस्तूद्वर्तनं कृत्वा पश्चात्स्नानं प्रकल्पयेत्।
प्रस्वेदान्मुच्यते क्षिप्रं ततश्चैवं समाचरेत् ॥ १२६ ॥
गोमूत्रेण समालोड्य माहिषं शकृदुत्तमम्।
तेनैवालेपनं कुर्याद्देहदुर्गन्धनाशनम् ॥ १२७ ॥
नवनीतं वचा चैव माषाः सक्तुसमन्विताः।
पद्मपत्रं शताह्वा च लेपयेत्प्रमदातनुम् ॥ १२८ ॥
स्थूला भवति गौरी च प्रयोगात्सप्तरात्रतः।
उभे हरिद्रे मञ्जिष्ठा घृतं गौराश्च सर्षपाः ॥ १२९ ॥
एतैश्चैव भवेद्वक्त्रमुदितादित्यसप्रभम्।
वचां रोध्रमुशीरं च सर्पिः सर्जरसं पयः ॥ १३० ॥
पीतानि वटपत्राणि हरिद्रां सह पेषयेत्।
मुखं भवति पद्माभं पादौ गर्भत्वचोपमौ ॥ १३१ ॥
प्रियो भवति नारीणां राज्ञो जनपदस्य च।
गलदाहो यदा पुंसां भुक्ते संजायते भृशम् ॥ १३२ ॥
चणकैर्भक्षितैरामैस्तथा शान्तिमियात्क्षणात्।
शिरीषलामज्जकहेमरोध्रैस्त्वग्दोषसंस्वेदहरः प्रदेहः।
पत्राम्बुलोहामयचन्दनानि शरीरदौर्गन्ध्यहरः प्रघर्षः १३

वासादलरसालेपश्शङ्खचूर्णेन संयुतः।
विल्वपत्ररसो वाऽपि गात्रदौर्गन्ध्यनाशनः ॥ १३४ ॥
हरीतकी रोध्रमरिष्टपत्रं विल्वत्वचो दाडिमवल्कलं च।
एषोऽङ्गरागः कथितोऽङ्गनानामङ्गप्रघर्षश्च नराधिपानाम् १३

गोमूत्रपिष्टं विनिहन्ति कुष्ठं वर्णोज्ज्वलं गोपयसा च युक्तम्।
कक्षादिदौर्गन्ध्यहरं पयोभिः शस्तं वशीकृद्रजनीद्वयेन ॥ १३६

पिष्ट्वा जलेन रजनीं महिषीपुरीष-
मध्ये निधाय मृदुना दहनेन पक्त्वा।
उद्वर्तनेन विदधाति शरीरमुद्य-
च्छीतांशुबिम्बरुचिसुन्दरकान्तिबिम्बम् ॥ १३७ ॥

यः कुष्ठसर्षपतिलैर्निशया च दार्व्या
गात्रं प्रलिप्य सलिलैः कुरुतेऽभिषेकम्।
तस्याः प्रतप्तवरकाञ्चनकान्तिगौर-
मुद्दामसौरभमतीव विराजते तत् ॥ १३८ ॥

जम्बूदलार्जुनतरुप्रसवैः सकुष्ठै-
रुद्वर्तनं प्रकुरुते प्रतिवासरं यः।
प्रस्वेदबिन्दुकणिकानिकरानुषङ्ग-
दुर्गन्धता वपुषि तस्य पदं न धत्ते ॥ १३९ ॥

शिरीषपद्मकोशीररोध्रोद्वर्तितविग्रहः।
ग्रीष्मोष्मणाऽपि नाप्नोति दौर्गन्ध्यं जातु मानवः ॥१४०॥

ह्रीवेरोशीरदलैर्मलयजकाश्मीरकाञ्जिकैर्लेपात्।
अपगच्छति दौर्गन्ध्यं मुण्डीचूर्णस्य पानाद्वा ॥ १४१ ॥

इति श्रीवैद्यशोढलप्रथिते गदनिग्रहे चतुर्थे शल्यखण्डे क्षुद्ररोगाधिकारो दशमः समाप्तः ॥ १० ॥

समाप्तश्चायं शल्यतन्त्राख्यश्चतुर्थः खण्डः ॥ ४ ॥

# गदनिग्रहः ।

## अथ भूतविघातत्रं नाम पञ्चमः खण्डः ।

### अथ भूतोन्मादाधिकारः प्रथमः ।

तत्र प्रथमं भूतोन्मादनिदानं व्याख्यास्यामः—

भूतोन्मादस्य सामान्यलक्षणम् ।

अमर्त्यवाग्विक्रमवीर्यचेष्टो ज्ञानादिविज्ञानबलादिभिर्यः ।
उन्मादकालोऽनियतश्च यस्य भूतोत्थमुन्मादमुदाहरेत्तम् ॥१॥

देवग्रहजुष्टलक्षणानि ।

संतुष्टः शुचिरतिदिव्यमाल्यगन्धो
निस्तन्द्रो ह्यवितथसंस्कृतप्रभाषी ।
तेजस्वी स्थिरनयनो वरप्रदाता
ब्रह्मण्यो भवति नरः स देवजुष्टः ॥ २ ॥

असुरग्रहजुष्टलक्षणम् ।

संस्वेदी द्विजगुरुदेवदोषवक्ता
जिह्माक्षो विगतभयो विमार्गदृष्टिः ।
संतुष्टो न भवति चान्नपानजातै-
र्दुष्टात्मा भवति स देवशत्रुजुष्टः ॥ ३ ॥

गन्धर्वग्रहजुष्टलक्षणम् ।

हृष्टात्मा पुलिनवनान्तरोपसेवी
स्वाचारः प्रियपरिगीतगन्धमाल्यः ।
नृत्यन्वै प्रहसति चारु चाल्पशब्दं
गन्धर्वग्रहपरिपीडितो मनुष्यः ॥ ४ ॥

यक्षग्रहजुष्टलक्षणम्।

ताम्राक्षः प्रियतनुरक्तवस्त्रधारी
गम्भीरो द्रुतगतिरल्पवाक्सहिष्णुः ॥ ५ ॥
तेजस्वी वदति च किं ददामि कस्मै
यो यक्षग्रहपरिपीडितो मनुष्यः।

पितृग्रहजुष्टलक्षणम्।

प्रेतानां स दिशति संस्तरेषु पिण्डान्
शान्तात्मा जलमपि चापसव्यवस्त्रः ॥ ६ ॥
मांसेप्सुस्तिलगुडपायसाभिकाम-
स्तद्भक्तो भवति पितृग्रहाभिजुष्टः।

सर्पग्रहजुष्टलक्षणम्।

यस्तूर्व्यां प्रसरति सर्पवत्कदाचित्
सृक्किण्यौ विलिहति जिह्वया तथैव ॥ ७ ॥
क्रोधालुर्गुडमधुदुग्धपायसेप्सु-
र्विज्ञेयो भवति भुजङ्गमेन जुष्टः।

राक्षसग्रहजुष्टलक्षणम्।

मांसासृग्विविधसुराविकारलिप्सु-
र्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः।
क्रोधालुर्विपुलबलो निशाविहारी
शौचद्विट् भवति च राक्षसैर्गृहीतः ॥ ८ ॥

पिशाचग्रहजुष्टलक्षणम्।

उद्ध्वस्तः कृशपरुषोऽचिरप्रलापी
दुर्गन्धो भृशमशुचिस्तथाऽतिलोलः।
बह्वाशी विजनवनान्तरोपसेवी
व्याचेष्टन् भ्रमति रुदन् पिशाचजुष्टः ॥ ९ ॥

असाध्यभूतोन्मादलक्षणम्।

स्थूलाक्षो द्रुतमटनः सफेनलेही
निद्रालुः पतति च कम्पतेऽतिमात्रम्।
यश्चाद्रिद्विरदनगादिविच्युतः स्या-
त्सोऽसाध्यो भवति तथा त्रयोदशाब्दे।

देवग्रहादीनामावेशकालः।

देवग्रहाः पौर्णिमायामसुराः सन्ध्ययोरपि।
गन्धर्वाः प्रायशोऽष्टम्यां यक्षाश्च प्रतिपद्यथ।
पितरः कृष्णपक्षे च पञ्चम्यामपि चोरगाः।
रक्षांसि रात्रौ पैशाचाश्चतुर्दश्यां विशन्ति हि

ग्रहाणां मानवशरीरावेशे दृष्टान्तः।

दर्पणादीन् यथा छाया शीतोष्णं प्राणिनो य
स्वर्मणिं भास्करार्चिश्च यथा देहं च देहधृक्
विशन्ति च न दृश्यन्ते ग्रहास्तद्वच्छरीरिणम्

इति भूतोन्मादनिदानं संपूर्णम्

---

अथातो भूतोन्मादचिकित्सितं व्याख्यास्यामः।

भूतोन्मादे सामान्यचिकित्सा।

भूतं जयेदहिंसोत्थं जपहोमबलिव्रतैः।
तपःशीलसमाधानदानज्ञानदयादिभिः॥ १४।
ग्रहा गृह्णन्ति ये येषु तेषां तेषु विशेषतः।
दिनेषु बलिहोमादीन् प्रयुञ्जीत चिकित्सकः॥
स्नानवस्त्रवसामांसमद्यक्षीरगुडादि च।
रोचते यद्यदा येभ्यस्तत्तेषामाहरेत्तदा॥ १६॥
रक्तानि गन्धमाल्यानि बीजानि मधुसर्पिषी।
भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरित्ययम्॥

भूतोन्मादे सिद्धार्थकं घृतम् ।

सिद्धार्थकं वचा हिङ्गु प्रियङ्गुरजनीद्वयम् ।
मञ्जिष्ठा श्वेतकटभी वरा श्वेताद्रिकर्णिका ॥ ६३ ॥
निम्बस्य पत्रं बीजं तु नक्तमालशिरीषयोः ।
सुराह्वत्र्यूषणं सर्पिर्गोमूत्रे तैश्चतुर्गुणे ॥ ६४ ॥
सिद्धं सिद्धार्थकं नाम पाने नस्ये च योजितम् ।
ग्रहान् सर्वान्निहन्त्याशु विशेषादासुरान् ग्रहान् ॥६५॥
कृत्यालक्ष्मीविषोन्मादज्वरापस्मारपाप्म च ।
एभिरेवौषधैर्बस्तवारिणा कल्पितोऽगदः ॥ ६६ ॥
पाननस्याञ्जनालेपस्नानोद्वर्षणयोजितः ।
स गुणैः पूर्ववद्दिष्टो राजद्वारे च सिद्धिकृत् ॥ ६७ ॥

भूतोन्मादे कतिपयधूपाः ।

कार्पासास्थिमयूरपत्रबृहतीनिर्माल्यपिण्डीतक-
त्वङ्मांसीवृषदंशविट्तुषवचाकेशाहिनिर्मोचनैः ।
नागेन्द्रद्विजहिङ्गुशृङ्गमरिचैस्तुल्यैः कृतं धूपनं
स्कन्दोन्मादपिशाचराक्षससुरावेशग्रहघ्नं परम् ॥ ६८ ॥
पिष्ट्वा विडङ्गसिन्धूरथकुष्ठवालाः सनागराः ।
गोमनुष्यशुनां सम्यक् सवालानि प्रयत्नतः ॥ ६९ ॥
अस्थीनि धूपने दद्याद्ग्रहार्त्तानां प्रशान्तये ।
आत्ममूत्रान्वितैर्वालैश्छागमुस्तकसैन्धवैः ॥ ७० ॥
घृतबिन्दुसमायुक्तैर्धूपो ग्रहनिवारणः ।

भूतोन्मादेऽपराजितोऽगदः ।

बिल्वपत्रं तथा मांसी तगरं नागकेशरम् ॥ ७१ ॥
प्रियङ्गु कुङ्कुमं चैव तुल्यान्येतानि बुद्धिमान् ।
सम्यग्दृपदि यत्नेन वारिणा परिपेषयेत् ॥ ७२ ॥
भवेद्विलेपनादस्य सर्वकार्यापराजितः ।
बालास्तत्र न यान्त्यस्तं नाग्निर्दहति तद्गृहम् ॥ ७३ ॥

भूतोन्मादे नस्ययोगौ।

नस्येन च गोमूत्रे देवाधिपवारुणीफलं पक्वम्।
नाशयति पिशाचग्रहडाकिनिभूतादिरक्षांसि ॥ ५१ ॥
श्वेतापराजितायास्तु नस्यतस्तन्दुलाम्भसा।
परिपिष्टा शिफा हन्यात्सद्यो भूतग्रहं क्षणात् ॥ ५२ ॥
मरीचकटुकासीधुहिङ्गुसिद्धार्थकान्वितैः।
चूर्णं निम्बफलोपेतैः पिबेद्ग्रहनिवारणम् ॥ ५३ ॥

भूतोन्मादेऽपराजितोऽगदः।

पुराणसर्पिर्लशुनं हिङ्गु सिद्धार्थकं वचा।
गोलोमी चाजलोमी च भूतकेशी जटी तथा ॥ ५४ ॥
कुक्कुटी सर्पगन्धा च तिक्ता काकविषाणिका।
वज्रप्रोक्ता वयस्था च शृङ्गी मोहनवल्ल्यपि ॥ ५५ ॥
अर्कमूलं त्रिकटुकं लता स्रोतोजमञ्जनम्।
नेपाली हरितालं च रक्षोघ्ना ये च कीर्तिताः ॥ ५६ ॥
सिंहव्याघ्रर्क्षमार्जारद्वीपिवाजिगवां तथा।
श्वाविच्छल्लकगोधानामुष्ट्राश्वनकुलस्य च ॥ ५७ ॥
शकृद्रोमवसामूत्ररक्तपित्तनखत्वचः।
अस्मिन् वर्गे गुटी कार्या तैलानि च घृतानि च ॥५८॥
पानाभ्यञ्जननस्येषु तानि योज्यानि जानता।
अवपीडाञ्जने चैव विदध्याद्गुटिकाः कृताः ॥ ५९ ॥
विदधीतापि च क्षीरं क्वथितं चूर्णितं तथा।
उत्सूपने श्लक्ष्णपिष्टं प्रदेहे चावचारयेत् ॥ ६० ॥
एष सर्वान्विकारांस्तु मानसानपराजितः।
हन्यादल्पेन कालेन स्नेहादिभिरपि क्रमात् ॥ ६१ ॥

ग्रहोन्मादे पुराणघृतादिधूपः।

पुराणसर्पिः सर्पत्वग्घिङ्गु रोमर्क्षनाकुलम्।
वयःस्थाद्याश्च संचूर्ण्य कृतो धूपो ग्रहापहः ॥ ६२ ॥

भूतोन्मादे सिद्धार्थकं घृतम् ।

सिद्धार्थकं वचा हिङ्गु प्रियङ्गुरजनीद्वयम् ।
मञ्जिष्ठा श्वेतकटभी वरा श्वेताद्रिकर्णिका ॥ ६३ ॥
निम्बस्य पत्रं वीजं तु नक्तमालशिरीषयोः ।
सुराह्वत्र्यूषणं सर्पिर्गोमूत्रे तैश्चतुर्गुणे ॥ ६४ ॥
सिद्धं सिद्धार्थकं नाम पाने नस्ये च योजितम् ।
ग्रहान् सर्वान्निहन्त्याशु विशेषादासुरान् ग्रहान् ॥६५॥
कृत्यालक्ष्मीविषोन्मादज्वरापस्मारपाप्म च ।
एभिरेवौषधैर्वस्तवारिणा कल्पितोऽगदः ॥ ६६ ॥
पाननस्याञ्जनालेपस्नानोद्धर्षणयोजितः ।
स गुणैः पूर्ववद्दिष्टो राजद्वारे च सिद्धिकृत् ॥ ६७ ॥

भूतोन्मादे कतिपयधूपाः ।

कार्पासास्थिमयूरपत्रबृहतीनिर्माल्यपिण्डीतक-
त्वङ्मांसीवृषदंशविट्तुषवचाकेशाहिनिर्मोचनैः ।
नागेन्द्रद्विजहिङ्गुशृङ्गमरिचैस्तुल्यैः कृतं धूपनं
स्कन्दोन्मादपिशाचराक्षससुरावेशग्रहघ्नं परम् ॥ ६८ ॥
पिष्ट्वा विडङ्गसिन्धूत्थकुष्ठवालाः सनागराः ।
गोमनुष्यशुनां सम्यक् सवालानि प्रयत्नतः ॥ ६९ ॥
अस्थीनि धूपने दद्याद्ग्रहार्तानां प्रशान्तये ।
आत्ममूत्रान्वितैर्वालैश्छागमुस्तकसैन्धवैः ॥ ७० ॥
घृतबिन्दुसमायुक्तैर्धूपो ग्रहनिवारणः ।

भूतोन्मादेऽपराजितोऽगदः ।

विल्वपत्रं तथा मांसी तगरं नागकेशरम् ॥ ७१ ॥
प्रियङ्गु कुङ्कुमं चैव तुल्यान्येतानि बुद्धिमान् ।
सम्यग्दृषदि यत्नेन वारिणा परिपेषयेत् ॥ ७२ ॥
भवेद्विलेपनादस्य सर्वकार्यापराजितः ।
बालास्तत्र न यान्त्यस्तं नाग्निर्दहति तद्गृहम् ॥ ७३ ॥

आस्ते सर्वग्रहोन्माथी यत्रायगमदाधिपः।

भूतोन्मादे रक्षोघ्नो धूपः।

सिद्धार्थकवचाहिङ्गुलशुनं गन्धनाकुली ॥ ७४ ॥
प्रियङ्ग्वोऽब्जकिञ्जल्को नागपुष्पा हरेणवः
कापिञ्जलं तरक्षोश्च मत्स्यपित्तं महौषधम् ॥ ७५ ॥
कार्पासास्थीनि नलदा देवदारु च गुग्गुलुः।
मनुष्यकेशाश्वखुरं गोक्षरोष्ट्राव्यजादिजम् ॥ ७६ ॥
मेषाजशृङ्गिसहितं द्विपेन्द्रनखयोजितम्।
मार्जारविष्ठा रजनी बर्हिपक्षाहिमोचनम् ॥ ७७ ॥
भूतकेशी च फलिनी नीली यक्षसुरा तथा।
शङ्खमूली शङ्खपुष्पी सहा वीरभटीति च ॥ ७८ ॥
यक्षहस्तेन्द्रहस्ता च चत्वारिंशतिमाहरेत्।
एकत्र योजितं चूर्णं धूपः सर्वार्तिनाशनः ॥ ७९ ॥
न यक्षास्तत्र तिष्ठन्ति न पिशाचा न राक्षसाः।
न भूता न च कूष्माण्डा ब्रह्मरक्षोग्रहाश्च ये ॥ ८० ॥
आघ्राय विलयं यान्ति ग्रहाः सर्वे ह्यशेषतः।
हिंसका ये च विशाय जाताहारादिकाश्च ये ॥ ८१ ॥
नापस्मारा न चोन्मादा न योगिन्यो न डाकिनी।
सर्वे पलायनपरा धूपसंदर्शनादपि ॥ ८२ ॥
सर्वदुष्टप्रशमनः सर्वग्रहनिवारणः।
कृत्याविनाशनो ह्येष गदप्रशमनः परः ॥ ८३ ॥

भूतोन्मादे औशनसाभ्यामहूर्यो धूपः।

वचा मांसी च बिल्वं च तगरं पद्मकेशरम्।
नागपुष्पं प्रियङ्गुश्च मर्कटी सुरसा तथा ॥ ८४ ॥
भूतकेशी हरीतक्यः शिलाजतुकसंज्ञितम्।
ग्रन्थिपर्णककर्पूरं शतपुष्पा शिरोमकम् ॥ ८५ ॥

एतानि समभागानि त्रिसप्तगुणितं पुरम् ।
महाधूपवरो ह्येष माङ्गल्यः पापनाशनः ॥ ८६ ॥
सर्वरोगहरः प्रोक्तः सर्वविघ्नविनाशनः ।
लक्ष्मीवृद्धेश्च जननः सर्वलोकप्रियङ्करः ॥ ८७ ॥
निःशेषविषसंहर्ता सर्वव्याधिविनाशनः ।
लोहलिङ्गादिभूतानां गर्दभानां(?) विनाशनः ॥ ८८ ॥
सर्वस्य सुखदः प्रोक्तो नाकालमरणं भवेत् ।
धन्यो यशस्य आयुष्यो धूपो देवप्रियः सदा ॥ ८९ ॥

भूतोन्मादे कतिपययोगाः ।

संपिष्य तन्दुलजलेन सिताद्रिकर्णि-
मूलं घृतेन सह नस्यविधौ प्रयुक्तम् ।
भूतग्रहोपशमनं मुनिवृक्षपुष्प-
जातो रसः समरिचश्च तथैव दृष्टः ॥ ९० ॥
सिद्धार्थनिम्बदलपन्नगकृत्तिहिङ्गु-
संयोजितो निगदितः सहसैव पुंसाम् ।
डाकिन्युपद्रवभयोपशमाय धूपः
संधूपनाद्भवति तद्धृतकस्य मोक्षः ॥ ९१ ॥
गोपित्तसिन्धुभवमागधिकाप्रसून-
सारैः कृतं समरिचैर्नयनाञ्जनं यत् ।
भूतग्रहप्रशमनं तदुदाहरन्ति
संत्रासनं च रजनीचरसंहतीनाम् ॥ ९२ ॥
कूष्माण्डीफलसलिलेन पुष्यसंज्ञे
नक्षत्रे मसृणतरां प्रपिष्य दार्वीम् ।
कर्तव्यं नयनयुगेऽञ्जनं प्रशस्तं
निःशेषग्रहरजनीचरोपशान्त्यै ॥ ९३ ॥

भूतरावं घृतम्।

त्रिकटुकदलकुङ्कुमग्रन्थिकक्षारसिंहीनिशादारुसिद्धार्थयुग्माम्बुशक्राह्वयैः सितलशुनफलत्रयोशीरतिक्तावचातुत्थपर्णीवलालोहितैलाशिलापद्मकैः। दधितगरमधुकसारप्रियाह्वाविषाख्याविपातार्क्ष्यशैलैः रसव्यामयैः कल्कितैर्घृतमनवमशेषमूत्रांशसिद्धं मतं भूतरावाह्वयं पानतस्तद्ग्रहमं परम् ॥ ९४ ॥

भूतोन्मादे महाभूतरावं घृतम्।

नतमधुककरञ्जलाक्षापटोलीसमङ्गावचापाटलाहिङ्गुसिद्धार्थसिंहीनिशायुग्मलतारोहिणीवदरकटुफलत्रिकाकाण्डदारुक्रिमिघ्नाजगन्धामराङ्कोल्लकोशातकीशिग्रुनिम्बाम्बुदेन्द्राह्वयैः। गदशुकतरुपुष्पबीजोग्रयष्ट्यद्रिकर्णीनिकुम्भाग्निबिल्वैः समैः कल्कितैर्मूत्रवर्गेण सिद्धं घृतं विधिविनिहितमाशु सर्वैः क्रमैर्योजितं हन्ति सर्वग्रहोन्मादकुष्ठज्वरांस्तन्महाभूतरावं स्मृतम् ॥ ९५ ॥

इति श्रीवैद्यवरशोढलविरचिते गदनिग्रहे पञ्चमे भूतविद्याखण्डे भूतोन्मादधिकारः प्रथमः ॥ १ ॥

---

## अथोन्मादाधिकारो द्वितीयः।

अथात उन्मादनिदानं व्याख्यास्यामः।

उन्मादनिरुक्तिः।

मदयन्त्युद्धता दोषा यस्मादुन्मार्गमाश्रिताः।
मानसोऽयमतो व्याधिरुन्माद इति कीर्त्यते ॥ १ ॥

उन्मादभेदाः।

एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितैः।
मानसेन च दोषेण स पञ्चविध उच्यते ॥ २ ॥
विषाद्भवति षष्ठश्च यथास्वं तत्र भेषजम्।
स चाप्रवृद्धस्तरुणो मदसंज्ञां बिभर्ति च ॥ ३ ॥

उन्मादसामान्यकारणम्।

विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम्।
उन्मादहेतुर्भयहर्षपूर्वो मनोभिघातो विषमाश्च चेष्टाः॥ ४॥

उन्मादसामान्यलक्षणम्।

तैरल्पसत्त्वस्य मलाः प्रदुष्टा बुद्धेर्निवासं हृदयं प्रदूष्य।
स्रोतांस्यधिष्ठाय मनोवहानि प्रमोहयन्त्याशु नरस्य चेतः॥ ५॥
धीविभ्रमः सत्त्वपरिप्लवश्च पर्याकुला दृष्टिरधीरता च।
अबद्धवाक्त्वं हृदयं च शून्यं सामान्यमुन्मादगदस्य लिङ्गम्॥६॥

वातजादिभेदेनोन्मादलक्षणानि।

रूक्षाल्पशीताल्पविरेकधातुक्षयोपवासैरनिलोऽतिवृद्धः।
चिन्तादिदुष्टं हृदयं प्रदूष्य बुद्धिं स्मृतिं चाप्युपहन्ति शीघ्रम् ७
अस्थानहासस्मितनृत्यगीतवागङ्गविक्षेपणरोदनानि।
पारुष्यकार्श्यारुणवर्णता च जीर्णे बलं चानिलजस्य रूपम्॥८॥
अजीर्णकट्वम्लविदाह्यशीतैर्भोज्यैश्चितं पित्तमुदीर्णवेगम्।
उन्मादमत्युग्रमनात्मकस्य हृदि स्थितं पूर्ववदाशु कुर्यात्॥ ९॥
अमर्षसंरम्भविनग्नभावाः संतर्जनाभिद्रवणौष्ण्यदोषाः।
प्रच्छायशीतान्नजलाभिलाषा पीता च भाः पित्तकृतस्य लिङ्गम्
संपूरणैर्मन्दविचेष्टितस्य श्लेष्मा चितो मर्मणि संप्रवृद्धः।
बुद्धिं स्मृतिं चाप्युपहत्य चित्तं प्रमोहयन् संजनयेद्विकारम् ११
वाक्चेष्टितं मन्दमरोचकश्च नारीविविक्तप्रियता च निद्रा।
छर्दिश्च लाला च बलं तु भुक्ते नखादिशौक्ल्यं च कफात्मके स्यात्
यः सन्निपातप्रभवोऽतिघोरः सर्वैः समस्तैः स च हेतुभिः स्यात्।
सर्वाणि रूपाणि बिभर्ति तादृग्विरुद्धभैषज्यविधिर्विवर्ज्यः॥१३

चोरैर्नरेन्द्रपुरुषैररिभिस्तथाऽन्यै-
र्वित्रासितस्य धनबान्धवसंक्षयाद्वा।

गाढं क्षते मनसि च प्रियया रिरंसो-
र्जायेत चोत्कटतमो मनसो विकारः ॥ १४ ॥
चित्रं ब्रवीति च मनोनुगतं विसंज्ञो
गायत्यथो हसति रोदिति चापि मूढः ।
रक्तेक्षणो हतबलेन्द्रियशक्तिहीनः
श्यावाननो विषकृतेन भवेद्विसंज्ञः ॥ १५ ॥

उन्मादसासाध्यलक्षणम् ।

अवाक्षी वाप्युदक्षी वा क्षीणमांसबलो नरः ।
जातरूपो ह्यसन्देहमुन्मादेन विनश्यति ॥ १६ ॥

इत्युन्मादनिदानम् ।

---

अथात उन्मादचिकित्सितं व्याख्यास्यामः ।

उन्मादे सामान्यचिकित्सा ।

अथानिलज उन्मादे स्नेहपानं प्रयोजयेत् ।
पूर्वमावृतमार्गे तु सस्नेहं मृदु शोधनम् ॥ १७ ॥
कफपित्तभवे ह्यादौ वमनं सविरेचनम् ।
स्निग्धस्विन्नस्य वस्तींश्च शिरसश्च विरेचनम् ॥ १८ ॥
तथाऽस्य शुद्धदेहस्य प्रसादं लभते मनः ।
इत्थमप्यनिवृत्तौ तु तीक्ष्णं नावनमञ्जनम् ॥ १९ ॥
[illegible] ।
[illegible] ।
युञ्ज्यात्तानि हि शुद्धस्य नयन्ति प्रकृतिं मनः ॥ २० ॥

उन्मादे ब्राह्याद्यावर्तिः ।

ब्राह्मीमैन्द्रीं विडङ्गानि व्योषं हिङ्गुं जटीं मुराम् ।
रास्नां विषघ्नीं लशुनं विशल्यां सुरसां वचाम् ॥ २१ ॥

---

[illegible] ःनः' ख. ।

ज्योतिष्मतीं नागविन्नामनन्तां सहरीतकीम् ।
कार्ष्णीं च वस्तमूत्रेण पिष्ट्वा छायाविशोषिता ॥ २२ ॥
वर्तिर्नस्याञ्जनालेपधूपैरुन्मादसूदनी ।
अवपीडाश्च विविधाः सार्षपः स्नेहसंयुताः ॥ २३ ॥
कटुतैलेन चाभ्यङ्गो ध्मापयेच्चास्य तद्रजः ।

वातश्लेष्मात्मकोन्मादचिकित्सा ।

सहिङ्गुस्तीक्ष्णधूमश्च गृत्रस्थानोदितो हितः ॥ २४ ॥
शृगालशल्लकोलूकजम्बूकवृकबस्तजैः ।
मूत्रपित्तशकृल्लोमनखचर्मभिराचरेत् ॥ २५ ॥
धूपधूमाञ्जनाभ्यङ्गप्रदेहपरिषेचनम् ।
धूपयेत्सततं चैनं श्वगोमत्स्यैस्तु पूतिभिः ॥ २६ ॥
वातश्लेष्मात्मके प्रायः

पैत्तिकोन्मादचिकित्सा ।

पैत्तिके तु प्रशस्यते ।
तिक्तकं जीवनीयं च सर्पिः स्नेहश्च मिश्रकः ॥२७॥
शीतानि चान्नपानानि मधुराणि लघूनि च ।
विध्येच्छिरां यथोक्तां वा तृष्णं मेध्यामिषस्य वा ॥२८॥
निवाते शाययेदेवं मुच्यते मतिविभ्रमात् ।

उन्मादे संत्रासनादियोगः ।

प्रक्षिप्यासलिले कूपे शोषयेद्वा बुभुक्षया ॥ २९ ॥
आश्वासयेत् सुहृच्चं वा वाक्यैर्धर्मार्थसंहितैः ।
ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि वा ॥ ३० ॥
बद्धं सर्षपतैलाक्तं न्यस्तं चोत्तानमातपे ।
कपिकच्छ्वाऽथवा तप्तैर्लोहतैलजलैः स्पृशेत् ॥ ३१ ॥
कशाभिस्ताडयित्वा वा बद्धं श्वभ्रे विनिक्षिपेत् ।
अथवा वीतशस्त्राश्मजने संतमसे गृहे ॥ ३२ ॥

सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैर्गजैश्च तम्।
त्रासयेच्छस्त्रहस्तैर्वा तस्करैः शत्रुभिस्तथा॥
अथवा राजपुरुषा बहिर्नीत्वा सुसंयतम्।
त्रासयेयुर्वधेनैनं तर्जयन्तो नृपाज्ञया॥ ३४
देहदुःखभयेभ्यो हि परं प्राणभयं मतम्।
तेन याति शमं तस्य सर्वतो विप्लुतं मनः॥
सिद्धा क्रिया प्रयोज्येयं देशकालाद्यपेक्षया।
इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते॥ ३६
तस्य तत्सदृशप्राप्त्या शान्त्याश्वासैः प्रसादये
कामशोकभयक्रोधहर्षेर्ष्यालोभसंभवान्॥ ३
परस्परप्रतिद्वन्द्वैरेभिरेवं शमं नयेत्।
सर्वोन्मादे हितो बन्धः प्रहारो भीषणानि च
अञ्जनान्यवपीडाश्च धूमाः प्रधमनानि च।

उन्मादे भूतानुबन्धचिकित्सा।

भूतानुबन्धमीक्षेत प्रोक्तलिङ्गाधिकाकृतिम्॥
यद्युन्मादे ततः कुर्याद्भूतनिर्दिष्टमौषधम्।
बलिं च दद्यात्पललं यावकं सक्तुपिण्डिकाम्
स्निग्धं मधुरमाहारं तन्दुलान् रुधिरोक्षितान्
पक्वापक्वानि मांसानि सुरां मैरेयमासवम्॥ ४
अतिमुक्तस्य पुष्पाणि जात्याः सहचरस्य च
चतुष्पथे गवां तीर्थे नदीनां संगमेषु च॥ ४
निवृत्तामिषमद्यो यो हिताशी प्रयतः शुचिः
निजागन्तुभिरुन्मादैः सत्त्ववान्न स युज्यते॥

१ 'सूदैरस्त्रैः' ख.।

उन्मादे पिप्पल्यादिप्रधमननस्यम्।

पिप्पल्यो मरिचं बीजमपामार्गशिरीषयोः।
क्षवको हिङ्गुचव्ये तच्चूर्णं प्रधमनं भवेत् ॥ ४४ ॥
अवपीडश्च तैरेव वस्तमूत्रद्रवीकृतः।
हन्त्युन्मादमपस्मारं वैचित्त्यं विषमज्वरम् ॥ ४५ ॥
काले प्राश्यं च सक्षौद्रं धात्रीचूर्णं सकाञ्चनम्।
उन्मादशान्तये भक्त्या पूजयेद्वृषभध्वजम् ॥ ४६ ॥

उन्मादे सिद्धार्थकाद्योऽगदः।

सिद्धार्थको वचा हिङ्गु कलिङ्गो देवदारु च।
मञ्जिष्ठात्रिफलाश्वेताकटभीत्वक्कटुत्रिकम् ॥ ४७ ॥
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम्।
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ॥ ४८ ॥
नस्यं चालेपनं चैव स्नानमुद्वर्तनं तथा।
अपस्मारविषोन्मादकृत्यालक्ष्मीज्वरापहः ॥ ४९ ॥
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते।
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत् ॥ ५० ॥

उन्मादे शिरीषाद्यं नावनाञ्जनम्।

शिरीषो मधुकं हिङ्गु लशुनं नागरं वचा।
कुष्ठं च वस्तमूत्रेण पिष्टं स्यान्नावनाञ्जनम् ॥ ५१ ॥

उन्मादे मरीचाद्यञ्जनम्।

मरीचं चातपे मासं सपित्तं स्थितमञ्जनम्।
वैकृतं पश्यतः कार्यं दोषभूतहरं स्मृतम् ॥ ५२ ॥

उन्मादे हिङ्ग्वाद्यं घृतम्।

हिङ्गुसौवर्चलव्योषैर्द्विपलांशैर्घृताढकम्।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम् ॥ ५३ ॥

उन्मादे शङ्खपुष्प्याद्यं घृतम्।

शङ्खपुष्पीवचाकुष्ठैः सिद्धं ब्राह्मीरसे घृतम्।
पुराणं हन्त्यपस्मारं सोन्मादं मेध्यमुत्तमम् ॥ ५४ ॥

उन्मादे मनःशिलाद्यञ्जनम्।

मनोह्वा तार्क्ष्यजं चैव शकृत्पारावतस्य च।
अञ्जनं हन्त्यपस्मारमुन्मादं च विशेषतः ॥ ५५ ॥

उन्मादे धूपयोगः।

खराणां चर्ममूत्रैश्च क्रव्यादानां च लाभतः।
धूपेन धूपयेन्नित्यमुन्मादग्रहशान्तये ॥ ५६ ॥

उन्मादे ब्राह्मीयोगः।

भूतोपहतचित्तानां वाक्प्रणष्टहतौजसाम्।
ब्राह्मीघृतं प्रशंसन्ति ब्राह्मीस्वरसमेव वा ॥ ५७ ॥

उन्मादे पुराणघृतयोगः।

पुराणं पाययेच्चैनं सर्पिरुन्मादनाशनम्।
स्थितं वर्षशतं श्रेष्ठं कौम्भं सर्पिस्तदुच्यते।
पानाभ्यञ्जननस्येषु हितमुन्मादिनां सदा ॥ ५८ ॥

उन्मादे व्यूषणाद्याऽञ्जनवर्तिः।

व्यूषणं हिङ्गु लशुनं वचा कटुकरोहिणी।
शिरीषनक्तमालानां बीजं श्वेताश्च सर्षपाः ॥ ५९ ॥
गोमूत्रपिष्टान्येतानि वर्तिर्नेत्राञ्जने हिता।
चातुर्थकमपस्मारमुन्मादं चापकर्षति ॥ ६० ॥

अपराजितो धूपः।

शैलेयगुग्गुलदलैः सकुराङ्कचन्द्र-
द्रव्यापहृत्सघनकुन्दुरुभिः सकुष्ठैः।
सध्यामकैरिति सुगन्धरसैः सधूपः
सौभाग्यकृद्विजयकृद्विजयो विवादे ॥ ६१ ॥

देवासुरोरगपिशाचापितृग्रहेषु
गन्धर्वयक्षपिशिताशशिशुग्रहेषु।
जीर्णज्वरेषु विहितः सविषातुरेषु
धूपोऽयमाजिविजयादिषु पार्थिवेषु (?) ॥६२॥

इति श्रीवैद्यवरशोढलप्रथिते गदनिग्रहे पञ्चमे भूतविद्याखण्डे
उन्मादाधिकारो द्वितीयः।

---

## अथापस्माराधिकारस्तृतीयः।

अथातोऽपस्मारनिदानं व्याख्यास्यामः।

अपस्मारनिरुक्तिः।

स्मृतिर्भूतार्थविज्ञानमपस्तत्परिवर्जनम्।
अपस्मार इति ज्ञेयस्ततोऽयं व्याधिरन्तकृत् ॥ १ ॥

अपस्मारसामान्यलक्षणम्।

तमःप्रवेशः संरम्भो दोषोद्रेकहतस्मृतेः।
अपस्मार इति ज्ञेयो गदो घोरश्चतुर्विधः ॥ २ ॥

अपस्मारपूर्वरूपम्।

हृत्कम्पः शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढता।
निद्रानाशश्च तस्मिंस्तु भविष्यति भवत्यथ ॥ ३ ॥

वातजादिभेदेनापस्मारलक्षणानि।

कम्पते प्रदशेद्दन्तान् फेनोद्वामी श्वसित्यथ।
परुषाणि च कृष्णानि पश्येद्रूपाणि चानिलात् ॥ ४ ॥
पीतफेनाङ्गवक्त्राक्षः पीतासृग्रूपदर्शनः।
सतृष्णोष्णानलव्याप्तलोकदर्शी च पैत्तिकः ॥ ५ ॥
शुक्लफेनाङ्गवक्त्राक्षः शीतहृष्टाङ्गजो गुरुः।
पश्येच्छुक्लानि रूपाणि श्लैष्मिको मुच्यतेऽचिरात् ॥६॥
सर्वैरेभिः समस्तैश्च लिङ्गैर्ज्ञेयस्त्रिदोषजः।

अपस्मारस्यासाध्यलक्षणानि।

अपस्मारः स चासाध्यो यः क्षीणस्यानवश्च यः॥ ७॥
प्रस्फुरन्तं सुबहुशः क्षीणं प्रचलितभ्रुवम्।
नेत्राभ्यां च विकुर्वाणमपस्मारो विनाशयेत्॥ ८॥
एकैकशः सर्वशः स्यादपस्मारश्चतुर्विधः।
जीर्णाजीर्णविभेदेन साध्यासाध्यत्वनिश्चयः॥ ९॥

अपस्मारप्रकोपकालः।

पक्षाद्वा द्वादशाहाद्वा मासाद्वा कुपिता मलाः।
अपस्माराय कुर्वन्ति वेगं किंचिदथान्तरम्॥ १०॥
देवे वर्षत्यपि यथा भूमौ बीजानि कानिचित्।
शरदि प्ररोहन्ति तथा व्याधिसमुच्छ्रयः॥ ११॥

इत्यपस्मारनिदानम्।

---

अथातोऽपस्मारचिकित्सितं व्याख्यास्यामः—

अपस्मारे सामान्यचिकित्सा।

अथावृतानां धीचित्तहृत्स्रानां प्राक्प्रबोधनम्।
तीक्ष्णैः कुर्यादपस्मारे कर्मभिर्वमनादिभिः॥ १२॥
वातिकं बस्तिभिश्चापि पैत्तिकं च विरेचनैः।
कफजं वमनैर्धीमानपस्मारमुपाचरेत्॥ १३॥
सर्वतः सुविशुद्धस्य सम्यगाश्वासितस्य च।
अपस्मारविमोक्षाय योगान् संशमनाञ्छृणु॥ १४॥

अपस्मारे लघुपञ्चगव्यं घृतम्।

गोमयस्वरसक्षीरदधिमूत्रैः शृतं हविः।
अपस्मारज्वरोन्मादकामलान्तकरं पिबेत्॥ १५॥

अपस्मारे महापञ्चगव्यं घृतम्।

द्विपञ्चमूलीं त्रिफलां द्विनिशां कुटजत्वचः।
सप्तपर्णमपामार्गं मालतीं कटुरोहिणीम्॥ १६॥

शम्याकं पुष्करजटां फल्गुमूलं दुरालभाम्।
द्विपलां सलिलद्रोणे पक्त्वा पादावशेषितम्॥ १७॥
भार्गीपाठाढकीकुम्भनिकुम्भव्योपरोहिषैः।
मूर्वाभूनिम्बभूतीकश्रेयसीसारिवाद्वयैः॥ १८॥
मदयन्त्यग्निनिचुलैरक्षांशैः सर्पिषः पचेत्।
प्रस्थं तद्वद्द्रवैः पूर्वैः पञ्चगव्यमिदं महत्॥ १९॥
ज्वरापस्मारशमनं भगन्दरहरं परम्।
शोफार्शःकामलापाण्डुगुल्मकासग्रहापहम्॥ २०॥

अपस्मारे मधुकयोगः।

कूष्माण्डकगिरोत्थेन रसेन परिपेषितम्।
अपस्मारविनाशाय यष्ट्याह्वं संपिबेत्त्र्यहम्॥ २१॥

अपस्मारे शतावरीयोगः।

क्षीराशी शतावर्याः प्रातर्मूलरसं पिबेत्।
शतं चूर्णं तथा क्षीरमपस्मारप्रशान्तये॥ २२॥

अपस्मारे कूष्माण्डघृतम्।

कूष्माण्डस्वरसे सर्पिरष्टादशगुणे पचेत्।
यष्ट्याह्वकल्कं तत्पानादपस्मारहरं परम्॥ २३॥

अपस्मारे लज्जालुयोगः।

प्रातरौषधकाले तु संपिबेन्नियमस्थितः।
आजेन पयसा पिष्टां कृताञ्जलिशिफां बुधः॥ २४॥
अपस्मारविनाशाय निरभिष्यन्दिभोजनम्।

अपस्मारे कतिपयनस्ययोगाः।

कपिलानां गवां पित्तं नावनं परमं हितम्॥ २५॥
श्वशृगालबिडालानां सिंहादीनां च पूजितम्।
त्रिफलाव्योषपीतद्रुयवक्षारफणिज्झकैः॥ २६॥
श्याह्वापामार्गकारञ्जबीजैस्तैलं विपाचितम्।
बस्तमूत्रे हितं नस्यं चूर्णं वा ध्मापयेद्भिषक्॥ २७॥

गोधानकुलनागानां पित्तैस्तैलं विपाचयेत् ।
अपस्मारं हरेत्क्षिप्रं नस्यतः संप्रयोजितम् ॥ २८ ॥

अपस्मारे धूपयोगः ।

नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः ।
तुण्डैः पक्षैः पुरीषैश्च धूपमस्य प्रयोजयेत् ॥ २९ ॥

अपस्मारे कतिपययोगाः ।

शीलयेत्तैललशुनं पयसा वा शतावरीम् ।
ब्राह्मीरसं कुष्ठरसं वचां वा मधुसंयुताम् ॥ ३० ॥
समैः क्रुद्धैरपस्मारे दोषैः शारीरमानसैः ।
यज्जायते ह्यपस्मारो महामर्मसमाश्रयः ॥ ३१ ॥
तस्मात्साधारणैः कर्मैर्दुश्चिकित्स्यमुपाचरेत् ।
ब्राह्म्या लावणिकायास्तु स्वरसो नस्ययोजितः ॥ ३२ ॥
त्र्यहं क्षिप्रमपस्मारमुद्धरत्यविचारतः ।
पिशाचीकाष्ठलग्ना तु कौशिकारण्डसंभवा (?) ।
कर्णे न्यस्ता हरेत्क्षिप्रमपस्मारं सुदारुणम् ॥ ३३ ॥
मरिचक्षवकविडङ्गं वचां वयस्थां समागधां चैव ।
पित्तान्यपि च प्राहुः शार्दूलविडालर्क्षसिंहानाम् ।
नस्यं ग्रहप्रशमनं सिद्धमपस्मारिणामेतत् ॥ ३४ ॥
पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम् ।
तदेव सर्पिषा युक्तं धूपनं परमं हितम् ॥ ३५ ॥
उल्लम्बितनरपाशप्रभवं भस्म प्रणाशयेत्पीतम् ।
पयसाऽपस्मृतिरोगं नस्याभ्यासाद्वचाऽजमूत्रेण ॥ ३६ ॥
उद्बद्धमानवगलच्युतिपक्वमर्मा
रज्जुं विदह्य निपुणेन कृता मषी या ।
सा शीतलेन सलिलेन समं निपीता
पुंसामपस्मृतिविनाशकरी प्रदिष्टा ॥ ३७ ॥

तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः।
क्षीरद्रोणे पचेत्सिद्धमपस्मारविमोक्षणम् ॥ ३८ ॥
तदार्तं चाग्नितोयादेर्विषमात्पालयेत्सदा।
युक्तं मनोविकारेण त्वमित्थं कृतवानिति।
न ब्रूयाद्विपयैरिष्टैः क्लिष्टं चेतोऽस्य बृंहयेत् ॥ ३९ ॥

इति श्रीशोढलवैद्यग्रथिते गदनिग्रहे पञ्चमे भूतविद्याखण्डे अपस्माराधिकारस्तृतीयः।

॥ समाप्तं चेदं पञ्चमं भूततन्त्रम् ॥

# गदनिग्रहः ।

## अथ कौमारतन्त्राख्यः षष्ठः खण्डः ।

### अथ प्रदराधिकारः प्रथमः ।

अथातः प्रदरनिदानं व्याख्यास्यामः ।

प्रदरनिदानम् ।

विरुद्धमद्याध्यशनादजीर्णाद्गर्भप्रपातादतिमैथुनाच्च ।
पानाध्वशोकादतिकर्षणाच्च भाराभिघाताच्छयनाद्दिवा च ॥१॥
असृग्दरं भवेत्सर्वं साङ्गमर्दं सवेदनम् ।

प्रदरोपद्रवाः ।

तस्यातिवृत्तौ दौर्बल्यं भ्रमो मूर्च्छा मदस्तृषा ।
दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः ॥ २ ॥

प्रदरभेदाः ।

तं श्लेष्मपित्तानिलसंनिपातैश्चतुःप्रकारं प्रदरं वदन्ति ।

वातादिभेदेन प्रदरलक्षणानि ।

आमं सपिच्छप्रतिमं सपाण्डु पुलाकतोयप्रतिमं कफाच्च ॥३॥
सपीतनीलासितरक्तमुष्णं पित्तार्तियुक्तं भृशवेगि पित्तात् ।
रूक्षारुणं फेनिलमल्पमल्पं वातार्ति वातात्पिशितोदकाभम् ४
सक्षौद्रसर्पिर्हरितालवर्णं मज्जप्रकाशं कुणपं त्रिदोषम् ।
तं चाप्यसाध्यं प्रवदन्ति तज्ज्ञा
न तत्र कुर्वीत भिषक् चिकित्साम् ॥ ५ ॥

शुद्धार्तवलक्षणम् ।

मासान्निष्पिच्छदाहार्ति पञ्चरात्रानुबन्धि च ।
नैवातिबहु नात्यल्पमार्तवं शुद्धमादिशेत् ॥ ६ ॥

शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमम्।
तदार्तवं प्रशंसन्ति यद्वासो न विरञ्जयेत् ॥ ७ ॥

प्रदरासाध्यक्षणम्।

श्वसन् स्रवति या स्रावं तृष्णादाहज्वरान्वितम्।
क्षीणरक्तां दुर्बलां च तामसाध्यां विवर्जयेत् ॥ ८ ॥

इति प्रदरनिदानं संपूर्णम्।

---

अथातः प्रदरपुष्पोत्पत्तिपुष्पनाशचिकित्सितं व्याख्यास्यामः।

वातासृग्दरचिकित्सा।

दध्ना सौवर्चलाजाजी मधुकं नीलमुत्पलम्।
पिबेत्क्षौद्रयुतं नारी वातासृग्दरपीडिता ॥ ९ ॥
पिबेदैणेयकं रक्तं शर्करामधुसंयुतम्।
वासकस्वरसं वाऽपि गुडूच्या रसमेव च ॥ १० ॥
बलामंशुमतीं द्राक्षामुशीरं तिक्तरोहिणीम्।
कदलीकृष्णलवणं सारिवारोध्रसंयुतम् ॥ ११ ॥
वातासृग्दरशान्त्यर्थं पिबेत्क्षीरेण चाङ्गना।

पित्तासृग्दरचिकित्सा।

पित्तासृग्दरशान्त्यर्थं पिबेदिक्षुरसेन वा ॥ १२ ॥
तिलचूर्णं, दधिघृतं फाणितं सौकरी वसा।
क्षौद्रेण संयुतं पेयं वातासृग्दरनाशनम् ॥ १३ ॥
चन्दनोशीरपत्तङ्गमधुकं नीलमुत्पलम्।
त्रपुसैर्वारुबीजानि धातकी कदलीफलम् ॥ १४ ॥
कोकिलाक्षवटारोहं पद्मकं पद्मकेसरम्।
एतान्कल्कान्मधुयुतान्पाययेत्तन्दुलाम्बुना ॥ १५ ॥

त्र्यहात्प्रशमयन्त्येते योजिताः पैत्तिकं रजः।
पत्रकल्कौ घृतभृष्टौ राजादनकपित्थयोः॥ १६॥
पित्तानिलहरावेतौ सर्वं चैवास्रपित्तजित्।

कफासृग्दरचिकित्सा।

मधुकं त्रिफलां रोध्रं मुस्तं सौराष्ट्रिकां मधु॥ १७॥
मद्यैर्निम्बगुडूच्योर्थ कफजेऽसृग्दरे पिबेत्।
उदुम्बरवटाश्वत्थतिन्दुकं सकपीतनम्॥ १८॥
सौराष्ट्री मधुकं रोध्रं त्रिफला मुस्तकं समाः।
क्काथो मधुयुतः पेयः श्लेष्मासृग्दरनाशनः॥ १९॥
सौराष्ट्रीरोचनानिम्बमधुकं त्रिफला मधु।
गुडूची भद्रमुस्तं च पिबेन्मद्येन चाङ्गना॥ २०॥
प्रसन्नया चाऽपि तथा श्लेष्मप्रदरनाशनम्।

रक्तप्रदरचिकित्सा।

दध्ना मूषिकविष्ठां तु लोहिते प्रदरे पिबेत्॥ २१॥
काश्मरीवटशुङ्गानि पृथक्पर्ण्यास्तथैव च।
घृतं सिद्धं पिबेच्छ्रेष्ठं शोणिते प्रदरेऽङ्गना॥ २२॥

श्वेतप्रदरचिकित्सा।

दध्ना मूलाग्रकल्कं वा मातुलुङ्गस्य योषिता।
मिश्रं जलेन तत्पेयं श्वेतप्रदरनाशनम्॥ २३॥
पिबेद्दारुहरिद्रायाः क्काथं वा मधुसंयुतम्।
धातक्याश्चाक्षमात्रं वा धात्रीं वाऽपि मधुद्रुताम्॥२
काकजम्बूकमूलं वा मूलं कार्पासमेव वा।
पाण्डुप्रदरशान्त्यर्थं पाययेत्तन्दुलाम्बुना॥ २५॥
रोहीतकान्मूलकल्कं पाण्डुरेऽसृग्दरे पिबेत्।
जलेनामलकाद्बीजकल्कं वा ससितामधु।
मधुनाऽऽमलकाचूर्णं रसं वा लेहयेत्सितम्॥ २६॥

अस्रग्दरेऽशोकवल्कलयोगः ।

अशोकवल्कलक्काथशृतं दुग्धं सुशीतलम् ।
यथाबलं पिबेत्प्रातस्तीव्रासृग्दरनाशनम् ॥ २७ ॥

अस्रग्दरे दार्व्यादिक्काथः ।

दार्वीरसाञ्जनकिराततृपाब्दबिल्व-
भल्लातकैरवकृतो मधुना कषायः ।
पीतो जयत्यतिबलं प्रदरं सशूलं
श्वेतासितारुणविलोहितपीतनीलम् ॥ २८ ॥

अस्रग्दरे कतिपययोगाः ।

रसाञ्जनं तन्दुलिकस्य मूलं क्षौद्रान्वितं तन्दुलतोयपीतम् ।
असृग्दरं सर्वभवं निहन्ति, श्वासं च भार्गी सह नागरेण ॥२९॥
ज्येष्ठाम्बुना पिष्टमनिष्टकष्टप्रदत्तवृद्धप्रदरापहारि ।
समाक्षिकं निर्मलतन्दुलीयमूलं मिलन्मञ्जुरसाञ्जनेन ॥ ३० ॥
कुशमूलं समुद्धृत्य पेपयेत्तन्दुलाम्बुना ।
एतत्पीत्वा त्र्यहान्नारी प्रदरात्प्रविमुच्यते ॥ ३१ ॥
क्षौद्रयुक्तं फलरसं काष्ठोदुम्बरजं पिबेत् ।
असृग्दरविनाशाय शर्करापायसान्नभुक् ॥ ३२ ॥
आखोः पुरीषं पयसा निषेव्य वह्नेर्बलादेकमहस्त्र्यहं वा ।
स्त्रियो वहच्छोणितरोगनद्यः क्षणेन पारं परमाप्नुवन्ति ॥३३॥
कुरण्टकस्य मूलानि मधुकं श्वेतचन्दनम् ।
युक्त्या पिष्टानक्षमात्रान् पाययेत्तन्दुलाम्बुना ॥ ३४ ॥
सकृत्पीत्वा त्विमं योगं प्रदरात्प्रविमुच्यते ।
ततस्तां माषयूषेण घृतभृष्टेन योजयेत् ॥ ३५ ॥
प्रदरं हन्ति बलाया मूलं दुग्धेन मधुयुतं पीतम् ।
कुशवाट्यालकमूलं तन्दुलसलिलेन रक्ताख्यम् ।
शमयति मदिरायुक्तमुभयमपि रक्तसंज्ञशुभ्राख्यम् ॥ ३६ ॥

असृग्दरे रक्तपित्तचिकित्साविदेशः ।

तरुण्या हितसेविन्यास्तदल्पोपद्रवं भिषक् ।
रक्तपित्तविधानेन यथावत्समुपाचरेत् ॥ ३७ ॥

असृग्दरे मुद्गाद्यं घृतम् ।

मुद्गमाषस्य निर्यूहे रास्नाचित्रकनागरैः ।
सिद्धं सपिप्पलीबिल्वैर्घृतं श्रेष्ठमसृग्दरे ॥ ३८ ॥

असृग्दरे मधुकादिलेपः ।

मधुकोत्पलबीजानि त्रपुषस्य शतावरी ।
विदारीमिक्षुमूलं च कल्कैर्धौतघृताप्लुतः ।
योनौ शिरसि गात्रे च प्रदेहोऽसृग्दरापहः ॥ ३९ ॥

असृग्दरे कतिपययोगाः ।

वन्यकानां रसश्चापि शृतं क्षीरं घृतं नवम् ।
शर्करामधुसंयुक्तमसृग्दरविनाशनम् ॥ ४० ॥
आमलककल्ककर्षं सितोपलार्धाक्षमिश्रितं स्त्रीणाम् ।
अचलीढमाशु पाण्डुरसोपद्रक्तं जयेत्प्रदरम् ॥ ४१ ॥
चन्दनं क्षीरसंयुक्तं पाययेत्सघृतं भिषक् ।
शर्करामधुसंयुक्तमसृग्दरविमर्दनम् ॥ ४२ ॥
कलिकाः क्षीरसंपिष्टा जपाविटपजाः पिबेत् ।
दश द्वादश वा नारी प्रदरार्ता पयोशिनी ॥ ४३ ॥
अजाक्षीरेण वा पीता सहदेवामयीशिफा ।
तक्राशनरता सम्यक्संपिबेन्नागकेसरम् ॥ ४४ ॥
त्र्यहं तक्रेण संपेष्य श्वेतप्रदरशान्तये ।
हितश्चात्र विशेषेण लेहो यः कुटजाष्टकः ॥ ४५ ॥
तथा पुष्यानुगं चूर्णं शीतकल्याणकं घृतम् ।
मधुवार्क्ष्यजसंयुक्तं मूलं स्यात्तन्दुलीयकम् ।
तन्दुलाम्बुयुतं पीतं सर्वप्रदरनाशनम् ॥ ४६ ॥

आमलकबीजचूर्णमक्षप्रमाणं समधुघृतं लीढम्
प्रदरमाशु निहन्यात् प्रवृद्धमचिरेण नारीणाम्

स्त्रीणामजस्रं प्रदरामयेन प्रवृत्तमस्रं शममेति सद्यः ।
सुश्लक्ष्णपिष्टेन पयोन्वितेन पीतेन मूलेन सुदर्शनायाः
आरोपिते मूर्धनि शीतवारिकुम्भे शमं गच्छति तत्क्षण
असृक्प्रवाहः प्रदरामयोत्थः स्त्रीणां नदीस्रोत इवावरो

मूलानि तन्दुलजलेन समं बलायाः
पिष्ट्वा कुशस्य कुसुमानि पिबेत्प्रयत्नात् ।
योषिद्रजस्य नितरां समभिप्रवृत्तौ
सर्पिर्युतानि यदि वा कदलीफलानि ॥ ५

समधुगुडभागं श्लक्ष्णकर्कन्धुचूर्णं
प्रदरशमनमुक्तं योषितां खाद्यमानम् ।
यदि तु भवति पिष्टं वारिणा तन्दुलानां
तदुपशमयति द्राङ्मूलमेवं बलायाः ॥ ५१

मूलं बलायाः पयसा प्रपिष्टं जीमूतजं तन्दुलवारिणा
क्षौद्रेण मिश्रं परिपीयमानं स्त्रीणां वदन्ति प्रदरामयघ्न
क्षीरे शृतं लोहितशालिपिष्टं सुशीतलं माक्षिकसंयुतं
पीतं निहन्ति प्रदरामयोत्थामतिप्रवृद्धामसृजः प्रवृत्ति
लाक्षा घृतेन क्वथिता निपीता निहन्ति सद्यः प्रदरं स
अन्यैरनाख्याय कदाचिदाशु मूर्धन्यपामार्गरसोऽभिपि

चन्दनं दुग्धसर्पिर्भ्यां सुपक्वं शीतलीकृतम् ।
तवराजमधूपेतं पीतं स्त्रीप्रदरापहम् ॥ ५५ ॥
स्वर्णजं चाभ्रचूर्णं वा कदलीरजसा युतम् ।
पीतं तन्दुलतोयेन समधु प्रदरापहम् ।
तत्फलं प्रदरं हन्ति शर्कराघृतमिश्रितम् ॥ ५६

मद्यावर्तचिकित्सा।

किण्वकणागुडदन्तीमदनफलैः कटुलाबुबीजैश्च ॥५
यवक्षारयुतैः स्नुहीक्षीरभावितैश्च कल्पयेद्वर्तिम्।
सा योनिकुहरनिहिता स्त्रीणामत्यन्तनष्टकुसुमानाम्
कुसुमप्रवृत्तिजननी निर्दिष्टा वृद्धभावेऽपि ॥ ५८ ॥
काथे तिलानां विनिधाय पीतं कटुत्रिकत्राह्मणयष्टिचूर्णम्।
निहन्ति सद्यः कुसुमप्ररोधं स्त्रीणामसृग्गुल्ममपि प्रवृद्धम् ॥५

गर्भाधाननिरोधकाः कतिपययोगाः।

ऋतौ घृतक्षौद्रयुतैः पलाशबीजैः प्रलेपं मसृणप्रपिष्टैः।
करोति या स्त्री भगरन्ध्रमध्ये न सा भवेद्गर्भवती कदाचित्
तैलान्वितं सैन्धवखण्डमार्द्रं निधाय रण्डा निजयोनिमध्ये
नरेण सार्धं रतमानोति या सा न गर्भं लभते कदाचित्॥६
उत्पाट्य पुष्येण हरिप्रियस्य मूलं स्वकट्यां विनिबध्य गाढ
रमेत नारीमविशङ्कितस्तां विद्वेष्टि गर्भस्य समुद्भवं या ॥६

इति प्रदरपुष्पोत्पत्तिपुष्पनाशचिकित्सितं समाप्तम् ॥

---

अथातः सोमरोगनिदानं व्याख्यास्यामः।

स्त्रीणामतिप्रसङ्गाद्वा शोकाद्वाऽपि श्रमादपि।
अभिचारकयोगाद्वा गरदोषात्तथैव च ॥ ६३ ॥
आपः सर्वशरीरस्थाः क्षुभ्यन्ति प्रस्रवन्ति च।
तस्मात्ताः प्रच्युताः स्थानान्मूत्रमार्गं व्रजन्ति हि ॥६
प्रसन्ना विमलाः शीता निर्गन्धा नीरुजः सिताः।
स्रवन्ति चातिमात्रं ताः सा न शक्नोति दुर्बला ॥६
वेगं धारयितुं तासां न विन्दति सुखं क्वचित्।
शिरसः शिथिलत्वं च मुखतालुकशोषणम् ॥ ६६ ॥
मूर्च्छा जृम्भा प्रलापश्च त्वग्रूक्षा चातिमात्रतः।
भक्ष्यैर्भोज्यैश्च पेयैश्च तृप्तिं न लभते सदा ॥ ६७ ॥

शरीरधारणाच्चापः सोम इत्यभिशब्दिताः।
तस्मात्सोमक्षयात् स्त्रीणां सोमरोग इति स्मृतः ॥६८॥

इति सोमरोगनिदानं संपूर्णम् ॥

---

अथातः सोमरोगचिकित्सितं व्याख्यास्यामः।

सोमरोगे कतिपययोगाः।

सुपक्कं कदलीफलं धात्रीफलरसं मधु।
शर्करासहितं पेयं सोमधारणमुत्तमम् ॥ ६९ ॥
मापचूर्णं समधुकं विदारी मधुशर्करा।
पयसा पाययेत्प्रातस्त्वपां धारणमुत्तमम् ॥ ७० ॥
स एव सरुजः सोमो मूत्रेण स्रवते मुहुः।
तत्रैलापत्रचूर्णेन पाययेद्वारुणीं सुराम् ॥ ७१ ॥
सोमलक्षणसंसृष्टं कालातिक्रान्तियोगतः।
साऽतिक्रान्तिक्रमेणैव स्रवेन्मूत्रमभीक्ष्णशः ॥ ७२ ॥
मूत्रातिसारमित्येवं तमाहुर्बलनाशनम्।
तालकन्दं च वरुणं खर्जूरं कदलीफलम् ॥ ७३ ॥
पयसा पाययेत्प्रातस्त्वपां धारणमुत्तमम्।
तालकन्दं च खर्जूरं मधुकं च विदारिकाम् ॥ ७४ ॥
शर्करामधुसंयुक्तं मूत्रातीसारनाशनम्।

इति श्रीशोढलग्रथिते गदनिग्रहे षष्ठे कौमारतन्त्रखण्डे प्रथमः प्रदराधिकारः संपूर्णः ॥ १ ॥

---

## अथ योनिरोगाधिकारो द्वितीयः।

अथातो योनिव्यापन्निदानं व्याख्यास्यामः।

योनिरोगसंप्राप्तिः।

विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसंग्रहे।
मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्तवेन च ॥ १ ॥

जायन्ते बीजदोषाच्च दैवाच्च शृणु ताः पृथक् ।

वातजपञ्चयोनिरोगलक्षणानि ।

सफेनिलमुदावर्ता रजः कृच्छ्रेण मुञ्चति ॥ २ ॥
वन्ध्यां नष्टार्तवां विद्याद्विप्लुतां नित्यवेदनाम् ।
परिप्लुतायां भवति ग्राम्यधर्मेण रुग्भृशम् ॥ ३ ॥
वातला कर्कशा स्तब्धा शूलनिस्तोदपीडिता ।
चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः ॥ ४ ॥

पित्तजपञ्चयोनिरोगलक्षणानि ।

सदाहं क्षीयते रक्तं यस्यां सा लोहितक्षरा ।
सवातमुद्गिरेद्बीजं वामिनी रजसा युतम् ॥ ५ ॥
प्रस्रंसिनी स्रंसते च क्षोभिता दुष्प्रजायिनी ।
हन्ति स्थितं स्थितं गर्भं पुत्रघ्नी रक्तसंक्षयात् ॥ ६ ॥
अत्यर्थं पित्तला योनिर्दाहपाकरुजान्विता ।
चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत् ॥ ७ ॥

श्लेष्मजपञ्चयोनिरोगलक्षणानि ।

अत्यानन्दा न संतोषं ग्राम्यधर्मेण गच्छति ।
कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यां प्रजायते ॥८॥
मैथुनेऽचरणा पूर्वं पुरुषादतिरिच्यते ।
बहुशश्चातिचरणा तयोर्बीजं न विन्दति ॥ ९ ॥
श्लेष्मला पिच्छिला योनिः कण्डूग्रस्ताऽतिशीतला ।
चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रयो भवेत् ॥ १० ॥

सान्निपातिकपञ्चयोनिरोगलक्षणानि ।

अनार्तवाऽस्तनी षण्डी खरस्पर्शा च मैथुने ।
अतिकायगृहीतायास्तरुण्यास्त्वण्डली भवेत् ॥ ११ ॥
विवृता तु महायोनिः सूचीवक्राऽतिसंवृता ।
सर्वलिङ्गसमुच्छ्राया सर्वदोषप्रकोपजा ॥ १२ ॥

चतसृष्वपि चाद्यासु सर्वलिङ्गोच्छ्रयो भवेत् ।
पञ्चासाध्या भवन्तीह योनयः सर्वदोषजाः ॥ १३ ॥

अथ योनिकन्दनिदानम् ।

दिवास्वप्नादतिक्रोधाद्व्यायामादतिमैथुनात् ।
क्षताच्च नखदन्ताद्यैर्वाताद्याः कुपिता यथा ॥ १४ ॥
पूयशोणितसंकाशं लकुचाकृतिसंनिभम् ।
उत्पद्यते यदा योनौ नाम्ना कन्दस्तु योनिजः ॥ १५ ॥
रूक्षं विवर्णं स्फुटितं वातिकं तं विनिर्दिशेत् ।
दाहरागज्वरयुतं विद्यात्पित्तात्मकं तु तम् ॥ १६ ॥
तिलपुष्पप्रतीकाशं कण्डूमन्तं कफात्मकम् ।
सर्वलिङ्गसमायुक्तं सन्निपातात्मकं वदेत् ॥ १७ ॥

इति योनिव्यापन्निदानं संपूर्णम् ।

---

अथातो योनिव्यापच्चिकित्सितं व्याख्यास्यामः ।

योनिरोगेषु सामान्यचिकित्सा ।

योनिव्यापत्सु भूयिष्ठं शस्यते वातकर्मजित् ।
बस्त्यभ्यङ्गौ परीषेकः प्रलेपः पिचुधारणम् ॥ १८ ॥

वातजयोनिरोगचिकित्सा ।

कर्कशां शिथिलां स्तब्धामल्पस्पर्शां तथैव च ।
कुम्भीस्वेदैरुपचरेदानूपौदकसंयुतैः ॥ १९ ॥
मधुरौषधसंयुक्तान् वेसवारांश्च योनिषु ।
निःक्षेपेद्धारयेच्चापि पिचुं तैलमतन्द्रितः ॥ २० ॥
धावनानि च पथ्यानि कुर्याद्वातहराणि च ।

पित्तजयोनिरोगचिकित्सा ।

ऊपादोपान्वितासृक्तं कुर्याच्छीतविधिं भिषक् ॥ २१ ॥
दुर्गन्धां पिच्छिलां वापि चूर्णैः पञ्चकषायजैः ।

पूरयेद्राजवृक्षादिकषायं चात्र धावनम् ॥ २२ ॥

कफजयोनिरोगचिकित्सा ।

योनिं कृमिप्रपन्नां तु शोधनद्रव्यसंयुतैः ।
सगोमूत्रैः सलवणैः कल्कैरापूरयेद्भिषक् ॥ २३ ॥
बृहतीफलकल्केन द्विहरिद्रायुतेन च ।
सकण्डुरां च निःस्पर्शां पूरयेद्धूपयेत्तथा ॥ २४ ॥
कर्णिन्यां वर्तयो देयाः शोधनद्रव्यसंयुताः ।

प्रस्रंसिनीचिकित्सा ।

प्रस्रंसिनीं घृताभ्यक्तां क्षीरस्विन्नां प्रवेशयेत् ॥ २५ ॥
पिधाय वेसवारेण वा तां बन्धं समाचरेत् ।
प्रतिदोषं विदध्याच्च सुरारिष्टासवान् भिषक् ॥ २६ ॥

योनिरोगे आहारकल्पना ।

प्रातःप्रातर्निषेवेत लशुनार्द्रसमुद्भवम् ।
क्षीरमांसरसप्रायमाहारं वितरेत्तथा ॥ २७ ॥

योनिरोगे कतिपययोगाः ।

वचोपकुञ्चिकाजाजीकृष्णावृषकसैन्धवम् ।
अजमोदायवक्षारचित्रकं शर्करान्वितम् ॥ २८ ॥
पिष्ट्वा प्रसन्नयाऽऽलोड्य खादेत्तद्धृतभर्जितम् ।
योनिपार्श्वार्तिहृद्रोगगुल्मार्शोविनिवृत्तये ॥ २९ ॥
रास्नाश्वदंष्ट्रावृषकैः शृतं शूलहरं पयः ।
गुडूचीत्रिफलादन्तीकाथैश्च परिषेचनम् ॥ ३० ॥

योनिरोगे नतगद्यं तैलम् ।

नतवार्ताकिनीकुष्ठसैन्धवामरदारुभिः ।
तैलात्प्रसाधितो धार्यः पिचुर्योनौ रुजापहः ॥ ३१ ॥

---

१ "आरग्वधमदनगोपघोण्टाकण्टकीकुटजपाठापाटलामूर्वेन्द्रयवसप्तपर्णनिम्बकुरुण्टकदासीकुरुण्टकगुडूचीचित्रकशार्ङ्गेष्टाकरञ्जद्वयपटोलकिराततिक्तकानि सुषवी चेति" इत्यारग्वधादिः । ( सु. सू. स्था. अ. ३८ ) ।

पैत्तिकयोनिरोगचिकित्सा ।

पित्तलानां तु योनीनां सेकाभ्यङ्गपिचुक्रियाः ।
शीताः पित्तहराः सर्वाः स्नेहनार्थे घृतानि च ॥ ३२ ॥

श्लैष्मिकयोनिरोगचिकित्सा ।

योन्यां बलासदुष्टायां सर्वं रूक्षोष्णमौषधम् ।
पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः ।
वर्तिस्तुल्या प्रदेशिन्या धार्या योनिविशोधिनी ॥३३॥

प्रस्रंसिनीचिकित्सा ।

नेः स्त्रीणां निर्गताऽपि प्रवेशं प्राप्नोत्यन्तः कारवेल्लीजटाभिः।
पिष्टाभिर्लेपिता गाढतां च प्राप्नोत्येषा शक्रगोपाज्यसिक्ता ३४

इति श्रीशोढलग्रथिते गदनिग्रहे षष्ठे कौमारतन्त्रखण्डे
योनिरोगाधिकारो द्वितीयः संपूर्णः ॥

---

## अथ गर्भस्रावाधिकारस्तृतीयः ।

गर्भस्रावपातयोर्निदानादिपूर्वकं लक्षणम् ।

भयाभिघाततीक्ष्णोष्णपानाशननिषेवणात् ।
गर्भे पतति रक्तस्य सशूलं दर्शनं भवेत् ॥ १ ॥
आचतुर्थात्ततो मासात् स्रवन्ते गर्भबिन्दवः ।
ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ॥ २ ॥

---

अथातो गर्भस्रावचिकित्सितं व्याख्यास्यामः।

गर्भव्यापदि मासानुक्रमेण चिकित्सा ।

मधुकं शाकबीजं च पयस्या सुरदारु च ।
अश्मन्तकस्तिलाः कृष्णास्ताम्रवल्ली शतावरी ॥ ३ ॥
वृक्षादनी पयस्या च तथैवोत्पलसारिवा ।
अनन्ता सारिवा रास्ना पद्मा मधुकमेव च ॥ ४ ॥

---

नेचिद्रव:’ ख.

बृहती काश्मरी चापि क्षीरिशुङ्गास्त्वचो घृतम्।
पृश्निपर्णी बला शिग्रुः श्वदंष्ट्रा मधुयष्टिका ॥ ५ ॥
शृङ्गाटकं बिसं द्राक्षा कसेरु मधुकं सिता।
गतास्तु सप्त योगाः स्युरर्धश्लोकसमापनाः ॥ ६ ॥
यथाक्रमं प्रयोक्तव्या गर्भस्रावे पयोयुताः।
कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धिका-॥ ७ ॥
मूलानि क्षीरसिद्धानि दापयेद्भिषगष्टमे।
नवमे मधुकानन्तापयस्यासारिवाः पिबेत् ॥ ८ ॥
पयस्तु दशमे शुण्ठ्या शृतशीतं प्रशस्यते।
सक्षीरा वा हिता शुण्ठी मधुकं देवदारु च।
एवमाप्यायते गर्भस्तीव्रा रुक्चोपशाम्यति ॥ ९ ॥

गर्भस्रावे कतिचयोगाः।

समधुश्छागदुग्धेन कुलालकरकर्दमः।
अवश्यं स्थापयेद्गर्भं चलितं पानयोगतः ॥ १० ॥
कुम्भकारकर्दमपांशुः क्षीरपुष्परससंनियोजितः।
गर्भपातमुपहन्ति पानतो धारिताऽथ गिरिकर्णिकाजटा॥११॥
कुशकाशोरुबूकाणां मूलैर्गोक्षुरकस्य च।
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलनुत्परम् ॥ १२ ॥
कसेरुशृङ्गाटकजीवनीयपद्मोत्पलैरण्डशतावरीभिः।
सिद्धं पयः शर्करया विमिश्रं संस्थापयेद्गर्भमुदीर्णशूलम् ॥ १३ ॥
कसेरुशृङ्गाटकपद्मकोत्पलं समुद्गपर्णीमधुकं सशर्करम्।
सशूलगर्भस्रुतिपीडिताऽङ्गना पयोविमिश्रं पयसाऽन्नमुपिबेत्॥
शर्करोत्पलयष्ट्याह्वरोध्रचन्दनसारिवाः।
स्रवमाणेषु गर्भेषु पातव्यास्तन्दुलाम्बुना ॥ १५ ॥
पद्मोत्पलस्य मूलानि मधुकं शर्करा तिलाः।

स्रवमाणेषु गर्भेषु गर्भस्थापनमुत्तमम् ॥ १६ ॥
गर्भस्रावातुरा नारी यवक्षारं सुचूर्णितम् ।
लभते हविषा पीत्वा सुखं वाऽथ सुखाम्बुना ॥ १७ ॥
पद्मेन्दीवरपत्राणि माक्षिकं शर्करा तथा ।
परिस्रवत्सु गर्भेषु पयसा पानमुत्तमम् ॥ १८ ॥
उदुम्बरशलाटूनि वटशुङ्गाः प्रियङ्गवः ।
नीलाब्जकं हेमाजं च क्षीरं गर्भस्रुतौ पिबेत् ॥ १९ ॥
गुडूच्यतिविषोशीरबलाकट्वङ्गधान्यकैः ।
एभिर्वारि शृतं पेयं सामे गर्भपरिस्रवे ॥ २० ॥

गर्भवत्या अतिरक्तप्रवृत्तौ पारावतपुरीषयोगः ।

योषितः सततं यस्या गर्भवत्याः स्रवत्यसृक् ।
पारावतपुरीषं तां पाययेत्तन्दुलाम्बुना ॥ २१ ॥

गर्भपातनिवारकाः कतिपययोगाः ।

शर्करायवतिलैः समांशकैर्माक्षिकेण सह भक्षितैस्त्रियाः ।
नास्ति गर्भपतनोद्भवं भयं पापभीतिरिव तीर्थसेवया ॥ २२ ॥
लज्जावतीशावरधातकीभिर्नीलाम्बुजैः क्षौद्रपयोन्विताभिः ।
पीताभिरन्तर्जलमाश्रितायास्त्रियो न गर्भस्य भवेन्निपातः ॥२३॥
उदुम्बरक्वाथयुतं सिताढ्यं सुगन्धशालिप्रभवं सितं च ।
या पिष्टमश्नाति न गर्भपातपीडामसौ विन्दति जातु नारी २४
सशर्करं नीलसरोजकन्दचूर्णं निपीतं सह माक्षिकेण ।
गर्भस्य पाते शमनं व्यथायाः शीतैश्च तोयैः परिषेचनानि ॥ २५

इति श्रीसोढलप्रथिते गदनिग्रहे षष्ठे कौमारतन्त्रखण्डे
गर्भबाधाधिकारस्तृतीयः संपूर्णः ।

---

१ 'तुख्महुम्माज' इति नाम्ना यवनवैद्यके प्रसिद्धानि बीजविशेषाणि

## अथ मूढगर्भाधिकारश्चतुर्थः।

अथातो मूढगर्भनिदानं व्याख्यास्यामः—

मूढगर्भस्य निदानपूर्विका संप्राप्तिः।

गर्भोऽभिघातविषमासनपीडनाद्यैः
पक्वं द्रुमादिव फलं पतति क्षणेन।
मूढः करोति पवनः खलु मूढगर्भं
शूलं च योनिजठरादिषु मूत्रसङ्गम् ॥ १ ॥

विविधमूढगर्भलक्षणानि।

क्षुब्धोऽनिलेन विगुणेन ततः स गर्भः
संख्यामतीत्य बहुधा समुपैति योनिम्।
द्वारं निरुध्य शिरसा जठरेण कश्चि-
त्कश्चिच्छरीरपरिवर्तितकुब्जदेहः ॥ २ ॥

एकेन कश्चिदपरस्तु भुजद्वयेन
तिर्यग्गतो भवति कश्चिदवाङ्मुखोऽन्यः।
पार्श्वापवृत्तगतिरेति तथैव कश्चि-
दित्यष्टधा गतिरिह त्वपरा चतुर्धा ॥ ३ ॥

संकीलकः प्रतिखुरः परिघोऽथ बीज-
स्तेपूर्ध्वबाहुचरणैः शिरसा च योनिम्।
सङ्गी च यो भवति कीलकवत्स कीलो
दृश्यैः खुरैः प्रतिखुरः स हि कायसङ्गी ॥ ४ ॥

गच्छेद्भुजद्वयशिराः स च बीजकाख्यो
योनौ स्थितः स परिघः परिघेण तुल्यः।

अन्तर्मृतगर्भलक्षणम्।

गर्भास्पन्दनमावीनां प्रणाशः श्यावपाण्डुता।
भवेदुच्छ्वासपूतित्वं शूनताऽन्तर्मृते शिशौ ॥ ५ ॥

मानसागन्तुभिर्मातुरुपतापैः प्रपीडितः ।
गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीडितः ॥ ६ ॥

मूढगर्भस्यासाध्यलक्षणम् ।

योनिसंवरणं सङ्गः कुक्षौ मक्कल्ल एव च ।
हन्युः स्त्रियं मूढगर्भा यथोक्ताश्चाप्युपद्रवाः ॥ ७ ॥
अपविद्धशिरा या तु शीताङ्गी निरपत्रपा ।
नीलोद्धतशिरा हन्ति सा गर्भं स च तां तथा ॥८॥

इति मूढगर्भनिदानं संपूर्णम् ।

---

अथातो मूढगर्भचिकित्सितं व्याख्यास्यामः ।

मूढगर्भे शस्त्रचिकित्सा ।

यद्यदङ्गं हि गर्भस्य तस्य सज्जति तद्भिषक् ।
सम्यग्विनिर्हरेच्छित्त्वा रक्षेन्नारीं च यत्नतः ॥ ९ ॥
नोपेक्षेत मृतं गर्भं मुहूर्तमपि पण्डितः ।
स ह्याशु जननीं हन्ति निरुच्छ्वासं पशुं यथा ॥ १० ॥
मण्डलाग्रेण कर्तव्यं छेदनं तस्य जानता ।
वृद्धिपत्रं हि तीक्ष्णाग्रं नारीं हिंस्यात्कदाचन ॥ ११ ॥
एवं निर्हृतशल्यां तु सिञ्चेदुष्णेन वारिणा ।
ततोऽभ्यक्तशरीरायै योनौ स्नेहं निधापयेत् ॥ १२ ॥
एवं शुद्धा भवेद्योनिस्तच्छूलं चोपशाम्यति ।

मूढगर्भे कृष्णादियोगः ।

कृष्णातन्मूलशुण्ठ्येलाहिङ्गुभार्गीः सदीप्यकाः ॥ १३ ॥
वचामतिविषां रास्नां चव्यं संचूर्ण्य पाययेत् ।
स्नेहेन दोषशान्त्यर्थं वेदनोपशमाय च ॥ १४ ॥
क्वाथं चैषां तथा कल्कं चूर्णं वा घृतभर्जितम् ।

मूढगर्भे शाकत्वच दियोगः ।

शाकत्वग्घिङ्ग्वतिविषाः पाठां कटुकरोहिणीम् ॥१५॥
तथा तेजोवतीं चापि पाययेत्पूर्ववद्भिषक् ।
त्रिरात्रमेव सप्ताहं ततः स्नेहं पुनः पिबेत् ॥ १६ ॥
पाययेदासवं नक्तमरिष्टं वा सुसंस्कृतम् ।
शिरीषककुभाभ्यां च तोयमाचमने हितम् ॥ १७ ॥
क्रमो दशाहं शेषं तु यथायोगमुपाचरेत् ।

सुखप्रसवकराः कतिपययोगाः ।

परूपकशिफालेपः स्थिरामूलकृतोऽथवा ॥ १८ ॥
नाभिबस्तिभगाद्येषु मूढगर्भापकर्षणः ।
मातुलिङ्गस्य मूलानि मधुकं मधुसंयुतम् ॥ १९ ॥
घृतेन सह पातव्यं सुखं नारी प्रसूयते ।
तुषाम्बुपरिपिष्टेन मूलेन परिलेपयेत् ।
लाङ्गल्याश्चरणौ सूते क्षिप्रमापन्नगर्भिणी ॥ २० ॥
मूलं प्रत्यक्पुष्प्याः पाठायाश्च विनिवेशितं गुह्ये ।
स्त्रीणां दुष्प्रसवानां प्रसवं कुरुते सुखेनैव ॥ २१ ॥
पुरदग्धभुजङ्गकञ्चुककज्जलमधुपूरितेक्षणद्वन्द्वा ।
सद्यो भवति विशल्या विमूढगर्भाऽपि गर्भवती ॥२२॥
पाटालाङ्गलिसिंहास्यमयूरकजटाः पृथक् ।
नाभिबस्तिभगालेपात्सुखं नारी प्रसूयते ॥ २३ ॥
परूपकस्थिरामूललेपस्तद्वत्पृथक्पृथक् ।
गृहाम्बुना गेहधूमपानं गर्भापकर्षणम् ॥ २४ ॥
श्यामासुदर्शनाभ्यां च लताभ्यां परिकल्पयेत् ।
क्षिपेत्कुण्डलकं मूर्ध्नि यावत्पादतलागतम् ॥ २५ ॥
योषितो मूढगर्भायाः सुखप्रसवकारकम् ।

अपामार्गस्य मूलं तु या नारी दुष्प्रसूयिनी ॥ २६ ॥
धारयेद्योनिमध्ये तु सा सुखेन प्रसूयते।
मधुकं चन्दनं चैव सर्पिर्माहिषमेव च ॥ २७ ॥
मूढगर्भा पिबेन्नारी क्षिप्रं सा तु प्रसूयते।
आटरूषकमूलेन नाभिं योनिं च लेपयेत्।
नाभिलेपः प्रसिद्धोऽयं मूढगर्भापकर्षणः ॥ २८ ॥

मूढगर्भे दैवव्यपाश्रयचिकित्सा।

इहामृतं च सोमश्च चित्रभानुश्च भामिनि।
उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥ २९ ॥
इदममृतमपां समुद्धृतं वै
तव लघु गर्भमिमं विमुञ्चतु स्त्री।
तदनलपवनार्कवासवास्ते
सह लवणाम्बुधरैर्दिशन्तु शान्तिम् ॥ ३० ॥
मुक्ताः पशोर्विपाशाश्च मुक्ताः सूर्येण रश्मयः।
मुक्तः सर्वभयाद्गर्भ एह्येहि विरमाचिरः ॥ ३१ ॥
जलं च्यावनमन्त्रेण सप्तवाराभिमन्त्रितम्।
पीत्वा प्रसूयते नारी दृष्ट्वा चोभयत्रिंशकम् ॥ ३२ ॥
तथोभयद्वादशकदर्शनं सुखसूतिकृत्।
वसुगुणाब्ध्येकशरैर्नवषट्सप्तयुगैः क्रमात्।
सर्वैः पञ्चदश द्विस्तु त्रिंशकं नवकोष्ठके ॥ ३३ ॥

अपरापातनार्थं कटुतुम्ब्यादिधूपः।

कटुतुम्ब्यहिनिर्मोककृतवेधनसर्षपैः।
कटुतैलान्वितो धूपो योनेः पातयतेऽपराम् ॥ ३४ ॥

मूढगर्भे कतिपययोगाः।

न्यस्तेन मूर्धनि सुधापयसाऽल्पकेन
स्त्रीणामुपैति सहसैव हि गर्भशल्यम्।

मूलेन वा चिकुरमध्यगतेन घ्राण-
पुटोद्धृतेन सुखमेव भवेत्प्रसूतिः ॥ ३५ ॥
मूलेन शुक्लाचलकर्णिकाया गुदस्य मध्ये निहितेन सद्यः।
गर्भस्य पातः क्रियते प्रसह्य कुर्यादिदं काकनिकाभवं वा ॥३६॥
गर्भं विपन्नमपि पातयति क्षणेन
स्त्रीणां जरायुपटलं च पृथक्करोति।
पादे स्थिते वलयरूपतया तरुण्या
मूलं व्यथातिशयविक्लवमानसानाम् ॥ ३७ ॥
मूलं पुनर्नवायाः सतैलमीपत्कृतं गुदे।
गर्भं मवेपमानं सहसा स्त्रीणां बहिः कुरुते ॥ ३८ ॥

इति श्रीवैद्यसोढलप्रथिते गदनिग्रहे षष्ठे कौमारतन्त्रखण्डे
मूढगर्भाधिकारश्चतुर्थः संपूर्णः ॥ ४ ॥

---

## अथ वन्ध्याधिकारः पञ्चमः।

अथातो वन्ध्याचिकित्सितं व्याख्यास्यामः।

गर्भप्रदमश्वगन्धाघृतम्।

अश्वगन्धाकषायेण मृद्वग्निपरिसाधितम्।
ऋतुकाले पिबेद्वन्ध्या गर्भसन्धानकं घृतम् ॥ १ ॥

गर्भस्थापनो वटशुङ्गयोगः।

गर्भदं वटशुङ्गं तु पिबेद्वन्ध्या रजस्वला।
वारिणा शुक्लपक्षे हि पुष्येण च समाहृतम् ॥ २ ॥

गर्भजननार्थं मातुलुङ्गमूलघृतम्।

मातुलुङ्गशिफाकल्कसिद्धं गर्भप्रदं घृतम्।
पिबेद्वन्ध्या प्रयत्नेन गर्भसंजननं परम् ॥ ३ ॥

...जादियोगः।

... चैव हि।
... च ॥ ४ ॥

वन्ध्यत्वनाशार्थं लक्ष्मणामूलयोगः ।

क्षीरेण लक्ष्मणायास्तु शिफां सम्यग्दिनत्रयम् ।
पीत्वा ऋतुमती नारी वन्ध्याशब्दं जहाति सा ॥ ५ ॥

गर्भदोऽनन्तादियोगः ।

अनन्तां जीरकं दूर्वां वाराहीं बहुपुत्रिकाम् ।
संपेष्य च सर्षभकं पिबेत्क्षीरेण गर्भदम् ॥ ६ ॥

गर्भप्रदस्तण्डुलीयकयोगः ।

क्षीरेण जीववत्सायाढ्यब्दकं तन्दुलीयकम् ।
पिबेदृतुमती नारी गर्भकामा दिनत्रयम् ॥ ७ ॥

वन्ध्यत्वनाशार्थं धात्र्यादियोगः ।

धात्रीवचान्वितां नारी बलां क्षीरेण या पिबेत् ।
ऋतुकाले जहात्याशु वन्ध्याशब्दं चिरोत्थितम् ॥ ८ ॥

गर्भप्रदो धातकीपुष्पादियोगः ।

धातकीकुसुमैर्युक्तं नारी नीलोत्पलं पिबेत् ।
ऋतौ मधुयुतं प्रातः क्षिप्रं गर्भेण युज्यते ॥ ९ ॥

गर्भधारणार्थं मयूरशिखामूलयोगः ।

शिफां बर्हिशिखायास्तु क्षीरेण परिपेषिताम् ।
पिबेदृतुमती नारी गर्भधारणहेतवे ॥ १० ॥

गर्भप्रदो रेणुकादियोगः ।

रेणुकां रोध्रसंमिश्रां लक्ष्मणां परियोजिताम् ।
गर्भदां क्षीरसर्पिर्भ्यां पिबेद्रक्तवटाङ्कुरान् ॥ ११ ॥

गर्भप्रदो मूषिकर्णीमूलयोगः ।

गर्भाभावकृतान् दोषानेका एव हि नाशयेत् ।
योनिमध्यस्थिता स्त्रीणां मूषिकर्णीशिफा ध्रुवम् ॥ १२ ॥

गर्भप्रदो भूस्तृणादियोनिलेपः ।

भूस्तृणस्य तु मूलानि वचा मुञ्जातकं तथा ।

---

१ 'पिबेद्रक्तवटाङ्कुरान्' ख.

समभागानि मधुना योनिलेपो निशामुखे ॥ १३ ॥
शोभनं जनयेत्पुत्रं बलवीर्यसमन्वितम् ।

गर्भप्रदोऽपामार्गादियोगः ।

नीलपुष्पमपामार्गं शोणितं शाभ्रवं तथा ॥ १४ ॥
वचाकुष्ठसमायुक्तं पीत्वा नारी प्रसूयते ।
प्रस्थे वृषभमूत्रस्य तैलस्य कुडवं पचेत् ॥ १५ ॥
ऋतुस्नाता पिबेन्नारी वन्ध्या चापि प्रसूयते ।

वन्ध्यत्वनाशार्थं बस्तमूत्रादियोगः ।

बस्तमूत्रं सघृतं च नवनीतं च माहिषम् ॥ १६ ॥
पलत्रयं पिबेन्नारी अपि वन्ध्या प्रसूयते ।

गर्भप्रदमश्वगन्धाक्षीरम् ।

अश्वगन्धाकषायेण क्वथितं शीतलं पयः ॥ १७ ॥
पीत्वा कान्तं समाश्लिष्य ऋतौ वन्ध्या प्रसूयते ।

गर्भप्रदो मातुलुङ्गमूलादियोगः ।

मातुलिङ्गशिफां नारी ऋत्वन्ते पयसा पिबेत् ॥ १८ ॥
नागकेसरपूरास्थिचूर्णं वा गर्भदं परम् ।
पयो माहिषगर्भिण्या अजामूत्रं शतावरी ॥ १९ ॥
समभागानि सर्वाणि अजासर्पिःसमन्वितम् ।
ऋतुस्नाता पिबेन्नारी अपि वन्ध्या प्रसूयते ॥ २० ॥

पुत्रप्रसवार्थं नागकेसरयोगः ।

गोघृतेन सह नागकेसरं श्लक्ष्णचूर्णितमृतौ नितम्बिनी ।
गव्यदुग्धनिरता पिबेद्यदि स्याचदा नियतमेव वीरसूः ॥२१॥

पुत्रप्रसवार्थं लक्ष्मणामूलयोगः ।

गृह्णाति लिङ्गाङ्कितलक्ष्मणाया मूलेन नस्यं सघृतेन या स्त्री ।
अवाभनासाविवरे ऋतुस्था सा पुत्रिणी स्यात्पतिसंप्रयोगात्॥२२
मूलं भुजङ्गारिशिखासमुत्थं दुग्धेन संयुक्तमृतौ निपीतम् ।
गर्भस्य हेतुः प्रमदाजनस्य स्याल्लक्ष्मणामूलमपीत्थमेव ॥२३॥

गर्भवृद्ध्यर्थं सहचरमूलयोगः ।

यदि सहचरमूलं वारिणा संप्रपिष्टं
पिबति यदि च गोधामांसमश्नाति योषित् ।
प्रतिदिनमभिवृद्धिं याति गर्भस्तदानीं
क्रमवशपरिपुष्टैर्धातुभिः पूर्यमाणः ॥ २४ ॥

इति श्रीशोढलग्रथिते गदनिग्रहे षष्ठे कौमारतन्त्रे
वन्ध्याधिकारः पञ्चमः ॥ ५ ॥

---

## अथ योनिशुक्रदोषाधिकारः षष्ठः ।

अथातो योनिशुक्रदोषचिकित्सितं व्याख्यास्यामः—

योनिशूलहराः कतिपययोगाः ।

वृषोपकुञ्चिकाजाज्यः श्रेयसी चित्रकं तथा ।
सैन्धवं क्षारसंयुक्तं दीप्यकं च प्रदापयेत् ॥ १ ॥
पिबेन्मद्येन वा मूलमार्जकं सोपकुञ्चिकम् ।
अनेन योनिशूलं च बस्तिशूलं च शाम्यति ॥ २ ॥
पिबेद्वा दर्भनिर्यूहं सिद्धं गोक्षुरकेण वा ।
पयः सशर्करं शीतं योनिशूलनिपीडिता ॥ ३ ॥
बिल्वमर्जकमूलस्य कल्कं मद्येन पाययेत् ।
तेन योनिगतं शूलमाशु शाम्यति योषिताम् ॥ ४ ॥
पिप्पल्यः कुञ्चिकाऽऽजाजी वृषकं सैन्धवं वचाम् ।
यवक्षाराजमोदे च शर्करा चित्रकस्तथा ॥ ५ ॥
पिष्ट्वा प्रसन्नयाऽऽलोड्य घृतभृष्टानि दापयेत् ।
योनिपार्श्वार्तिहृद्रोगगुल्मार्शोविनिवृत्तये ।
रास्नाश्वदंष्ट्रावृषकैः शृतं शूले पिबेत्पयः ॥ ६ ॥
बिल्वोपकुञ्चीवृषकोपकुल्याचव्योषणग्रन्थिकनागराणाम् ।
कल्कः सुखोष्णेन जलेन पीतः शूलेषु योनिप्रभवेषु तुल्यः ॥७॥

योनिशूलहरं नारी योन्यां प्रक्षिप्य धारयेत् ।
पिचुमेरण्डबीजं तु परिगृह्य विधानतः ॥ ८ ॥
सुरसस्य रसोपेतां सगुडां वारुणीं पिबेत् ।
योनिशूलहरां नारी प्रयत्नेन दिनत्रयम् ॥ ९ ॥
एरण्डतैलसंमिश्रैर्दारुमुस्तकयोजितैः ।
उशीरैः साधितं क्षीरं शर्करापरिमिश्रितम् ॥ १० ॥
मधुमात्रासमायुक्तं योनिशूलनिषूदनम् ।
गुडूचीमालतीरास्नाबलामधुकचित्रकैः ॥ ११ ॥
निदिग्धिकादेवदारुयूथिकाभिश्च कार्षिकैः ।
तैलप्रस्थं गवां मूत्रे क्षीरे च द्विगुणे पचेत् ॥ १२ ॥
वातार्तायां पिचुं दद्यात्सर्वदा धारयेच्च तम् ।
लाक्षाबलापलाशत्वङ्निर्यासैः शाल्मलेरपि ॥ १३ ॥
पिष्टैः सिद्धं तु तत्स्नेहपिचुं योनौ निधापयेत् ।
शताह्वाकुष्ठमरिचपिप्पलीमाषसैन्धवैः ।
वर्तिस्तुल्यकराङ्गुष्ठा धार्या योनिविशोधनी ॥ १४ ॥

अपामार्गपत्रद्वयं योनिमध्ये निविष्टं क्षणाद्योनिशूलं निहन्ति ।
सुदुर्धारमप्येवमेव प्रयुक्तो विदध्याद्रसस्तत्र पानमेवोऽपि॥१५॥
एरण्डतैलेन परिप्लुता स्यात्कार्पासपिण्डी यदि योनिमध्ये ।
शूलं तदानीं शमयेत्तदीयं संयावको मुण्डतिकाकृतो वा ॥१६॥

शुक्रदोषे कतिपययोगनामतिदेशः ।

गिरिजस्य प्रयोगश्च रेतोदोषानपोहति ।
घृतं च जीवनीयं च च्यवनप्राश एव च ॥ १७ ॥

इति श्रीवैद्यवरशोढलप्रथिते गदनिग्रहे षष्ठे कौमारतन्त्रे
योनिदोषशुक्रदोषाधिकारः षष्ठः ॥ ६ ॥

## अथ सूतिकारोगाधिकारः सप्तमः ।

अथातः सूतिकारोगनिदानं व्याख्यास्यामः—

मक्कल्लनिदानम् ।

वायुः प्रकुपितः कुर्यात्संबाध्य रुधिरं च्युतम् ।
सूताया हृच्छिरोवस्तिशूलं मक्कल्लसंज्ञितम् ॥ १ ॥

सूतिकारोगलक्षणम् ।

अङ्गमर्दो ज्वरः कम्पः पिपासा गुरुगात्रता ।
शोफः शूलातिसारौ च सूतिकारोगलक्षणम् ॥ २ ॥

सूतिकारोगाणां कृच्छ्रसाध्यत्वम् ।

मिथ्योपचारात्संक्लेशाद्विषमाजीर्णभोजनात् ।
सूतिकायास्तु ये रोगा जायन्ते दारुणास्तु ते ॥ ३ ॥
ज्वरातिसारशोफाश्च शूलानाहबलक्षयाः ।
तन्द्रारुचिप्रसेकाद्याः कफवातामयोद्भवाः ॥ ४ ॥
कृच्छ्रसाध्या हि ते रोगाः क्षीणमांसबलाग्नितः ।
ते सर्वे सूतिकानाम्ना रोगास्ते चाप्युपद्रवाः ॥ ५ ॥

इति सूतिकारोगनिदानं संपूर्णम् ॥

---

अथातः सूतिकारोगचिकित्सितं व्याख्यास्यामः—

अपरापातनाः कतिपययोगाः ।

कटुतुम्ब्यहिनिर्मोककृतवेधनसर्षपैः ।
कटुतैलान्वितैर्योनिधूपः पातयतेऽपराम् ॥ ६ ॥
कचवेष्टितयाऽङ्गुल्या घृष्टे कण्ठे सुखं पतत्यपरा ।
मूलेन लाङ्गलिक्याः संलिप्ते पाणिपादे च ॥ ७ ॥

मक्कल्लचिकित्सा ।

सूताया हृच्छिरोवस्तिशूलं मक्कल्लसंज्ञितम् ।
यवक्षारं पिबेत्तत्र सर्पिषोष्णोदकेन वा ।

पिप्पल्यादिगणक्काथं पिबेद्वा लवणान्वितम् ॥ ८ ॥
सुरसादलनिष्पन्दः पुराणगुडमद्यमण्डसंमिश्रः ।
पीतः प्रसूतिसमयादनन्तरं शूलमपहरति ॥ ९ ॥

मक्कल्लः प्रशममुपैति सूतिकानां
पीतेन क्वथितजलोपयोजितेन ।
अभ्युद्यन्नवयवशूकसंभवेन
क्षारेण ध्रुवमथवा घृतान्वितेन ॥ १० ॥

सूतिकारोगेऽमृतादिक्काथः ।

अमृतानागरसहचरभद्रोत्कटपञ्चमूलजलदजलम् ।
शृतशीतं मधुसहितं निवारयति सूतिकारोगम् ॥ ११ ॥

सूतिकारोगे सहचरादिक्काथः ।

सहचरपुष्करवेतसमूलं सविकङ्कतदारुकुलत्थजलम् ।
जलमत्र ससैन्धवहिङ्गुयुतं सद्यो ज्वरसूतिकाशूलहरम्॥१२॥

सूतिकारोगे दशमूलक्काथः ।

पञ्चमूलद्वयक्काथं तप्तलोहेन संगतम् ।
सूतिकारोगनाशाय पिबेद्वा वह्नियुतां सुराम् ॥ १३ ॥

सूतिकारोगे वज्रकाञ्जिकम् ।

पिप्पली पिप्पलीमूलं चव्यं शुण्ठी यवानिका ।
जीरके द्वे हरिद्रे द्वे विडं सौवर्चलं तथा ॥ १४ ॥
एतैरेवौषधैः पिष्टैरारनालं विपाचयेत् ।
आमवातहरं वृष्यं कफघ्नं वह्निदीपनम् ॥ १५ ॥
काञ्जिकं वज्रकं नाम स्त्रीणां बलविवर्धनम् ।
मक्कल्लशूलशमनं परं क्षीराभिवर्धनम् ॥ १६ ॥

इति श्रीवैद्यशोढलप्रथिते गदनिग्रहे षष्ठे कौमारतन्त्रखण्डे सूतिकारोगाधिकारः सप्तमः ॥ ७ ॥

## अथ स्तनरोगाधिकारोऽष्टमः।

अथातः स्तनरोगनिदानं व्याख्यास्यामः—

स्तनरोगसंप्राप्तिः।

सक्षीरौ वाऽप्यदुग्धौ वा दोषः प्राप्य स्तनौ स्त्रियाः।
प्रदूष्य मांसरुधिरे स्तनरोगाय कल्पते ॥ १ ॥

स्तनरोगलक्षणम्।

पञ्चानामपि तेषां हि रक्तजं विद्रधिं विना।
लक्षणानि समानानि बाह्यविद्रधिलक्षणैः ॥ २ ॥

स्तन्यप्रवृत्तिवर्णनम्।

विशस्तेष्वपि गात्रेषु यथा शुक्रं न दृश्यते।
सर्वदेहाश्रितत्वाच्च शुक्रलक्षणमुच्यते ॥ ३ ॥
तदेव चेष्टयुवतेर्दर्शनात्स्मरणादपि।
शब्दसंश्रवणात् स्पर्शात्संहर्षाच्च प्रवर्तते ॥ ४ ॥
सुप्रसन्नं मनस्तत्र हर्षणे हेतुरुच्यते।
आहाररसयोनित्वादेवं स्तन्यमपि स्त्रियाः ॥ ५ ॥
तदेवापत्यसंस्पर्शाद्दर्शनात्स्मरणादपि।
ग्रहणाच्च शरीरस्य शुक्रवत्संप्रवर्तते ॥ ६ ॥
स्नेहो निरन्तरस्तत्र प्रसवे हेतुरुच्यते।

क्षीरदुष्टिनिदानम्।

गुरुभिर्विविधैरन्नैर्दुष्टैर्दोषैः प्रदूषितम् ॥ ७ ॥
क्षीरं धात्र्याः कुमारस्य नानारोगाय कल्पते।

दुष्टक्षीरलक्षणम्।

कषायं सलिलप्लावि स्तन्यं मारुतदूषितम् ॥ ८ ॥
कट्वम्ललवणं तीक्ष्णं राजिमत्पित्तसंगतम्।
कफजुष्टं घनं तोये निमज्जति सुपिच्छिलम् ॥ ९ ॥
द्विलिङ्गं द्वन्द्वजं विद्यात्सर्वलिङ्गं त्रिदोषजम्।
अदुष्टं चाम्बुनिःक्षिप्तमेकीभवति पाण्डुरम् ॥ १० ॥

इति स्तनस्तन्यरोगनिदानं संपूर्णम् ॥

पिप्पल्यादिगणक्वाथं पिबेद्वा लवणान्वितम् ॥ ८ ॥
सुरसादलनिष्यन्दः पुराणगुडमद्यमण्डसंमिश्रः ।
पीतः प्रसूतिसमयादनन्तरं शूलमपहरति ॥ ९ ॥
मकल्लः प्रशममुपैति सूतिकानां
पीतेन क्वथितजलोपयोजितेन ।
अभ्युद्यन्नवयवशूकसंभवेन
क्षारेण ध्रुवमथवा घृतान्वितेन ॥ १० ॥

सूतिकारोगेऽमृतादिक्वाथः ।

अमृतानागरसहचरभद्रोत्कटपञ्चमूलजलदजलम् ।
शृतशीतं मधुसहितं निवारयति सूतिकारोगम् ॥ ११ ॥

सूतिकारोगे सहचरादिक्वाथः ।

सहचरपुष्करवेतसमूलं सविकङ्कतदारुकुलत्थजलम् ।
जलमत्र ससैन्धवहिङ्गुयुतं सद्यो ज्वरसूतिकाशूलहरम्॥१२

सूतिकारोगे दशमूलक्वाथः ।

पञ्चमूलद्वयक्वाथं तप्तलोहेन संगतम् ।
सूतिकारोगनाशाय पिबेद्वा तद्युतां सुराम् ॥ १३ ॥

सूतिकारोगे वज्रकाञ्जिकम् ।

पिप्पली पिप्पलीमूलं चव्यं शुण्ठी यवानिका ।
जीरके द्वे हरिद्रे द्वे विडं सौवर्चलं तथा ॥ १४ ॥
एतैरेवौषधैः पिष्टैरारनालं विपाचयेत् ।
आमवातहरं वृष्यं कफघ्नं वह्निदीपनम् ॥ १५ ॥
काञ्जिकं वज्रकं नाम स्त्रीणां बलविवर्धनम् ।
मकल्लशूलशमनं परं क्षीराभिवर्धनम् ॥ १६ ॥

इति श्रीवैद्यशोढलप्रथिते गदनिग्रहे षष्ठे कौमारतन्त्रखण्डे सूतिकारोगाधिकारः सप्तमः ॥ ७ ॥

## अथ स्तनरोगाधिकारोऽष्टमः ।

अथातः स्तनरोगनिदानं व्याख्यास्यामः—

स्तनरोगसंप्राप्तिः ।

सक्षीरौ वाऽप्यदुग्धौ वा दोषः प्राप्य स्तनौ स्त्रियाः ।
प्रदूष्य मांसरुधिरे स्तनरोगाय कल्पते ॥ १ ॥

स्तनरोगलक्षणम् ।

पञ्चानामपि तेषां हि रक्तजं विद्रधिं विना ।
लक्षणानि समानानि बाह्यविद्रधिलक्षणैः ॥ २ ॥

स्तन्यप्रवृत्तिवर्णनम् ।

विशस्तेष्वपि गात्रेषु यथा शुक्रं न दृश्यते ।
सर्वदेहाश्रितत्वाच्च शुक्रलक्षणमुच्यते ॥ ३ ॥
तदेव चेष्टयुवतेर्दर्शनात्स्मरणादपि ।
शब्दसंश्रवणात् स्पर्शात्संहर्षाच्च प्रवर्तते ॥ ४ ॥
सुप्रसन्नं मनस्तत्र हर्षणे हेतुरुच्यते ।
आहाररसयोनित्वादेवं स्तन्यमपि स्त्रियाः ॥ ५ ॥
तदेवापत्यसंस्पर्शाद्दर्शनात्स्मरणादपि ।
ग्रहणाच्च शरीरस्य शुक्रवत्संप्रवर्तते ॥ ६ ॥
स्नेहो निरन्तरस्तत्र प्रसवे हेतुरुच्यते ।

क्षीरदुष्टिनिदानम् ।

गुरुभिर्विविधैरन्नैर्दुष्टैर्दोषैः प्रदूषितम् ॥ ७ ॥
क्षीरं धात्र्याः कुमारस्य नानारोगाय कल्पते ।

दुष्टक्षीरलक्षणम् ।

कषायं सलिलप्लावि स्तन्यं मारुतदूषितम् ॥ ८ ॥
कट्वम्ललवणं तीक्ष्णं राजिमत्पित्तसंगतम् ।
कफजुष्टं घनं तोये निमज्जति सुपिच्छिलम् ॥ ९ ॥
द्विलिङ्गं द्वन्द्वजं विद्यात्सर्वलिङ्गं त्रिदोषजम् ।
अदुष्टं चाम्बुनिःक्षिप्तमेकीभवति पाण्डुरम् ॥ १० ॥

॥ इति स्तनस्तन्यरोगनिदानं संपूर्णम् ॥

अथातः स्तन्यचिकित्सितं व्याख्यास्यामः—

स्तन्यदोषचिकित्सा ।

तत्र वातात्मके स्तन्ये दशमूलीजलं पिबेत् ।
पित्तदुष्टेऽमृताभीरुपटोलं निम्बचन्दनम् ॥ ११ ॥
धात्री कुमारश्च पिबेत्क्वाथयित्वा ससारिवम् ।
शार्ङ्गेष्टासप्तपर्णत्वग्वत्सकग्रन्थासृतं पयः ॥ १२ ॥
दापयेत्स्तन्यशुद्ध्यर्थमथवा रोहिणीश्रृतम् ।
त्रायमाणामृतानिम्बपटोलीत्रिफलाश्रृतम् ॥ १३ ॥
गुरुक्षीरा पिबेत्क्वाथमाशु स्तन्यविशुद्धये ।
पिबेद्वा पिप्पलीमूलवचाचित्रकनागरैः ॥ १४ ॥
पाठानागरशार्ङ्गेष्टामूर्वाभिर्लेपयेत्स्तनौ ।
पाठामूर्वाब्दभूनिम्बदारुशुण्ठीकलिङ्गकैः ॥ १५ ॥
सारिवामृततिक्ताख्यैः क्वाथः स्तन्यविशोधनः ।
वनकार्पासिकेक्षूणां मूलं सौवीरकेण वा ॥ १६ ॥
विदारिकन्दं सुरया पिबेद्वा स्तन्यवर्धनम् ।
हरिद्रादिं वचादिं वा पिबेत्स्तन्यविशुद्धये ॥ १७ ॥

क्षीरशुद्धिकराः कतिपययोगाः ।

कलम्बुकरसोपेतं सम्यक्तैलं विपाचयेत् ।
तद्वक्त्रेणोद्धरेन्नारी क्षीरसंजननं परम् ॥ १८ ॥
क्षीराशादा पिबेत्क्षीरं सविडङ्गैस्तु साधितम् ।
क्षीरसंजननं नारी प्रयत्नेन दिनत्रयम् ॥ १९ ॥
विदारीं भक्षयित्वा च सुजीर्णे प्रमदा त्र्यहम् ।
क्षीरेणान्नं समश्नीयात्सम्यक्क्षीरविवृद्धये ॥ २० ॥
शालिचूर्णं तु संपीतं क्षीरेण दिवसत्रयम् ।
क्षीराशाभिरतानां च नारीणां क्षीरदं स्मृतम् ॥ २१ ॥

शालिषष्टिकदर्भेक्षुकुशकासनलोत्कटम्।
गुन्द्रेक्षुवालिकामूलं दर्शते स्तन्यवर्धनाः॥ २२॥

स्तनरोगचिकित्सा।

ापत्यनाशप्रभवां निहन्ति स्तन्यव्यथामाशु कृते प्रलेपे।
स्त्रीणां हरिद्रासहितं कुमारीमूलं विशालाप्रभवं कदाचित्॥२३॥

शोफं स्तनोत्थितमवेक्ष्य भिषग्विदध्या-
द्विद्रधावभिहितं बहुशो विधानम्।
आमे विदह्यति तथैव गते च पाकं
धात्र्याः स्तनौ सततमेव च निर्दुहीत॥ २४॥

इति श्रीवैद्यशोढलग्रथिते गदनिग्रहे षष्ठे कौमारतन्त्रखण्डे स्तनरोगाधिकारोऽष्टमः॥ ८॥

---

## अथ योनिगाढीकरणाधिकारो नवमः।

अथातो योनिगाढीकरणसौभाग्यविकारचिकित्सितं व्याख्यास्यामः—

योनिशैथिल्यहराः कतिपययोगाः।

तुम्बीपत्रं च रोध्रं च समभागानि कारयेत्।
दद्याल्लेपं भगस्येदं प्रसूता ह्यक्षता भवेत्॥ १॥
वेतसस्य तु मूलानि क्वाथयेन्मृदुनाऽग्निना।
भगः प्रक्षालितस्तेन गाढत्वमुपगच्छति॥ २॥
सौराष्ट्री खादिरं चूर्णं क्वाथयेन्मृदुनाऽग्निना।
योनिः प्रक्षालिता तेन गाढत्वं याति निश्चितम्॥ ३॥
मातृवाहकचूर्णेन भगमालेपयेत्सदा।
मैथुनानि निषेवेत पुनः कन्या भविष्यति॥ ४॥
वचा नीलोत्पलं कुष्ठं मरिचानि तथैव च।
अश्वगन्धा हरिद्रा च गाढीकरणमुत्तमम्॥ ५॥

पलाशोदुम्बरफलं तिलकल्कसमन्वितम् ।
मधुना योनिमालिप्य गाढीकरणमुत्तमम् ॥ ६ ॥
पयसा मनालमज्जं पिष्ट्वा स्मरसदनमध्यनिक्षिप्तम् ।
हरिणीमिति करिणीमपि कुरुते स्मरसमरगुरुहेतुम् ॥७॥
वरटीगृहगण्डूपदकूपगोपानां चूर्णमेककम् ।
गव्यघृततक्रयोगात्संकोचयति स्मरागारम् ॥ ८ ॥
रजनीद्वयराजीवोद्भवकेसरदेवदारुभिर्लेपः ।
मन्मथवेश्मनि निहितः करोति संकोचसौभाग्ये ॥९॥
मदयन्तिकाश्वगन्धामोचरसैः साधितं जलं स्त्रीणाम् ।
प्रक्षालनेन योनेः सद्यः शैथिल्यमपहरति ॥ १० ॥
सूर्यांशुलक्षधातकिरसो भेकवसान्वितः ।
यन्पारडवसायुक्तो योनेर्लेपात्पृथुत्वनुत् ॥ ११ ॥
संयोजितं चम्पकपल्लवेन जातीप्रसूनैर्मधुकान्वितैश्च ।
सूर्यांशुतप्तं घृतमङ्गनानामभ्यक्ततो हन्ति वराङ्गगन्धम् ॥१२॥
मृणालपद्मोत्पलबीजयुक्तं तैलं वचोशीरयुतं च पक्वम् ।
पैच्छिल्यशैथिल्यविगन्धतादिनाशं करोति स्मरमन्दिरस्य ॥१३॥
प्रक्षालितं तु बहुशः पिचुमन्दतोय-
निम्बत्वचा तदनु निर्मितधूपकार्यम् ।
स्त्रीणां नितम्बकुहरं प्रविमुक्तगन्धं
पैच्छिल्यदोषरहितं च भवेत्प्रगाढम् ॥ १४ ॥
कस्तूरीघनसारकुङ्कुमनखैर्लाक्षातुरुष्कान्वितैः
वराङ्गे कृतः ।
गन्ध्यमत्युत्तमं
सौभाग्यं कुरुते मृदुत्वमसमं धत्ते तनोति श्रियम् ॥१५॥
घृतमधुसैन्धवलेपादपि हरिणीनां च तरुणीनाम् ।
बालानामबलानां विशालतां याति रतिनिलयः ॥ १६ ॥

मायाफलैर्यद्वनसारपुष्पसारान्वितैर्लेपितमादरेण ।
तद्वद्भावेऽपि वलीविमुक्तं स्त्रीणां वराङ्गं श्लथतां न याति १७
या प्रदोषसमये मधुमिश्रं बीजपूरकदलोद्भवचूर्णम् ।
खादयत्युपहता न भवेत्सा पूत्यधःपवननिर्गमवेगैः ॥ १८ ॥

इति श्रीवैद्यशोढलग्रथिते गदनिग्रहे षष्ठे कौमारतन्त्रखण्डे योनिगाढीकरणसौभाग्यविकारचिकित्सिताधिकारो नवमः ॥ ९ ॥

---

## अथ योनिनिर्लोमीकरणाधिकारो दशमः ।

अथातो योनिनिर्लोमीकरणचिकित्सितं व्याख्यास्यामः ।

लोमशातनाः कतिपययोगाः ।

गोदन्तं शङ्खचूर्णं क्षारेण युतं पलाशवृक्षस्य ।
हरति जलेन तु पिष्टं प्रलेपनं योनिलोमानि ॥ १ ॥
हरितालभागपञ्चकमेको भागः पलाशभूतिभ्यः ।
भागश्च यवक्षारः स्याल्लेपो योनिलोमहरः ॥ २ ॥
उत्पाट्य योनिप्रभवाणि रोमाण्यभ्यञ्जनं तत्र ततो विधेयम् ।
कोशातकीबीजसमुद्भवेन तैलेन रोम्णामपुनर्भवाय ॥ ३ ॥
चूर्णेन हालाहलपुष्पजेन विमिश्रितं सर्षपसंभवं यत् ।
तैलं स्थितं सप्तदिनानि तत्स्यादभ्यञ्जनाल्लोमविनाशकारि ॥४॥
समभागाद्धरितालादेको भागश्च किंशुकक्षारात् ।
तद्वच्च शङ्खचूर्णादिति शातनमुत्तमं लोम्नाम् ।
अथवोत्पाटनपूर्वं कौसुम्भं तैलमालेपात् ॥ ५ ॥
कोशाम्रतैलं ताम्रे तु धर्मे क्षारयुतं धृतम् ।
शिरोलेपेन तत्तैलं कुर्यात्तुम्ब्या समं शिरः ॥ ६ ॥
शङ्खालं कृष्णलायुक्तं त्र्यूषणार्कस्नुहीपयः ।
लिप्तं धौते तु तोयेन समूलं रोमशातनम् ॥ ७ ॥

इति श्रीवैद्यशोढलग्रथिते गदनिग्रहे षष्ठे कौमारतन्त्रखण्डे योनिनिर्लोमीकरणाधिकारो दशमः ॥ १० ॥

---

## अथ बालरोगाधिकार एकादशः ।

अथातो बालरोगचिकित्सितं व्याख्यास्यामः—

बालभेदाः ।

त्रिविधा कथिता बालाः क्षीरान्नोभयवर्तिनः ।
स्वास्थ्यं ताभ्यामदुष्टाभ्यां दुष्टाभ्यां रोगसंभवः ॥ १ ॥

विशुद्धक्षीरलक्षणम् ।

यदप्सुरेकतां याति न च दोषैरधिष्ठितम् ।
तद्विशुद्धं पयो

वातादिदुष्टक्षीरलक्षणानि ।

वातादुष्टं तु प्लवतेऽम्भसि ॥ २ ॥
कषायं फेनिलं रूक्षं वर्चोमूत्रविबन्धकृत् ।
पित्तादुष्णाम्लकटुकं पीतराज्यप्सु दाहकृत् ॥ ३ ॥
कफात्सलवणं सान्द्रं जले मज्जति पिच्छिलम् ।
संसृष्टलिङ्गं संसर्गात्त्रिलिङ्गं सान्निपातिकम् ॥ ४ ॥
यथास्वलिङ्गांस्तद्व्याधीञ्जनयत्युपयोजितम् ।

बालानां रोगज्ञानोपायः ।

शिशोस्तीक्ष्णामतीक्ष्णां वा रोदनाल्लक्षयेद्रुजम् ॥ ५ ॥
स यं स्पृशेद्भृशं देशं यत्र च स्पर्शनाक्षमः ।
तत्र विद्याद्रुजं, मूर्ध्नि रुजं चाक्षिनिमीलनात् ॥ ६ ॥
हृदि जिह्वौष्ठदशनश्वासमुष्टिनिपीडनैः ।
कोष्ठे विबन्धवमथुस्तनदंशान्त्रकूजनैः ॥ ७ ॥
आध्मानपृष्ठनमनजठरोन्नमनैरपि ।
बस्तौ गुह्ये च विण्मूत्रसङ्गत्रासाङ्गवीक्षणैः ॥ ८ ॥

वातिकस्तन्यदोषचिकित्सा ।

अथ धात्र्याः क्रियां कुर्याद्यथादोषं यथामयम् ।
तत्र वातात्मके स्तन्ये दशमूलं त्र्यहं पिबेत् ॥ ९ ॥

अथवाऽग्निवचापाठाकटुकाकुष्ठदीप्यकम्।
सभार्गीदारुसरलवृश्चिकालीकणोपणम्॥ १०॥
ततः पिबेदन्यतमं वातव्याधिहरं घृतम्।
रास्नाजमोदासरलदेवदारुवचान्वितम्॥ ११॥
बालो लिह्याद्धृतं तैर्वा विपक्वंससितोपलम्।

पैत्तिकस्तन्यदोषचिकित्सा।

पित्तदुष्टेऽमृताभीरुपटोलीनिम्बचन्दनम्॥ १२॥
धात्री कुमारश्च पिबेत्क्वाथयित्वा ससारिवम्।
अथवा त्रिफलां मुस्तां भूनिम्बं कटुरोहिणीम्॥ १३॥
सारिवादिं पटोलादिं पद्मकादिं तथा गणम्।
घृतान्येभिश्च सिद्धानि पित्तघ्नं च विरेचनम्॥ १४॥
शीतांश्चाभ्यङ्गलेहादीन् युञ्ज्यात्

श्लैष्मिकस्तन्यदोषचिकित्सा।

श्लेष्मात्मके पुनः।
यष्ट्याह्वसैन्धवयुतं कुमारं पाययेद्धृतम्॥ १५॥
सिन्धूत्थपिप्पलीयुतैः पिष्टैः क्षौद्रयुतैरथ।
राठपुष्पैः स्तनौ लिम्पेच्छिशोश्च दशनच्छदौ॥ १६॥
सुखमेवं वमेद्बालस्तीक्ष्णैर्धात्रीं तु वामयेत्।
अथवाऽतिविषामुस्तपङ्ग्रन्थापञ्चकोलकम्॥ १७॥

क्षीरालसकलक्षणम्।

स्तन्ये त्रिदोषमलिने दुर्गन्ध्यामं जलोपमम्।
विबद्धमच्छं विच्छिन्नं फेनिलं चोपवेश्यते॥ १८॥
शकृन्नानाव्यथाकीर्णं मूत्रं पीतं सितं घनम्।
ज्वरारोचकतृट्छर्दिशुष्कोद्गारविजृम्भिकाः॥ १९॥
अङ्गमर्दोऽङ्गविक्षेपः कूजनं वेपथुर्भ्रमः।
घ्राणाक्षिमुखपाकाद्या जायन्तेऽन्येऽपि तद्गदाः॥ २०॥

क्षीरालसकमित्याहुरित्ययं चातिदारुणः।

क्षीरालसकचिकित्सा।

तत्राशु धात्रीं बालं च वमनेनोपपादयेत् ॥ २१ ॥
विहितायां च संसर्ग्यां वचादि योजयेद्गणम्।
पाठाशुण्ठ्यमृताधात्रीतिक्तादेवाह्वसारिवाः ॥ २२ ॥
समुस्तमूर्वेन्द्रयवाः स्तन्यदोषहराः परम्।
अनुबन्धे यथाव्याधि प्रतिकुर्वीत कालवित् ॥ २३ ॥

दन्तोद्भेदजन्या रोगाः।

दन्तोद्भेदश्च रोगाणां सर्वेषामपि कारणम्।
विशेषाज्ज्वरविड्भेदकासच्छर्दिशिरोरुजाम् ॥ २४ ॥
अभिष्यन्दस्य पोथक्या विसर्पस्य च जायते।
दृष्टिभङ्गे बिडालानां मयूराणां शिखोद्गमे ॥ २५ ॥
दन्तोद्भेदे च बालानां न हि किंचिन्न दूयते।

दन्तोद्भेदजन्यरोगचिकित्सा।

यथादोषं यथारोगं यथोद्रेकं यथाभयम् ॥ २६ ॥
विभज्य देशकालादींस्तत्र योज्यं भिषग्जितम्।
य एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च ये ॥ २७ ॥
अतस्तदेव भैषज्यं मात्रा त्वस्य कनीयसी।

बालरोगोपक्रमेषु वमनस्य प्राधान्यम्।

सौकुमार्याल्पकायत्वात्सर्वान्नानुपसेवनैः ॥ २८ ॥
स्निग्धा एव सदा बाला घृतक्षीरनिषेवणात्।
सद्यस्तान् वमनं तस्मात्पाययेन्मतिमान्मृदु ॥ २९ ॥
स्तन्येन तृप्तं वमयेत्क्षीरं क्षीरान्नसेविनम्।
पीतवन्तं तनुं पेयमन्नादं घृतसंयुतम् ॥ ३० ॥
बस्तिसाध्ये विरेकेण मर्शे च प्रतिमर्शनम्।
युञ्ज्याद्विरेचनादींश्च धात्र्या एव यथोदितान् ॥ ३१ ॥

स्तन्यदोषहरो मूर्वादिलेहः ।

मूर्वाव्योषवचाकोलजम्बूत्वग्दारुसर्षपाः ।
सपाठा मधुना लीढाः स्तन्यदोषनिबर्हणाः ॥ ३२ ॥

शीघ्रदन्तोद्गमनोपायः ।

दन्तपालीं समधुना चूर्णेन प्रतिसारयेत् ।
पिप्पल्या धातकीपुष्पधात्रीफलकृतेन वा ॥ ३३ ॥
लावतित्तिरिवल्लूररजः पुष्परसान्वितम् ।
द्रुतं करोति बालानां दन्तकेसरवन्मुखम् ॥ ३४ ॥
दन्तोद्भेदेषु रोगेषु न बालमतियन्त्रयेत् ।
स्वयमप्युपशाम्यन्ति जातदन्तस्य यद्गदाः ॥ ३५ ॥

दन्तोद्भेदजन्यरोगे समङ्गादिघृतम् ।

समङ्गाधातकीरोध्रकुटन्नटबलाह्वयैः ।
महासहाक्षुद्रसहामुद्गबिल्वशलाटुभिः ॥ ३६ ॥
सकार्पासीफलैस्तोये साधितैः साधितं घृतम् ।
क्षीरमस्तुयुतं हन्ति शीघ्रं दन्तोद्भवान् गदान् ॥३७॥
विविधानामयानेतान्वृद्धकाश्यपनिर्मितम् ।

बालानां ज्वरे कतिपययोगाः ।

भद्रदारु नतं यष्टी समङ्गा ससितोपला ॥ ३८ ॥
वातज्वरपरीताङ्गः पिबेदन्तरपानकम् ।
लाजाञ्जनसितावंशीमधुकैः सूक्ष्मचूर्णितैः ॥ ३९ ॥
बालस्य योज्यो मधुना लेहः सर्वज्वरापहः ।
लाजानीलोत्पलकणामधुकाञ्जनशर्कराः ॥ ४० ॥
पित्तज्वरमतीसारं मधुलीढं निवर्तयेत् ।

बालानां ज्वरातिसारे कतिपययोगाः ।

लाजाढ्यपिप्पलीक्वाथः शर्करामधुसंयुतः ॥ ४१ ॥
पीतो ज्वरमतीसारं तृष्णां छर्दिं च नाशयेत् ।
हरिद्राद्वययष्ट्याह्वसिंहीशक्रयवैः कृतः ॥ ४२ ॥

शिशोर्ज्वरातिसारघ्नः कषायः स्तन्यदोषजित् ।
घनकृष्णारुणाशृङ्गीचूर्णं क्षौद्रेण संयुतम् ॥ ४३ ॥
शिशोर्ज्वरातिसारघ्नं सकासश्वासवान्तिहृत् ।
धातकीबिल्वधान्याकरोध्रेन्द्रयववालकैः ।
लेहः क्षौद्रेण बालानां ज्वरातीसारवान्तिहृत् ॥ ४४ ॥

बालानामतिसारे कतिपययोगाः ।

बिल्वं च पुष्पाणि च धातकीनां जलं सरोध्रं गजपिप्पली च ।
क्वाथावलेहौ मधुना विमिश्रौ बालेषु योज्यावतिसारितेषु ॥४५॥
समङ्गाधातकीरोध्रसारिवाभिः शृतं जलम् ।
दुर्धरेऽपि शिशोर्देयमतीसारे समाक्षिकम् ॥ ४६ ॥
लेहस्तैलसिताक्षौद्रतिलयष्ट्याह्वकल्पितः ।
बालस्य स्तन्याचिपतं रक्तस्रावं प्रवाहिकाम् ॥ ४७ ॥
नागरातिविषामुस्तवालकेन्द्रयवैः शृतम् ।
कुमारं पाययेत्प्रातः सर्वातीसारनाशनम् ॥ ४८ ॥
कल्कः प्रियङ्गुकोलास्थिमध्यमुस्तरसाञ्जनैः ।
क्षौद्रलीढः कुमारस्य छर्दितृष्णातिसारनुत् ॥ ४९ ॥
लाजा सयष्टीमधुका शर्करा क्षौद्रमेव च ।
तन्दुलोदकसंयुक्तं क्षिप्रं हन्ति प्रवाहिकाम् ॥ ५० ॥

बालानां शिरःपीडादौ कपित्थपत्रादिलेपः ।

पत्रैः कपित्थचाङ्गेरीबदरीकाकमाचिजैः ।
शिरोरुक्छर्द्यतीसारनाशनं मूर्ध्नि लेपनम् ॥ ५१ ॥
शिरोभितापे सघृतैः शिरः शीतैः प्रलेपयेत् ।

बालानां छर्द्यादौ कतिपययोगाः ।

आम्रास्थिलाजासिन्धूत्थैर्लेहः क्षौद्रेण छर्दिनुत् ॥ ५२ ॥
मुस्ताञ्जनप्रियङ्गूणां चूर्णं तन्दुलवारिणा ।
तृष्णातिसारवमथून् हन्ति पीतं समाक्षिकम् ॥ ५३ ॥

पटोलनिम्बकुटजसप्तपर्णं सदीप्यकम् ।
देवदारुविडङ्गानि सरलो माक्षिकं घृतम् ॥ ५४ ॥
लीढं ज्वरमतीसारं कासं पाण्ड्वामयं वमिम् ।
हन्याच्च मातृजान्दोषाद्रोगानन्यांश्च तद्विधान् ॥ ५५ ॥
बिल्वपेशी सवरूणा धातकी रोध्रबालकम् ।
हन्ति लीढमतीसारं शिशोः क्षौद्रयुतं द्रुतम् ॥ ५६ ॥

बालानां नाभिरोगलक्षणं चिकित्सा च ।

वातेनाध्मापितां नाभिं सरुजां तुन्दसंज्ञिताम् ।
मारुतघ्नैः प्रशमयेत्स्नेहस्वेदोपनाहनैः ॥ ५७ ॥
मृत्पिण्डेनाग्नितप्तेन क्षीरसिक्तेन सोष्मणा ।
स्वेदयेदुत्थितां नाभिं शोफस्तेनोपशाम्यति ॥ ५८ ॥
नाभिपाके निशारोध्रप्रियङ्गुमधुकैः शृतम् ।
तैलमभ्यञ्जने शस्तमेभिर्वाऽप्यवचूर्णनम् ॥ ५९ ॥

बालानां वर्णादिजननार्थं कुष्ठादिलेहः ।

कुष्ठं वचाऽभया ब्राह्मी कनकं क्षौद्रसर्पिषा ।
वर्णायुःकान्तिजननं लेहं बालस्य दापयेत् ॥ ६० ॥

स्तन्याभावे बालानामन्यदुग्धदानम् ।

स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ।

बालानां छर्द्यादौ मिश्यादिलेहः ।

मिशिकृष्णाञ्जनैर्लाजशृङ्गीमरिचमाक्षिकैः ।
लेहः शिशोर्विधातव्यश्छर्दिकासज्वरापहः ॥ ६१ ॥

बालानां कासादौ शृङ्ग्यादिलेहः ।

शृङ्गीं सकृष्णातिविषां विचूर्ण्य लेहं विदध्यान्मधुना शिशूनाम् ।
कासज्वरच्छर्दिभिरार्दितानां समाक्षिकां चातिविषामथैकाम् ६२

बालानां छर्दिशान्तिचिकित्सा ।

पीतं पीतं वमेद्यस्तु स्तन्यं तं मधुसर्पिषा ।
द्विवार्ताकीफलरसं पञ्चकोलं च लेहयेत् ॥ ६३ ॥

बालानां रक्तातिसारे मोचरसादियवागूः।

मोचरसः समङ्गा च धातकी पद्मकेसरम्।
पिष्टैरेतैर्यवागूः स्याद्रक्तातीसारनाशनी ॥ ६४ ॥

बालानामतिसारादौ रजन्यादिलेहः।

रजनीदारुसरलश्रेयसीबृहतीद्वयम्।
पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा ॥ ६५ ॥
ग्रहणीदीपनं श्रेष्ठं मारुतस्यानुलोमनम्।
अतीसारज्वरश्वासकामलापाण्डुरोगजित् ॥ ६६ ॥
बालानां सर्वरोगेषु पूजितं बलवर्णदम्।

बालानां कासादौ द्राक्षादिलेहः।

द्राक्षाविश्वाभयाकृष्णाचूर्णं सक्षौद्रसर्पिषा ॥ ६७ ॥
लीढं कासं निहन्त्याशु श्वासं च तमकं तथा।

बालानां कासे पुष्करमूलादिलेहः।

पुष्करातिविषाशृङ्गीमागधीधन्वयासकैः ॥ ६८ ॥
चूर्णं तु मधुना लीढं बालानां पञ्चकासजित्।

बालानां गुदपाकचिकित्सा।

गुदपाके तु बालानां पित्तघ्नीं कारयेत्क्रियाम् ॥ ६९ ॥
रसाञ्जनं विशेषेण पानाभ्यञ्जनयोर्हितम्।

बालानां मूत्रग्रहे कणादिलेहः।

कणोषणसिताक्षौद्रसूक्ष्मैलासैन्धवैः कृतः ॥ ७० ॥
मूत्रग्रहे प्रयोक्तव्यः शिशूनां लेह उत्तमः।

बालानामानाहादौ सैन्धवादिलेहः।

घृतेन सिन्धुविश्वैलाहिङ्गुभार्गीरजो लिहन् ॥ ७१ ॥
आनाहं वातिकं शूलं जयेत्तोयेन वा शिशुः।

बालानां तालुपाते हरीतक्यादिलेहः।

हरीतकीवचाकुष्ठकल्कं माक्षिकसंयुतम् ॥ ७२ ॥

पीत्वा कुमारः स्तन्येन मुच्यते तालुपातनात्।

बालानां पामादौ गृहधूमादिलेपः।

गृहधूमनिशाकुष्ठराजिकेन्द्रयवैः शिशोः॥ ७३॥
लेपस्तक्रेण हन्त्याशु सिध्मपामाविचर्चिकाः।

बालानां हिक्कायां पञ्चमूलीक्षीरम्।

पञ्चमूलीकषायेण सघृतेन पयः शृतम्॥ ७४॥
सशृङ्गवेरं सगुडं शीतं हिक्कार्दितः पिबेत्।

बालानां गुल्मादौ पथ्यादिघृतम्।

पथ्यासौवर्चलक्षारवेल्लव्योषाग्निहिङ्गुभिः॥ ७५॥
तिक्तया च घृतं सिद्धं समक्षीरं व्यपोहति।
गुल्मानाहगुदभ्रंशश्वासकासविलम्बिकाः॥ ७६॥

बालानामजीर्णादौ चातुर्जातादिसंभारकः।

चातुर्जातकतालीसकुष्ठं त्रिकटुकं तथा।
चविका पिप्पलीमूलं तवक्षीरं च जीरकम्॥ ७७॥
अश्वगन्धा च संभारं चूर्णीकृत्य विनिःक्षिपेत्।
चूर्णाद्विगुणितं खण्डं सर्पिषा लेहयेच्छिशुम्॥ ७८॥
अजीर्णश्वासकासघ्नं बालानामङ्गवर्धनम्।
सर्वरोगहरं श्रेष्ठं बलपुष्टिकरं मतम्॥ ७९॥

बालानां भैषज्यमात्राविचारः।

प्रथमे मासि जातस्य शिशोर्भेषजरक्तिका।
अवलेही प्रकर्तव्या मधुक्षीरघृतान्विता।
एकैकां वर्धयेत्तावद्यावत्संवत्सरो भवेत्॥ ८०॥

बालानां पुष्ट्यर्थं पियालादिमोदकः।

पियालमज्जामधुकमधुलाजासितोपलैः॥ ८१॥
अपस्तन्यस्य संयोज्यः प्रीणनो मोदकः शिशोः।

बालानां वाग्विशुद्ध्यर्थं वचाद्यवलेहिका।

वचायष्ट्याह्वसिन्धूत्थैः पथ्यानागरदीप्यकैः।
शुध्यते वागविर्लीढैः सकुष्ठकणजीरकैः॥ ८२॥

बालग्रहनाशनाः षडिमयोगाः।

महामुण्डितिकोदीच्यकायस्थानं ग्रहापहम्।
सप्तच्छदामयनिशाचन्दनैश्चानुलेपनम्॥ ८३॥
सर्पत्वग्लशुनं मूर्वा सर्षपारिष्टपल्लवाः।
बिडालविड्जालोममेषशृङ्गीवचा मधु॥ ८४॥
धूपः शिशोर्ज्वरघ्नोऽयमशेषग्रहनाशनः।
सर्पत्वग्देवनिर्माल्यकेशाज्यश्वेतसर्षपैः॥ ८५॥
मन्त्राभिमन्त्रितो धूपः शिशूनां ग्रहजित्परम्।
मन्त्रः—ॐ नमो भगवते रुद्राय त्र्यम्बकाय ओं सत्यं सत्यवते स्वाहा।

गौराष्ट्रिका च निर्गुण्डीपुरं कुष्ठं समाल्यकम्।
सर्षपाज्ययुतो धूपो बालकग्रहनाशनः॥ ८६॥

बालानां बुद्धिवृद्ध्यर्थं वचाद्यमष्टमङ्गलं घृतम्।

वचा कुष्ठं तथा ब्राह्मी श्वेतसर्षपकाणि च।
सारिवा सैन्धवं चैव पिप्पली घृतमष्टमम्॥ ८७॥
मेध्यं घृतमिदं सिद्धं पातव्यं च दिने दिने।
दृढस्मृतिः क्षिप्रमेधः कुमारो बुद्धिमान् भवेत्॥ ८८॥
न पिशाचा न रक्षांसि न भूता न च मातरः।
संभवन्ति कुमाराणां पिबतामष्टमङ्गलम्॥ ८९॥

बालानां पुष्ट्यर्थमश्वगन्धाद्यं घृतम्।

अश्वगन्धामूलकल्कैः क्षीरे दशगुणे शृतम्।
घृतं पेयं कुमाराणां पुष्टिकृद्बलवर्धनम्॥ ९०॥

बालानां ज्वरादौ लाक्षाद्यं तैलम्।

लाक्षारससमं सिद्धं तैलं मस्तुचतुर्गुणम्।
रास्नाचन्दनकुष्ठाब्दवाजिगन्धानिशायुगैः॥ ९१॥

शताह्वादारुयष्ट्याह्वमूर्वातिक्ताहरेणुभिः ।
बालानां ज्वररक्षोघ्नमभ्यङ्गाद्बलवर्णकृत् ॥ ९२ ॥

बालानां नेत्ररोगे मनःशिलाद्या वर्तिः ।

मनःशिला शङ्खनाभिः पिप्पल्योऽथ रसाञ्जनम् ।
वर्तिः क्षौद्रेण संयुक्ता बाले सर्वाक्षिरोगजित् ॥ ९३ ॥

बालानां कुकूणकचिकित्सा ।

त्वचो बृहत्या भागौ द्वौ भाग एकोऽञ्जनस्य च ।
कुकूणकेऽक्षिलेपोऽयमञ्जनं चैव शस्यते ॥ ९४ ॥
मण्डलानि च साज्येन गजमूत्रेण लेपयेत् ।

बालानां दन्तोद्भेदे वचादिघृतम् ।

वचाद्विबृहतीपाठातिविषाकटुकाघनैः ॥ ९५ ॥
मरिचैश्च घृतं सिद्धं शस्तं दशनजन्मनि ।

बालानां शोषस्य निदानादिपूर्वकं लक्षणम् ।

अत्यह्नःस्वप्नशीताम्बुश्लैष्मिकस्तन्यसेविनः ॥ ९६ ॥
शिशोः कफेन रुद्धे तु स्रोतःसु रसवाहिषु ।
अरोचकप्रतिश्यायौ ज्वरः कासश्च जायते ॥ ९७ ॥
कुमारः शुष्यति ततः स्निग्धशुक्लमुखेक्षणः ।

बालानां शोषचिकित्सा ।

सैन्धवव्योषशार्ङ्गेष्टापाठागिरिकदम्बकान् ॥ ९८ ॥
शुष्यतो मधुसर्पिर्भ्यामरुच्यादिषु योजयेत् ।
बदरीधातकीधात्रीचूर्णं वा सर्पिषा युतम् ॥ ९९ ॥
अश्वलिण्डरसक्षौद्रयुक्तां वा मधुयष्टिकाम् ।
द्विवार्ताकीफलरसं केवलं वाऽश्वविड्रसम् ॥ १०० ॥
मधुना वा घनव्योषपाठामूर्वाशतावरीः ।
स्थिरावचाद्विबृहतीकाकोलीपिप्पलीनतैः ॥ १०१ ॥
निचुलोत्पलवर्षाभूभार्गीमुस्तैश्च कार्षिकैः ।
सिद्धं प्रस्थार्धमाज्यस्य स्रोतसां शोधनं परम् ॥ १०२ ॥

बालशोषे यष्ट्याद्यं घृतम् ।

यष्ट्याह्वपिप्पलीरोध्रपद्मकोत्पलचन्दनैः ।
तालीसशारिवाभ्यां च साधितं शोषजिद्घृतम् ॥ १०३ ॥

बालानां शोषे शृङ्ग्याद्यं घृतम् ।

शृङ्गीमधुलिकाभार्गीपिप्पलीदेवदारुभिः ।
अश्वगन्धाद्विकाकोलीरास्नार्षभकजीवकैः ॥ १०४ ॥
सूर्यपर्णीविडङ्गैश्च कल्कितैः साधितं घृतम् ।
शिशूनामुत्तमाङ्गे तु शुष्यतां पुष्टिकृत्परम् ॥ १०५ ॥

बालानां शोषे वचाद्यं तैलम् ।

वचावयःस्थातगरकायस्थाचोरकैः शृतम् ।
बस्तमूत्रसुराभ्यां च तैलमभ्यञ्जने हितम् ॥ १०६ ॥

बालानां शोषे कतिपययोगाः ।

द्वे पले तुम्बरुच्छल्लिवचागिरिकदम्बकम् ।
सुरापिष्टः प्रदेहः स्यादधःकाये विशुष्यताम् ॥ १०७ ॥
साशोकरोहिणीं कृष्णां मध्वाज्येन लिहञ्जयेत् ।
शिशुः शोषं शरीरस्य शशवच्छागदुग्धभुक् ॥ १०८ ॥

बालानां शुष्ककासे माषयूषयोगः ।

शुष्ककासे कुमारस्य धात्र्याः स्तन्यविशोधनम् ।
माषयूषः प्रयोक्तव्यः सकृष्णो घृतभर्जितः ॥ १०९ ॥

बालानां कासश्वासे कतिपययोगाः ।

मधुनाऽतिविषां शृङ्गीं पिप्पलीं लेहयेच्छिशुम् ।
एका वाऽतिविषा कासज्वरच्छर्दिनिपीडितम् ॥ ११० ॥
बृहतीफलमूलत्वक्पिप्पलीग्रन्थिकैः कृतः ।
तवक्षीरीयुतः क्वाथो मधुना हन्ति शीलितः ॥ १११ ॥
छर्दिमूर्च्छाज्वरश्वासकासातीसारपीनसान् ।
पञ्चकोलद्विवार्ताकीमूलभार्गीतुगाह्वयाः ॥ ११२ ॥

क्षौद्राज्यलीढा श्वसनकासपीनसरुक्छिदः ।
क्षीरिप्रवालमधुकदर्भमूलबिसोत्पलैः ॥ ११३ ॥
तृष्णादाहज्वरहरः कषायःससितामधुः ।

बालानां भ्रमादौ लाजादिस्तनलेपः ।

लाजैः सचन्दनोशीरयष्टीमधुकपद्मकैः ॥ ११४ ॥
लिप्तो धौतः स्तनः पीतो भ्रमतृड्दाहमोहहा ।

बालानामपतर्पणजरोगचिकित्सा ।

अस्नेहलवणं पीत्वा संस्कृतं लावजं रसम् ॥ ११५ ॥
सशर्करं विजयते बालो लङ्घनजान् गदान् ।

बालानां विकृतदन्तोत्पत्त्युत्पातशान्तिः ।

सदन्तो जायते यस्तु दन्ताः प्राग्यस्य चोत्तराः ॥११६॥
कुर्वीत तस्मिन्नुत्पाते शान्तिकर्म द्विजालये ।
दद्यात्सदक्षिणं बालं नैगमेषं च पूजयेत् ॥ ११७ ॥
नावमारोहयेद्बालं स्नानं स्कन्धे गजस्य वा ।
भोजयेदश्विनावत्र पायसं मधुसर्पिषा ॥ ११८ ॥

बालानामतिसारादौ कतिपययोगाः ।

काकोली गजकृष्णा च रोध्रमेषां समांशतः ।
क्राथो मुस्तान्वितः पीतो बालातीसारनाशनः॥ ११९॥
लाजाचूर्णं सैन्धवाम्रचूर्णमेतत् समांशतः ।
हन्ति व्याधिमतीसारं मधुना सह भक्षितम् ॥ १२० ॥
तवराजकणाचूर्णं सैन्धवं सकटुत्रयम् ।
निरोधं हन्ति बालानां मधुना सह भक्षितम् ॥ १२१ ॥
एला चातिविषा मांसी शुण्ठी कर्कटशृङ्गिका ।
चूर्णकं मधुना भुक्तं छर्दिकासविनाशनम् ॥ १२२ ॥
विश्वैलासैन्धवं हिङ्गु भार्गीचूर्णकमञ्जसा ।
पिष्टमाज्यान्वितं भुक्तं शिशूनां वातहृत्परम् ॥ १२३ ॥

गोक्षुरः सैन्धवं शुण्ठी दारु मुस्ताऽश्मभित्पुरः।
विडङ्गं पिप्पलीयुक्तं चूर्णितं वातशूलनुत् ॥ १२४ ॥
लाजासैन्धवयोश्चूर्णं बीजपूररसान्वितम्।
भक्षितं नाशयत्येव शिशूनां छर्दिमुल्बणाम् ॥ १२५ ॥
रसाञ्जनं शिला शङ्खनाभिः पिच्छिलतन्दुलाः।
बालानां च रुजं हन्ति मधुना लोचनोद्भवाम् ॥१२६॥

पारिगर्भिकनिदानम्।

मातुः कुमारो गर्भिण्याः स्तन्यं प्रायः पिबन्नपि।
कायाग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमैः ॥ १२७ ॥
युज्यते कोष्ठवृद्ध्या च तमाहुः पारिगर्भिकम्।
रोगं परिभवाख्यं च

पारिगर्भिके पिप्पल्याद्यं घृतम्।

युञ्ज्याचत्राग्निदीपनम् ॥ १२८ ॥
पिप्पलीपिप्पलीमूलकटुकादेवदारुभिः।
क्षारद्वयविडाजाजीबिल्वमध्याग्निदीप्यकैः ॥ १२९ ॥
दधिसौवीरकसुरामण्डैश्च विपचेद्घृतम्।
हन्ति प्रयुक्तं तत्काले रोगान् परिभवाश्रयान् ॥१३०॥
पीतं पीतं च यः स्तन्यं सवातमतिसार्यते।
तस्याप्येतत्परं पथ्यं दीपनं बलवर्णकृत् ॥ १३१ ॥

तालुकण्टकनिदानम्।

तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम्।
तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ॥ १३२ ॥
तालुपाकः स्तनद्वेषः कृच्छ्रात्पानं शकृद्द्रवम्।
तृडास्यकण्ठ्वक्षिरुजा ग्रीवादुर्धरता वमिः ॥ १३३ ॥

तालुकण्टकचिकित्सा।

तत्रोत्क्षिप्य यवक्षारक्षौद्राभ्यां प्रतिसारयेत्।
तालुं तद्वत्कणाशुण्ठीगोशकृद्रससैन्धवैः ॥ १३४ ॥

शृङ्गबेरनिशाभृङ्गकल्कितं वटपल्लवैः ।
बद्ध्वा गोशकृता लिप्तं कुकूले स्वेदयेत्ततः ॥ १३५ ॥
रसेन लिम्पेत्ताल्वास्यं नेत्रे च परिषेचयेत् ।

बालानां बुद्धिवर्धनार्थं पाठाद्यं घृतम् ।

पाठावचासैन्धवशिग्रुपथ्याकटुत्रयं गोनवनीतपक्वम् ।
एतद्घृतं पानत एव कुर्यान्मतिं स्मृतिं रूपबलं शिशूनाम् १३६

अहिपूतनकनिदानम् ।

मलोपलेपात्स्वेदाद्वा गुदे रक्तकफोद्भवः ।
ताम्रो व्रणोऽन्तः कण्डूमाञ्जायते भूर्युपद्रवः ॥ १३७ ॥
केचित्तं मातृकादोषं वदन्त्यन्येऽहिपूतनम् ।
पृष्ठरुग्गुदकुट्टं च केचिच्च तमनामकम् ॥ १३८ ॥

अहिपूतनकचिकित्सा ।

तत्र धात्र्या पयः शोध्यं पित्तश्लेष्महरौषधैः ।
शृतशीतं च शीताम्बुयुक्तमुत्तरपानकम् ॥ १३९ ॥
सक्षौद्रतार्क्ष्यशैलेन व्रणं तेनैव लेपयेत् ।
त्रिफलाबदरीप्लक्षत्वक्क्वाथपरिषेचितम् ॥ १४० ॥
कासीसरोचनातुत्थमनोह्वालरसाञ्जनैः ।
लेपयेदम्लपिष्टैर्वा चूर्णितैर्वाऽवचूर्णयेत् ॥ १४१ ॥
रागकण्ड्वुत्कटे कुर्याद्रक्तस्रावं जलौकसा ।
सर्वं च पित्तव्रणजिच्छस्यते गुदकुट्टके ॥ १४२ ॥
व्याधेर्यद्यस्य भैषज्यं स्तनस्तेन प्रलेपितः ।
स्थितो मुहूर्तं धौतोऽनु पीतस्तं तं जयेद्गदम् ॥ १४३ ॥

बालानां ज्वरादिचिकित्साया अतिदेशेन कथनम् ।

भैषज्यं पूर्वमुद्दिष्टं महतां यज्ज्वरादिषु ।
कार्यं गदेषु बालानां तेषु दाहादिकं विना ॥ १४४ ॥

इति श्रीवैद्यवर्यशोढलप्रथिते गदनिग्रहे षष्ठे कौमारतन्त्रखण्डे बालरोगाधिकार एकादशः संपूर्णः ॥ ११ ॥

## अथ बालग्रहाधिकारो द्वादशः।

अथातो बालग्रहविज्ञानं व्याख्यास्यामः—

बालग्रहोत्पत्तिस्तेषां नामानि च।

पुरा गुहस्य रक्षार्थं निर्मिताः शूलपाणिना।
मनुष्यविग्रहाः पञ्च सप्त स्त्रीविग्रहा ग्रहाः॥ १॥
स्कन्दो विशाखो[1] मेषाख्यः श्वग्रहः पितृसंज्ञितः।
शकुनिः पूतना शीतपूतना चान्धपूतना॥ २॥
मुखमण्डितिका तद्वद्रेवती शुष्करेवती।

बालग्रहाणां पूर्वरूपम्।

तेषां ग्रहीष्यतां रूपं प्रततं रोदनं ज्वरः॥ ३॥

बालग्रहाणां सामान्यलक्षणम्।

सामान्यरूपमुत्त्रासजृम्भाभ्रूक्षेपदीनताः।
फेनस्रावोर्ध्वदृष्ट्योष्ठदन्तदंशप्रजागराः॥ ४॥
रोदनं कूजनं स्तन्यविद्वेषः स्वरवैकृतम्।
नखैरकस्मात्परितः स्वधात्र्यङ्गविलेखनम्॥ ५॥

स्कन्दग्रहपीडितलक्षणम्।

तत्रैकनयनस्रावी शिरो विक्षिपते मुहुः।
हतैकपक्षः स्तब्धाङ्गः सस्वेदो नतकन्धरः॥ ६॥
दन्तखादी स्तनद्वेषी त्रस्यन्रोदिति विस्वरम्।
वक्रवक्त्रो वमल्लालां भृशमूर्ध्वं निरीक्षते॥ ७॥
वसासृग्गन्धिरुद्विग्नो बद्धमुष्टिशकृच्छिशुः।
चलितैकाक्षिगण्डभ्रूः संरक्तोभयलोचनः॥ ८॥
स्कन्दार्तस्तेन वैकल्यं मरणं वा भवेद्ध्रुवम्।

स्कन्दापस्मारग्रहपीडितलक्षणम्।

संज्ञानाशो मुहुः केशलुञ्चनं कन्धरानतिः॥ ९॥

---

1 विशाखः स्कन्दापस्मारः।

विनम्य जृम्भमाणस्य शकृन्मूत्रप्रवर्तनम् ।
फेनोद्वमनमूर्ध्वेक्षा हस्तभ्रूपादनर्तनम् ॥ १० ॥
स्तनस्वजिह्वासंदंशसंरम्भज्वरजागराः ।
पूयशोणितगन्धश्च स्कन्दापस्मारलक्षणम् ॥ ११ ॥

नैगमेषग्रहपीडितलक्षणम् ।

आध्मानं पाणिपादस्य स्पन्दनं फेननिर्वमः ।
तृण्मुष्टिबन्धातीसारस्वरदैन्यविवर्णताः ॥ १२ ॥
कूजनं स्तननं छर्दिः कासहिक्काप्रजागराः ।
ओष्ठदंशोऽङ्गसंकोचस्तम्भौ बस्ताङ्गगन्धता ॥ १३ ॥
ऊर्ध्वं निरीक्ष्य हसते मध्ये विनमनं ज्वरः ।
मूर्च्छैकनेत्रशोफश्च नैगमेषग्रहाकृतिः ॥ १४ ॥

श्वग्रहपीडितलक्षणम् ।

कम्पो हृषितरोमत्वं स्वेदश्चक्षुर्निमीलनम् ।
बहिरायामनं जिह्वादंशोऽन्तःकण्ठकूजनम् ॥ १५ ॥
धावनं विट्सगन्धत्वं क्रोशनं श्वानवच्छुनि ।

पितृग्रहपीडितलक्षणम् ।

रोमहर्षो मुहुः श्वासः सहसा रोदनं ज्वरः ॥ १६ ॥
कासातिसारवमथुजृम्भातृट्शवगन्धिताः ।
अङ्गेष्वाक्षेपविक्षेपशोपस्तम्भविवर्णताः ॥ १७ ॥
मुष्टिबन्धः स्रुतिश्चाक्ष्णोर्बालस्य स्युः पितृग्रहे ।

शकुनिग्रहपीडितलक्षणम् ।

स्रस्ताङ्गत्वमतीसारो जिह्वातालुगले व्रणाः ॥ १८ ॥
स्फोटाः सदाहरुक्पाकाः सन्धिषु स्युः पुनः पुनः ।
निश्यह्नि प्रविलीयन्ते पाको वक्त्रे गुदेऽपि वा ॥ १९ ॥
भयं शकुनिगन्धत्वं ज्वरश्च शकुनिग्रहे ।

१ शुनि श्वग्रहे ।

हन्तुकामं जयेद्धोमैः सिद्धमन्त्रप्रवर्तितैः ।
इतरं तु यथाकामं रतिबल्यादिदानतः ॥ ४१ ॥

अथातो बालग्रहप्रतिषेधं व्याख्यास्यामः—

बालग्रहाणां सामान्यचिकित्सा ।

ग्रहेषु माल्येषु शिशुं विविक्ते शरणे स्थितम् ।
स्निग्धा सिक्तसंमृष्टे सदा सन्निहितानले ॥ ४२ ॥
विकीर्णभूतिकुसुमबीजपत्रान्नसर्षपे ।
रक्षोघ्नतलज्वलितप्रदीपहतपाप्मनि ॥ ४३ ॥
व्यवायमद्यपिशितनिवृत्तपरिचारके ।
पुराणसर्पिषाऽभ्यक्तं परिषिक्तं सुखाम्बुना ॥ ४४ ॥
साधितेन बलानिम्बवैजयन्तीनृपद्रुमैः ।

बालग्रहे पारिभद्रादिधूपः ।

[illegible] ॥ ४५ ॥

।

काकजङ्घामहाश्वेताकपित्थक्षीरिपादपैः ॥ ४६ ॥
सकरञ्जकदम्बैश्च धूपं स्नातस्य चाचरेत् ।
द्वीपिव्याघ्राहिसिंहर्क्षचर्मभिर्घृतमिश्रितैः ॥ ४७ ॥
पूतिवृक्षाक्षिसिद्धार्थवचाभल्लातदीप्यकैः ।
सकुष्ठैः सघृतैर्धूपः सर्वग्रहविमोक्षणः ॥ ४८ ॥

बालग्रहनिवारकषड्विधकर्मनिरूपणम् ।

प्रदेहैः सेचनैर्धूपैः पानाभ्यञ्जनधारणैः ।
कर्मभिः षड्विधं प्रोक्तं ग्रहाणां विनिवर्तनम् ॥ ४९ ॥
महाशुण्डितिकोदीच्यक्काथः स्नाने ग्रहापहः ।
सप्तच्छदाभयानिशाचन्दनैश्चानुलेपनम् ॥ ५० ॥
अर्कक्षीरं घृतं चैव शृङ्गवेरं मनःशिला ।
गर्भरूपस्य लेपोऽयं सर्वग्रहनिबर्हणः ॥ ५१ ॥

बालग्रहे मूर्वाद्युद्वर्तनम्।

मूर्वामूलहरिद्रासप्तच्छदसर्षपैस्तुल्यम्।
सर्वशिशुग्रहनाशनमुद्वर्तनमम्बुना पिष्टैः॥ ५२॥
मूर्वाबलाश्वगन्धासप्तच्छदमूलचोरकैः सजलैः।
उद्वर्तनं प्रदिष्टं शिशुगात्रविवर्धनं ग्रहनुत्॥ ५३॥

बालग्रहापहः प्लक्षाद्यो लेपः।

प्लक्षाश्वत्थोदुम्बरमधूकवटगर्दभाण्डतरुणानाम्।
आदाय मुष्टिमात्रं विपाच्य सलिलार्धशेषेण॥ ५४॥
तेन जलेन शिशूनां स्नानं कुर्वीत पूतशीतेन।
त्वग्रक्तकोठमण्डलविस्फोटकशमनमायुष्यम्॥ ५५॥
सर्वग्रहापनोदनमुपचयकरमाशु सर्वसन्धीनाम्।
एषामेव च कल्कैः सरक्तकोठापहो लेपः॥ ५६॥

बालग्रहे सर्षपादिधूपः।

सर्षपा निम्बपत्रार्कमूलमश्वखुरा यवाः।
भूर्जपत्रं घृतं धूपः सर्वग्रहनिवारणः॥ ५७॥
योजयेद्भूतविद्यायां यान्युक्तानि घृतानि च।

बालग्रहे दैवव्यपाश्रयचिकित्सा।

हस्तमात्रं शुचौ देशे गोमयेनोपलेपयेत्॥ ५८॥
तत्राक्षतानां चौक्षाणां स्थाप्यं पात्रं सदक्षिणम्।
विधूमश्चानिलस्तोयं गुग्गुलुः सर्पिराहुतिः॥ ५९॥
शुक्लं पुष्पं बलिर्धूपो दूर्वा श्वेताश्च सर्षपाः।
प्राङ्मुखोऽथ शुचिर्वैद्यस्त्रिवर्णामथवा सिताम्॥ ६०॥
उपविष्टः प्रतिसरां गृहीत्वा वेष्टयेत्तया।
भूर्जे रोचनया विद्यां लिखितामपराजिताम्॥ ६१॥
लक्ष्मणा सहदेवाख्या नागदन्ती कटम्भरा।
मर्कटी कर्कटी लम्बा बृहती कण्टकारिका॥ ६२॥

खरनासा भृगंर्वारुर्महाकोशा शतावरी।
उदङ्मुखस्य बालस्य बध्नीयात्तां ततो गले॥ ६३॥
तदभावे दृढं क्षौमं सूत्रं मन्त्रमिमं जपन्।
बध्नाम्यहं प्रतिसरां नमस्कृत्वा स्वयंभुवे॥ ६४॥
बालानां रक्षणार्थाय शिवां पूर्वविनिर्मिताम्।
इन्द्रः प्रतिसरां तुभ्यं ये च तस्यानुसारिणः॥ ६५॥
वज्राशनिधरा भूता मेघवृन्दानुसारिणः।
ऐरावतस्कन्धगतं ये तु यान्ति पुरन्दरम्॥ ६६॥
यमो वैवस्वतो राजा ये च तस्यानुचारिणः।
मेषसूकरसिंहोष्ट्रगजवाजिसमाननाः॥ ६७॥
कालाः कालायसैः पाशैः स्तब्धाक्षभृकुटीमुखाः।
शक्तिमुद्गरहस्ताश्च खड्गपाशधराश्च ये॥ ६८॥
पाशभृद्वरुणो राजा तोयभृत्सागरालयः।
शारदाभ्रघनाकारा ये च तस्यानुचारिणः॥ ६९॥
महोर्मिमन्तं वेगेन क्षोभयन्ति सरित्पतिम्।
धनाधिपो वैश्रवणः सर्वयक्षाधिपो विभुः॥ ७०॥
नानाकाराश्च ये भूतास्तस्यैवानुचराः सदा।
आदित्या वसवो रुद्रा मारुतश्चाश्विनावपि॥ ७१॥
ते ते सर्वेऽनुमन्यन्तामिमां प्रतिसरां क्रियाम्।
दीर्घमायुस्तथाऽऽरोग्यं तव दास्यन्ति स्वस्ति ते॥ ७२॥
स्वस्ति ते भगवान् ब्रह्मा स्वस्ति नारदपर्वतौ।
स्वस्ति वेदाश्च यज्ञाश्च अग्नीषोमौ तु स्वस्ति ते॥ ७३॥
स्वस्ति ते श्रीर्धृतिः कीर्तिर्लक्ष्मीर्मेधा क्षमा द्युतिः।
स्वस्ति तुष्टिश्च पुष्टिश्च वपुर्ह्रीर्बुद्धिरेव च॥ ७४॥
स्वस्ति रुद्रो विशाखश्च स्कन्दः शक्तिधरश्च ते।
स्वस्ति धाता विधाता च सुपर्णश्च महाबलः॥ ७५॥

स्वस्ति देवाश्च यक्षाश्च मा च ते पापमागमत् ।
दुर्व्याहृतानि दुःस्वप्ने मनसा चिन्तितानि च ॥ ७६ ॥
दुष्टादीनां भयकृतो वाचः प्रतिहता मया ।
रक्षा प्रतिसरा तुभ्यं बद्धेयं पापघातिनी ॥ ७७ ॥
निर्वृतस्त्वं निरुद्वेगो जीव वर्षशतं सुखी । इति ।
अपूपपूपसंयावस्वस्तिकालोपकादयः ॥ ७८ ॥
पायसो मिश्रकः कूरो गुडकूरो हरिद्रकः ।
कृशरा यावकः क्षौद्रं पललं लवणं हविः ॥ ७९ ॥
दधिकुल्मापनिष्पावा रक्तो भूतौदनः पयः ।
पक्वाममांसरुधिरमद्यशुक्तसुरासवाः ॥ ८० ॥
गन्धमाल्यं फलं हेम धूपः सपुरकुन्दुरुः ।
सुरसार्जकनिर्गुण्डीकुसुमं च सपल्लवम् ॥ ८१ ॥
बलिः सशस्त्रैर्देयः स्याद्भवनस्य चतुर्दिशम् ।
चतुष्कचैत्यत्रिपथदेवायतनगोपुरे ॥ ८२ ॥
एकवृक्षोदपाने च सन्ध्ययोर्दीपवाचिशि ।
अथापतितगोवर्चःप्रलिप्ते दर्भसंस्कृते ॥ ८३ ॥
वृत्ते वा चतुरस्रे वा मण्डले कुसुमोज्ज्वले ।
नानाग्रहपरीवारं भिषग्भूतपतिं लिखेत् ।
तं प्रति प्राङ्मुखो विद्यां पठन्नुपहरेद्बलिम् ॥ ८४ ॥

नमोऽभिसारकाय नमः कुरङ्गाय नमः सप्ताभ्यो मातृभ्यो नमः स्कन्दाय इत्येष परिग्रहमन्त्रः मातृणामावाहनं च । हिलतिमिलतिहिलितापललनि स्वाहा । अनेन सप्तकृत्वः परिजप्तेन पानीयचुलुकेनात्माऽभ्युक्षयितव्यः । एवमात्मरक्षा कृता भवति ।

ग्रहाणां सन्निधानाय बलेश्च प्रतिपत्तये ।
सत्यशापेन संयुक्तमिमं मन्त्रं पठेदनु ॥ ८५ ॥

प्रजापतौ तु यन्मत्तं यन्मत्तममरेश्वरे ।
धर्मराजे च यन्मत्तं यन्मत्तं च तपस्विषु ॥ ८६ ॥
धनाधिपे च यन्मत्तं यच्च मत्तं जलाधिपे ।
यन्मत्तमग्निहोत्रेषु सत्यं यच्छ्रोत्रियेषु च ॥ ८७ ॥
पतिव्रतासु यत्सत्यं सांख्ये च महात्मनि ।
एतेन सत्यसमयेन गुह्यकाः सत्यवादिनः ॥ ८८ ॥
दर्शयध्वं स्वरूपाणि सत्यं रक्षत सर्वशः ।
आमन्त्रिता मया सौम्याः सौम्यरूपाः प्रतीच्छत ॥ ८९ ॥
बलिं चोपहृतं गन्धं सर्वे कामरूपग्रहाः ।
दर्शयध्वं स्वरूपाणि बलिं च प्रतिगृह्णताम् ॥ ९० ॥
ततश्चानुपठेदेनां कुलविद्यां समाहितः ।
आला नीला राला काला नकुला ग्रहकारिका ॥ ९१ ॥
सेना सुमेना माला च महासेना यशस्विनी ।
कृतमाला कृतशिरा एतास्तु ग्रहमातरः ॥ ९२ ॥
कुमारवचनाच्छीघ्रं मुञ्चन्तु शिशुं त्विमम् ।
कालकल्पा ज्वलच्छक्तिः किङ्किणीजालभूषिता ॥ ९३ ॥
कुमारवचनाद्दूती संप्राप्ता मुच्यतां शिशुम् ।
पताका कुक्कुटश्छत्रं[1] घण्टा बर्हिधरः शिखी ॥ ९४ ॥
शिरस्तम्भश्च ते मुद्रा मुच्यतां मातरः शिशुम् ।
गन्धं धूपं च माल्यं च कुमारस्ते प्रयच्छति ॥ ९५ ॥
न स्थातव्यं तदाघ्राय स्वां गतिं गच्छ माचिर ।
धात्र्यः सर्वाः कुमाराणां संगता गन्धमादने ॥ ९६ ॥
रक्तध्वजपताकस्य रक्तांशुकनिवासिनः ।
कुमारस्यालयं तत्र यात बालं विमुञ्चत ॥ ९७ ॥

---

१ 'कुक्कुटश्छत्रं' ख. ।

षण्मुखो द्वादशाक्षो यं तस्मिन् काले वृतो वरः।
वीरः कुमाराधिपतिस्तव पुत्रो भविष्यति ॥ ९८ ॥
ब्राह्मणो ब्राह्मणानां तु सर्ववेदविदां वरः।
यक्षराक्षसनागानां गन्धर्वासुरयोरपि ॥ ९९ ॥
पिशाचभूतसंघानां व्याधीनां च स ईश्वरः।
आज्ञापयति यः स्कन्दो गम्यतां गन्धमादनम् ॥ १००
ग्रहो यः कोपयेदाज्ञां कुमारस्य यशस्विनः।
स्थानाच्युतः स वै क्षिप्रं बाह्यः परिषदो भवेत् ॥ १०१
बलेरनन्तरं कुर्याद्धोममभ्यर्च्य पावकम्।
पुष्पैर्भक्ष्यैश्च विविधैश्चरुणा लोहितैस्तथा ॥ १०२ ॥
गन्धैर्गुग्गुलुधूपेन समिधः खादिरादयः।
शतमष्टोत्तरं ग्राह्या अथवा चन्दनद्रुमात् ॥ १०३ ॥
अग्निदण्डं प्रवक्ष्यामि सर्वग्रहविमोक्षणम्।
ब्रह्मण्यं त्वनलं देवं हव्यकव्यप्रतीच्छकम् ॥ १०४ ॥
देवानां प्रमुखं स्वस्ति स्वाहापरिवृतं हुतम्।
सहस्रविधो दहनः पावकः सर्वभक्षणः ॥ १०५ ॥
त्वं हि यज्ञश्च यूपश्च त्वं हि धर्मवतां गतिः।
हिरण्यरेता देवस्त्वं त्वं हि वेदविदां गतिः ॥ १०६ ॥
दुर्वृत्तानां विनाशाय त्वं हि चोत्पादितः सुरैः।
दह संग्रह देव त्वमिदं दुष्टस्य निग्रहम् ॥ १०७ ॥
अग्नये स्वाहा। महाग्नये स्वाहा ॥
त्वं हि शान्तिकरो वह्निस्त्वं हि मारुतवाहनः।
हरिप्रधानगतिरासीदिदं गृह्य गुह्यकम् ॥ १०८ ॥
उत्सादय तेजसा त्वं मम वश्यं च तत्कुरु।

---

१ "°चरुणालोहितैरपि' ख.।

दुष्टग्रहनिवारणं सर्वेषूपद्रवेषु च ॥ १०९ ॥
त्वया कृतेन होमेन शीघ्रं शान्तिः प्रजायते ।
आयाहि वह्नुदेवानां त्वं हि वक्रं पुरातनम् ।
तेन सत्येन देवेश इमं साधय मे ग्रहम् ॥ ११० ॥

नमोऽस्तु ते हव्यवाहन दण्डी दह २ दर्शय २ तेज २ मोहय २ अपसारमुद्धाटय कुमारपिशाचरेवतीरोदनत्रासनवि- [illegible] ..विना..नाविष्ट [illegible] नपेन..न्य- ..नां नागराक्षससंतर्जनदण्डनरोपणाविधूम्रसारय भगवन्न- ..ऽग्निवीर्य नमस्तेजसा स्वेनोत्सादय स्वाहा हव्यवाहनाय स्वाहा यमाय स्वाहा ।

नश्यन्त्यनेन होमेन समस्ता बालकग्रहाः ।
कुर्यादथ बलिं होमं स्नपनं मन्त्रतन्त्रवित् ॥ १११ ॥
तत्राभावरुणे ताम्रे तप्तहेमसमर्चिषि ।
तारावैडूर्यसदृशे शशिविद्युत्समप्रभे ॥ ११२ ॥
घृतमण्डाभवर्णे वा गन्धेन च घृतोपमे ।
केतक्युत्पलदध्याभे ध्रुवमारोग्यमादिशेत् ॥ ११३ ॥
अनारोग्यं तु नीलेऽग्नौ कपिले मसानिष्प्रभे ।
कृष्णे कपोते दुर्गन्धे मत्स्यपूयास्रगन्धिके ।
वचालशुनगन्धाभे विस्रे कर्दमगन्धिके ॥ ११४ ॥

बालग्रहानुबन्धचिकित्सा ।

अनुबन्धान् यथाकृच्छ्रं ग्रहापायेऽप्युपद्रवान् ।
बालामयनिषेधोक्तभेषजैः समुपाचरेत् ॥ ११५ ॥

इति श्रीशोटलप्रचिते गदनिग्रहे षष्ठे कौमारतन्त्रखण्डे बालग्रहप्रतिषेधाख्यो द्वादशोऽध्यायः ॥

समाप्तश्चायं कौमारतन्त्राख्यः षष्ठः खण्डः ।

# गदनिग्रहः ।



## अथ विषतन्त्राख्यः सप्तमः खण्डः ।

### अथ स्थावरविषनिदानाधिकारः प्रथमः ।

तत्र पूर्वं स्थावरविषनिदानं व्याख्यास्यामः—

विषभेदाः ।

स्थावरं जङ्गमं चैव द्विविधं विषमुच्यते ।
मूलाद्यात्मकमाद्यं स्यात्परं सर्पादिसंभवम् ॥ १ ॥

जङ्गमविषलक्षणम् ।

निद्रां तन्द्रां क्लमं दाहं सपाकं लोमहर्षणम् ।
शोफं चैवातिसारं च कुरुते जङ्गमं विषम् ॥ २ ॥

स्थावरविषलक्षणम् ।

स्थावरं तु ज्वरं हिक्कां दन्तहर्षं गलग्रहम् ।
फेनच्छर्द्यरुचिश्वासं मूर्च्छां च कुरुते विषम् ॥ ३ ॥

विषदातृलक्षणम् ।

इङ्गितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतैः ।
जानीयाद्विषदातारमेभिर्लिङ्गैश्च बुद्धिमान् ॥ ४ ॥
न ददात्युत्तरं पृष्टो विवक्षुर्मोहमेति च ।
अपार्थं बहु संकीर्णं भाषते चापि मूढवत् ॥ ५ ॥
हसत्यकस्मात्स्फोटयेदङ्गुलीर्विलिखेन्महीम् ।
वेपथुश्चास्य भवति त्रस्तश्चान्योन्यमीक्षते ॥ ६ ॥
विवर्णवक्त्रो ध्यामश्च नखैः किंचिच्छिनत्त्यपि ।
आलभेत सकृद्दीनः करेण च शिरोरुहान् ॥ ७ ॥
वर्तते विपरीतं च विषदाता विचेतनः ।

मूलादिविषाणां विशिष्टं लक्षणम्।

उद्वेष्टनं मूलविषैः प्रलापो मोह एव च ॥ ८ ॥
जृम्भणं वेपनं श्वासो मोहः पत्रविषेण च।
मुष्कशोफः फलविषैर्दाहोऽन्नद्वेष एव च ॥ ९ ॥
भवेत्पुष्पविषैश्छर्दिराध्मानं श्वास एव च।
त्वक्सारनिर्यासविषैरुपयुक्तैर्भवन्ति हि ॥ १० ॥
आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंश्रवाः।
फेनागमः क्षीरविषैर्विड्भेदो गुरुजिह्वता ॥ ११ ॥
हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि।
प्रायेण कालघातीनि विषाण्येतानि निर्दिशेत् ॥ १२ ॥

विषदिग्धशस्त्रादिहतलक्षणम्।

सद्यः क्षतं पच्यते यस्य जन्तोः स्रवेद्रक्तं पच्यते चाप्यभीक्ष्णम्।
कृष्णीभूतं क्लिन्नमत्यर्थपूति क्षतान्मांसं शीर्यते यस्य चापि १३

तृष्णा मूर्च्छा भ्रान्तिदाहौ ज्वरश्च
दिग्धाहतं तं पुरुषं व्यवस्येत्।
लिङ्गान्येतान्येव कुर्यादमित्रै-
र्व्रणे विषं यस्य दत्तं प्रमादात् ॥ १४ ॥

इति श्रीवैद्यरसोटल्लमयिते मदनिग्रहेऽसप्तमे विषतन्त्रखण्डे स्थावर-
विषनिदानाधिकारः प्रथमः।

---

## अथ जगङ्गमविषनिदानाधिकारो द्वितीयः।

अथातो जङ्गमविषनिदानं व्याख्यास्यामः—

त्रिविधसर्पदष्टलक्षणम्।

वातपित्तकफात्मानो भोगिमण्डलिराजिलाः।
यथाक्रमं समाख्याता व्यन्तरा द्वन्द्वरूपिणः ॥ १५ ॥
दंशो भोगिकृतः कृष्णः सर्ववातविकारकृत्।
पीतो मण्डलिजः शोफो मृदुः पित्तविकारवान् ॥ १६

राजिलोत्थो भवेद्दंशः स्थिरशोफश्च पिच्छिलः ।
पाण्डुः स्निग्धोऽतिसान्द्रास्त्रश्च सर्वश्लेष्मविकारवान् ॥ १७

अंसाध्यसर्पदष्टलक्षणम् ।

अश्वत्थदेवायतनश्मशानवल्मीकसन्ध्यासु चतुष्पथेषु ।
याम्ये च दष्टाः परिवर्जनीया ऋक्षे नरा मर्मसु ये च दष्टाः ॥ १८ ॥
दर्वीकराणां विषमाशु हन्ति सर्वाणि चोष्णे द्विगुणीभवन्ति ।
अजीर्णपित्तातपपीडितेषु बालेषु वृद्धेषु बुभुक्षितेषु ॥ १९ ॥
क्षीणे क्षते मेहिनि कुष्ठजुष्टे रूक्षेऽबले गर्भवतीषु चापि ।
शस्त्रक्षते यस्य न रक्तमेति राज्यो लताभिश्च न संभवन्ति ॥ २०
शीताभिरद्भिश्च न रोमहर्षो विषाभिभूतं परिवर्जयेत्तम् ।
जिह्मं मुखं यस्य च केशपातो नासावसादश्च सकण्ठभङ्गः ॥ २१
कृष्णः सरक्तः श्वयथुश्च दंशे हन्वोः स्थिरत्वं च स वर्जनीयः ।
वर्तिर्घना यस्य निरेति वक्त्राद्रक्तं स्रवेदूर्ध्वमधश्च यस्य ॥ २२ ॥
दंष्ट्रानिपाताश्चतुरश्च यस्य तं चापि वैद्यः परिवर्जयेच्च ।
उन्मत्तमत्यर्थमुपद्रुतं वा हीनस्वरं वाऽप्यथवा विवर्णम् ॥ २३ ॥
सारिष्टमत्यर्थमवेगिनं च ज्ञात्वा नरं कर्म न तत्र कुर्यात् ।

दूषीविषलक्षणम् ।

जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा ॥ २४ ॥
स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति ।
वीर्याल्पभावान्न निपातयेत्तु कफान्वितं वर्षगणानुबन्धि ॥ २५ ॥
तेनार्दितो भिन्नपुरीषवर्णो वैगन्ध्यवैरस्ययुतः पिपासी ।
मूर्च्छन्वमन् गद्गदवाग्विषण्णो विचेष्टमानोऽरतिमाप्नुयाद्वा ॥ २६ ॥
आमाशयस्थे कफवातरोगी, पक्वाशयस्थेऽनिलपित्तरोगी ।
भवेत्समुद्धस्तशिरोरुहाङ्गो विलूनपक्षस्तु यथा विहङ्गः ॥ २७ ॥
स्थितं रसादिष्वथवा यथोक्तान् करोति धातुप्रभवान् विकारान् ।
कोपं च शीतानिलदुर्दिनेषु यात्याशु, पूर्वं शृणु तस्य रूपम् ॥ २८ ॥

मूलादिविषाणां विशिष्टं लक्षणम् ।

उद्वेष्टनं मूलविषैः प्रलापो मोह एव च ॥ ८ ॥
जृम्भणं वेपनं श्वासो मोहः पत्रविषेण च ।
मुष्कशोफः फलविषैर्दाहोऽन्नद्वेष एव च ॥ ९ ॥
भवेत्पुष्पविषैश्छर्दिराध्मानं श्वास एव च ।
त्वक्सारनिर्यासविषैरुपयुक्तैर्भवन्ति हि ॥ १० ॥
आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंस्रवाः ।
फेनागमः क्षीरविषैर्विड्भेदो गुरुजिह्वता ॥ ११ ॥
हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि ।
प्रायेण कालघातीनि विषाण्येतानि निर्दिशेत् ॥ १२

विषदिग्धशस्त्रादिहतलक्षणम् ।

सद्यः क्षतं पच्यते यस्य जन्तोः स्रवेद्रक्तं पच्यते चाप्यभीक्ष्ण
कृष्णीभूतं क्लिन्नमत्यर्थपूति क्षतान्मांसं शीर्यते यस्य चापि
तृष्णा मूर्च्छा भ्रान्तिदाहौ ज्वरश्च
दिग्धाहतं तं पुरुषं व्यवस्येत् ।
लिङ्गान्येतान्येव कुर्यादमित्रै-
र्व्रणे विषं यस्य दत्तं प्रमादात् ॥ १४ ॥

इति श्रीवैद्यवरसोढलप्रथिते गदनिग्रहेऽष्टमे विषतन्त्रखण्डे स्थावर-
विषनिदानाधिकारः प्रथमः ।

---

## अथ जङ्गमविषनिदानाधिकारो द्वितीयः ।

अथातो जङ्गमविषनिदानं व्याख्यास्यामः—

त्रिविधसर्पदष्टलक्षणम् ।

वातपित्तकफात्मानो भोगिमण्डलिराजिलाः ।
यथाक्रमं समाख्याता अन्तरा द्वन्द्वरूपिणः ॥ १५
दंशो भोगिकृतः कृष्णः सर्ववातविकारकृत् ।
पीतो मण्डलिजः शोफो मृदुः पित्तविकारवान् ॥

राजिलोरथो भवेदंशः स्थिरशोफश्च पिच्छिलः।
पाण्डुः स्निग्धोऽतिसान्द्रास्रक्सर्वश्लेष्मविकारवान्॥ १७

असाध्यसर्पदष्टलक्षणम्।

अश्वत्थदेवायतनश्मशानवल्मीकसन्ध्यासु चतुष्पथेषु।
याम्ये च दष्टाः परिवर्जनीया ऋक्षे नरा मर्मसु ये च दष्टाः॥ १८
दर्वीकराणां विषमाशु हन्ति सर्वाणि चोष्णे द्विगुणीभवन्ति।
अजीर्णपित्तातपपीडितेषु बालेषु वृद्धेषु बुभुक्षितेषु॥ १९॥
क्षीणे क्षते मेहिनि कुष्ठजुष्टे रूक्षेऽबले गर्भवतीषु चापि।
शस्त्रक्षते यस्य न रक्तमेति राज्यो लताभिश्च न संभवन्ति॥ २०
शीताभिरद्भिश्च न रोमहर्षो विषाभिभूतं परिवर्जयेत्तम्।
जिह्मं मुखं यस्य च केशपातो नासावसादश्च सकण्ठभङ्गः॥ २१
कृष्णः सरक्तः श्वयथुश्च दंशे हन्वोः स्थिरत्वं च स वर्जनीयः।
वर्तिर्घना यस्य निरेति वक्त्राद्रक्तं स्रवेदूर्ध्वमधश्च यस्य॥ २२॥
दंष्ट्रानिपाताश्चतुरश्च यस्य तं चापि वैद्यः परिवर्जयेच्च।
उन्मत्तमत्यर्थमुपद्रुतं वा हीनस्वरं वाऽप्यथवा विवर्णम्॥ २३॥
सारिष्टमत्यर्थमवेगिनं च ज्ञात्वा नरं कर्म न तत्र कुर्यात्।

दूषीविषलक्षणम्।

जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा॥२४॥
स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति।
वीर्याल्पभावान्न निपातयेत्तु कफान्वितं वर्षगणानुबन्धि॥२५॥
तेनार्दितो भिन्नपुरीषवर्णो वैगन्ध्यवैरस्ययुतः पिपासी।
मूर्च्छन्वमन् गद्गदवाग्विमुह्यन्विचेष्टमानोऽरतिमाप्नुयाद्वा॥२६॥
आमाशयस्थे कफवातरोगी, पक्वाशयस्थेऽनिलपित्तरोगी।
भवेत्समुद्ध्वस्तशिरोरुहाङ्गो विलूनपक्षस्तु यथा विहङ्गः॥ २७॥
स्थितं रसादिष्वथवा यथोक्तान् करोति धातुप्रभवान् विकारान्।
कोपं च शीतानिलदुर्दिनेषु यात्याशु, पूर्वं शृणु तस्य रूपम्॥२८॥

निद्रा गुरुत्वं च विजृम्भणं च विश्लेषहर्षावथवाऽङ्गमर्दः ।
ततः करोत्यन्नमदाविपाकावरोचकं मण्डलकोठजन्म ॥ २९ ॥
मांसक्षयं पादकरप्रशोफं मूर्च्छां तथा छर्दिमथातिसारम् ।
दूषीविषं श्वासतृषाज्वरांश्च कुर्यात्प्रवृद्धिं जठरस्य चापि ॥ ३० ॥
उन्मादमन्यज्जनयेत्तथाऽन्यदानाहमन्यत्क्षपयेच्च शुक्रम् ।
गाद्गद्यमन्यज्जनयेच्च कुष्ठं तांस्तान्विकारांश्च बहुप्रकारान् ॥ ३१ ॥

दूषितं देशकालान्नदिवास्वप्नैरभीक्ष्णशः ।
यस्मात्संदूषयेद्धातूंस्तस्माद्दूषीविषं स्मृतम् ॥ ३२ ॥
साध्यमात्मवतः सद्यो याप्यं संवत्सरोत्थितम् ।
दूषीविषमसाध्यं तु क्षीणस्याहितसेविनः ॥ ३३ ॥
सौभाग्यार्थं स्त्रियः स्वेदं रजो नानाङ्गजान्मलान् ।
शत्रुप्रयुक्तांश्च गरान् प्रयच्छन्त्यन्नमिश्रितान् ॥ ३४ ॥
तैः स्यात्पाण्डुः कृशोऽल्पाग्निर्गरश्चास्योपजायते ।
मर्मप्रधमनाध्मानं हस्तयोः शोफलक्षणम् ॥ ३५ ॥
जठरं ग्रहणीदोषो यक्ष्मा गुल्मः क्षयो ज्वरः ।
एवंविधस्य चान्यस्य व्याधेर्लिङ्गानि दर्शयेत् ॥ ३६ ॥

विषलूतालक्षणम् ।

यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदबिन्दवः ।
तस्माल्लूतास्तु भाष्यन्ते संख्यया तास्तु षोडश ॥ ३७ ॥
ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च ।
ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः ॥ ३८ ॥
पिडिका विविधाकारा मण्डलानि महान्ति च ।
शोफा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा ॥ ३९ ॥
सामान्यं सर्वलूतानामेतद्दंशस्य लक्षणम् ।
दंशमध्ये तु यत्कृष्णं श्यावं वा जालकान्वितम् ॥ ४० ॥

ऊर्ध्वाकृति भृशंपाकं क्लेदशोथज्वरान्वितम् ।
दूषीविषार्भिर्लूताभिस्तद्दष्टमिति निर्दिशेत् ॥ ४१ ॥
शोफः श्वेताः सिता रक्ता पीता वा पिडिका ज्वरः ।
प्राणान्तिकाभिर्दाहश्च श्वासहिक्काशिरोग्रहाः ॥ ४२ ॥

मूषिकविषलक्षणम् ।

आदंशाच्छोणितं पाण्डुर्मण्डलानि ज्वरोऽरुचिः ।
लोमहर्षश्च दाहश्चाप्याखुदूषीविषार्दिते ॥ ४३ ॥
मूर्च्छाङ्गशोफवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः ।
शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यमूषिकैः ॥ ४४ ॥

कृकलासकविषलक्षणम् ।

कार्ष्ण्यं श्यावत्वमथवा नानावर्णत्वमेव वा ।
स्नेहोऽथ वर्चसो भेदो दष्टे स्यात्कृकलासकैः ॥ ४५ ॥

वृश्चिकविषलक्षणम् ।

दहत्यग्निरिवादौ तु भिनत्तीवोर्ध्वमाशु च ।
वृश्चिकस्य विषं याति दंशे पश्चात्तु तिष्ठति ॥ ४६ ॥
दष्टोऽसाध्यस्तु हृद्घ्राणरसनोपहतो नरः ।
मांसैः पतद्भिरत्यर्थं वेदनार्तो जहात्यसून् ॥ ४७ ॥

कणभदष्टलक्षणम् ।

विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि च ।
लक्षणं कणभैर्दष्टे दंशश्चैवावशीर्यते ॥ ४८ ॥

उच्चिटिङ्गदष्टलक्षणम् ।

हृष्टरोमोच्चिटिङ्गेन स्तब्धलिङ्गो भृशार्तिमान् ।
दष्टः शीतोदकेनेव सिक्तान्यङ्गानि मन्यते ॥ ४९ ॥

सविषमण्डूकदष्टलक्षणम् ।

एकदंष्ट्रार्दितः शूनः सरुजः पीतकः सतृट् ।
छर्दिस्तन्द्रा च सविषैर्मण्डूकैर्दष्टलक्षणम् ॥ ५० ॥

सविषमत्स्यदष्टलक्षणम् ।

मत्स्यास्तु सविषाः कुर्युर्दाहं शोफं रुजं तथा ।

सविषजलौकोदष्टलक्षणम् ।

कण्डूं शोफं ज्वरं मूर्च्छां सविषास्तु जलौकसः ॥५१॥

गृहगोधिकादष्टलक्षणम् ।

विदाहं श्वयथुं तोदं स्वेदं च गृहगोधिका ।

शतपदीविषलक्षणम् ।

दंशे स्वेदं रुजं दाहं कुर्याच्छतपदीविषम् ॥ ५२ ॥

मशकदष्टलक्षणम् ।

कण्डूमान्मशकैरीषच्छोफः स्यान्मन्दवेदनः ।
असाध्यकीटसदृशमसाध्यमशकक्षतम् ॥ ५३ ॥

मक्षिकादष्टलक्षणम् ।

सद्यः प्रस्राविणी श्यावा दाहमूर्च्छाज्वरान्विता ।
पिडिका मक्षिकादंशे तासां तु स्थगिकाऽसुहृत् ॥ ५४॥
चतुष्पद्भिर्द्विपद्भिश्च नखदन्तविषं च यत् ।
शूयते पच्यते चापि स्रवति ज्वरयत्यपि ॥ ५५ ॥

विषमुक्तलक्षणम् ।

प्रशान्तदोषं प्रकृतिस्थधातुमन्नाभिकामं सममूत्रविट्कम् ।
प्रसन्नवर्णेन्द्रियवाग्विचेष्टं वैद्यस्तु विद्यादविषं मनुष्यम् ॥५६॥

इति श्रीवैद्यवरशोढलप्रथिते गदनिग्रहे सप्तमे निघण्टप्रखण्डे जङ्गम-विषनिदानाधिकारो द्वितीयः ।

---

## अथ सर्पविषचिकित्साधिकारस्तृतीयः ।

अथातः सर्पविषचिकित्सितं व्याख्यास्यामः—

सर्वविषे सामान्यचिकित्सा ।

विषेषु सर्वेष्वपि च सर्वस्थानगतेषु च ।
अवृश्चिकोचिटङ्गेषु प्रायः शीतो विधिर्हितः ॥ १ ॥

सर्पविषे कतिपययोगाः ।

शिरीषपुष्पस्वरसे सप्ताहं मरिचं सितम् ।
भावितं सर्पदष्टेभ्यो नस्यपानाञ्जने हितम् ॥ २ ॥

द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रचतुष्पलम् ।
अपि तक्षकदष्टानां पानमेतत्सुखावहम् ॥ ३ ॥
सिन्दुवारस्य मूलं च श्वेता च गिरिकर्णिका ।
पानाद्दर्वीकरैर्दष्टो नस्यं मधु सनातनम् ॥ ४ ॥
व्योषं प्रतिविषा कुष्ठं गृहधूमो हरेणुका ।
तगरं कटुका क्षौद्रं हन्ति राजीमतां विषम् ॥ ५ ॥
साज्या मयूरचूडा तु पीता तन्दुलवारिणा ।
सर्वसर्पविषं हन्यात्काकजङ्घाऽथवा ध्रुवम् ॥ ६ ॥
तन्दुलीयकमूलं तु पीतं तन्दुलवारिणा ।
तक्षकेणापि संदष्टं निर्विषं कुरुते नरम् ॥ ७ ॥
सम्यङ्मधूकसारेण गोमूत्रभावितेन तु ।
दद्याद्विषापहं नस्यं सिद्धं चापि प्रलेपनम् ॥ ८ ॥
मञ्जिष्ठा मधुयष्ट्याह्वो जीवकर्षभकावुभौ ।
काश्मर्यवटशुङ्गानां पानं मण्डलिनां जयेत् ॥ ९ ॥
पुनर्नवायाः श्वेतायाः शिफां तन्दुलवारिणा ।
वन्ध्याकर्कोटकीं वाऽपि पिबेत्फणिविषापहाम् ॥ १० ॥
हरिद्रे तु हिते ख्याते ताभ्यां नास्ति समं क्वचित् ।
अगदस्तु विषार्तानां प्रलेपादिप्रयोजितः ॥ ११ ॥
स्नानभोजनपानीयकार्येषु च विशेषतः ।
भिषक्सर्वविषार्तानां तमेव परियोजयेत् ॥ १२ ॥
विडङ्गस्य शिफा पिष्टा सम्यक्तन्दुलवारिणा ।
वासुकेरपि दुर्वारं पीता हन्याद्विषं क्षणात् ॥ १३ ॥

महागदः ।

त्रिवृद्विशल्या मधुकं हरिद्रे रक्ता नरेन्द्रो लवणश्च वर्गः ।
कटुत्रिकं चैव विचूर्णितानि शृङ्गे निदध्यान्मधुसंयुतानि ॥१४॥
एषोऽगदो हन्ति विषं प्रयुक्तः पानाञ्जनाभ्यञ्जननस्ययोगैः ।
अवार्यवीर्यो विषवेगहन्ता महागदो नाम महाप्रभावः ॥ १५ ॥

सर्वविषेऽजितोऽगदः ।

विडङ्गपाठात्रिफलाजमोदाहिङ्गूनि वक्रत्रिकटूनि चैव ।
वर्गश्च सर्वो लवणः सुसूक्ष्मः सचित्रकः क्षौद्रयुतो विधेयः १६
शृङ्गे गवां शृङ्गमयेन चैव प्रच्छादितः पक्षमुपेक्षितश्च ।
एषोऽगदः स्थावरजङ्गमानां हन्ता विषाणामजितो हि नाम्ना१७

सर्वविषे चूर्णागदः ।

सोशीरनिम्बं तगरं च कुष्ठं मुस्तं सताप्यं कुटजं सरोध्रम् ।
त्वक्सप्तपर्णस्य च चूर्णमेतद्योगं नवाङ्गं मधुना च सार्धम् ॥१८॥
कृष्णायसे काञ्चनराजते वा पीतं विषाणां शमनं त्रयाणाम् ।
चूर्णागदो वारण एष सिद्धो हन्ता विषाणां सचराचराणाम् १९

सर्वविषे पञ्चशिरीषोऽगदः ।

शिरीषपुष्पपत्रत्वक्फलमूलकृतोऽगदः ।
सिद्धः पञ्चशिरीषोऽयं चरस्थिरविषापहः ॥ २० ॥

सर्वविषे सैन्धवादियोगः ।

सैन्धवं मरिचैस्तुल्यं निम्बबीजं तयोः समम् ।
घृतमध्वायुतो हन्ति विषं स्थावरजङ्गमम् ॥ २१ ॥

सार्वकामिकोऽगदः ।

देवदारु हरिद्रे द्वे सरलं चन्दनोऽगुरुः ।
रास्ना गोरोचनाऽजाजी गुग्गुल्विक्षुरसो नतम् ॥ २२ ॥
चूर्णं तु सैन्धवानन्तागोपित्तमधुसंयुतम् ।
चतुष्पदादिदष्टानामगदः सार्वकामिकः ॥ २३ ॥

सर्पदंशे तगरमूलयोगः ।

पिण्डीतगरकमूलं पुष्येणोत्पाट्य योजितं दंशे ।
मृतमपि दष्टकपुरुषं चालयतीति नो चित्रम् ॥ २४ ॥

सर्वविषे बोधनार्थं नक्तमालाद्यञ्जनम् ।

नक्तमालफलव्योषबिल्वमूलनिशाद्वयम् ।
सौरसं पुष्पमाजं च मूत्रं बोधनमञ्जनम् ॥ २५ ॥

विषे वन्ध्याकर्कोटकीमूलयोगः ।

वन्ध्याकर्कोटजं मूलं छागमूत्रेण भावितम् ।
नस्यं काञ्जिकसंपिष्टं विषोपहतचेतसः ॥ २६ ॥

विषे श्वेतपुनर्नवामूलयोगः ।

यः पिबति पुष्यदिवसे जलपिष्टं सितपुनर्नवामूलम् ।
तत्सन्निधौ न चर्प वृश्चिकभुजगाः प्रसर्पन्ति ॥ २७ ॥

विषे गरुडप्रतिमाधारणम् ।

तरक्षुदन्तेन विनिर्मितां यः पतत्रिराजप्रतिमां बिभर्ति ।
न वीक्षितुं तस्य मुखं क्षमन्ते येऽपि स्वयं वासुकितक्षकाद्याः २८

विषे गरुडीमूलयोगः ।

पुष्ये निपीतं गुरुडीसमुत्थं मूलं नृणां पन्नगदंशभीतिम् ।
संवत्सरार्धं हरति प्रसह्य का वृश्चिकाद्यैर्गणना न तेषाम् ॥ २९ ॥
नस्याञ्जनालेपनपानयोगैर्भुजङ्गदष्टस्य विषं निहन्ति ।
मूलं गरुड्याः परिपीयमानं न श्यामलत्वं प्रतिपद्यते चेत् ॥३०॥
लज्जावतीमूलविलिप्तपाणिर्बद्धाऽथवा तत्र तदीयमूलम् ।
गृह्णाति सर्पान् भ्रमतोऽथ घोरान्हठात्सुपर्णप्रतिमप्रभावः ॥३१

मण्डलिविषे काकादनीमूलयोगः ।

अपहरति मण्डलिविषं पानेनालेपनेन वा सद्यः ।
काकादन्या मूलं काञ्जिकपरिपेषितं पुंसाम् ॥ ३२ ॥

कृत्रिमविषे तण्डुलीयकमूलयोगः ।

तन्दुलोदकयुतं परिपिष्टं मूलमम्बुदरवस्य घृताढ्यम् ।
पीयमानमतिदारुणवेगं कृत्रिमं गरलमाशु निहन्ति ॥ ३३ ॥

मण्डलिविषे नीलिनीमूलयोगः ।

तन्दुलजलेन पिष्टं नीलिन्या मूलमाशु नाशयति ।
पानेन मण्डलिविषं यदि वा लज्जावतीमूलम् ॥ ३४ ॥

दर्वीकरविषे लज्जावत्यादियोगः ।

लज्जावती च वन्ध्या च काकादन्यभिधा तथा ।
पाननस्याञ्जनालेपैर्हन्ति दार्वीकरं विषम् ॥ ३५ ॥

इति श्रीशोढलप्रथिते गदनिग्रहे सप्तमे विषतन्त्रखण्डे सर्पविषचिकित्साधिकारस्तृतीयः ।

---

## अथ लूताविषचिकित्साधिकारश्चतुर्थः ।

अथातो लूताविषचिकित्सितं व्याख्यास्यामः ।

लूताविषे कतिपययोगाः ।

पिण्डीतगरजा हन्याच्छिफा मर्कोटिकाविषम् ।
लेपपानाञ्जनैस्तूर्णं तन्दुलाम्बुप्रपेपिता ॥ १ ॥
कुष्ठलाञ्जनपथ्याह्वैर्घृतक्षौद्रसमन्वितः ।
प्रलेपः संभिनत्त्याशु सर्वलूताविषं क्षणात् ॥ २ ॥
रोध्रसैन्धवकुष्ठैस्तु जातीकुड्मलयोजितैः ।
क्षौद्राज्यमरिचोपेतैर्लेपो लूताविषापहः ॥ ३ ॥
बलानागबलानन्ताफलिनीनागकेसरैः ।
लेपो लूताविषार्तानामुशीरपरिमिश्रितः ॥ ४ ॥
मूलं कर्कोटिकायास्तु संपिष्टं तन्दुलाम्बुना ।
ईषद्भृतयुतं लेपाद्धन्यान्मर्कोटिकाविषम् ॥ ५ ॥
कटभार्जुनशैरीषशेलुक्षीरद्रुमत्वचः ।
कषायकल्कचूर्णाः स्युः कीटलूताव्रणापहाः ॥ ६ ॥
चन्दनं पद्मकं कुष्ठं नताम्बूशीरपाटलाः ।
निर्गुण्डीसारिवे सेलुर्लूताविषहरो गणः ॥ ७ ॥
अगदोऽम्लैतक्रपिष्टः करभशकृद्युक्तया पुनर्नवया ।
लूतागर्दभकाद्यां सेदेन रुजाश्वयथुहन्ता ॥ ८ ॥
बिल्वस्य मूलं सुरसस्य पुष्पं फलं करञ्जस्य नतं सुराह्वम् ।
फलत्रयं व्योपनिशाद्वयं च वस्तस्य मूत्रेण सुसूक्ष्मपिष्टम् ॥ ९ ॥

भुजङ्गलतोन्दुरवृश्चिकाद्यैर्विसूचिकाजीर्णगरज्वरैश्च ।
आर्तान्नरान् भूतविमर्दितांश्च स्वस्थीकरोत्यञ्जनपाननस्यैः ॥१०॥

इति श्रीशोढलग्रथिते गदनिग्रहे सप्तमे विषतन्त्रखण्डे लताविषचिकित्साधिकारश्चतुर्थः ।

## अथ वृश्चिकविषचिकित्साधिकारः पञ्चमः ।

अथातो वृश्चिकविषचिकित्सितं व्याख्यास्यामः—

वृश्चिकविषे कतिपययोगाः ।

अर्कक्षीरं ध्रुवं पुंसां प्रच्छन्नागतशोणिते ।
न्यस्तं दंशे क्षणादेव वृश्चिकस्य विषं हरेत् ॥ १ ॥
कार्पासस्य फलैः सम्यग्लेपयेच्छ्लक्ष्णपेषितैः ।
दंशं वृश्चिकदष्टस्य शमार्थं घृतमिश्रितैः ॥ २ ॥
पारावतशकृच्छुण्ठीमातुलुङ्गरसैः समैः ।
पथ्यानतान्वितैर्लेपो वृश्चिकस्य विषं जयेत् ॥ ३ ॥
अर्कक्षीरेण संपिष्टा शिरीषफलमिश्रिता ।
उपकुल्या विषं हन्याद्वृश्चिकस्य प्रलेपनात् ॥ ४ ॥
कुठेरकस्य बीजैस्तु क्षीरेणाजेन भावितैः ।
प्रलेपनं प्रशंसन्ति वृश्चिकस्य विषापहम् ॥ ५ ॥
नागरं वारिणा घृष्टं नराणां नस्यकर्मणि ।
विषं वृश्चिकदष्टानां हरेदेकं प्रभावतः ॥ ६ ॥
मातुलुङ्गरसोपेतं तालं हिङ्गुसमन्वितम् ।
छायाशुष्कं प्रलेपः स्याद्वृश्चिकानां विषापहः ॥ ७ ॥
जीरकस्य कृतः कल्को घृतसैन्धवसंयुतः ।
सुखोष्णो वृश्चिकार्तानां प्रलेपो वेदनापहः ॥ ८ ॥
उष्णं घृतं सैन्धवसंप्रयुक्तं निपीतमाशु प्रशमं करोति ।
निश्वासकम्पश्रमवारितापरुजा जवाद्वृश्चिकदंशजाताः ॥ ९ ॥

खर्जूरविषे विषप्रयोगाः ।

दंशस्योपरि विन्यस्तं दीपतैलं हरेत्क्षणात् ।
खर्जूरकविषं घोरमेकमेव प्रभावतः ॥ ६ ॥
चाङ्गेरिकाविमिश्रेण लवणेन प्रयत्नतः ।
घर्षयन्मुच्यते दंशं खर्जूरकविषान्नरः ॥ ७ ॥

इति श्रीवैद्यवरशोढलप्रणीते गदनिग्रहे पञ्चमे विषतन्त्रखण्डे नख-दन्तविषखर्जूरविषचिकित्साधिकारः सप्तमः ।

---

## अथ गरविषचिकित्साधिकारोऽष्टमः ।

अथातो गरविषचिकित्सितं व्याख्यास्यामः—

अङ्कोठमूलं निःक्वाथ्य फाणिते सघृतं लिहेत् ।
वेलाक्तसिन्नसर्वाङ्गो गरदोषान् वमत्यलम् ॥ १ ॥
सिताचन्दनधात्रीणां चूर्णं मधुसमन्वितम् ।
प्रलिह्यात्प्रातरुत्थाय गरदोषविनाशनम् ॥ २ ॥
हेमसीसारताम्राणां चूर्णं माक्षिकसंयुतम् ।
पथ्याशी प्रलिहन् प्रातर्गरदोषात्प्रमुच्यते ॥ ३ ॥
कृष्णाङ्कोठशिफाकल्कं तत्क्वाथं वा दिनत्रयम् ।
पिबेद्गरविषघ्नं तु सम्यक्स्वास्थ्यकरं परम् ॥ ४ ॥
स्नुक्क्षीरदन्तिनीनीलीमगधाभिः प्रकल्पिताः ।
गुटिकाः कोलमात्रास्तु सम्यग्गोमूत्रपेषिताः ॥ ५ ॥
भक्ष्यमाणाः प्रतिदिनं ध्रुवं कोष्ठप्रभेदिकाः ।
गरदोषविषार्तानां न हीयन्ते यथाऽमृतम् ॥ ६ ॥
त्रिवृद्दन्तीसुधाक्षीरैः सगुडैर्गुटिकाः कृताः ।
भक्ष्यमाणाः प्रतिदिनं मासेनैव गरापहाः ॥ ७ ॥
मूर्वामृतानतकणापटोलीचव्यचित्रकम् ।
वचामुस्तविडङ्गानि तक्रकोष्णाम्बुमस्तुभिः ॥ ८ ॥
पिबेद्रसेन चाम्लेन गरोपहतपावकः ।

गरदोषेऽमृतं घृतम् ।

अपामार्गस्य बीजानि शिरीषस्य फलानि च ॥ ९ ॥
श्वेते द्वे काकमाची च गवां मूत्रेण पेषयेत् ।
सर्पिरेतेषु संसिद्धं विषसंशमनं परम् ॥ १० ॥
अमृतं नाम विख्यातमपि संजीवयेन्मृतम् ।

इति श्रीसोढलप्रथिते गदनिग्रहे सप्तमे विषतन्त्रखण्डे गरविषचिकित्साधिकारोऽष्टमः ॥

---

## अथ समस्तविषचिकित्साधिकारो नवमः ।

अथातः समस्तविषचिकित्सितं व्याख्यास्यामः—

दष्टं नरं रक्तककीटकेन प्रधूपयेद्गुग्गुलुना अकामम् ।
प्रस्वेदनार्थे सघृतार्कपत्रपिण्डीं च दंशे विधिवत्प्रदिह्यात् ॥ १॥

मत्स्यविषचिकित्सा ।

अङ्कोठवृक्षदलधूपविधानयोगा-
न्नाशं प्रयाति विषमाशु नरस्य मात्स्यम् ।
धूपः पुनः कटुकतैलनृकेशसक्तु-
क्लृप्तोऽस्य दंशपदके सुतरां प्रशस्तः ॥ २ ॥
सक्तुभिः कटुतैलाक्तैः सक्षौमैः परिधूपयेत् ।
दंशं मत्स्यविषार्तानां प्रशमाय भिषग्वरः ॥ ३ ॥
दुर्वारा तु व्यथा नूनं मत्स्यदंशात्तु तत्क्षणात् ।
अङ्कोठमूलधूपेन धूपिता संप्रणश्यति ॥ ४ ॥

गोधेरकविषचिकित्सा ।

उष्णोदकेन मसृणं दृषदि प्रपिष्य
कन्थारिपादपजटां कृतनावनानाम् ।
गोधेरकस्य गरलं नयति प्रशान्ति-
मर्कांशुतापभरमम्बुदमालिकेव ॥ ५ ॥

शङ्खिमत्स्यदशनव्रणाश्रितं संनिहन्ति गरलं सुदुःसहम् ।
साज्यचिक्कणयवस्य पिण्डिका स्वेदनेन यदि वेन्दुरश्मयः ॥ ६॥

वरटीविषचिकित्सा ।

शस्त्रेण दंशे परिघृष्यमाणे समुद्धृते तद्गतकण्टके वा ।
फणिज्जनिर्यासभृतेऽथ दंशे भवेत्प्रणाशो वरटीविषस्य ॥ ७ ॥

मक्षिकाविषचिकित्सा ।

मरिचतगरशुण्ठीकेसरैस्तोयपिष्टै-
र्यदि भवति विलिप्तं मक्षिकादष्टमङ्गम् ।
विषमुपशममेति द्राक्तदानीं तदीयं
घृतयुतशतपुष्पासैन्धवालेपनाद्वा ॥ ८ ॥

मण्डूकविषचिकित्सा ।

शिरीषबीजैः कुलिशद्रुमस्य क्षीरेण पिष्टैः कृतलेपनानाम् ।
विषं विनाशं व्रजति क्षणेन मण्डूकदंशप्रभवं नराणाम् ॥ ९ ॥

सारमेयविषचिकित्सा ।

काकोदुम्बरिकामूलं धत्तूरकफलान्वितम् ।
पीतं तन्दुलतोयेन सारमेयविषापहम् ॥ १० ॥
असनजलपिष्टं यः खदति मातुलस्य फलमेकम् ।
उन्मत्तसारमेयप्रभवं विषमस्य शमं याति ॥ ११ ॥
मरीचतगरोपेतं सिन्धुसौवर्चलान्वितम् ।
फणिज्जकफलं हन्याल्लेपनाद्वरटीविषम् ॥ १२ ॥
अयसाऽऽकर्षयेद्दंशे कण्टकं च समुद्धरेत् ।
वरटीविषजिल्लेपात्फणिज्जकरसोऽथवा ॥ १३ ॥

इति श्रीशोढलप्रथिते गदनिग्रहे सप्तमे विषतन्त्रखण्डे समस्तविषचिकित्साधिकारः नवमः ॥

समाप्तं चेदं विषतन्त्रं सप्तमं खण्डम् ॥

# गदनिग्रहः ।



## अथ रसायनतन्त्राख्योऽष्टमः ।

### अथ सामान्यरसायनाधिकारः प्रथमः ।

रसायनलक्षणं तत्सेवनविधिश्च ।

यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम् ।
पूर्वे वयसि मध्ये वा शुद्धकायः समाचरेत् ॥ १ ॥
अविशुद्धशरीरस्य नोक्तो रासायनो विधिः ।
न भाति वाससि क्लिष्टे रङ्गयोग इवार्पितः ॥ २ ॥
हरीतकीनां चूर्णानि सैन्धवामलकं गुडम् ।
वचाविडङ्गरजनीपिप्पलीविश्वभेषजम् ॥ ३ ॥
पिबेदुष्णाम्बुना जन्तुः स्नेहस्वेदोपपादितः ।
तेन शुद्धशरीराय कृतसंसर्जनाय च ॥ ४ ॥
त्रिरात्रं यावकं दद्यात्पञ्चाहं वाऽथ सर्पिषा ।
सप्ताहं वा पुराणस्य यावच्छुद्धिर्हि वर्चसः ॥ ५ ॥
शुद्धकोष्ठं शुभं ज्ञात्वा रसायनमुपाहरेत् ।
वयःप्रकृतिसात्म्यज्ञो यत्तस्मै यौगिकं भवेत् ॥ ६ ॥

रसायनाः कतिपययोगाः ।

मण्डूकपर्ण्याः स्वरसः प्रयोज्यः क्षीरेण यष्टीमधुकस्य चूर्णम् ।
रसो गुडूच्यास्तु समूलपुष्प्याः कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः ७
आयुःप्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्धनानि ।
मेध्यानि चैतानि रसायनानि तेषां विशेषेण तु शङ्खपुष्पी ॥ ८ ॥

रसायनो लोहयोगः ।

त्रिफलाया रसे मूत्रे गवां क्षीरे च लावणे ।
क्रमेण चेङ्गुदीक्षारे किंशुकक्षार एव च ॥ ९ ॥





तीक्ष्णायसस्य पत्राणि वह्नितप्तानि सेचयेत्।
चतुरङ्गुलदीर्घाणि तिलोत्सेधतनूनि च ॥ १० ॥
ज्ञात्वा तान्यञ्जनाभानि सूक्ष्मचूर्णानि कारयेत्।
तानि चूर्णानि मधुना रसेनामलकस्य च ॥ ११ ॥
युक्तानि लोहकुम्भे च स्थितानि घृतभावितं।
अधृष्यः स्याद्गजप्राणः सदा चातिबलेन्द्रियः ॥ १२
धीमान्यशस्वी वाक्सिद्धः श्रुतधारी महाबलः।
भवेत्समाः प्रयुञ्जानो नरो लोहरसायनम् ॥ १३ ॥
मधुकेन तुगाक्षीर्याः पिप्पल्याः क्षौद्रसर्पिषा।
त्रिफला सितया चैव युक्ता सिद्धं रसायनम् ॥ १४

पिप्पलीवर्धमानयोगः।

क्रमवृद्ध्या दशाहानि दश पैप्पलिकं दिनम्।
वर्धयेत्पयसा सार्धं तथैवापनयेत्पुनः ॥ १५ ॥
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनः ॥ १६ ॥
पिष्टास्ता बलिभिः सेव्या शृता मध्यबलैर्नरैः।
शीतीकृता चाल्पबलैर्वीक्ष्य दोषामयान् प्रति ॥ १७
दशपैप्पलिको ज्येष्ठो मध्यमः सप्तभिः स्मृतः।
यस्त्रिपिप्पलिपर्यन्तः स कनीयान् स चावलैः ॥ १८
बृंहणं स्वर्यमायुष्यं प्लीहोदरविनाशनम्।
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम् ॥ १९ ॥

रसायनत्रिफलायोगः।

सर्वलोहैः सुवर्णेन वचया क्षौद्रसर्पिषा।
विडङ्गपिप्पलीभ्यां च त्रिफला लवणेन च ॥ २० ॥
संवत्सरप्रयोगेण मेधास्मृतिबलप्रदा।
भवत्यायुःप्रदा धन्या जरारोगनिबर्हणी ॥ २१ ॥

रसायनं पथ्यादिचूर्णम्।

पथ्याकृष्णाविडङ्गायोधात्रीचूर्णं सशर्करम्।
सर्पिस्तैलयुतं खादञ्जरया नाभिभूयते॥ २२॥

रसायनो विडङ्गादियोगः।

विडङ्गत्रिफलाकृष्णालोहचूर्णाज्यशर्कराः।
सक्षौद्राः शीलिता घ्नन्ति वार्धक्यं पलितैः सह॥ २३॥

रसायना लोहयोगाः।

निर्वाप्य त्रिफलाक्वाथे लोहपत्राण्यनेकशः।
तद्रजो मधुसर्पिर्भ्यां लीढं जीवितवर्धनम्॥ २४॥
तीक्ष्णायस्त्रिफलाचूर्णं घृतक्षौद्रविमिश्रितम्।
खादतः प्रशमं याति जरा मृत्युश्च निश्चितम्॥ २५॥
वाकुची त्रिफला कृष्णा विडङ्गं सुरसाऽमृता।
अयो मधुस्थितं पक्वं जरामृत्युविषापहम्॥ २६॥

रसायनो वाराहीयोगः।

वाराहीमूलचूर्णस्य शतं मधुयुतं क्रमात्।
युवा स्यात्पयसा पीत्वा क्षीरान्नाज्यभुगादृतः॥ २७॥
सूक्ष्मचूर्णेन वाराह्याः शृतं क्षीरं विमन्थितम्।
तदाज्यमधुसंयुक्तं मासमेकं रसायनम्॥ २८॥

रसायनः सुवर्णादियोगः।

सुवर्णं पद्मबीजानि मधु लाजा प्रियङ्गवः।
गव्येन पयसा पीतमलक्ष्मीं प्रतिषेधयेत्॥ २९॥

रसायनो वचादियोगः।

वचा विल्वं सुवर्णं च विल्वचूर्णमिति त्रयम्।
मेध्यमारोग्यमायुष्यं पुष्टिसौभाग्यवर्धनम्॥ ३०॥

रसायनो हस्तिकर्णपलाशयोगः।

घृतमधुदुग्धपयोदधिमण्डैरुपसि कृतः करिकर्णपलाशः।
स्थगयति स्थिरतां स्थविराणामपि विदधाति पुनर्नवतां च॥३१

रसायनत्रिफलायोगः ।

खदिरासनयूपभाविताया त्रिफलाया घृतमाक्षिकप्लुतायाः ।
नियमेन नरा निषेवितारो यदि जीवन्त्यजराः किमत्र चित्रम् ३२

शिलाजतुक्षौद्रविडङ्गसर्पिर्लोहाभयापारदताप्यभक्षः ।
आपूर्यते दुर्बलदेहधातुस्त्रिपञ्चरात्रेण यथा शशाङ्कः ।
क्षीराशिनस्ते बलवर्णयुक्ताः समाः शतं जीवितमाप्नुवन्ति ॥३३॥

रसायनचित्रकयोगः ।

उपयुञ्जीत दुग्धेन वलीपलितनाशिनीम् ।
मार्गशीर्षे शिफां मासे चित्रकस्य समुद्धृताम् ॥ ३४ ॥

रसायनः पथ्यादियोगः ।

पथ्याचित्रकधात्रीणां चूर्णं लोहरजोन्वितम् ।
प्रलिह्यान्मधुसर्पिर्भ्यां जरारोगनिषूदनम् ॥ ३५ ॥

रसायनो हरीतकीयोगः ।

आज्येनायसपात्रस्थां सायञ्चूर्णां हरीतकीम् ।
खादतः प्रत्यहं जन्तोर्जरा नाशमवाप्नुयात् ॥ ३६ ॥
मध्वामलकचूर्णं तु सुवर्णमिति च त्रयम् ।
प्राश्यारिष्टगृहीतोऽपि मुच्यते प्राणसंशयात् ॥ ३७ ॥

रसायनो धात्रीयोगः ।

धात्रीचूर्णस्य कंसं स्वरसपरिगतं क्षौद्रसर्पिःसमांशं
कृष्णा भार्गी सिताष्टप्रस्थतिसमयुतं स्थापितं धान्यराशौ ।
वर्षान्ते तत्समश्नन् भवति विललितो रूपवर्णप्रभावै-
र्निर्व्याधिर्बुद्धिमेधास्मृतिवचनबलः स्थैर्यसत्त्वैरुपेतः ३८

रसायनं निम्बतैलनस्यम् ।

निम्बस्य तैलं प्रकृतिस्थमेव नस्ये निषिक्तं मधुना यथावत् ।
मासेन गोक्षीरभुजो नरस्य जराप्रवृत्तं पलितं निहन्ति ॥ ३९ ॥

रसायनाः शीतोदकादियोगाः।

शीतोदकं पयः क्षौद्रं सर्पिरित्येकशो द्विशः।
त्रिशः समस्तमथवा प्राक्पीतं स्थापयेद्वयः॥ ४०॥
गुडेन मधुना शुण्ठ्या कृष्णया लवणेन च।
द्वे द्वे खादन् सदा पथ्ये जीवेद्वर्षशतं सुखी॥ ४१॥

रसायना हरीतकीयोगाः।

हरीतकीं सर्पिषि संप्रताप्य समश्नुतस्तत्पिबतो घृतं च।
भवेच्चिरस्थायि बलं शरीरे सकृत्कृतं साधु यथा कृतज्ञे॥ ४२॥

रसायनो विडङ्गादियोगः।

विडङ्गभल्लातकनागराणि येऽश्नन्ति सर्पिर्मधुसंयुतानि।
जरानदीं रोगतरङ्गिणीं ते लावण्ययुक्ताः पुरुषास्तरन्ति॥४३॥

रसायनसेवनफलम्।

दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः।
प्रभावर्णस्वरौदार्यं देहेन्द्रियबलोदयम्॥ ४४॥
वाक्सिद्धिं वृषतां कान्तिमवाप्नोति रसायनात्।

रसायनलक्षणं भेदाश्च।

लाभोपायो हि शस्तानां रसादीनां रसायनम्॥ ४५॥
रसायनानां द्विविधं प्रयोगमृषयो विदुः।
कुटीप्रावेशिकं मुख्यं वातातपिकमन्यथा॥ ४६॥

रसायनसेवनविधिः।

निर्वाते निर्भये धर्म्ये प्राप्योपकरणे पुरे।
दिश्यैशान्यां शुभे देशे त्रिगर्भां सूक्ष्मलोचनाम्॥४७॥
धूमातपरजोव्यालस्त्रीमूर्खाद्यविलङ्घिताम्।
सज्जवैद्योपकरणां सुमृष्टां कारयेत्कुटीम्॥ ४८॥
अथ पुण्येऽह्नि संपूज्य पूज्यांस्तां प्रविशेच्छुचिः।
ततः संशोधनैः शुद्धः सुखी जातबलः पुनः॥ ४९॥

ब्रह्मचारी धृतियुतः श्रद्दधानो जितेन्द्रियः ।
दानशीलो दयासत्यव्रतधर्मपरायणः ॥ ५० ॥
देवतानुस्मृतौ युक्तो युक्तस्वप्नप्रजागरः ।
प्रियौषधः पेशलवागारभेत रसायनम् ॥ ५१ ॥
कुटीप्रवेशः क्षमिणां परिच्छदवतां हितः ।
अतोऽन्यथा तु ये तेषां सूर्यमारुतिको विधिः ॥ ५२ ॥
वातातपसहा योगा वक्ष्यन्तेऽतो विशेषतः ।
सुखोपचारा भ्रंशेऽपि ये न देहस्य बाधकाः ॥ ५३ ॥

रसायनो हरीतक्यादियोगः ।

हरीतकीमागधिकाक्षधात्र्यश्चूर्णीकृता लोहरजोविमिश्राः ।
सर्पिर्मधुभ्यां लिहतः शरीरे जराप्रदूतं पलितं निहन्युः ॥५४॥

रसायनार्थं त्रिफलादियोगः ।

फलत्रयत्र्यूषणचूर्णयुक्तां द्राक्षां ससर्पिर्मधुशर्करां च ।
क्षीरानुपानं पुरुषा लिहन्तो निर्धूय जीवन्ति जराविकारान्॥५५

रसायनार्थं धात्र्यादियोगः ।

धात्रीरसक्षौद्रसिताघृतानि हिताशनानां लिहतां नराणाम् ।
प्रणाशमायान्ति जराविकारा ग्रन्था विशाला इव दुर्गृहीताः५६

रसायनार्थं पिप्पल्यादियोगः ।

चूर्णं समं मागधिकाकणानां विडङ्गचूर्णेन सचित्रकेण ।
निषेवमाणो मधुतैलमिश्रं वयःपरीणामजले न मज्जेत् ॥ ५७ ॥

रसायनार्थं पुनर्नवायोगः ।

पुनर्नवस्यार्धपलं नवस्य पिष्ट्वा पिबेद्यः पयसाऽर्धमासम् ।
मासद्वयं तद्विगुणं समां वा जीर्णोऽपि भूयः स पुनर्नवः स्यात्५८

रसायनार्थमश्वगन्धायोगः ।

पीताऽश्वगन्धा पयसाऽर्धमासं घृतेन तैलेन सुखाम्बुना वा ।
कृशस्य पुष्टिं वपुषो विधत्ते बालस्य सस्यस्य यथा सुवृष्टिः ॥५९॥

रसायनार्थं कृष्णतिलयोगः।

दिने दिने कृष्णतिलप्रकुञ्चं समश्नतः शीतजलानुपानम्।
पोषः शरीरस्य भवत्यनल्पो दृढा भवन्त्यामरणाच्च दन्ताः॥६०॥

रसायनसेवनफलम्।

उक्तानि शक्यानि फलान्वितानि युगानुरूपाणि रसायनानि।
अमानुषाणामपि विस्मयानां तत्कर्मणां यद्यपि तानि हेतुः ६१
समूलकापं तु कपन्ति देहं भ्रंशाद्विधेस्तानि विवर्जितानि।
युगस्वभावाद्यदि चौषधीनां क्रियासु शक्तिः परिकल्प्यतेऽल्पा॥
आयुर्बलादिष्वपि सा तथेति यत्नान्निषेव्याणि रसायनानि।
न चौषधीनामपि सर्वथैव प्रभावहानिः परिशङ्कनीया।
फलं प्रयात्यूर्ध्वमधश्चिवृच्च प्रत्यक्षतः कस्य न सिद्धमेतत्॥६२

इति श्रीसोढलवैद्यग्रथिते गदनिग्रहे रसायनतन्त्रखण्डे सामान्यरसायनाध्यायः प्रथमः॥ १॥

---

## अथौषधिकल्पाध्यायो द्वितीयः।

तत्र प्रथममम्लवेतसकल्पं व्याख्यास्यामः—

हिमवत्परमावासे दिव्यौषधिसमायुते।
गन्धर्वयक्षाध्युषिते नानाधातुविचित्रिते॥ १॥
विश्वसृद् भगवांस्तत्र मार्तण्डं भास्करं किल।
भ्रममारोपयामास रूपहेतोः कदाचन॥ २॥
कृतवान् कनकप्रख्यं रूपं जनमनोहरम्।
विरूपशकलास्तेभ्यो ये पेतुर्गिरिमूर्धनि॥ ३॥
तेभ्यस्तेजस्विनो जाता वेतसा नाम पादपाः।
न हि तेषु विलीयन्ते पतङ्गा न सरीसृपाः॥ ४॥
तेषां फलेभ्यो निर्यासः सोऽम्लत्वादम्लवेतसः।
कषायकटुरूक्षश्च मधुजम्बीररसप्रभः॥ ५॥

शुभेऽग्रे चोपजातं तु ग्राह्यं निरुपद्रवम् ।
मूर्धमण्डलपत्रं तु दण्डपत्रं तु वर्जयेत् ॥ २९ ॥
चित्रकः कटुकस्तिक्तः पाके चोष्णः प्रकीर्तितः ।
कटुकत्वात्कफं हन्ति तिक्तत्वात्पित्तनाशनः ॥ ३० ॥
औष्ण्याद्धन्त्यनिलं चापि चित्रकः सर्वरोगहा ।
तक्रसर्पिःपयोयूषशाकद्रवसमन्वितः ॥ ३१ ॥
पेयया वाऽपि पातव्यः सर्वरोगेषु चित्रकः ।
पिबेत्पथ्याशनो मासं बिडालपदसंमितम् ॥ ३२ ॥
तेन पीतेन कोष्ठस्थान् हन्ति चान्तर्गतान् गदान् ।
मेधावर्णस्वरकरः सर्पिषा सह योजितः ॥ ३३ ॥
तक्रमस्तुयुतो दद्रुकिटिभानिलनाशनः ।
श्वित्री गोमूत्रसंयुक्तं नियतः क्षीरभोजनः ॥ ३४ ॥
सहस्रमेकं क्षीराशी क्षौद्रेणाप्ययुतेन वा ।
पीत्वा सहस्रं मेधावी हिरण्यरिपोपमः ॥ ३५ ॥
सर्वा वाचस्तथा वेदाः श्रीश्च पद्मनिवासिनी ।
प्रज्ञा च विशते तूर्णं सिद्धत्वात्तं भजन्त्यपि ॥ ३६ ॥
विंशतिश्चित्रकस्येह पलान्यावापयेद्घटे ।
पयसा सह जातं तु मन्थानेनावमन्थयेत् ॥ ३७ ॥
यत्तत्र सर्पिस्तक्रं च तस्य मात्रां प्रयोजयेत् ।
जीर्णे तेनैव चाश्नीयात्सघृतं षष्टिकोदनम् ॥ ३८ ॥
कुष्ठोदरार्शोमेहार्तिशोफगुल्मनिवारणम् ।
रसायनप्रयोगाद्धि प्रजराऽच्यवनादयः ।
मेधाकान्तिवपुष्मन्तो जातास्ते देवसंनिभाः ॥ ३९ ॥

इति चित्रककल्पः ॥

अथातः पिप्पलीकल्पं व्याख्यास्यामः—

पञ्चाष्टौ सप्त दश वा पिप्पलीर्मधुसर्पिषा ।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ ४० ॥
तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्त्वाऽग्रे भोजनस्य च ।
पिप्पल्यः किंशुकक्षारभाविता घृतभर्जिताः ॥ ४१ ॥
प्रयोज्या मधुसंमिश्रा रसायनगुणैषिणा ।
दशवृद्ध्या दशाहानि दश पैप्पलिकं हितम्[1] ॥ ४२ ॥
वर्धयेत्पयसा सार्धं तथैवापनयेत्पुनः ।
जीर्णौषधस्तु भुञ्जीत षष्टिकं क्षीरसर्पिषा ॥ ४३ ॥
पिप्पलीनां प्रयोगोऽयं सहस्रस्य रसायनम् ।
पिष्टास्ता बलिभिः पेयाः शृता मध्यबलैर्नरैः ॥ ४४ ॥
शीतीकृताः क्षीणबलैर्वीक्ष्य दोषान् प्रयोजयेत् ।
तद्वद्द्वे छागदुग्धेन द्वे सहस्रे प्रयोजयेत् ॥ ४५ ॥
एभिः प्रयोगैः पिप्पल्यः कासश्वासगलग्रहान् ।
यक्ष्ममेहग्रहण्यर्शःपाण्डुत्वविषमज्वरान् ।
घ्नन्ति शोफं वमिं हिध्मां प्लीहानं वातशोणितम् ॥४६॥

इति पिप्पलीकल्पः ॥

---

अथातो हरीतकीकल्पं व्याख्यास्यामः—

सुखोपविष्टं ब्रह्माणमश्विनौ वाक्यमूचतुः ।
कुतो हरीतकी जाता कतिजातिश्च कीर्त्यते ॥ ४७ ॥
रसाः कति समाख्याताः कति चोपरसाः स्मृताः ।
कति नामानि चोक्तानि किं नु तासां च लक्षणम् ॥४८॥
सा कथं च प्रयोक्तव्या केन वर्णेन सा शुभा ।
केन द्रव्येण संयुक्ता रोगान् सा संनियच्छति ॥ ४९ ॥

---

१ 'दिनम्' फ. ।

एतत्प्रश्नं यथापृष्टं भगवन् वक्तुमर्हसि ।
अश्विनोर्वचनं श्रुत्वा ब्रह्मा वचनमब्रवीत् ॥ ५० ॥
पपात बिन्दुर्मेदिन्यां शक्रस्य पिबतोऽमृतम् ।
ततो दिव्या समुत्पन्ना सप्तयोनिर्हरीतकी ॥ ५१ ॥
विजया रोहिणी चैव पूतना च तथाऽमृता ।
चेतकी चाभया चेति जीवन्ती चेति जातयः ॥ ५२ ॥
अलाबुवृत्ता विजया सुवृत्ता चैव रोहिणी ।
पूतनाऽस्थिमती सूक्ष्मा स्थूलमांसा तथाऽमृता ॥५३॥
त्र्यस्रा तु चेतकी ज्ञेया पञ्चास्रा त्वभया स्मृता ।
सुवर्णवर्णा जीवन्ती सप्तानामपि लक्षणम् ॥ ५४ ॥
सर्वप्रयोगे विजया रोहिणी क्षतरोहिणी ।
लेपार्थे पूतनां विद्याद्विरेकार्थेऽमृतां विदुः ॥ ५५ ॥
चेतकी सर्वरोगेषु, यथार्हमुपकल्पयेत् ।
परीक्षेत ततो धीमान् गुणलक्षणविस्तरः ॥ ५६ ॥
क्षिप्ताऽम्भसि निमज्जेत गुणकृत्सा प्रशस्यते ।
चेतकी द्विविधा प्रोक्ता कृष्णवर्णा च शुक्लिका ॥५७॥
षडङ्गुला स्मृता कृष्णा शुक्ला चैकाङ्गुला स्मृता ।
काचिदास्वादमात्रेण काचिद्गन्धेन भेदयेत् ॥ ५८ ॥
काचित्स्पर्शनदृष्ट्याऽन्या सैव प्रोक्ता चतुर्विधा ।
चेतकीपादपच्छायामुपसर्पन्ति ये नराः ॥ ५९ ॥
भिद्यन्ते तत्क्षणादेव पशुपक्षिमृगास्तथा ।
चेतकी तु धृता हस्ते यावत्तिष्ठति देहिनः ॥ ६० ॥
तावद्भिद्येत वेगात्तु प्रभावान्नात्र संशयः ।
नृपादिसुकुमाराणां कृशानां भेषजद्विषाम् ॥ ६१ ॥
चेतकी परमा शस्ता हिता सुखविरेचनी ।
सप्तानामपि जीवानां प्रधाना विजया स्मृता ॥ ६२ ॥

सुखप्रयोगा सुलभा शस्यते सर्वकर्मसु ।
हरीतक्यां रसान् पञ्च विद्याल्लवणवर्जितान् ॥ ६३ ॥
मज्जाश्रितं तु मधुरमम्लं स्नाय्वाश्रितं विदुः ।
त्वगाश्रितं तु कटुकं तिक्तं वृन्ताश्रितं तथा ॥ ६४ ॥
अस्थ्न्याश्रितं कषायं तु रसमाहुर्मनीषिणः ।
कफं कटुकषायत्वादम्लत्वान्मारुतं जयेत् ॥ ६५ ॥
पित्तघ्नी स्वादुतिक्तत्वाद्रौक्ष्यादामविपाचिनी ।
वातिकान् पैत्तिकांश्चैव श्लैष्मिकान् सान्निपातिकान् ६६
प्रसह्य हरति व्याधीन् तस्मात्प्रोक्ता हरीतकी ।
कषाया मधुरा पाके रूक्षा विलवणा लघुः ॥ ६७ ॥
दीपनी पाचनी चैव वयःसंस्थापनी परम् ।
उष्णवीर्या परा पुण्या बुद्धीन्द्रियबलप्रदा ॥ ६८ ॥
कुष्ठवैवर्ण्यवैस्वर्यपुराणविषमज्वरान् ।
शिरोक्षिपाण्डुहृद्रोगकामलाग्रहणीगदान् ॥ ६९ ॥
शोषशोफातिसारारुच्यमेहमोहवमिक्रमीन् ।
श्वासकासप्रमेहार्शःप्लीहानाहगरोदरान् ॥ ७० ॥
विबन्धं स्रोतसां गुल्मं शूलं स्तम्भमरोचकम् ।
हरीतकी जयेद्व्याधींस्तांस्तांश्च कफवातजान् ॥ ७१ ॥
हरणात्सर्वरोगाणां या सा भुक्ता हरीतकी ।
पथ्यत्वात् सर्वधातूनां पथ्या शिवतया शिवा ॥ ७२ ॥
यस्माद्विजयते व्याधीन् समग्रान् विजया ततः ।
अभयं सर्वरोगेभ्यो भवत्यायुश्च शाश्वतम् ॥ ७३ ॥
यतः शीलयतामेनां तेनेयमभया स्मृता ।
नवा वृत्ता घना स्निग्धा गुर्वी मज्जति याऽप्सु च॥७४॥
बालस्य सा प्रयोक्तव्या नवनीतसमन्विता ।
वाते ससर्पिर्लवणा पित्ते सगुडशर्करा ॥ ७५ ॥

कफे सपिप्पलीक्षौद्रा सर्वदा सा प्रशस्यते ।
हरीतकी दरिद्राणां सुखोपायं रसायनम् ॥ ७६ ॥
पथ्यत्वे प्रचुरा प्रोक्ता सर्वामयविनाशिनी ।
तृष्णायां कण्ठशोषे च हनुस्तम्भे गलग्रहे ॥ ७७ ॥
नवज्वरे तथा क्षीणे गर्भिण्यां च न शस्यते ।
हरीतकी भक्ष्यमाणा नागरेण गुडेन वा ॥ ७८ ॥
सैन्धवोपहिता वाऽपि सातत्येनाग्निदीपनी ।
हरीतकी च सगुडा विश्वभेषजसंयुता ॥ ७९ ॥
निहन्यादामयान् सर्वान् वज्रेणेन्द्रो यथाऽसुरान् ॥ ८
हेमन्ते शृङ्गवेरेण शिशिरे पिप्पलीयुताम् ।
वसन्ते मधुसंमिश्रां ग्रीष्मे स्वल्पगुडां तथा ।
वर्षासु सैन्धवोपेतां शरदि सितयाऽन्विताम् ॥ ८१ ।
उन्मीलिनी बुद्धिबलेन्द्रियाणां निर्मीलिनी पित्तकफामयानाम्
विस्रंसिनी मूत्रशकृन्मलानां हरीतकी स्यात्सह भोजनेन ॥८२

तथा च—

ग्रीष्मे तुल्यगुडां सुसैन्धवयुतां मेघावनद्धेऽम्बरे
तुल्यां शर्करया शरद्यमलया शुण्ठ्या हिमस्यागमे ।
पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संयोजितां
राजन् प्राप्य हरीतकीमिव गदा नश्यन्तु ते शत्रवः ८
हरीतकीं सर्पिषि पाचयित्वा समश्नतः संपिबतोऽनुसर्पिः ।
वातात्मकास्तस्य न सन्ति रोगाः स्यात्पृष्ठजङ्घोरुकटीबलं च ८
एरण्डतैलेन विपाच्य पथ्यां खादेत्तथा चानुपिबेच्च तैलम् ।
स शूलविष्टम्भकृतान्विकारान् सर्वाञ्जयेत्पित्तकफानिलोत्थान्
मूत्रस्थिताः सप्तदिनं महिष्याः पञ्चामया मूत्रपलानि पञ्च ।
क्षीरैकतः सप्तदिनानि खादेत् क्षीरौदनाशी परतस्तथा च ॥ ८६

एषत्रिसप्ताहपरः प्रयोगो वातोदरं तीव्रमपीह हन्यात् ।
प्लीहानमुग्रं श्वयथुं त्रिदोषं शिरोग्रहं पाण्डुगरकृमींश्च ॥ ८७ ॥
हरीतकी धान्यतुषोदसिद्धा सपिप्पलीसैन्धवहिङ्गुचूर्णा ।
सोद्गारधूमं भृशमप्यजीर्णं निहन्ति सद्यो जनयेत्क्षुधां च ॥८८॥
हरीतकीं वा मधुनाऽवलिह्यादामातिसारे प्रथमं प्रवृत्ते ।
प्रवाहयेत्सा ह्यवशिष्टदोषान् संशोधयेत्कोष्ठमशेषतश्च ॥ ८९ ॥
द्वे पूर्वमद्यादशनादतो द्वे द्वे चापि भुक्त्वा च तथा सपंस्तु ।
अस्य प्रयोगादभयाष्टकस्य त्रिसप्तरात्रेण पुनर्नवः स्यात् ॥ ९० ॥
मेधा स्मृतिः शक्तिरतीव कान्तिः श्रीमद्वपुर्नित्यमनामयत्वम् ।
दीप्ताग्निता दृष्टिबलं परं स्यात् सर्वे च रोगाः प्रशमं प्रयान्ति ९१

इति हरीतकीकल्पः समाप्तः ॥

---

अथात आमलककल्पं व्याख्यास्यामः ॥

नीरुजार्द्रपलाशस्य छिन्ने शिरसि तत्क्षतम् ।
अन्तर्द्विहस्तगम्भीरं पूर्यमामलकैर्नवैः ॥ ९२ ॥
आमूलं वेष्टितं दर्भैः पद्मिनीपङ्कलेपितम् ।
आदीप्य गोमयैर्वन्यैर्निर्वाते स्वेदयेत्ततः ॥ ९३ ॥

स्विन्नानि तान्यामलकानि तृप्त्या खादेन्नरः क्षौद्रघृतान्वितानि ।
क्षीरं शृतं चानुपिबेत्प्रकामं तेनैव वर्तेत च मासमेकम् ॥ ९४ ॥
वर्ज्यानि वर्ज्यानि च तत्र यत्नात् स्पृश्यं च शीताम्बु न पाणिनापि।
एकादशाहेऽस्य ततो व्यतीते पतन्ति केशा दशना नखाश्च ९५
अथाल्पकैरेव दिनैः सुरूपः स्त्रीष्वक्षयः कुञ्जरतुल्यवीर्यः ।
विशिष्टमेधाबलबुद्धिसत्त्वो भवत्यसौ वर्षसहस्रजीवी ॥ ९६ ॥

तद्वदामलकं शीतमम्लं पित्तकफापहम् ।

इत्यामलककल्पः समाप्तः ॥

---

अथातस्त्रिफलाकल्पं व्याख्यास्यामः—

हरीतकी चामलकं बिभीतकमिति त्रयम् ।
त्रिफलेति समाख्याता तच्च ज्ञेयं फलत्रयम् ॥ ९७ ॥

इयं रसायनकरा त्रिफलाऽक्ष्यामयापहा ।
रोपणी त्वग्गदक्लेदमेदोमेहकफास्रजित् ॥ ९८ ॥

वरोत्तमा च त्रिफला स्मृता श्रेष्ठा फलत्रयम् ।
त्रिफला कफपित्तघ्नी मेहकुष्ठविनाशिनी ॥ ९९ ॥

चक्षुष्या दीपनी चैव विषमज्वरनाशिनी ।
नाशयेद्राजयक्ष्माणमर्शोगुल्मेषु पूजिता ॥ १०० ॥

वमिकण्डूप्रशमनी नाडीव्रणविशोधिनी ।
दृष्टिप्रसादजननी मेधास्मृतिविवर्धिनी ॥ १०१ ॥

घृतान्विता वा मधुनाऽन्विता वा गुडान्विता तैलसमन्विता वा ।
एका हि नित्यं मनुजैः प्रयोज्या सर्वामयानां शमनी महार्थी ।

वातरोगेषु तैलेन, पित्तरोगेषु सर्पिषा ।
कफरोगेषु मधुना, प्रयोज्या त्रिफला नरैः ॥ १०३ ।

योज्यास्तिस्रो हरीतक्यस्तथा षट् च बिभीतकाः ।
द्वादशामलकानीति त्रिफलेयं प्रकीर्तिता ॥ १०४ ॥

प्रातर्हरीतकीं खादेन्मध्याह्ने द्वौ बिभीतकौ ।
रात्रौ शयनकाले तु चत्वार्यामलकानि च ॥ १०५ ।

रूपेण कामः प्रभया शशाङ्को दृष्ट्या गरुत्मान्निनदेन सिंहः ।
बलेन नागः पवनो जवेन गिरिर्गुरुत्वेन भवेन्नरोऽसौ ॥१०६

वर्षं खादेत्प्राणदां प्रातरेकामश्नन्नात् पूर्वमक्षद्वयं च ।
साज्यक्षौद्रं भोजनान्ते चतुष्कं शङ्कीकानां तद्वयःस्थापनेऽलम्

निःक्वाथ्य त्रिफला पीता नाशयेन्नितरां मलम् ।
नेत्रश्वयथुदावाग्निरागकण्डूपरिस्रवान् ॥ १०८ ॥

नवान् पथ्याक्षधात्रीणां कृत्वार्धपलिकानपि।
पिबेत्कोष्ठविशुद्ध्यर्थं पलिकांश्च यथाबलम् ॥ १०९ ॥
त्रिफला सर्वरोगघ्नी त्रिभागघृतमिश्रिता।
विसर्पं सर्वजं शुक्रं हन्ति चार्धावभेदकम् ॥ ११० ॥
मधुना त्रिफलाचूर्णं प्रयुक्तं नाशयेद्ध्रुवम्।
प्रमेहान्मुखरोगांश्च गलगण्डापचीं तथा ॥ १११ ॥
भक्षयंस्त्रिफलाकल्कं मासं निर्यन्त्रणं पुमान्।
वैनतेयोपमां दृष्टिं मासमात्रादवाप्नुयात् ॥ ११२ ॥
त्रिफलादलचूर्णस्य कृत्वा पलशतं नवम्।
भृङ्गराजरसेनैव कुर्यात्सप्ताहभावितम् ॥ ११३ ॥
लिह्यान्मधुघृताभ्यां च पलार्धं प्रत्यहं पुमान्।
जीर्णे दुग्धौदनाहारो गुणानेतानवाप्नुयात् ॥ ११४ ॥
प्रसन्नदृष्टिरव्याधिर्जीवेद्वर्षशतानि षट्।
नीलालिकुलसंकाशकेशराशिर्महाबलः ॥ ११५ ॥
मेधावी स्मृतिमान् धीरः स्निग्धश्यामवपुर्युवा।
सुभगश्च सुरूपश्च स्त्रीशतानन्दवर्धनः ॥ ११६ ॥
त्रिफलाकल्ककर्पेण लोहपात्रं प्रलेपयेत्।
तत्संस्थितमहोरात्रं ततः प्रक्षाल्य पाययेत् ॥ ११७ ॥
मधुसर्पिर्लिप्तजिह्वो मानवः प्रातरुत्थितः।
मासत्रयं विधानेन जीवेद्वर्षशतत्रयम् ॥ ११८ ॥
न चैव प्रभवेन्मृत्युर्नालक्ष्मीर्न गरं विषम्।
नचोपसर्गिकाः केचिद्रोगाः शारीरमानसाः ॥ ११९ ॥

त्रिफलात्वचमायसं च चूर्णं सह यष्टीमधुकं समांशकम्।
मधुना सह सर्पिषा दिनान्ते पुरुषो निःपरिहारि शीलयेत् ॥
तिमिरक्षतरक्तराजिकण्डूक्षणदान्ध्यार्बुददाहतोदशूलान्।
पटलकमर्मशुक्रकाचपिल्लं शमयत्येव निषेवतः प्रयोगः॥ १२१

न च केवलमेतदलोचनां विहितो रोगनिबर्हणाय योगः ।
दशनश्रवणोत्थकण्ठजानां प्रशमे हेतुरयं तथाऽऽमयानाम् १
प्रमेहमर्शांसि भगन्दरं च किलासकुष्ठानि हलीमकं च ।
पलितानि च नाशयेत्तथाऽग्निं चिरनष्टं प्रकरोति सुप्रचण्डम्
दयिताभुजपञ्जरोपगूढः स्फुटचन्द्राभरणासु यामिनीषु ।
सुरतान्यनिशं निषेवतेऽसौ पुरुषो योगवरं निषेवमाणः ॥१२
स्मृतिविक्रमबुद्धिशक्तियुक्तः शरदां जीवति वै शतं समग्रम्

त्रिफलां निष्कुलां कृत्वा वारिणा तां स्थितां निशि
प्रातः प्रातः पिबेद्धीमान्विषमज्वरशान्तये ॥ १२५

खदिरत्रिफलानिम्बपटोलैः क्वथितं जलम् ।
पिबेच्छ्लेष्मामयहरं रक्तपित्तविकारनुत् ॥ १२७ ॥
त्रिवृद्दन्तीविशालाभिः सह पीतं फलत्रिकम् ।
हन्यादशेषकुष्ठांश्च सोदावर्तान्कृमींस्तथा ॥ १२८ ।

पथ्यादलानां कुडवं प्रकल्प्य बिभीतकानां कुडवावुभौ च
प्रस्थं च धात्रीदलतो विपाच्य द्रोणे जलस्याथ चतुर्थशेषे ॥
प्रक्षिप्य तस्मिन् त्रिकटोर्दशैव पलानि तेन त्रिफलाजलेन
प्रस्थं च तस्मिन् प्रपचेद्घृतस्य चक्षुष्यमेतत्परमं प्रदिष्टम् ॥
अक्ष्णोर्मलान्नाशयति प्रसह्य दृष्टिं प्रसन्नां विदधाति सद्यः
हन्यादशेषं तिमिरं तथाऽक्ष्णोः स्रावं रुजं रागविदाहकण्डू

त्रिफला सर्वरोगघ्नी मेधायुःस्मृतिबुद्धिदा ।
त्रैफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम् ॥ १३२
तमहोरात्रिकं लेपं पिबेत्क्षौद्रोदकाप्लुतम् ।
प्रभूतस्नेहमशनं जीर्णे तत्र प्रशस्यते ।
जीवत्यब्दशतं तस्य समाभ्यासात्समाः शतम् ॥ १३

इति त्रिफलाकल्पः समाप्तः ॥

अथातः काकमाचीकल्पं व्याख्यास्यामः—

पृष्ठे हिमवतो जातां काकमाचीं फलान्विताम् ।
संपूर्णपत्रसंयुक्तां मेध्यामग्निविपाचिताम् ॥ १३४ ॥
पलानि दश संहृत्य तैलाच्च पलपञ्चकम् ।
कृत्वा कल्कं च भुञ्जीत पिबेच्चामलकोदकम् ॥१३५॥
सप्तरात्रत्रयं कृत्वा ब्रह्मचारी जितेन्द्रियः ।
सुपर्णोलूकगृध्राणां तुल्यचक्षुर्भवेदसौ ॥ १३६ ॥
वलिभिः पलितैस्त्यक्तो दृढकायो मृजान्वितः ।
नीलस्निग्धसुकेशश्च जीवत्यायुःशतं नरः ॥ १३७ ॥
शाकेन तैलसिद्धेन भुञ्जानः षष्टिकौदनम् ।
पिबेच्चामलकं क्वाथं मधुमात्रासमन्वितम् ॥ १३८ ॥
दिव्यचक्षुर्भवेत्तेषां षण्मासेन न संशयः ।
जीवेत्सुदृढकायश्च समाः शतमयं नरः ॥ १३९ ॥
काकमाचीरसे सिद्धं पिबेत्तैलं विधानतः ।
धात्रीफलरसेनाथ भुञ्जानः षष्टिकौदनम् ॥ १४० ॥
कुष्ठाद्यैर्व्याधिभिर्मुक्तो हिरण्यवरियोपमः ।
सम्यक्प्रयोगः परमो जीवत्यष्टशतं नरः ।
हिमवत्पृष्ठयोगस्तु पुंसो भवति कस्यचित् ॥ १४१ ॥
सर्वत्र यो भवेद्योगः काकमाच्यास्तं निबोधत ।
त्रिफलां शस्तभूजातां काकमाचीं ध्रुवं भिषक् ॥ १४२॥
योजयेद्भृङ्गराजं च विधिनाऽनेन यत्नतः ।
विशेषस्तस्य कर्तव्यो द्वादशाहमतन्द्रितः ।
द्विगुणः परिहारश्च षष्टिकक्षीरभोजनम् ॥ १४३ ॥

इति काकमाचीकल्पः समाप्तः ॥

अथातः शतावरीकल्पं व्याख्यास्यामः ।

अतिपीताऽतिकृष्णा वा भूमिः सर्वगुणान्विता ।
तत्र जन्म शतावर्या शस्ते ग्राहयेत्तु ताम् ॥ १४४ ॥
अशुष्कां पल्लवोपेतां सर्वद्वन्द्वविवर्जिताम् ।
मूलैर्नातिकृशैः स्निग्धैर्बहुलैः परितो वृताम् ॥ १४५ ॥
सुस्निग्धस्विन्नशुद्धश्च कल्यो बलसमन्वितः ।
स्नातः शुक्लाम्बरच्छन्नः प्रणम्याथ गुरून्द्विजान् ॥१४६
पुष्ये पुनर्वसौ चाऽपि अनुकूले शुभे तिथौ ।
हुत्वा प्राणाहुतीरष्टौ शतावर्या घृतस्य च ॥ १४७ ॥
मङ्गलाचारसंपन्नः प्रविशेन्मठमावृतम् ।
महार्हैः सुहृदैः स्निग्धैरनुकूलैः समन्वितः ॥ १४८ ॥
सूत्रं मध्यममाकृष्य शोधयेत्खण्डशः कृताम् ।
निष्पीड्य स्वरसं तस्याः शतावर्याः सुबुद्धिमान् ॥ १४९
सुखशय्यासमासीनः शुक्लाम्बरधरः शुचिः ।
रसस्य पञ्चकर्षं तु सप्त वा दश चैव वा ॥ १५० ॥
पीत्वा कण्ठविशुद्ध्यर्थं पयः केवलमाहरेत् ।
जीर्णौषधस्तु सायाह्ने पयसः प्रपिबेच्छतम् ॥ १५१ ॥
कृष्णायाः कृष्णवत्साया युक्त्या तं तु समाहितः ।
क्रमेणानेन सप्ताहाद्द्विगुणं प्रपिबेन्नरः ॥ १५२ ॥
रसायनं भवेत्तस्य निष्क्रामन्मठकाच्छनैः ।
स्वस्त्याशीर्वादसंपूतः सप्ताहमजरस्त्वसौ ॥ १५३ ॥
पयःषष्टिकभोजी स्यात्पयःपायी तथैव च ।
मुद्गशाल्यन्नमश्नीयाच्छाष्टिकं पयसाऽपि वा ॥ १५४ ॥
शालीनामथ मण्डेनानम्लेनानुपदं चरेत् ।
पिबेचामलकीतोयं स्त्रियश्च द्विगुणं त्यजेत् ॥ १५५ ॥

अनेन क्रमयोगेन ऋतुं त्वयनमेव वा ।
सिद्धिकामः पिबेदेनामब्दं वाऽपि न संशयः ॥ १५६॥
बल्या स्वर्या च वृष्या च दोषत्रयविनाशिनी ।
आयुष्या पौष्टिकी धन्या वयसः स्थापनी परम् ॥ १५७
निशान्ध्यज्वरखालित्यक्षीणक्षतनिवर्तनी ।
वन्ध्यागर्भप्रजननी रेतोदोषविनाशिनी ॥ १५८ ॥
अग्र्या रसायने चैषा वलीपलितनाशिनी ।
तुष्टेन विन्दुना तस्य दत्तं वरशतं परम् ॥ १५९ ॥

इति शतावरीकल्पः समाप्तः ।

---

अथातो भल्लातककल्पं व्याख्यास्यामः ।

वातश्लेष्महरं श्रेष्ठं ग्रहण्यर्शोनिवर्तनम् ।
वृष्यमग्निसमं वीर्ये वैद्याः प्राहुररुष्करम् ॥ १६० ॥
शुचिशुक्ले समादाय कृमिकीटविवर्जितम् ।
बद्ध्वा पटे सुपूते हि यवपल्ले निधापयेत् ॥ १६१ ॥
तत्पिबेद्धेमने मासि शुद्धः शुद्धेन्द्रियः क्षमी ।
पाटयित्वाऽऽयसे पात्रे दश भल्लातकान्दहेत् ॥ १६२ ॥
निःस्राव्य तद्रसं पूतं पयसा सह दापयेत् ।
युगमात्रोदिते सूर्ये घृतदिग्धौष्ठतालुकः ॥ १६३ ॥
क्रमेणानेन पुनः पञ्चवृद्ध्या शतं पिबेत् ।
तथैवापनयेद्भूयः पञ्च पञ्च यथाक्रमम् ॥ १६४ ॥
एवं पीत्वा सहस्रे द्वे नरः सर्वामयाञ्जयेत् ।
अन्तर्धूममदग्धान्वा मथितेनोपयोजयेत् ॥ १६५ ॥
मासं तैलोष्णवर्जी तु रसं चाप्युपभोजयेत् ।
घृतभृष्टं द्विधा शुक्तमन्ताद्येन प्रयोजयेत् ॥ १६६ ॥
यथालाभेन वा योज्यं शीतपानान्नसैन्धवैः ।
प्रयोगाद्द्विगुणश्चास्य परिहारः सुखावहः ॥ १६७ ॥

एतत्कफघ्नमायुष्यं माङ्गल्यं पुष्टिवर्धनम् ।
नाशनं मेहकुष्ठानां कृमीणामर्शसामपि ॥ १६८ ॥
योनिशुक्रप्रदोषेषु वलीपलितनाशनम् ।
वपुर्मेधास्मृतिकरं पाण्डुहृद्रोगनाशनम् ॥ १६९ ॥
मेदोजानां विकाराणां नाशनं श्लेष्मकासजित् ।
मन्दाग्नीनां च परममेतदुक्तं रसायनम् ॥ १७० ॥
वर्जयेद्दधिशुक्तं च तैलाभ्यङ्गाग्निसेवनम् ।
शुष्कवल्लूरमांसाध्वव्यायामस्त्रीनिषेवणम् ॥ १७१ ॥
भल्लातकानि पुष्टानि धान्यराशौ निधापयेत् ।
ग्रीष्मे संगृह्य हेमन्ते स्वादुस्निग्धहिमैः पुनः ॥ १७२ ॥
संस्कृतस्तान्यष्टगुणे सलिलेऽष्टौ विपाचयेत् ।
अष्टांशशिष्टं तत्क्वाथं सक्षीरं शीतलं पिबेत् ॥ १७३ ॥
वर्धयेत्प्रत्यहं चानु तत्रैकैकमरुष्करम् ।
सप्तरात्रत्रयं यावत्त्रीणि त्रीणि ततः परम् ॥ १७४ ॥
आचत्वारिंशतस्तानि ह्रासयेद्वृद्धिवत्ततः ।
सहस्रमुपयुञ्जीत सप्ताहैरिति सप्तभिः ॥ १७५ ॥
यन्त्रितात्मा घृतक्षीरशालिषष्टिकभोजनः ।
तद्वत्त्रिगुणितं कालं प्रयोगान्तेऽपि चाचरेत् ॥ १७६ ॥
आशिषो लभते पूर्वा बल्दर्शिं विशेषतः ।
प्रमेहकृमिकुष्ठार्शोमेदोदोषविवर्जितः ॥ १७७ ॥

पुष्टानि पाकेन परिच्युतानि भल्लातकान्याढकसंमितानि ।
घृष्ट्वेष्टकाचूर्णकणैर्जलेन प्रक्षाल्य संशोष्य च मारुतेन ॥ १७८॥
जर्जराणि विपचेज्जलकुम्भे पादशेषघृतगालितशीतम् ।
तद्रसं पुनरपि श्रपयेच्च क्षीरकुम्भसहितं चरणस्थे ॥ १७९ ॥
सर्पिः पक्वं तेन तुल्यप्रमाणं युञ्ज्यात्स्वेच्छं शर्करायां रजोभिः ।
एकीभूतं तद्धजक्षोभणेन स्थाप्यं [illegible] सप्तमम् ॥

तत्र ये वानराः केचिद्राक्षसैर्पातिता रणे ।
तानिन्द्रो जीवयामास सुधाबिन्दुनिषेचनैः ॥ १९० ॥
संसिच्यामृतवर्षेण मघवान्वानरागतः ।
ततो येषु प्रदेशेषु कपिगात्रपरिच्युताः ॥ १९१ ॥
निपेतुर्जगतः केचित्पीयूषबिन्दवः ।
अन्येषु प्रदेशेषु ततो जाता वरौषधी ॥ १९२ ॥
गुडूची छिन्नरुहेति नामोक्ता छिन्नरोहिणी ।
निर्दिष्टाऽमृतवल्ली च वत्सादन्यमृतसंभवा ॥ १९३ ॥
कषायतिक्तमधुरा रोचनी दीपनी हिता ।
उष्णा हृद्या च बल्या च हन्ति रक्तकफानिलान् ॥
कालकूटप्रशमनीं गुडूचीं परिकल्पिताम् ।
खण्डानि सर्पिषा भृष्ट्वा माहेन्द्रस्य नवाथ वा ॥ १९५॥
पुनः पुनः प्रतिदिनं यथेष्टाहारसेवितम् ।
जयेत्कृष्णां क्षयं श्वासं सकासं गुल्मपाण्डुम् ॥ १९६ ॥
पित्तज्वरेऽपि सन्तापे स्नेहयोजितम् ।
जयेद्भ्रममुदावर्तं पानरूक्षमयोपतः ॥ १९७ ॥
कषायश्छिन्नरोहाया निहन्याद्विषमज्वरम् ।
सन्निज्वरं ज्वरं जीर्णं तृतीयकचतुर्थकौ ॥ १९८ ॥
निःक्वाथोऽमृतवल्ल्यास्तु शुण्ठीचूर्णसमन्वितः ।
पीतो हन्ति कटीपृष्ठपादजङ्घोरुजां रुजम् ॥ १९९ ॥
अमृतायाः पलशतं चूर्णीकृत्य तुलाघृतम् ।
घृतक्षौद्रगुडं चाथ सर्वमेकत्र संलिहेत् ॥ २०० ॥
यथाग्न्यभ्यवहारस्तु नरो हितमिताशनः ।
नास्य कश्चिद्भवेद्व्याधिर्न जरा पलितं न च ॥ २०१ ॥
न गृध्रसी न वातासृङ् नैव विषमज्वरः ।
न च नेत्रगता रोगा परं चैतद्रसायनम् ॥ २०२ ॥

मेधाकरं त्रिदोषघ्नं, प्रयोगादस्य बुद्धिमान्।
जीवेद्वर्षशतं पूर्ण यथैकं दिवसं तथा ॥ २०३ ॥
स्वरसममृतवल्ल्या यः पिबेन्मासमेकं
परिस्रुतघृतभक्षः क्षीरयूषौदनाशी।
वलिपलितविहीनः सर्वरोगैर्विमुक्तो
तरुरिव नवपत्रः स्निग्धकान्तिर्विभाति ॥ २०४ ॥
चूर्णशतं सघृतं मधुमिश्रं छिन्नरुहं प्रकरोति नरो यः।
व्याधिशतं च जरां विनिहन्याज्जीवति वर्षशतं पुनरन्यम् ॥

---

अथातो गोक्षुरकल्पं व्याख्यास्यामः।

अरिष्टपाषाणपथि श्मशानजीर्णालये गोक्षुरकं प्रजातम्।
अपास्य सुक्षेत्रनदीतडागगोष्ठप्रजातं समुपाददीत ॥ २०६ ॥
शरद्यपेतानिलमेघपङ्के फलान्वितं गोक्षुरकं समूलम्।
चूर्णीकृतं सान्द्रपटान्तपूतमथैनमत्यन्तविशुद्धकायः ॥ २०७ ॥
तिथौ प्रशस्ते पयसा लिहेत्तत्कर्षाभिवृद्ध्या द्विपलं तु यावत्।
दिने दिने सार्धपलं तु नित्यं जीर्णे पयःषष्टिकभोजनं च ॥
ततोऽष्टरात्रात्परतस्तु कामं वृष्यः ककुद्मानिव गोकुलेषु।
प्रकामकामः प्रमदासहस्रं भजेदुदीर्णेन्द्रियसर्वचेष्टः ॥ २०९ ॥
यां चापि गच्छेत्प्रमदां स वृद्धां हिमेन्दुगङ्गामलकुन्दकेशीम्।
सा चापि कौमारमुपैति भाव रूपान्विताऽथाप्सरसेव भाति ॥

इत्यगस्तिप्रोक्तो गोक्षुरकल्पः।

---

अथातो लशुनकल्पं व्याख्यास्यामः।

शीतवर्षहिमदिग्धतनूनां स्तब्धभग्नकुटिलव्यथितास्थ्नाम्।
भेषजस्य पवनोपहतानां वक्ष्यते विधिरतो लशुनस्य ॥ २११ ॥
राहोश्च्युतचक्रेण लूनाये पतिता गलात्।
अमृतस्य कणा भूमौ ते रसोनत्वमागताः ॥ २१२ ॥

तत्र ये वानराः केचिद्राक्षसैर्घातिता रणे ।
तानिन्द्रो जीवयामास रामप्रियचिकीर्षया ॥ १९० ॥
संसिच्यामृतवर्षेण भगवान्पाकशासनः ।
ततो येषु प्रदेशेषु कपिगात्रपरिच्युताः ॥ १९१ ॥
हिताय जगतः केचित्पेतुरमृतबिन्दवः ।
अवन्तेषु प्रदेशेषु ततो जाता वरामृता ॥ १९२ ॥
गुडूची छिन्नरोहेति सैवोक्ता छिन्नरोहिणी ।
निर्दिष्टाऽमृतवल्ली च यस्मादमृतसंभवा ॥ १९३ ॥
कषायतिक्तमधुरा रोचनी दीपनी हिता ।
उष्णा हृद्या च कण्ठ्या च हन्ति रक्तकफानिलान् ॥
तामङ्गुष्ठपर्वमात्रां गुडूचीं परिकल्पिताम् ।
खण्डानि सर्पिषा भृष्ट्वा खादेत्सह क्वाथ वा ॥ १९५ ॥
पुनः पुनः प्रतिदिनं यथेष्टाहारचेष्टितम् ।
जयेत्तृष्णां भ्रमं श्वासं सकासं शूलवेपथुम् ॥ १९६ ॥
पिबेन्नरोऽपि तत्क्वाथमेरण्डस्नेहयोजितम् ।
जयेद्गृध्रस्युदावर्तं वातरक्तमशेषतः ॥ १९७ ॥
कषायश्छिन्नरोहाया निहन्याद्विषमज्वरम् ।
रात्रिज्वरं ज्वरं जीर्णं तृतीयकचतुर्थकौ ॥ १९८ ॥
निःक्वाथोऽमृतवल्ल्यास्तु शुण्ठीचूर्णसमन्वितः ।
पीतो हन्ति कटीपृष्ठपादजङ्घोरुजां रुजम् ॥ १९९ ॥
अमृतायाः पलशतं चूर्णीकृत्य तुलाधृतम् ।
घृतक्षौद्रगुडं चाथ सर्वमेकत्र संलिहेत् ॥ २०० ॥
यथाग्न्यभ्यवहारस्तु नरो हितमिताशनः ।
नास्य कश्चिद्भवेद्व्याधिर्न जरा पलितं न च ॥ २०१ ॥
न गृध्रसी न वातासृङ् चैव विषमज्वरः ।
न च नेत्रगता रोगा परं चैतद्रसायनम् ॥ २०२ ॥

मेधाकरं त्रिदोषघ्नं, प्रयोगादस्य बुद्धिमान्।
जीवेद्वर्षशतं पूर्णं यथैकं दिवसं तथा ॥ २०३ ॥
स्वरसममृतवल्ल्या यः पिबेन्मासमेकं
परिस्रुतघृतभक्षः क्षीरयूषौदनाशी।
वलिपलितविहीनः सर्वरोगैर्विमुक्तो
तरुरिव नवपत्रः स्निग्धकान्तिर्विभाति ॥ २०४ ॥
चूर्णशतं सघृतं मधुमिश्रं छिन्नरुहं प्रकरोति नरो यः।
व्याधिशतं च जरां विनिहन्याज्जीवति वर्षशतं पुनरन्यम् ॥

---

अथातो गोक्षुरकल्पं व्याख्यास्यामः।

अरिष्टपाषाणपथि श्मशानजीर्णालये गोक्षुरकं प्रजातम्।
अपास्य सुक्षेत्रनदीतडागगोष्ठप्रजातं समुपाददीत ॥ २०६ ॥
शरद्यपेतानिलमेघपङ्के फलान्वितं गोक्षुरकं समूलम्।
चूर्णीकृतं सान्द्रपटान्तपूतमथैनमत्यन्तविशुद्धकायः ॥ २०७ ॥
तिथौ प्रशस्ते पयसा लिहेत्तत्कर्षाभिवृद्ध्या द्विपलं तु यावत्।
दिने दिने सार्धपलं तु नित्यं जीर्णे पयःषष्टिकभोजनं च ॥
ततोऽष्टरात्रात्परतस्तु कामं वृष्यः ककुद्मानिव गोकुलेषु।
प्रकामकामः प्रमदासहस्रं भजेदुदीर्णेन्द्रियसर्वचेष्टः ॥ २०९ ॥
यां चापि गच्छेत्प्रमदां स वृद्धां हिमेन्दुगङ्गामलकुन्दकेशीम्।
सा चापि कौमारमुपैति भावं रूपान्विताऽथाप्सरसेव भाति ॥

इत्यगस्तिप्रोक्तो गोक्षुरकल्पः।

---

अथातो लशुनकल्पं व्याख्यास्यामः।

शीतवर्षहिमदिग्धतनूनां स्तब्धभग्नकुटिलव्यथितास्थ्नाम्।
भेषजस्य पवनोपहतानां वक्ष्यते विधिरतो लशुनस्य ॥ २११ ॥
राहोरच्युतचक्रेण लूनाद्ये पतिता गलात्।
अमृतस्य कणा भूमौ ते रसोनत्वमागताः ॥ २१२ ॥

द्विजा नाश्नन्ति तमतो दैत्यदेहसमुद्भवम् ।
साक्षाच्चामृतसंभूतं ग्रामीणकरसायनम् ॥ २१३ ॥
शीलयेल्लशुनं शीते वसन्तेऽपि कफोल्बणः ।
घनोदयेऽपि वातार्तः सदा वा ग्रीष्मलीलया ॥ २१४॥
मासः परोऽस्य रसकल्कनिषेवणाय
स्वच्छन्दमप्युपदिशन्ति चिकित्सकास्तु ।
षण्मासमन्नविधिना तमु शस्तमाहुः
पक्षप्रयोगमपि हीनतरं रसोने ॥ २१५ ॥
रसोनकल्पो मृदुनौजसा हि प्रयुज्यमानः सहसा हि तस्य ।
दाहातिसारारतिचिचनाद्यान्कुर्यादवक्तं त्वरितो न युञ्ज्यात् ॥
जीर्णशाल्योदनं जीर्णे शङ्खकुन्देन्दुपाण्डुरम् ।
भुञ्जीत यूपैः पयसा रसैर्वा धन्वचारिणाम् ॥ २१७॥
दीप्ताग्निर्मण्डकान् खादेद्धृतमण्डोपसेचनान् ।
अखण्डमण्डलेन्द्वाभानिण्डरीखण्डमण्डितान् ॥ २१८ ॥
मद्यमेकं पिबेत्तत्र हृद्यगन्धं जलान्वितम् ।
अमद्यपो मस्तुफलाम्लतक्रमवन्तिसोमं च सुगन्धिशीतम् २१९
सौवीरकं वारि च मातुलुङ्गात् कूपोदकं वा परिसित्यकं वा ।
तत्कल्कं वा समघृतं घृतपात्रे स्वजाहृतम् ।
स्थितं दशाहमश्नीयात्तद्वद्वा पयसां समम् ॥ २२० ॥
सद्यः पिष्टं सर्पिषा संयुतं वा निर्यासेन स्वेन युक्तं प्रकामम् ।
भुञ्जीतैनं पूर्वकैरेव पानैः कोष्णाम्भोभिर्वैष कल्पोऽतिवीर्यः ॥
रसोनकल्कः सहशाजसर्पिः षण्मासमुर्व्यामुपितो निहन्ति ।
अभ्यङ्गपानाञ्जननस्ययुक्तो ह्युरोविकारान् विषमज्वरं च ॥

१ 'साक्षादमृतसंभूतेरत्पाभेः' स रसायनम्' क. । २ 'साधुतरं' क. ३ 'जाङ्गलजं रसं वा' क. । ४ 'वसया' क. ।

समतैलं सशुक्तं वा यवराशौ समास्थितम् ।
वातरोगान् जयेत् खादन् घृततैलोत्तराशनः ॥ २२३ ॥
तैलसर्पिर्गुडसिताः पृथक्कुर्यात्पलोन्मिताः ।
द्वे पले लशुनाच्छुद्धात्त्र्यूषणं कुडवत्रयम् ॥ २२४ ॥
पलं त्वचश्च तच्छ्लक्ष्णं निहितं घृतभाजने ।
द्वे समे यवमध्यस्थं पूर्वस्मादधिकं गुणैः ॥ २२५ ॥
क्षुण्णां क्षिपेत् कन्दतुलां तक्रस्य पलविंशतौ ।
गते हि सप्तरात्रे तु तुलार्धमसितान् तिलान् ॥ २२६ ॥
धौतक्षुण्णान् पृथक् क्षौद्रं गुडः शुण्ठी चतुःपलम् ।
अजाजीचव्यधान्याग्निकृष्णाग्रन्थिकदीप्यकान् ॥२२७॥
पलोन्मितान् चतुर्जातात् पलमेकं सुचूर्णितम् ।
पृथक् पलाष्टकं तैलाद्घृतात् क्षुण्णाच्च सर्षपात् ॥ २२८॥
पट्वनि पञ्च क्षारौ द्वौ दद्यात्तत्राक्षमानतः ।
एकादशाहं तद्धान्ये स्थितमश्नन् भगे भगे ॥ २२९ ॥
गुणान् रासायनान् सर्वान् संप्राप्नोति निरामयः ।
द्विपञ्चमूलनिष्क्वाथे नल्वणे लशुनाढकम् ॥ २३० ॥
पिष्टं पर्युषितं वर्षं हन्ति वातकफामयान् ।
नवनीतसमांशं वा खादेत्तत्कल्कमर्दिते ॥ २३१ ॥
कृशोऽश्वगन्धोद्भवचूर्णकीर्णं सन्नस्वरो यष्टिमधूदपानम् ।
तैलेन गुल्मी खदिरेण कुष्ठी खादेत् क्रिमिघ्नैः क्रिमिमान् रसोनम्
घृतदुग्धैश्च यक्ष्माणमर्शांसि कुटजत्वचा ।
हन्ति त्रिफलया मेहकासश्वासविलम्बिकाः ॥ २३३ ॥
त्रिरात्रमुषितं क्षुण्णं लशुनं खादयेत्ततः ।
क्षीरदध्याज्यमध्ये तु ब्राह्मणस्यापि शस्यते ॥ २३४ ॥
पित्तरक्तविनिर्मुक्ते समस्तावरणावृते ।
शुद्धे वा विद्यते वायौ न द्रव्यं लशुनात्परम् ॥ २३५ ॥

सुखात्मनां विशेषेण प्रयोगो लशुनोद्भवः।
नारदेनोद्भवस्तेष वातभग्नस्य कल्पितः ॥ २३६ ॥
आमाम्बुपानेक्षुविकारमत्स्ययानाध्ववातातपभाष्यचिन्ताः।
स्वप्नं दिवा जागरणं निशासु पिष्टं व्यवायं दधि चात्र नेच्छेत्॥
स्नेहकल्कविधानेन स्नेहयुक्तं प्रयोजयेत्।
लशुनं स्नेहसंयोगाद्गरीयान् जायते हितम् ॥ २३८ ॥
पित्तकोपभयादन्ते युञ्ज्यान्मृदुविरेचनम्।
रसायनगुणानेवं परिपूर्णान् समश्नुते ॥ २३९ ॥
प्रियाम्बुगुडदुग्धस्य पिष्टमद्याम्लविद्विषः।
अतितीक्ष्णैरजीर्णे च रसोनाद्यापदो ध्रुवम् ॥ २४० ॥
पाण्डूदरोरःक्षतशोफतृष्णापानात्ययच्छर्दिविषव्रणेषु।
पैत्ते विकारेऽक्षिगते विकारे क्षामे शरीरे च विवर्जनीयः २४
शीलित एष करोति दुरापं वह्निशरीरबलं सममेव।
वाग्मतिरूपगुणाढ्यसुतेच्छोः स्त्रीपुरुषस्य तु बीजविशुद्धिम् २४
अमृतकणसमुत्थं यो रसोनं रसोनं
विधियुतमिति खादेच्छीतकाले सदैव।
स नयति शतजीवी स्त्रीसहायो जरान्तं
कनकरुचिरगौरो नीरुजस्तुष्टपुष्टः ॥ २४३ ॥

---

अथातो गुग्गुलुकल्पं व्याख्यास्यामः।

हिमवच्छिखरे रम्ये सिद्धचारणसेविते।
तत्रस्थं भिषजां श्रेष्ठमात्रेयमृषिपुङ्गवम् ॥ २४४ ॥
देदीप्यमानं तपसा ज्वलन्तमिव पावकम्।
विनयादुपसंगम्य हारीतः परिपृष्टवान् ॥ २४५ ॥
भगवन् ! गुग्गुलोर्मात्रां योगं वीर्यं तथा गुणम्।
वक्तुमर्हसि रोगेषु येषु चापि प्रशस्यते ॥ २४६ ॥

एवमुक्तः स शिष्येण प्रत्युवाच महातपाः।
भानोर्मयूखैः संतप्ता ग्रीष्मे मुञ्चन्ति गुग्गुलुम् ॥२४७॥
हिमार्दिता वा हेमन्ते विधिना तं समाहरेत्।
जातरूपनिभं शुभ्रं पद्मरागनिभं क्वचित् ॥ २४८ ॥
क्वचिन्महिषनेत्राभं यक्षदैवतवल्लभम्।
विधानं तस्य विविधं निबोध वदतो मम ॥ २४९ ॥
त्रिदोषशमनो वृष्यः स्निग्धो बृंहणदीपनः।
गुग्गुलुः कटुकः पाके बलपुष्टिविवर्धनः ॥ २५० ॥
आयुष्यः श्रीकरः पुण्यः स्मृतिमेधाविवर्धनः।
पापप्रशमनः श्रेष्ठः शुक्रार्तवगदप्रणुत् ॥ २५१ ॥
गन्धवर्णरसोपेतो गुग्गुलुर्मात्रया युतः।
भेषजैः सह निःक्वाथ्यो यथाव्याधिहरैः पृथक् ॥२५२॥
मात्रावशिष्टं तं ज्ञात्वा गालयेच्छुक्लवाससा।
मृण्मये हेमपात्रे वा राजते स्फाटिकेऽपि वा ॥ २५३ ॥
पुण्ये तिथौ सुनक्षत्रे जीर्णाहारः क्षमान्वितः।
शुक्लवस्त्रोपसंवीतः शान्तो ह्येकमनाः शुचिः ॥ २५४ ॥
हविषा पावकं हुत्वा समुपास्य दिवाकरम्।
सुरानभ्यर्च्य विधिवद्द्विजातीन् स्वस्ति वाच्यथ ॥२५५॥
आशीर्भिरभिसंपूज्य वेदमन्त्रैरधिष्ठितम्।
दोषं देशं बलं कालं समीक्ष्य प्रयतः पिबेत् ॥ २५६ ॥
रास्नां गुडूचीमेरण्डं दशमूलीं प्रसारणीम्।
क्वाथैनेषां बलायाश्च यवान्या वातिकः पिबेत् ॥२५७॥
पृथक्शृतैर्जीवनीयैः पिबेत् पित्तामयार्दितः।
वासाचन्दनह्रीवेरपर्पटैर्वा कफार्दितः ॥ २५८ ॥
नाडीदुष्टव्रणग्रन्थिगण्डमालार्बुदान्वितः।
त्रिफलाक्वाथसंमिश्रं पिबेन्मेही व्रणी तथा ॥ २५९ ॥

किरातकामृतानिम्बवृषव्याघ्रीदुरालभाः।
एषां क्काथेन संयुक्तं गुग्गुलुं पाययेद्भिषक्।
गुल्मे कासे क्षतश्वासे विद्रधावरुचौ व्रणे ॥ २६० ॥
दार्वीगुडूचीत्रिफलापटोलक्काथसंयुतः।
कण्डूक्रिमिशोथाढ्यवातमेदःकफापहः ॥ २६१ ॥
पथ्या पुनर्नवा दारु गोमूत्रममृता तथा।
एषां क्काथे हितं पाण्डुशोफोदररुजावताम् ॥ २६२ ॥
भवेन्मात्रा पलं यावत्कर्षमारभ्य मध्यमा।
जीर्णेऽश्नीयान्मुद्गयूषविहितैर्मात्रया नरः ॥ २६३ ॥
पयसा षष्टिकान्नं तु शालीनामोदनं मृदु।
दिनानि सप्त प्रथमा मध्यमा द्विगुणा ततः ॥ २६४
त्रिगुणा परमा मात्रा विज्ञेया योगचिन्तकैः।
सेवेत गुग्गुलुं योगैर्वर्षे वर्षे नरः क्रमात् ॥ २६५ ॥
मेधान्वितो गृध्रदृष्टिराश्वेनाप्तसुगन्धिना।
अक्षीणवीर्यो नारीषु भवेद्गच्छन्मुहुर्मुहुः ॥ २६६ ॥
न हीयते वार्धकेऽपि बलरूपवपुर्गुणैः।
शोपमेहपरीतानां गुल्मिनामम्लपित्तिनाम् ॥ २६७
अष्ठीलिनां कुण्डलिनां तथाऽपसारकासिनाम्।
वातरक्तगदार्तानां विसर्पोदरशूलिनाम् ॥ २६८ ॥
भूतोपसृष्टदेहानां गुग्गुलुः परमो मतः।
सर्वामयहरः श्रीमान् सर्वासुरनमस्कृतः ॥ २६९ ॥
निपेवेद्यः पुरं सम्यक्स गच्छेद्ब्रह्मणा सह।
कर्षाभिवृद्ध्या नात्यर्थं पलादूर्ध्वं न पाययेत् ॥ २७०
बालवृद्धक्षतक्षीणगर्भिणीनां विवर्जयेत्।
शाकगोरसवर्जी स्यात्सपरीहारभोजनः ॥ २७१ ॥

पानमैथुनयानं च रोगार्तेषु विवर्जयेत्।
स्वस्थो य उपभुञ्जीत नास्ति तस्य विचारणा॥ २७२॥

---

अथातः पलाण्डुकल्पं व्याख्यास्यामः।

लशुनानन्तरं वायोः पलाण्डुः परमौषधम्।
साक्षादवस्थितं यत्र शकाधिपतिजीवितम्॥ २७३॥
यस्योपयोगेन शकाङ्गनानां लावण्यसारादिविनिर्मितानाम्।
कपोलकान्त्या विजितः शशाङ्को रसातलं गच्छति निर्विषण्णः॥
स्निग्धाङ्गत्वं गौरता कान्तिमत्ता वह्नेर्दीप्तिश्चर्मशुद्धिर्वृषत्वम्।
संप्राप्यन्ते यत्रणोद्वेगमुक्तैर्यस्याभ्यासादीर्घमायुः सुखं च २७५
अप्याहारे शीलितो दीर्घरात्रं स्वस्थस्य स्यात्तर्पणस्थैर्यकारी।
तैस्तैर्योगैर्योजितोऽयं पलाण्डुस्तांस्तान्रोगान् देहिनामुच्छिनत्ति॥
रसं रसोनवत्तस्य पीत्वाऽश्नीयात्तथैव च।
सबीजपूरस्वरसं मदिरां मधु सीधु वा॥ २७७॥
मरकतमणिनीलं नालमस्यातिहृद्यं
परिणतशरगौरं यत्सबीजं सुपुष्टम्।
ससुरभिसुमुखो वै दुग्धभक्तं च भुक्त्वा
मृदुधवलसुवृत्तैर्मण्डकैरार्तमूर्तिः॥ २७८॥
बहुशः शोधितैः शुभ्रैः शशाङ्कशकलोपमैः।
धारिकेन्दुरिकावल्लैः क्षीरोदावयवैरिव (?)॥ २७९॥
यवमुद्गमाषगोधूमबहुविधविकारकल्पितान् भक्ष्यान्।
काम्बलिकरागषाडवसट्टकखल्लकान् सफलसारान्॥ २८०
पटुसुरभिमधुरगन्धान्वलाक्षधवलबहुरसान्।
खर्जूरदाडिमसिताद्राक्षापनसान् तथाऽभ्यसेत्॥ २८१॥
लभते बलवर्णौजःस्वरसौमनस्यतेजांसि।
क्षीणशकृद्रुधिरोऽपि च रसोनवत्तद्रसं पीत्वा॥ २८२॥

इति पलाण्डुकल्पः।

---

अथातो वृद्धदारुकल्पं व्याख्यास्यामः।

त्रिकोणकाण्डा सुबहुप्रताना फलेषु पीता कुसुमेषु रक्ता।
पत्रैः सदुग्धैर्मृदुरोमचक्रैस्ताम्बूलतुल्यैर्घनकन्दमूला ॥ २८३ ॥
पवनविषश्वदंशवनितादिषु कामचरा
विविधमनःशरीरगदनिवृत्तिकरी।
भुवि परमौषधिर्महिषयष्टिरिति प्रथिता
क्वचिदपि वृद्धदारुकद्वयं त्वपि वेल्लरिका ॥ २८४ ॥
वसन्ते संगृहीतानि शोषितानि तथाऽऽतपे।
वृद्धदारुकमूलानि संचूर्ण्य सर्पिषा सह ॥ २८५ ॥
आम्राव्य घृतपात्रस्थं धान्ये पक्षमुपेक्षितम्।
लिह्यादनुपिबन् क्षीरं जीर्णे क्षीरघृताशनः ॥ २८६ ॥
तत्प्रयोगाज्जराजीर्णो वृद्धो दारुकतामियात्।
भग्नास्थि गद्गदशिशुः स्थूलोऽप्यास्यान्यरूपताम् ॥२८७॥
निरस्ताशेषदोषास्रनखभेदाद्युपद्रवः।
अपस्मारग्रहोन्मादपापालक्ष्मीविवर्जितः ॥ २८८ ॥
दीप्ताग्निर्बलवान् वाग्मी जीवेद्वर्षशतानि षट्।
चूर्णितरश्वगन्धायाः संयुतं त्रिंशता पलैः ॥ २८९ ॥
तत्तुल्यं दारुकं प्राश्य पयसा सर्पिषाऽथवा।
जीर्णे पूर्ववदश्नीयात् स जीवेच्छरदां शतम् ॥ २९० ॥
वाजिवेगो गजप्राणः सुरूपो भास्करद्युतिः।
यो लिह्यात्सर्पिषा चूर्णं वृद्धदारुकमूलजम् ॥ २९१ ॥
सप्ताहं यूषभक्ताशी स्यात्स किन्नरतुल्यवाक्।
लिहन् वा मधुसर्पिर्भ्यां धात्रीस्वरसभावितम् ॥ २९२॥
क्षीरेण वा पिबेन्मासं शतं जीवेदरुक् सुखी।
वृद्धदारुकमूलानां रसं क्षीरेण यः पिबेत् ॥ २९३ ॥

तत्कल्कसिद्धं सर्पिर्वा स जीवेन्निरुजः शतम् ।
पिप्पलीत्रिफलादार्वीमहौषधपुनर्नवाः ॥ २९४ ॥
पृथग्दशपलाः सर्वैस्तुल्यांशो वृद्धदारुकः ।
धान्याम्लपीतं तच्चूर्णं जीर्णे स्वच्छन्दभोजिनः ।
सदुष्टवातान् हन्त्याशु गुल्मोदरगरादिकान् ॥ २९५ ॥

इति वृद्धदारुककल्पः ।

---

अथातः कुष्ठकल्पं व्याख्यास्यामः ।

पलशतमविनष्टं कुष्ठचूर्णस्य यत्नात्
समधृतमधुयुक्तं स्थापितं सारभाण्डे ।
सुविहितमथ पश्चाद्धान्यराशौ न्यसेत्त-
द्दिवसशतमशीतिं यः पुमान् सिद्धिकामः ॥ २९६॥
अतः परं देववरं नमस्य तथाऽस्य पूजां महतीं च कृत्वा ।
पलद्वयं चाथ पलत्रयं वा यथोत्तरं ह्यग्निबलं समीक्ष्य ॥२९७॥
मासोपयोगेन वराङ्गनाभिर्मासद्वयेनैव तु यक्षिणीभिः ।
मासत्रयं यः पुरुषस्तु खादेज्जीयेत विद्याधरसुन्दरीभिः २९८
वरिषशतसमग्रं नागराजोपवीर्यः
सुभग इह वयःस्थो वेगवान् संप्रहृष्टः ।
गरुडसदृशदृष्टिस्तप्तहेमावदातः
सुरतरुचिरवारं याति नारीषु भोक्ता ॥ २९९ ॥

इति कुष्ठकल्पः ।

---

अथातस्तुवरककल्पं व्याख्यास्यामः ।

वृक्षास्तुवरका नाम पश्चिमार्णवतीरजाः ।
वीचीतरङ्गविक्षोभमारुतोद्धूतपल्लवाः ॥ ३०० ॥
तेभ्यः फलान्याददीत सुपक्वान्यम्बुदात्यये[1] ।
मज्जं फलेभ्यश्चादाय शोषयित्वा विचूर्ण्य च ॥ ३०१ ॥

---

१ 'सुपक्वान्यम्बुदागमे' क- ।

तिलवत् पीडयेद्द्रोण्यां क्वाथयेद्वा कुसुम्भवत् ।
तत्तैलं संभृतं भूयः पचेदासलिलक्षयात् ॥ ३०२ ॥
अवतार्य करीषे च पक्षमेकं निधापयेत् ।
स्निग्धस्विन्नो हृतमलः पक्षादुद्धृत्य यत्नतः ॥ ३०३ ॥
चतुर्थभक्तान्तरितः प्रातः पाणितलं पिबेत् ।
मन्त्रेणानेन पूतस्य तैलस्य दिवसे शुभे ॥ ३०४ ॥
मज्जसार महावीर्य सर्वान् धातून् विशोधय ।
शङ्खचक्रगदापाणिस्त्वामाज्ञापयतेऽच्युतः ॥ ३०५ ॥
तेनास्योर्ध्वमधस्ताच्च दोषा यान्त्यसकृच्चतः ।
सायमस्नेहलवणां यवागूं शीतलां पिबेत् ॥ ३०६ ॥
पञ्चाहानि पिबेत्तैलमित्थं वर्ज्यान् विवर्जयेत् ।
पक्षान्मुद्गरसान्नाशी सर्वकुष्ठैः प्रमुच्यते ॥ ३०७ ॥
तदेव खदिरक्वाथे त्रिगुणे साधु साधितम् ।
निहन्ति पूर्ववत्पक्कं पिबेन्मासं सुयन्त्रितः ॥ ३०८ ॥
तेनाभ्यक्तशरीरश्च कुर्वीताहारमीरितम् ।
भिन्नस्वरं रक्तनेत्रं शीर्णाङ्गं क्रिमिभक्षितम् ॥ ३०९ ॥
अनेनाशु प्रयोगेण साधयेत् कुष्ठिनं नरम् ।
सर्पिर्मधुयुतं पीतं तदेव खदिराद्भिना ॥ ३१० ॥
पक्षिमांसरसाहारं करोति द्विशतायुषम् ।
एकान्तरं तौवरकं च तैलं पिबेद्धिताशी नियमेन मासम् ।
प्रभिन्नकुष्ठो गलिताङ्गदेशस्त्वचं त्यजेत् सर्प इवाशु जीर्णाम् ३११
उपयुज्य योगमखिलं प्रतिदिनमेवं द्विकालमभियुक्तः ।
कुष्ठी कुष्ठमपोहति विशीर्णकण्ठोष्ठमांसमपि ॥ ३१२ ॥

इति तुवरास्थिकल्पः संपूर्णः ॥

---

अथातः सोमराजीकल्पं व्याख्यास्यामः ।

असनखदिरयूपैर्भावितां सोमराजीं
मधुघृतशिखिपथ्यालोहचूर्णैरुपेताम् ।
शरदि समवलिहानः पारिणामान्विकारान्
त्यजति हितमिताशी तद्वदाहारजातान् ॥ ३१३ ॥

तीव्रेण कुष्ठेन परीतमूर्तिर्यः सोमराजीं नियमेन खादेत् ।
संवत्सरं कृष्णतिलद्वितीयां स सोमराजं वपुषाऽतिशेते ॥३१४॥

ये सोमराज्या वितुषीकृतायाश्चूर्णीकृतायाः पयसि शृतायाः ।
उद्धृत्य सारं मधुना लिहन्ति तक्रं तथैवानु पिबन्ति चान्ये ॥

कुष्ठिनः शीर्यमाणाङ्गास्ते जाताङ्गुलिनासिकाः ।
भान्ति वृक्षा इव पुनः प्ररूढनवपल्लवाः ॥ ३१६ ॥

गोमूत्रे सप्तरात्रं शशिकलपलं वासितं मोचयित्वा
कुर्याच्छायाविशुष्कां पृथगिति च मापुनाटं सुपिष्टम् ।
अंशस्ताभ्यां तथांऽशः कृमिरिपुदहनस्फोटकृद्भ्यः स पूर्णो
गोमूत्रेणोपयुक्तः प्रमितहितभुजः श्वित्रमाश्वेव हन्ति ॥

इति सोमराजीकल्पः ॥

---

अथातो बीजपूरककल्पं व्याख्यास्यामः ।

सिन्धुत्थेन घनागमे तु सितया काले शरत्संज्ञके
हेमन्ते च कणार्द्रहिङ्गुरुचकैः सिद्धार्थतैलान्वितैः ।
एतैस्तैः शिशिरे मधावपि युतं ग्रीष्मे गुडेनान्वितं
सञ्ज्ञानामपि बीजपूरकमिदं प्राहुः प्रशस्तं बुधाः ११८

विश्वासैन्धवसंयुतं च शिशिरे क्षौद्रैर्वसन्तोदये
ग्रीष्मे क्षौद्रकणान्वितं च विमलैर्हिङ्ग्वष्टकैः प्रावृषि ।
युक्तं शर्करया शरद्यथ च हेमन्ते सहिङ्गुत्रयं
सेव्यं यद्विदुषा त्रिदोषशमने श्रीमातुलुङ्गं सदा ॥३१९॥

इति बीजपूरककल्पः ॥

अथातः कुङ्कुमकल्पं व्याख्यास्यामः ।

तीक्ष्णमुष्णं तथा वर्ण्यं हृद्यं पित्तविरोधि च ।
कटुकं मधुरं पाके विपाकं कुङ्कुमं स्मृतम् ॥ ३२० ॥
तस्य प्रयोगं वक्ष्यामि यथावदनुपूर्वशः ।
आस्थापितं यथान्यायं पुनः स्नेहेन तर्पितम् ॥ ३२१ ॥
करणे तिथिसंपन्ने गतौ वा मन्दभास्करे ।
अनवं कुङ्कुमं श्रेष्ठं श्लक्ष्णं दृषदि पेषयेत् ॥ ३२२ ॥
निष्पिष्टं कदलीनां क्वाथेन सह संयुतम् ।
मासं वाऽप्यर्धमासं वा यः पिबेत्प्रयतः शुचिः ॥३२३॥
जीर्णे यूषरसक्षीरैः पुराणं षष्टिकं भजेत् ।
न तस्य मूत्रविट्संगो नाश्मरी न भगन्दरः ॥ ३२४ ॥
न शोषो नैव च व्याधिर्न गराश्च विषाद्भयम् ।
नोष्णवातः प्रमेहो वा न मूत्राघातसंभवः ॥ ३२५ ॥
बस्तिसंशोधनाच्छ्रेष्ठमायुष्यं त्वक्प्रसादनम् ।
मेधारोग्यकरं ह्येतत्पवित्रं परमं स्मृतम् ॥ ३२६ ॥

इति कुङ्कुमकल्पः ॥

---

अथात एरण्डकल्पं व्याख्यास्यामः ।

वृष्यं सरं सूक्ष्मकटूष्णतीक्ष्णं कषायमेध्यं मधुरं विकाशि ।
एरण्डतैलं स्मृतिकान्तिमेधाशुद्धाग्निधीवृद्धिविशेषकारि ॥३२७॥
रक्तापहं वातविकारहन्तृ स्रोतःसु शुक्रे च विशुद्धकारि ।
माङ्गल्यमायुर्बलपुत्रदात्रु वर्णप्रसादस्य परस्य हेतुः ॥ ३२८ ॥
उत्कृष्टमध्यावरत्रिप्रकारं त्रिश्चैकसंख्यानियतैः फलैस्तु ।
शुण्ठीयवैरण्डकृतेन सामे कौलत्थयूषेण गदेऽनिलोत्थे ॥३२९॥
आरग्वधक्षीरफलत्रिकैश्च मृद्वीकया वाऽस्रजे वातपूर्वे ।
मूत्रेण गोः काञ्जिकमस्तुना वा कफे प्रवृद्धे सुरया तु शूले ॥

मण्डं पिबेत् षाष्टिकमोदनं वा जीर्णावसाने शृतवारिपायी ।
नतूपयुञ्जीत जगद्व्यवायं गुरूनभिष्यन्दकरांश्च भोज्यान् ॥३३१
न पेयमेतन्मदपाण्डुगुल्मतृट्छर्दिमूर्च्छार्तिविसूचिकासु ।
न गर्भिणीभिर्न च रक्तपित्ते नैव ज्वरे वा तिमिरोपसर्गे ३३२
अतोऽन्यथा तस्य निषेवितस्य कर्तुं क्रमीशो गुणरत्नमूल्यम् ।
दग्धानां जरया विरूपिततनोर्हीनाग्निवीर्यौजसां
दग्धानामिव साग्निना समरुता दावाग्निना माधवे ।
इत्युत्सार्य पुराणभावमखिलं पुंसां दशामन्वह-
मभ्यासेन रसायनीभवदिदं धत्ते वपुर्यौवनम् ॥ ३३३ ॥

इत्यैरण्डतैलकल्पः ।

इति श्रीवैद्यवरसोढलप्रथिते गदनिग्रहेऽष्टमे रसायनतन्त्रखण्डे औपधिकरपाधिकारो द्वितीयः ॥

---

## अथ भेषजकल्पाधिकारस्तृतीयः ।

औषधग्रहणयोग्या भूमिः, औषधग्रहणविधिश्च ।

धन्यसाधारणे देशे समे सन्मृत्तिके शुचौ ।
सश्मशानचैत्यायतनश्वभ्रवल्मीकवर्जिते ॥ १ ॥
मृदौ प्रदक्षिणजले कुशरोहिषसंस्कृते ।
अफालकृष्टे नाक्रान्ते पादपैर्बलवत्तरैः ॥ २ ॥
शस्यते भेषजं जातं युक्तं वर्णरसादिभिः ।
जन्त्वदग्धं दवादग्धमविदग्धं च वैकृतैः ॥ ३ ॥
भूतैश्छायातपान्ताद्यैर्यथाकालं च सेवितम् ।
अवगाढमहामूलमुदीचीं दिशमाश्रितम् ॥ ४ ॥
अथ कल्याणचरितः श्राद्धः शुचिरुपोषितः ।
गृह्णीयादौषधं सुस्थं स्थितं काले च कल्पयेत् ॥ ५ ॥
सक्षीरं तदसंपत्तावनतिक्रान्तवत्सरम् ।
गुडघृतक्षौद्रधान्यकृष्णाविडङ्गतः ॥ ६ ॥

पयो वाप्कायणं (?) ग्राह्यं विण्मूत्रं तच्च नीरुजम्।

कषायभेदास्तन्निरूपणं च।

कषाययोनयः पञ्च रसा लवणवर्जिताः॥ ७॥
रसः कल्कः शृतः शीतः फाण्टश्चेति प्रकल्पनाः।
पञ्च चैव कषायाणां पूर्वं पूर्वं बलाधिकाः॥ ८॥
सद्यः समुद्धृतात्क्षुण्णाद्यः स्रवेत्पटपीडितात्।
स्वरसः स समुद्दिष्टः, कल्कः पिष्टो द्रवाप्लुतः॥ ९॥
चूर्णोऽप्लुतः, शृतः क्वाथः, शीतो रात्रौ द्रवे स्थितः।
सद्योऽभितप्तः पूतस्तु फाण्टस्तन्मानकल्पने॥ १०॥
गुड्याम्राख्यादिबलतस्तथा च वचनं मुनेः।
मात्राया न व्यवस्थाऽस्ति व्याधिं कोष्ठं बलं वयः॥११॥
आलोच्य देशकालौ च योज्या तद्वच्च कल्पना।
मध्यं तु मानं निर्दिष्टं स्वरसस्य चतुःपलम्॥ १२॥
पेष्यस्य कर्षमालोड्यं तद्द्रवस्य पलत्रये।
क्वाथं द्रव्यपले कुर्यात्प्रस्थार्धं पादशेषितम्॥ १३॥
शीतं पलं पलैः षड्भिश्चतुर्भिस्तु ततः परम्।

स्नेहपाकविधिः।

स्नेहपाके त्वमानोक्तौ चतुर्गुणविवर्धितम्॥ १४॥
कल्कं स्नेहं द्रवं योज्यमधीते शौनकः पुनः।
स्नेहे सिध्यति शुद्धाम्बुनिःक्वाथस्वरसैः क्रमात्॥ १५॥
कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम्।
द्रवं तु पञ्चप्रभृति पृथक्स्नेहसमं क्षिपेत्॥ १६॥
शुष्कं द्रव्यं यदा न स्यात्तदा सद्यःसमुद्धृतम्।
द्विगुणं तत्प्रयोक्तव्यं कुडवादिद्रवं तथा॥ १७॥
नाङ्गुलिग्राहिता कल्के न स्नेहेऽग्नौ सशब्दता।
वर्णादिसंपच्च यदा तदैनं सिद्धमादिशेत्॥ १८॥

घृतस्य फेनोपशमस्तैलस्य तु तदुद्भवः।
लेहस्य तन्तुमत्ताऽप्सु मज्जनं सरणं न च ॥ १९ ॥
पाकश्च त्रिविधो मन्दश्चिक्कणः खरचिक्कणः।
मन्दः कल्कसमे किट्टे चिक्कणो मदनोपमे ॥ २० ॥
किंचित्सीदति कृष्णे वा वर्त्यमाने च पश्चिमः।
दग्धोऽत ऊर्ध्वं न कार्यः स्यादामस्त्वग्निसादकृत् ॥२१॥
मृदुर्नस्ये खरोऽभ्यङ्गे पाने बस्तौ च चिक्कणः।

मानपरिमाणनिरूपणम्।

शाणं पाणितलं मुष्टिं कुडवं प्रस्थमाढकम् ॥ २२ ॥
द्रोणं वहं च क्रमशो विजानीयाच्चतुर्गुणम्।
द्विगुणं योजयेदार्द्रे कुडवादि तथा द्रवम् ॥ २३ ॥
पेषणालोडने वारि स्नेहपाके च निर्द्रवे।
कल्पयेत्सदृशान्भागान्प्रमाणं यत्र नोदितम् ॥ २४ ॥
द्वौ शाणौ वटकः कोलं बदरं द्रंक्षणं च तौ।
अक्षः पिचुः पाणितलं सुवर्णं कवडग्रहः ॥ २५ ॥
कर्षो बिडालपदकं तिन्दुकः पाणिमानिका।
शब्दान्यत्र त्वभिन्नेऽर्थे शुक्तिरष्टमिकाऽपि तौ ॥ २६ ॥
पलं प्रकुञ्चो बिल्वं च मुष्टिराम्रं चतुर्थिका।
द्वे पले प्रसृतिस्तौ द्वावञ्जलिस्तौ तु मानिका ॥ २७ ॥
आढकं भाजनं कंसो द्रोणः कुम्भो घटोऽर्मणम्।
तुला पलशतं तास्तु विंशतिर्भार उच्यते ॥ २८ ॥
हिमवद्विन्ध्यशैलाभ्यां प्रायो व्याप्ता वसुन्धरा।
सौम्यं पथ्यं च तत्राद्यमाग्नेयं विन्ध्यमौषधम् ॥ २९ ॥

इति श्रीवैद्यवरसोढलप्रथिते गदनिग्रहेऽष्टमे रसायनतन्त्रखण्डे भेषजकल्पाधिकारस्तृतीयः ॥

## अथ दिनचर्याधिकारश्चतुर्थः ।

उत्थायोत्थायात्मवता स्वस्थेनारोग्यमिच्छता ।
यदनुष्ठेयमन्वहं तत्सर्वं संप्रवक्ष्यते ॥ १ ॥

दन्तधावननिषेधः ।

प्रतिपद्दर्शषष्ठीषु नवम्यां चैव भारत ।
दन्तानां काष्ठसंयोगाद्दहत्यासप्तमं कुलम् ॥ २ ॥
कनीन्यग्रसमस्थौल्यं सुकूर्चं द्वादशाङ्गुलम् ।
प्रातर्भुक्त्वा च मतिमान् भक्षयेद्दन्तधावनम् ॥ ३ ॥
करञ्जकरवीरार्कमालतीककुभासनाः ।
शस्यन्ते दन्तपवने ये चाप्येवंविधा द्रुमाः ॥ ४ ॥
निहन्ति गन्धं वैरस्यं जिह्वादन्तास्यजं मलम् ।
निष्कृष्य रुचिमाधत्ते सद्यो दन्तविशोधनम् ॥ ५ ॥

स्नेहगण्डूषधारणगुणाः ।

मुखवैरस्यदौर्गन्ध्यशोषजाड्यापहं सुखम् ।
स्थिरीकरं च दन्तानां स्नेहगण्डूषधारणम् ॥ ६ ॥

स्वस्थलक्षणम् ।

विण्मूत्राखिलदोषधातुसमता कांक्षाऽन्नपाने रुचि-
र्भुक्तं जीर्यति पुष्टये परिणतिः स्वप्नावबोधः सुखम् ।
गृह्णीते विषयान्यथास्वमुचितान्वृत्तिर्मनोनिर्वृतिः
स्वस्थस्याभिहितं चतुर्दशविधं जन्तोरिदं लक्षणम् ॥ ७ ॥

सुप्तोत्थितेन द्रष्टव्याः स्प्रष्टव्याश्च पदार्थाः ।

दध्याज्यादर्शसिद्धार्थबिल्वगोरोचनस्रजाम् ।
दर्शनं स्पर्शनं कार्यं प्रबुद्धेनाशुभापहम् ॥ ८ ॥

केशप्रसाधनगुणाः ।

पञ्चरात्रान्नखश्मश्रुकेशलोमानि कल्पयेत् ।
उत्पाटयेच्च लोमानि नासायां न कथंचन ॥ ९ ॥

दृष्टिदौर्बल्यतिमिरमक्ष्णोरुद्धरणाद्भवेत्।

तांम्बूलभक्षणगुणाः।

ताम्बूलपत्रं सक्षारं पूगाढ्यं च कफापहम् ॥ १० ॥
चूर्णं कफानिलहरं खादिरं कफपित्तनुत्।
संयोगतो दोषहरं कान्तिसौष्ठवकारकम्।
पथ्यं सुप्तोत्थिते भुक्ते स्नाते वान्ते च मानवे ॥ १२ ॥
द्विपत्रमेकपूगं च सचूर्णखदिरं च यत्।
रूक्षदुर्बलमत्तानामहितं चास्यशोषिणाम् ॥ १३ ॥
देहदृक्केशदन्ताग्निश्रोत्रवर्णबलक्षयम्।
शोषयित्वाऽनिलो रक्तं कुर्यात्ताम्बूलभक्षणात् ॥ १४ ॥
पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसंभवः।
चूर्णपर्णं हरत्यायुः सिरा बुद्धिविनाशिनी ॥ १५ ॥
आयुरग्रे यशो मूले मध्ये लक्ष्मीर्व्यवस्थिता।
तस्मादग्रं च मध्यं च मूलं पर्णे विवर्जयेत् ॥ १६ ॥

शिरोभ्यङ्गगुणाः।

केशभूमिगतान्रोगान् शिरोभ्यङ्गोऽपकर्षति।
केशानां मृदुतां स्नेहो रौक्ष्यशान्तिं करोति च ॥ १७ ॥
करोति शिरसस्तृप्तिं दन्तानां दृढतामपि।
तर्पणं चेन्द्रियाणां च दत्तोऽभ्यङ्गस्तु मूर्धनि ॥ १८ ॥
केशप्रसाधनी केश्या रजोजन्तुमलापहा।

कर्णे स्नेहपूरणगुणाः।

हनुमन्याशिरःकर्णशूलघ्नं कर्णपूरणम् ॥ १८ ॥

स्नेहाभ्यङ्गगुणाः।

अभ्यङ्गो मार्दवकरः कफवातविनाशनः।
धातूनां पुष्टिजननो मृजावर्णबलप्रदः ॥ १९ ॥

पादप्रक्षालनगुणाः ।

पादप्रक्षालनं पादमलरोगश्रमापहम् ।
दृष्टिप्रसादनं वृष्यं रक्षोघ्नं प्रीतिवर्धनम् ॥ २० ॥

पादाभ्यङ्गगुणाः ।

निद्राकरो देहसुखश्चक्षुष्यः पादरोगहा ।
पादत्वङ्मृदुकर्ता च पादाभ्यङ्गः प्रशस्यते ॥ २१ ॥

उद्वर्तनगुणाः ।

उद्वर्तनं वातहरं कफमेदोविलायनम् ।
स्थिरीकरणमङ्गानां त्वक्प्रसादकरं तथा ॥ २२ ॥

स्नानगुणाः ।

तन्द्रापापोपशमनं तुष्टिदं पुष्टिवर्धनम् ।
रक्तप्रसादनं चापि स्नानमग्नेश्च दीपनम् ॥ २३ ॥
तच्चातिसारज्वरितकर्णशूलार्दितादिषु ।
आध्मानारोचकाजीर्णभुक्तवत्सु च गर्हितम् ॥ २४ ॥

निर्मलाम्बरधारणगुणाः ।

श्रीमत्पारिषदं शस्तं निर्मलाम्बरधारणम् ॥ २५ ॥

गन्धमाल्यसेवनगुणाः ।

वृष्यं सौगन्ध्यमायुष्यं काम्यं पुष्टिबलप्रदम् ।
सौमनस्यं च लक्ष्मीदं गन्धमाल्यनिषेवणम् ॥ २६ ॥

नेत्राञ्जनगुणाः ।

पक्ष्मलं विशिखं कान्तममलोज्ज्वलमण्डलम् ।
नेत्रमञ्जनसंयोगाद्भवेच्चामलतारकम् ॥ २७ ॥

उपानद्धारणगुणाः ।

चक्षुष्यं स्पर्शनार्हं च पादयोर्व्यसनापहम् ।
बल्यं पराक्रमसुखं वृष्यं पादत्रधारणम् ॥ २८ ॥

छत्रधारणगुणाः ।

ईतेः प्रशमनं बल्यं गुप्त्यावरणशङ्करम् ।
घर्मानिलरजोम्बुघ्नं छत्रधारणमुच्यते ॥ २९ ॥

दण्डधारणगुणाः ।

स्खलतः संप्रतिष्ठानं शत्रूणां च निषेधनम् ।
अवष्टम्भकमायुष्यं भयघ्नं दण्डधारणम् ॥ ३० ॥

अग्निसेवनगुणाः ।

अग्निर्वातकफानाहशीतवेपथुनाशनः ।
आमाभिष्यन्दशमनो रक्तपित्तप्रदूषणः ॥ ३१ ॥

आहारनिरूपणम् ।

आहारः प्रीणनः सद्यो बलकृद्देहधारकः ।
सत्त्वायुःशक्तितेजोजोमत्युत्साहाभिवर्धनः ॥ ३२ ॥
अपि शाकं जलस्विन्नं लवणस्नेहवर्जितम् ।
बुभुक्षितस्य कल्यस्य स्वादु स्याद्बृंहणं तथा ॥ ३३ ॥
न तु षड्रससंपन्नं मन्दाग्नेर्भोजनं च यत् ।
क्षुत्संभवति जीर्णेषु मलदोषरसेषु या ॥ ३४ ॥
उचिताऽनुचिता माऽपि अन्नकालस्तु स स्मृतः ।

धातूनां प्रमाणनिरूपणम् ।

प्रसादाख्यो मतोऽन्नस्य परं जीर्णस्य सर्वशः ॥ ३५ ॥
स रसोऽञ्जलयस्तस्य नव देहेषु देहिनः ।
रक्तस्याञ्जलयस्त्वष्टौ शकृतः सप्त सर्वशः ॥ ३६ ॥
पित्तस्याञ्जलयः पञ्च षट् कफस्य प्रचक्षते ।
मूत्रस्य विद्याच्चत्वारो वसायाश्चाञ्जलित्रयम् ॥ ३७ ॥
द्वावञ्जली मेदसस्तु मज्ज्ञश्चैकोऽञ्जलिः स्मृतः ।
शुक्रस्य चाञ्जलिर्ज्ञेयो मस्तिष्कस्यौजसस्तथा ॥ ३८ ॥
चत्वारोऽञ्जलयः स्त्रीणां रजसः प्रसृतिस्तथा ।
द्वावञ्जली प्रसूतायाः स्तन्यस्यापि च योषितः ॥ ३९ ॥
एवमस्य परीमाणमनिर्देश्यं प्रचक्षते ।
प्रमाणमेतद्धातूनामदुष्टानामुदाहृतम् ॥ ४० ॥

हीनाः स्वेन प्रमाणेन विवृद्धाश्चापि धातवः ।
योजयन्ति विकारांस्तु दोषा वृद्धाः क्षयप्रदाः ॥ ४१ ॥
वालव्यजनमोजस्यं मक्षिकादीनपोहति ।
सेवेत विषयान्काले भुक्त्वा तत्परतां वशी ॥ ४२ ॥
नातिजागरणं निद्रा सर्वभूतहितैषिणी ।

सद्वृत्तनिरूपणम् ।

देवगोब्राह्मणाचार्यगुरुवृद्धान् सदाऽर्चयेत् ॥ ४३ ॥
चतुष्पथनमस्कर्ता दाता यष्टा प्रियंवदः ।
क्रुद्धानामनुनेता च दीनानामनुकम्पकः ॥ ४४ ॥
आश्वासकश्च भीतानां बन्धुवत्सर्वदेहिनाम् ।
रागद्वेषनिदानानां हन्ता धर्मपरायणः ॥ ४५ ॥
नित्यं हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः ।
दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः॥४६॥
पृष्ठतः सेवयेदर्कं जठरेण हुताशनम् ।
स्वामिनं सर्वभावेन परलोकममायया ॥ ४७ ॥
भुक्त्वा वास्तुकशाकेन सतक्रं लवणं पिब ।
हरीतकीं भुङ्क्ष्व राजन्नश्यन्तु व्याधयश्च ते ॥ ४८ ॥
न वेगान्धारयेद्विद्वान्वातविण्मूत्ररेतसाम् ।
जृम्भणाश्रुक्षवोद्गारश्वासतृष्णावमिक्षुधाम् ॥ ४९ ॥
धारितेष्वेषु जायन्ते तन्मार्गस्थानजा गदाः ।
धार्या वेगास्त्वशस्तानां मनोवाक्कायकर्मणाम् ॥ ५० ॥
न पीडयेदिन्द्रियाणि न चैतान्यतिलालयेत् ।
अनुयायात्प्रतिदिनं सर्वधर्मेषु मध्यताम् ॥ ५१ ॥
स्त्रियं श्रियं धनं वाऽपि परस्याभिलषेन्न तु ।
न कुर्याच्चञ्चलं चेतो न कालमतिपातयेत् ॥ ५२ ॥

प्रणयेनापि नो वाच्यं वचनं परतापकृत् ।
अहिंसा सततं कार्या धार्या चित्तस्य नित्यता ॥ ५३ ॥
हिताशी जुहुयान्नित्यमन्तरग्निं समाहितः ।
अन्नपानसमिद्भिर्ना मात्राकालौ विचारयन् ॥ ५४ ॥
अजातानां विकाराणामनुत्पत्तिकरं हितम् ।
मतिर्वचः कर्मसुखानुबन्धि सत्त्वं विधेयं विशदा च बुद्धिः ।
ज्ञानं तपस्तत्परता च योगे यस्यास्ति तं नाभिभवन्ति रोगाः ॥
अर्थेष्वलभ्येष्वकृतप्रयत्नः कृतादरो नित्यमुपायवत्सु ।
जितेन्द्रियं नानुपतन्ति रोगास्तत्कालयुक्तं यदि नास्ति दैवम् ॥
कालोऽनुकूलो विषया मनोज्ञा धर्म्याः क्रियाः कर्म सुखानुबन्धि।
सत्त्वं विधेयं विशदा च बुद्धिर्भवन्ति धीरस्य सदा सुखाय ५७
कफे प्रच्छर्दनं पित्ते विरेको वस्तिरीरणे ।
शस्यते त्रिष्वपि हितो व्यायामो दोषनाशनः ॥५८॥
भुक्तं विरुद्धमप्यन्नं व्यायामान्न प्रदुष्यति ।
सर्वमन्यत्परित्यज्य शरीरमनुपालयेत् ॥ ५९ ॥
तदभावे हि भावानां सर्वाभावः शरीरिणाम् ।

इति वैद्यवरसोढलप्रथिते गदनिग्रहेऽष्टमे रसायनतन्त्रखण्डे दिनचर्याधिकारश्चतुर्थः ॥

---

## अथर्तुचर्याधिकारः पञ्चमः ।

अथात ऋतुचर्याविधिमध्यायं व्याख्यास्यामः—

### वर्षाचर्या ।

भूबाष्पान्मेघनिष्यन्दात् पाकादम्लाज्जलस्य च ।
वर्षास्वग्निबले हीने कुप्यन्ति पवनादयः ॥ १ ॥
तस्मात्साधारणः सर्वो विधिर्वर्षासु शस्यते ।
उदमन्थं दिवास्वप्नमवश्यायं नदीजलम् ॥ २ ॥

व्यायाममातपं चैव व्यवायं चात्र वर्जयेत् ।
दिव्यं क्वथितं कूपोत्थं चौण्ड्यं सारसमेव वा ॥ ३ ॥
प्रावृड्वाताकुले वह्नौ स्वेदनं क्लेदशान्तिकृत् ।
परिशुष्कं लघु स्निग्धमुष्णाम्ललवणं भजेत् ॥ ४ ॥
प्रायोऽन्नपानं सक्षौद्रं संस्कृतं च घनोदये ।
युक्त्या संरक्षता चाग्निं यवगोधूमशालयः ॥ ५ ॥
पुराणा जाङ्गलैर्मांसैर्भोज्या यूषैश्च संस्कृतैः ।
पिबेत्क्षौद्रान्वितं चाल्पं माद्वीकारिष्टमम्बु वा ॥ ६ ॥
सविषप्राणिविण्मूत्रवालनिष्ठीवनादिभिः ।
यदा प्लुतं तदा तोयं नवं क्वथितसंनिभम् ॥ ७ ॥
वायुना विषजन्मेव तत्पूर्वेण च दूषितम् ।
त्याज्यं सर्वोपयोगेषु तस्मिन्काले विपश्चिता ॥ ८ ॥
सोपदंशं निषेवेत मैरेयारिष्टमाधवम् ।
पिबेत्प्रावृषि धीरोऽल्पं रात्रौ तदपि वर्जयेत् ॥ ९ ॥
निरूहैर्बस्तिभिश्चान्यैस्तथाऽन्यैर्मारुतातपैः ।
कुपितं शमयेद्वातं वार्षिकं चाचरेद्विधिम् ॥ १० ॥
भूयो वर्षति पर्जन्यो गङ्गाया दक्षिणे जलम् ।
ततः प्रावृट् च वर्षा च ऋतू तेषां प्रकीर्तितौ ॥ ११
तस्या एवोत्तरे देशे हिमवदम्बुसंकुले ।
भूयः शीतमतस्तत्र हेमन्तशिशिरावृतू ॥ १२ ॥

शरच्चर्या ।

अपनीतवराभोगघननीलावगुण्ठिते ।
व्योम्नि प्रसन्नदिग्भागलब्धप्रसरभास्करे ॥ १३ ॥
शक्रास्त्रलब्धसंदर्शजातमानोद्धतं (?) ततः ।
आक्रामति रवेर्लक्ष्मीस्तिरस्कृत्य घनान्मलान् ॥ १४

विदाहिक्षारतीक्ष्णोष्णं दिवा स्वप्नं गुरूण्यपि ।
तैलं गुरुचयं पादं व्यवायांश्चात्र वर्जयेत् ॥ १५ ॥
सेव्यः शरदि यत्नेन विधिरेष विजानता ।
द्राक्षेक्षुक्षीरसेवा च भवेत्तत्र नराधिप ॥ १६ ॥
वर्षास्वुपचितं पित्तं निर्हरेच्च विरेचनैः ।
तिक्तसर्पिःप्रयोगैर्वा सिराणां चापि मोक्षणैः ॥ १७ ॥
दिवा सूर्यांशुसंतप्तं निशि चन्द्रांशुशीतलम् ।
कालेन पक्वं निर्दोषमगस्त्योदयनिर्विषम् ॥ १८ ॥
हंसोदकमिति ख्यातं शारदं विमलं शुचि ।
स्नानपानावगाहेषु हितमम्बु यथाऽमृतम् ॥ १९ ॥
शारदानि च माल्यानि वासांसि विमलानि च ।
शरत्काले प्रशस्यन्ते प्रदोषे चेन्दुरश्मयः ॥ २० ॥
हेमन्ते शिशिरे चाग्र्यं विसर्गादानयोर्बलम् ।
शरद्वसन्तयोर्मध्यं हीनं वर्षानिदाघयोः ॥ २१ ॥

हेमन्तचर्या ।

शीते शीतानिलस्पर्शसंरुद्धो बलिनां बली ।
पक्ता भवति हेमन्ते मात्राद्रव्यगुरुक्षमः ॥ २२ ॥
स यदा नेन्धनं युक्तं लभते देहजं तदा ।
रसं हिनस्त्यतो वायुः शीतः शीते प्रकुप्यति ॥ २३ ॥
तस्मात्तुषारसमये स्निग्धाम्ललवणान्रसान् ।
मात्रया मदिरां शीधुं मधुरान्नं भजेन्नरः ॥ २४ ॥
गोरसानिक्षुविकृतीर्घृतं तैलं नवौदनम् ।
हेमन्ते भजतस्तोयमुष्णं चायुर्न हीयते ॥ २५ ॥
साङ्गारशाले महति धूमामोदोत्कटे तथा ।
तौलकौशेयसंवीतशयने कुथकास्तृते ॥ २६ ॥

कुङ्कुमागुरुदिग्धाङ्गो निवाते भूमिगह्वरे।
शयीत शयने चापि सुविस्तीर्णमनोरमे ॥ २७ ॥
तत्रोपनीतहारास्तु प्रिया नार्यः स्वलङ्कृताः।
रमयेयुर्यथाकामं बलादपि मदोत्कटाः ॥ २८ ॥

शिशिरचर्या।

एष एव विधिः कार्यः शिशिरे समुदाहृतः।
हेमन्ते शिशिरे तुल्ये शिशिरेऽल्पं विशेषणम् ॥ २९ ॥
रौक्ष्यमादानजं शीतं मेघमारुतवर्षजम्।
तस्माद्धैमन्तिकः सर्वः शिशिरे विधिरिष्यते ॥ ३० ॥
निवातमुष्णमधिकं शिशिरे गृहमाश्रयेत्।

वसन्तचर्या।

वसन्ते निचितः श्लेष्मा दिनकृद्भाभिरीरितः ॥ ३१ ॥
कायाग्निं बाधते रोगांस्ततः प्रकुरुते बहून्।
तस्माद्वसन्ते कर्माणि वमनादीनि कारयेत् ॥ ३२ ॥
गुर्वम्लस्निग्धमधुरं दिवास्वप्नं च वर्जयेत्।
षष्टिकान्वा यवान् शालीन्मुद्गनीवारकोद्रवान् ॥ ३३ ॥
पटोलनिम्बवार्ताकं तिक्तं चापि हिमात्यये।
शुचिशुक्लाम्बरधरश्चन्दनागुरुधूपितः ॥ ३४ ॥
पीनस्तनोरुयुगलां रूपयौवनशालिनीम्।
काननेषु विचित्रेषु सर्वालङ्कारभूषिताम् ॥ ३५ ॥
कामयेद्यावदुत्साहं सुमनाः कुसुमागमे।
व्यायाममञ्जनं धूमं तीक्ष्णं च कवलग्रहम् ॥ ३६ ॥
उष्णाम्बुना शौचविधिं सेवेत कुसुमागमे।

ग्रीष्मचर्या।

मयूखैर्जगतः सारं ग्रीष्मे पेपीयते रविः ॥ ३७ ॥
स्वादु शीतं द्रवं स्निग्धमन्नपानं तदा हितम्।
शीतं सशर्करं मन्थं चन्दनद्रवसेचनम् ॥ ३८ ॥

घृतं पयश्च शाल्यन्नं भजन् ग्रीष्मे न सीदति ।
व्यायाममुष्णमायासं मैथुनं परिदाहि च ॥ ३९ ॥
रसांश्चाग्निगुणोद्रिक्तान् विशेषेण विवर्जयेत् ।
सर्पिःखण्डगुडाक्तांश्च सहकाररसान् हितान् ॥ ४० ॥
भजेन्मधुरमेवान्नं लघु स्निग्धं हिमं द्रवम् ।
यवगोधूमविकृतीः शालींश्च विविधानपि ॥ ४१ ॥
मद्यमल्पं न वा पेयमथवा सुबहूदकम् ।
लवणाम्लकटूष्णानि व्यायामं चात्र वर्जयेत् ॥ ४२ ॥
दिवा शीतगृहे निद्रां निशि चन्द्रांशुशीतले ।
भजेचन्दनदिग्धाङ्गः प्रवाते हर्म्यमस्तके ॥ ४३ ॥
व्यजनैः पाणिसंस्पर्शैश्चन्दनोदकशीतलैः ।
सेव्यमानो भजेदास्यां मुक्तामणिविभूषितः ॥ ४४ ॥
काननानि च शीतानि जलानि कुसुमानि च ।
ग्रीष्मकाले निषेवेत मैथुनाद्विरतो नरः ॥ ४५ ॥
व्यायाममातपं चैव व्यवायं चात्र वर्जयेत् ।
पानभोजनसंस्कारान् प्रायः क्षौद्रान्वितान् भजेत्॥४६॥
सरांसि वाप्यः सरितो वनानि रुचिराणि च ।
चन्दनानि पटार्द्राणि स्रजः सकमलोत्पलाः ॥ ४७ ॥
तालवृन्तानिला हारास्तथा शीतगृहाणि च ।
घर्मकाले निषेवेत वासांसि सुलघूनि च ॥ ४८ ॥

ऋतुसन्धिनिरूपणम् ।

ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृतः ।
तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात् ॥४९॥
ऋतावृतौ य एतेन विधिना वर्तते नरः ।
घोरानृतुकृतान् दोषान्नाप्नुयात्स कदाचन ॥ ५० ॥

ऋतुविशेषे द्रवद्रव्यसेवनविचारः।

कार्तिकस्य दिनान्यष्टौ मार्गस्यापि तथैव च।
वर्षासु चतुरो मासान्मात्रावदुदकं पिबेत् ॥ ५१ ॥
उष्णमेव वसन्ते च कामं ग्रीष्मे तु शीतलम्।
हेमन्ते च वसन्ते च शीतेऽरिष्टं पिबेन्नरः ॥ ५२ ॥
शृतशीतं पयो ग्रीष्मे प्रावृट्काले रसं पिबेत्।
यूषं वर्षति, तस्यान्ते प्रपिबेच्छीतलं जलम् ॥ ५३ ॥

ऋतुविशेषे भोजनविचारः।

अतिस्निग्धकटुप्रायं शिशिरे भोजनं हितम्।
वसन्ते षड्रसोपेतं ग्रीष्मे मधुरशीतलम् ॥ ५४ ॥
वर्षासु लवणाम्लं च कटूष्णं च हिमागमे।
कषायमधुरप्रायं हितमम्भोदसंक्षये ॥ ५५ ॥

स्वस्थलक्षणम्।

समदोषः समाग्निश्च समधातुमलक्रियः।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥ ५६ ॥

इति श्रीमोढल्लवैद्यग्रथिते गदनिग्रहेऽष्टमे रसायनतन्त्रखण्डे
ऋतुचर्याधिकारः प्रथमः ॥

समाप्तोऽयं रसायनतन्त्रखण्डः।

# गदनिग्रहः ।



## अथ वाजीकरणतन्त्राख्यो नवमः खण्डः ।

अथातो वाजीकरणतन्त्रं व्याख्यास्यामः—

वाजीकरणसेवनगुणाः ।

वाजीकरणमन्विच्छेत्सततं विषयी पुमान् ।
पुष्टिस्तुष्टिरपत्यं च गुणवत्तत्र संश्रितम् ॥ १ ॥

वाजीकरणलक्षणम् ।

अपत्यसंतानकरं यत्सद्यः संप्रहर्षणम् ।
वाजीवातिबलो येन यात्यप्रतिहतोऽङ्गनाः ॥ २ ॥
भवत्यतिप्रियः स्त्रीणां येन येनोपचीयते ।
तद्वाजीकरणं तद्धि देहस्यौजस्करं परम् ॥ ३ ॥

स्त्रीप्रशंसा ।

सारो हि जीवलोकस्य स्त्री स्त्रीगुणसमन्विता ।
स्त्रियः साध्व्यः प्रसुवते नरान् गुणमयानिव ॥ ४ ॥
गोत्रवृद्धिकरा ह्येता गृहिण्यो गृहदेवताः ।
गृहं विहीनमेताभिर्न श्रीमदपि शोभते ॥ ५ ॥

निरपत्यपुरुषनिन्दा ।

अच्छायः पूतिकुसुमः फलेन रहितो द्रुमः ।
यथैकश्चैकशाखश्च निरपत्यस्तथा नरः ॥ ६ ॥
अतो वाजीकरा योगा निषेव्या शुक्रवर्धनाः ।

वाजीकरणप्रशंसा ।

कल्यस्योदग्रवयसो वाजीकरणसेविनः ॥ ७ ॥
सर्वेष्वृतुष्वहरहर्व्यवायो न निवार्यते ।
तस्मात्प्रयोगान् वक्ष्यामि दुर्बलानां बलप्रदान् ॥ ८ ॥

सुखोपभोगान् बलिनो भूयश्च बलवर्धनान् ।

वाजीकरं माषाद्यं घृतम् ।

माषात्मगुप्ताबीजानामाढके प्रस्थतोन्मितम् ॥ ९ ॥
मेदाश्वगन्धाद्विवरीवीरायष्टीद्विजीरकम् ।
शूर्पेऽपां विपचेत्तेन पादशेषेण पाचयेत् ॥ १० ॥
विदारीक्षुरसप्रस्थद्वयेन, सदशेन च ।
सर्वैः क्षीरेण, हविषो नवात्प्रस्थं समावपेत् ॥ ११ ॥
सिताक्षौद्रतुगाख्यानां पृथग्दद्याच्चतुःपलम् ।
पलं कणा, पुरोभक्तं लिहंस्तत्पलपूर्वकम् ॥ १२ ॥
तरुणीष्वतिदक्षासु प्रसभं रासभायते ।

वाजीकरं मेदाद्यं क्षीरम् ।

मेदादिभिश्च कर्षांशैः शृतं वाष्कायणं पयः ॥ १३ ॥
सशर्कराक्षौद्रघृतं शुक्रवृद्धिकरं परम् ।

वाजीकरो पायसयोगौ ।

पयसा पायसस्तेन माषकण्डूकरीफलैः ॥ १४ ॥
वृष्यो वेगकरः सिद्धः सघृतक्षौद्रशर्करः ।
श्वदंष्ट्राया विदार्याश्च रसे क्षीरचतुर्गुणे ॥ १५ ॥
घृताढ्ये साधितो वृष्यो माषषष्टिकपायसः ।

वाजीकरं माषपर्ण्यादिचूर्णम् ।

समूलिका माषपर्णी सिता शृङ्गाटकं यवाः ॥ १६ ॥
स्वगुप्तामूलयष्ट्याह्वविदारीक्षुरकाः समाः ।
सपियाला कृताश्चूर्णं पृथग्गव्याज्यषड्गुणाः ॥ १७ ॥
पादाभ्यामस्पृशन्भूमिं लिहन्कोलमितं पुमान् ।
लभते बलमुत्साहं स्त्रीषु याति कुलिङ्गवत् ॥ १८ ॥

वाजीकरं स्वगुप्तादिचूर्णम् ।

स्वगुप्ता क्षीरकाकोली विदारी जीरकद्वयम् ।
तिलाः सुलुञ्चिता शृङ्गः शर्कराज्यमधुप्लुतम् ॥ १९ ॥

तच्चूर्णं प्रसृतिं लीढ्वा गच्छति प्रमदाशतम् ।

वाजीकरो माषचूर्णयोगः ।

प्रसृतिं माषचूर्णस्य धात्रीस्वरसभावितम् ॥ २० ॥
घृतक्षौद्रयुतं लीढ्वा प्रमदा दश गच्छति ।

वाजीकरो विदारीयोगः ।

विदारीचूर्णकं चाऽपि लिहन्मधुघृतप्लुतम् ॥ २१ ॥
क्षीरानुपश्चटकवद्दशे कृत्वा व्रजेत्स्त्रियम् ।
चूर्णं विदार्या बहुशः स्वरसेनैव भावितम् ॥ २२ ॥
कृष्णाधात्रीफलरजोद्राक्षामधुकसंयुतम् ।
शर्करामधुसर्पिर्भ्यां लीढ्वा योऽनु पयः पिबेत् ॥ २३ ॥
स नरोऽशीतिवर्षोऽपि युवेव परिहृष्यति ।
विदारीकन्दचूर्णं तु घृतेन पयसा नरः ॥ २४ ॥
उदुम्बरसमं खादन्वृद्धोऽपि तरुणायते ।

वाजीकरो यष्टीमधुकयोगः ।

कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम् ॥ २५ ॥
पयोनुपानं यो लिह्यान्नित्यवेगः स ना भवेत् ।

वाजीकरः कर्कटशृङ्गीयोगः ।

कुलीरशृङ्ग्या यः कल्कमालोड्य पयसा पिबेत् ॥ २६ ॥
सिताघृतपयोन्नाशी स नारीषु वृषायते ।

वाजीकर आमलकयोगः ।

एवमामलकं चूर्णं स्वरसेनैव भावितम् ॥ २७ ॥
शर्करामधुसर्पिर्भ्यां युक्तं लीढ्वा पयः पिबेत् ।
एतेनातिसुवृद्धोऽपि युवेव परिहृष्यति ॥ २८ ॥

वाजीकरं स्वयंगुप्तादिचूर्णम् ।

स्वयंगुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम् ।
धारोष्णेन नरः पीत्वा पयसा न क्षयं व्रजेत् ॥ २९ ॥

वाजीकरो भल्लातकादियोगः ।

भल्लातकैश्चतुर्भिश्च गोदुग्धस्याढकं शृतम् ।
पीतं करोति वृषतां सुजीर्णस्यापि देहिनः ॥ ३० ॥
उच्चटाचूर्णमप्येवं शतावर्याश्च योजयेत् ।

वाजीकरोऽश्वत्थयोगः ।

अश्वत्थमूलपत्रत्वक्शुङ्गासिद्धं पयो नरः ॥ ३१ ॥
पीत्वा सशर्करं शीतं कुलिङ्ग इव हृष्यति ।

वाजीकरः स्वयंगुप्तादिमोदकः ।

जलाढके स्वयंगुप्तामूलं पञ्चपलं पचेत् ॥ ३२ ॥
पादशेषे तु संचूर्ण्य कुडवांशान् पृथक् क्षिपेत् ।
स्वगुप्तामूलगोधूममाषेक्षुरकपिप्पलीः ॥ ३३ ॥
सपियालरसक्षौद्रा प्रस्थार्धं नवसर्पिषः ।
सितोपला तुलापादं कुर्यात्तन्मोदकांस्ततः ॥ ३४ ॥
मोदकं भक्षयित्वैकं षष्टिं व्रजति योषिताम् ।
स्वगुप्ताढकचूर्णेन शृतेन पयसा कृताः ॥ ३५ ॥
घृते सशर्कराक्षौद्रा भुक्ता वेगशतप्रदाः ।
माषात्मगुप्तागोधूमशालिषष्टिकपिष्टकान् ॥ ३६ ॥
शर्करायां विदार्याश्च चूर्णानीक्षुरकस्य च ।
संयोज्य क्षीरसर्पिर्भ्यां घृते पूपलिकां पचेत् ॥ ३७ ॥
पयोनुपानास्ताः शीघ्रं कुर्वन्ति वृषतां परम् ।

वाजीकरः शष्कुलीयोगः ।

चूर्णं माषात्तिलाच्छालेर्विदार्याश्च ससैन्धवम् ॥ ३८ ॥
रसेन पुण्डरीकाख्याः प्लुतं च मधुसर्पिषा ।
पक्वां शष्कुलिकां खादन्नारोहेत् षष्टिमङ्गनाम् ॥ ३९ ॥

वाजीकरः शरमूलादियोगः ।

शरमूलानि मधुकं गुन्द्रकेक्षुरसं मधु ।
शतावरी विदारी च शृङ्गाटककसेरुकम् ॥ ४० ॥

पनसाक्षोटखर्जूरनालिकेरफलाश्रयाः ।
आत्मगुप्ताफलं माषा गोधूमाः सरसं पयः ॥ ४१ ॥
एभिर्भोज्यानि भक्ष्याणि-सर्पींषि च पयांसि च ।
नित्यमासेव्यमानस्य स्त्रीषु हर्षः प्रवर्तते ॥ ४२ ॥

वाजीकरी गोधूमाद्या पूपलिका ।

आसन्नक्षीरिणो ज्ञात्वा गोधूमान् शालिषष्टिकान् ।
निष्पीड्य क्षीरं मधुकमृणालकपिकच्छुभिः ॥ ४३ ॥
विदार्याश्चैव चूर्णेन शर्करामधुसंयुताम् ।
घृते पूपलिकां पक्त्वा भक्षयित्वा पयः पिबेत् ॥ ४४ ॥
स्त्रीणां शतमसौ गत्वा कुलिङ्ग इव हृष्यति ।

वाजीकरतिलयोगः ।

तिलान् सुलुञ्चितान्मेषवृषणक्वाथभावितान् ॥ ४५ ॥
सशर्करान् भक्षयित्वा वृद्धवत्सापयः पिबेत् ।
एतेनाशीतिवर्षोऽपि युवेव परिहृष्यति ॥ ४६ ॥

वाजीकरः क्षीरयोगः ।

गृष्टीनां वृद्धवत्सानां माषचूर्णभृतां गवाम् ।
यत्क्षीरं तत्प्रशंसन्ति बलकामेषु जन्तुषु ॥ ४७ ॥
पिप्पलीलवणोपेतां विदारीं क्षीरसर्पिषा ।
साधितां भक्षयेद्यस्तु स गच्छेत्प्रमदाशतम् ॥ ४८ ॥

वाजीकरमिक्षुरकाद्यं चूर्णम् ।

इक्षुरगोक्षुरकौ शतमूलीवानरिनागबलातिलमाषाः ।
चूर्णमिदं पयसा निशि पेयं यस्य गृहे प्रमदाशतमस्ति॥४९॥

वाजीकरं नारसिंहचूर्णम् ।

त्रिकटुविदारीनिस्तुषतिलबहुपत्रीरजःप्रस्थम् ।
भल्लातकप्रस्थयुतं तत्सममानं गुडूच्यास्तु ॥ ५० ॥
पञ्चत्रिंशन्मधुनो व्योषस्याष्टौ पलानि दश वह्नेः ।
तद्द्विगुणा वाराही सप्तगुणा शर्करा दहनात् ॥ ५१ ॥

अथ फलद्रावः ।

संचूर्ण्य शुण्ठीं सगुडां च निस्त्वचं
कृत्वा च पक्वाम्रफलं हि निष्कुलम् ।
घर्मे धृतं तद्द्रवति द्वियामात्
सशर्करं पानकयोग्यमुत्तमम् ॥ ७४ ॥

जम्बूत्वचावह्निमरीचदूर्वाचूर्णेन पक्वं कदलीफलं च ।
श्वेतेन युक्तं प्रविलिप्य निस्त्वचं घर्मे धृतं द्रावमुपैति यामात् ॥
तदेव लिप्तं कदलीलं च सुचिञ्चिणीपुष्पवरैः सुपिष्टैः ।
घर्मे धृतं द्रावमुपैति यामाद्भवेच रम्भाफलजं सुतोयम् ॥ ७६॥

अथ पानकानि ।

कोलैर्गुडेनाम्बु शृतं पुनर्यद्वेदेहिधान्यैर्मरिचाम्लमिश्रैः ।
वस्त्रस्रुतं मातुलतोयमिश्रं स्यात्पानकं सर्पविषापहेतुः ॥ ७७ ॥
जम्बूफलं निस्त्वचमत्र लिप्तं कर्पूरसन्मालतितीररसंभवैः ।
याति द्रुतिं घर्मधृतं द्वियामाद्वस्त्रस्रुतं मातुलतोयमिश्रम् ॥७८॥
कोलैः शृतं वारि सिताप्रियङ्गुकङ्कोलसिन्धूत्थकणैलवालैः ।
सत्केतकीजोत्पलवासदानात्तृष्णापहं स्याद्बरकोलपानकम् ७९
ताम्बूलतोयं मधुखण्डयुक्तमष्टांशपानीयवरेण मिश्रम् ।
वस्त्रस्रुतं वा मरिचैश्च वासितं रक्तं सुयोज्यं नृपतेः सुधातः८०

सिद्धैर्भिदा(?)म्राम्बुसिताम्बुयुग्मं
वासाद्भवेदुत्पलजात्सुपानकम् ।
सन्मातुलुङ्गाम्बुगुणेन युक्तं
सिताम्बुना पानकराजवल्लभम् ॥ ८१ ॥

जातीफलं सार्द्रसुपिष्टपूतं
जले शृतं क्षौद्रसितं शृतं च ।
शाङ्खेन चूर्णेन सुगन्धयुक्तं
स्यात्पानकं मालतिपुष्पवासितम् ॥ ८२ ॥

रीत्याऽनयाऽऽम्रैर्वरदाडिमैश्च मृद्वीकया वा करमर्दकैश्च ।
कुर्यान्न मानं न विधिः क्रमश्च प्रीतेः सुभोक्तुर्भवतीह सिद्धिः॥

अथ मोदकाः ।

कृत्वा गुडं सद्रवमद्रिरर्धा श्लेष्मान्ततोयेन सुसिच्य भूयः ।
वस्त्रस्रुतं तद्रुतहेमसप्रभं योज्यं सुभक्ष्येषु च गांडिकेषु ॥८४॥
इक्षोर्विकारस्य सुनिर्मलस्य पयः पलांशेन चतुर्गुणे जले ।
पाकं विदध्यात् खलु पूर्ववच मत्स्यण्डिकाखण्डसुशर्कराद्याः ८५
वस्त्रस्रुतास्ते च भवन्ति शुद्धाः कर्पूरकुन्देन्दुमरीचिसन्निभाः ।
सर्वेषु भक्ष्येषु नियोजितास्ता नित्योपयोगेन रसायनं हि॥८६॥

अश्वगन्धा तिला माषा गुडसर्पिर्महौषधाः ।
मोदकः क्रियते प्रातर्भक्षितो जीवनौषधम् ॥ ८७ ॥

तोयेन युक्तां समितां विमर्द्य कृत्वा शुभां तन्तुमयीं सकेशराम्।
आज्ये शृतां मोदकगर्भयातां पाकाद्भवेन्मोदकसिंहकेशरी ८८

फेनकैः पूरितः सम्यक् खण्डपाकेन वेष्टितः ।
त्रिजातककृतामोदो मोदकः पर्पटोत्तमः ॥ ८९ ॥

दालिः सुमाषस्य च निस्तुषस्य संवर्त्य दुग्धेन सुवस्त्रबद्धा ।
तप्ताज्यकेऽथो वरखण्डपाके पक्का चतुर्जातकवत्सुमोदकाः ॥९०॥
वस्त्रे सुबद्धं महिषीभवं दधि युक्तं च तत्तन्दुलजैर्घृते शृतम् ।
बद्धा विदध्यादथ खण्डपाकं कर्पूरवासाद्वरमोदकाः स्युः॥९१॥
सतोयदुग्धैः समितां विमर्द्य खण्डाज्ययुक्तां विपचेन्नवे घृते ।
क्षिप्त्वा च खण्डैलमरीचचूर्णं संयावकं स्यादमृतोपमं हि तत् ॥
दुग्धेऽल्पतप्ते दधि मिश्रयित्वा मन्दाग्निना यातजलं च पक्त्वा ।
सपिष्टकं चाज्ययुतं विपाच्य खण्डस्य पाकाद्वरमोदकाः स्युः ॥
मूलैकभागं खदिरस्य निस्तुषं माषस्य चूर्णं च चतुर्गुणं हि ।
घृतेन संसृज्य च खण्डपाकाच्चन्द्रैलवासाद्वरमोदकाः स्युः ९४
तोयाज्येन विमर्दितां सुसमितां कृत्वा सुतन्तूनिभं
खण्डाज्येन पचेद्धुताशनमृदौ कृत्वा सुगन्धं ततः ।

कर्पूरैर्मरिचैः कृतोऽयमथवा वासश्चतुर्जातकैः
पुष्पालम्बमिति ब्रुवन्ति मुनयो नाम्ना महामोदकम् ॥९५॥
तक्रेणाथ विदार्य मन्दसुसृतं शुष्कं पयः शोभनं
पिष्ट्वाऽष्टांशकतन्दुलैर्मृदु पचेत्खण्डाज्ययुक्तं क्रमात्।
खर्जूरेण च नालिकेरवसया द्राक्षापियालास्थिभि-
रेभिर्गर्भगतैर्भवन्ति च शुभा वन्धात्पयोमोदकाः॥ ९६ ॥
वृष्याः सुकन्दर्पकरा बलाग्निसंवर्धनाः पुष्टिरुचिप्रदायकाः।
वातं सपित्तं प्रहरन्ति शुक्राः सन्मोदका मोदकरा नराणाम् ॥

अथ विनष्टदुग्धवरयना।

दुग्धे विनष्टे घृतखण्डमिश्रिते
मन्दाग्निपक्वे वरता भवेच्च।
चूर्णस्य तोयाद्रवतीह तद्व-
द्वासश्चतुर्जातकजश्च सर्वतः॥ ९८ ॥

अथ घृतवराः।

पिष्ट्वा शालिजतन्दुलान्परियुतान्सन्नालिकेरास्थिभि-
र्दुग्धालोडितनिर्मलान् वरघृते पक्त्वाऽऽज्यके पूर्ववत्।
द्राक्षाचारुकसेरुभिः सबदरैः खर्जूरशृङ्गाटकै-
र्भक्ष्यो गोस्तनकत्रिजातकयुतैरेभिः शृतः पूरितः॥ ९९ ॥
पक्वाज्यभागं सुपयो विधाय त्वक्क्षीरखण्डान्विनिवेश्य तस्मिन्।
उष्णे सखण्डे जलनालिकेरजे पक्वा शुभा आज्यवरा भवन्ति॥
द्राक्षासखर्जूरकनालिकेरानेकत्र संचूर्ण्य सितां सवाराम्।
निक्षिप्य तत्राज्यवरस्य गर्भे खण्डस्य पाकाच्च घृतोत्तमोत्तमाः॥

अथ खाडवाः।

अम्लेन गोजेन युतश्च खाडवः सच्छो घनः पिण्डसुचूर्णचिक्कणः।
सन्मातुलुङ्गाम्लफलाम्लयुक्तः स्पर्शेऽथ वर्णेऽथ रसेऽथ गन्धे॥
सतिन्तिडीकाम्लकबीजपूरैः प्रलेकयुक्तैः सकपित्थदाडिमैः।
इक्षो रसेनैव युतश्च खाडवः सच्छश्चतुर्जातकदत्तवासः॥१०३॥

गुडं सशुण्ठीसहकारजं फलं क्षौद्रं सुमाच्यं मथितं प्रमथ्य ।
एकत्र कृत्वा वरवासधूपात्प्रोक्तश्च तज्ज्ञैर्घनखाडवोऽयम् १०४
कपित्थकाम्राणि सदाडिमानि पिष्टानि सूक्ष्मं सितया युतानि ।
सद्बीजपूराम्बुविभावितानि संतर्पणोऽयं गुटिकाख्यखाडवः ॥
कोलाम्रचूर्णं सितया समेतं सन्मातुलुङ्गाम्ररसेन सिक्त्वा ।
पुनः पुनः सूर्यकरैर्विशोषितः सिन्धूत्थयुक्चूर्णकखाडवोऽयम् ॥
स्वच्छो हरिद्राम्ररसे विपक्वः शुण्ठीसिताद्वामरिचार्द्रजीरैः ।
सिन्धूत्थयुग्धूपनदत्तवासो नाम्ना भवेच्चिक्कणखाडवोऽयम् १०७

भोज्यस्य मध्ये खलु खाडवा इमे
पीताः सभक्ताः सकलामयघ्नाः ।
संप्रीणनाः पित्तविनाशहेतवो
रुचिप्रदाः कामबलाग्निवर्धनाः ॥ १०८ ॥

अथ दधिदुग्धकृतिः ।

लिप्ते कपित्थेन सुभाजने हि
चित्रेण पक्वाम्ररसेन तद्वत् ।
क्षुण्णाम्रकास्था च पृथक्पृथग्वै
न्यस्तं शृतं दुग्धवरं दधि स्यात् ॥ १०९ ॥
सतिन्तिडीकैर्बदराम्लदाडिमैः
श्रेष्ठं तथैवं सरसं दधि स्यात् ।
सद्वेणुनाडीगतपक्वदुग्धं
जम्बालके क्षिप्तमथ त्रिरात्रात् ॥ ११० ॥
आमं शरावं वरकाम्लिकाया-
स्तोयेन लिप्तं शृतदुग्धपूरितम् ।
रात्रौ, शरावाकृति जायते दधि
पात्रे कृतं यादृश एव तादृशम् ॥ १११ ॥

स्थितं पडलयां वसनं सुभावितं
सण्डेन साम्लेन विशोषितं मुहुः ।
दुग्धं शृतं क्षिप्तमतः पडल्या-
कारं गुणाढ्यं दधि जायते ध्रुवम् ॥ ११२ ॥
मस्य दुग्धस्य च मध्यपातं सत्कोकिलाख्यस्य च बीजचूर्णम् ।
र्ठौ चणानामथ दालिचूर्णं मन्दाग्निपक्वं दधि पिण्डवद्भवेत् ॥
कस्य चूर्णं सुकपित्थकस्य दुग्धेन भाव्यं माहिषीभवेन ।
क्वं क्षिपत्तक्रयुते सुभाण्डे तत्कालिकं स्याद्दधि निर्जलं वै ॥
कस्य मज्जा सुकपित्थकस्य वारं च वारं शृतदुग्धभाविता ।
क्वाम्रचूर्णक्षुरमस्य मध्ये क्षिप्तेक्षुजातं कुरुते सुदुग्धम्॥११५॥

अथ काञ्जिकम् ।

ामं शुक्रपटे सुमर्दितगलद्ध्यर्धसत्सारभं
भूयः पक्वपरिस्नुतं च रुचकैः सिन्धूत्थयुक्काञ्जिकम् ।
ार्द्रं धान्यलवङ्गसिन्धुमरिचं ताम्बूलपर्णासुरी
क्षिप्त्वा तत्र च हिङ्गुतैलतिलजैर्धूपाच्छुभं काञ्जिकम् ११६
ाम्बूलीदधिराजिकार्द्रमथितैर्युक्तं शुभं काञ्जिकं
वासो राजिससिन्धुकार्द्रमरिचैर्धूपो भवेद्धिङ्गुना ।
ान्यं मातुलपत्रराजिलवणं क्षिप्त्वा शुभे काञ्जिके
द्राक्षामार्द्रकमेव तत्सुललितं ग्रीष्मे शुभं काञ्जिकम् ॥११७॥
वचं च नारिङ्गफलस्य सैन्धवं सजीरकं घोलवरस्य मध्ये ।
क्षिप्त्वाऽथ वासो वरहिङ्गुदत्तस्तत्र स्थिता घोलवटा वराः स्युः ॥

अथानुपानानि ।

ुस्तुम्बरुक्काथसशुण्ठियुक्तं समुद्गयूषं नववस्त्रगालितम् ।
ुसिन्धुयुक्तं वरहिङ्गुधूपितं पिबेन्नरेन्द्रः खलु भोजनादौ ११९
ीजपूरद्रुतशुकुलत्थकर्दाडिमैलदधिभिः शृतं जलम् ।
भोजनान्तमनुपानमुत्तमं योजयेद्रुचिकरं सुदीपनम् ॥ १२० ॥

अर्शांसि दुर्जयतराणि चिरन्तनानि
पक्वातिसारमखिलं ग्रहणीं समस्ताम् ।
शूलं सगुल्मतिमिरं विनिहन्ति पीतं
भोज्यानुपानममलं सुखदं नराणाम् ॥ १२१ ॥
दाडिमामलकमस्तुजीरकं सौरभेण मरिचादिना युतम् ।
सूपकेन सुशृतं विधानतो भोजनान्तमनुपानमग्निकृत् ॥१२२॥
असिताया वयःस्थायाः प्रातर्दुग्धं तु गोः पयः ।
अनुपानं प्रशंसन्ति सुशृतं नागरान्वितम् ॥ १२३ ॥
विदारीनागरोपेतं सुशृतं सौरभं पयः ।
अनुपानं प्रशंसन्ति बलवृद्धिकरं परम् ॥ १२४ ॥
गव्यं सुदुग्धं सलिलार्धकेन शृतं कृतं यातजलं सुशीतलम् ।
खण्डेन वा शर्करया समेतं रसेन्द्रभोक्ताऽथ पिबेत्सदैव॥१२५॥
हन्यादस्रजसंहतिं च पवनं संक्रुद्धकोष्ठागतं
नानारोगगणान्निहत्य कुरुते सौख्यं महद्देहिनाम् ।
एतस्मादनुपानकात्खलु विना भुक्ते विदाहो भवे-
त्तस्मात्त्वनुपानकं प्रकुरुतां भुक्तोत्तरं सर्वदा ॥ १२६ ॥

त्याज्यमन्नम् ।

केशादिजुष्टं कृतशीतमुष्णं शाकावरान्नैर्बहुलं महोष्णम् ।
निशोषितं यल्लवणाधिकं तत् संत्याज्यमोद्यपुरुषैस्तदन्नम् १२७

अथार्द्रकविधिः ।

धौतं खण्डितमार्द्रकं च सलिलैः क्षिप्तं सुतप्ते घृते
सिन्धूत्थं मरिचं सुजीरयुगलं चूर्णीकृतं प्रक्षिपेत् ।
चूर्णं भृष्टचणोद्भवं च वितुषं हिङ्ग्वाज्यधूपं ददे-
दित्थं दोषविहीनमार्द्रकवरं सुस्वादु संजायते ।
तिन्तिण्यामफलानि लाजसलिले संस्थाप्य तत्रार्द्रकं
यामैकं विधृतं च तत्र नितरां रक्तं भवेत्स्वादु तत् ॥१२८॥

सैन्धवोत्थजीरामयतिन्तिडीकतोयेन धौतं वरशृङ्गवेरम्।
तत्र स्थितं यामचतुष्टयेन रक्तं भवेत्स्वादुतरं तदार्द्रम्॥१२९॥

अथ फलभक्षणविधिः।

हिङ्ग्वाढ्यजीरार्द्रमरीचतिन्दुकैः समांशकैरर्धसुमाणिमन्थैः।
चूर्णं तु कोलाम्रकभक्षणे हितं भवेच्चतुर्जातकवासदानात् १३०
शुण्ठीसिताजीरमरीचतुल्यैर्हितं सुचूर्णं फलमातुलादने।
विडङ्गधान्यार्द्रमरीचशर्करासिन्धूत्थचूर्णं च कपित्थभक्षणे॥
द्वयोर्यथा स्वादुतमं भवेच्च तत्तिलं सुपिष्टं वितुषं जलेन।
शुण्ठीसितासर्जिकणासु शीतैः पाकः खलोपाकुलतोययुक्तः(?)॥
सेद्धैर्भिदाम्रस(?) फलादने हितस्तिलं सुपिष्टं वितुषं जलेन।
शृतं कृतं शर्करयावशूकैः पक्वः खलः स्याद्रुचकेन युक्त्या१३२

अथोदकवासः।

दिव्यान्तरिक्षे धुनिजं च कौपं स्वयंविदीर्णाद्रिशिलोद्भवं च।
तडागजं सारसमौद्भिदं च तोयं भवेच्चाष्टविधं मनोरमम्॥१३४॥
अक्षारं स्वादु मिष्टं दिनमणिकिरणैर्वासरे तप्तमादौ
रात्रौ शीतांशुभाभिस्त्रिविधसुपवनान्दोलितं दोषहीनम्।
कर्पूरे राजचम्पैरतिशयविमलैः पाटलैलासुपुष्पै-
स्त्वक्पत्रैर्वासितं यद्वरशिशिरजलं सततसेवी पिबेत्तत्॥१३५॥
धान्योशीरकमुस्तवालमसृणैः सार्धं सुमृण्मर्दिता
स्वङ्गारैर्नलिकां पचेत्खदिरजैः सिक्ताज्यतैलैः शुभैः।
जातीन्दूत्पलपाटलाकमलजैश्चम्पैः शृते वासये-
त्तत्खण्डैः कृतवासनात्सुललितैर्वासस्तु सर्वर्तुकः॥ १३६॥
कङ्कोलाद्ध्यवालचन्दननलैः कर्पूरकर्चूरकैः
पथ्योशीरलवङ्गपाटलिघनैः शीतोदकं वासयेत्।
मांसीलागरुचन्दनद्वयमुरावर्कैः सितासत्पुरैः
पात्राणां सलिलस्य चूर्णकक्वथैरभिर्मवेद्धूपनम्॥ १३७॥

अथ लिङ्गवृद्धिकरा योगाः ।

कासीसतुरगगन्धाशाबरगजपिप्पलीविपकेन ।
तैलेन यान्ति वृद्धिं स्तनकर्णवराङ्गलिङ्गानि ॥ १३८ ॥
बृहतीसितसिद्धार्थकन्याधिवचातुरगगन्धकासीसैः ।
एभिः प्रलेपितं स्यात्पुरुषवराङ्गं हयस्येव ॥ १३९ ॥
महिषीनवनीतवचागजकृष्णाकुष्ठवाजिगन्धाभिः ।
लेपः श्रवणपयोधरध्वज उच्चैः स्थूलकृद्भवति ॥१४०॥
घृतमधुयुक्तं तैलं बृहतीफलमात्मगुप्ता च ।
एभिर्वराङ्गवृद्धिः सप्तदिनं ताम्रभाण्डपर्युषितैः ॥१४१॥
अश्वगन्धामपामार्गं बृहतीं सारिवां तिलान् ।
कुटजस्य च बीजानि तथा वै राजसर्षपान् ॥ १४२ ॥
समभागानि कृत्वा तु क्षीरेणाज्येन पेषयेत् ।
मासमुद्वर्तितं लिङ्गं तेनातिस्थूलतां व्रजेत् ॥ १४३ ॥
मांसीकुष्ठसमायुक्तं बृहतीफलमिश्रितम् ।
शतावरीमूलयुतमश्वगन्धासमन्वितम् ॥ १४४ ॥
तिलतैलं प्रयत्नेन सम्यङ्मृद्वग्निना पचेत् ।
तेन लिङ्गं समभ्यक्तं यावदिच्छं प्रवर्धते ॥ १४५ ॥
भल्लातकास्थिजलशूकमथाब्जपत्र-
मन्तर्विदह्य मतिमान् सह सैन्धवेन ।
एतद्विरूढबृहतीफलतोयपिष्ट-
मालेपनं महिषविड्विमलीकृतेऽङ्गे ॥ १४६ ॥
स्थूलं महद्वरतुरङ्गमतुल्यमाशु
लिङ्गं करोति विपुलौ श्रवणौ प्रलम्बौ ।
स्त्रीणां नितम्बतटमायतहेमगौरं
नृणां तथा करिकरप्रतिमौ च बाहू ॥ १४७ ॥
मेदसा क्षौद्रमिश्रेण वराहस्य प्रलेपितम् ।
सम्यग्लिङ्गं रतान्तेऽपि स्तब्धतां न विमुञ्चति ॥१४८॥

सिन्धूत्थजीरामयतिन्तिडीकतोयेन धौतं वरशृङ्गवेरम्।
तत्र स्थितं यामचतुष्टयेन रक्तं भवेत्स्वादुतरं तदार्द्रम् ॥१२९॥

अथ फलभक्षणविधिः।

यष्ट्याह्वजीरार्द्रमरीचतिन्दुकैः समांशकैरर्धसुमाणिमन्थैः।
चूर्णं तु कोलाम्रकभक्षणे हितं भवेच्चतुर्जातकवासदानात् १३०
यष्टीसिताजीरमरीचतुल्यैर्हितं सुचूर्णं फलमातुलादने।
विडङ्गधान्यार्द्रमरीचशर्करासिन्धूत्थचूर्णं च कपित्थभक्षणे ॥
कुर्याद्यथा स्वादुतमं भवेच्च तत्तिलं सुपिष्टं वितुषं जलेन।
यष्टीसितासर्जिकणासु शीतैः पाकः खलोपाकुलतोययुक्तः(?)॥
सिद्धैर्भिदाम्रस(?) फलादने हितस्तिलं सुपिष्टं वितुषं जलेन।
शृतं कृतं शर्करयावशूकैः पक्वः खलः स्याद्गुडत्रकेन युक्त्या१३३

अथोदकवासः।

दिव्यान्तरिक्षे धुनिजं च कौपं स्वयंविदीर्णाद्रिशिलोद्भवं च।
तडागजं सारसमौद्भिदं च तोयं भवेत्त्वष्टविधं मनोरमम्॥१३४॥
अक्षारं स्वादु मिष्टं दिनमणिकिरणैर्वासरे तप्तमादौ
रात्रौ शीतांशुभाभिस्त्रिविधसुपवनान्दोलितं दोषहीनम्।
कर्पूरै राजचम्पैरतिशयविमलैः पाटलैलासुपुष्पै-
स्त्वक्पत्रैर्वासितं यद्वरशिशिरजलं सूतसेवी पिबेत्तत्॥१३५॥
धान्योशीरकमुस्तबालमसृणैः सार्धं सुमृण्मर्दिता
त्वङ्गारैर्नलिकां पचेत्खदिरजैः सिक्ताज्यतैलैः शुभैः।
जातीन्दूत्पलपाटलाकमलजैश्चम्पैः शृते वासये-
त्तत्खण्डैः कृतवासनात्सुललितैर्वासस्तु सर्वर्तुकः ॥ १३६॥
कङ्कोलाह्वयबालचन्दननलैः कर्पूरकर्चूरकैः
पथ्योशीरलवङ्गपाटलिघनैः शीतोदकं वासयेत्।
मांसीलागरुचन्दनद्वयमुरावक्रैः सितासत्पुरैः
पात्राणां सलिलस्य चूर्णककृतैरेभिर्भवेद्धूपनम् ॥ १३७ ॥

अथ लिङ्गवृद्धिकरा योगाः ।

ासीसतुरगगन्धाशाबरगजपिप्पलीविपकेन ।
लेन यान्ति वृद्धिं स्तनकर्णवराङ्गलिङ्गानि ॥ १३८ ॥
हतीसितसिद्धार्थकव्याधिवचातुरगगन्धकासीसैः ।
भिः प्रलेपितं स्यात्पुरुपवराङ्गं हयस्येव ॥ १३९ ॥
हिपीनवनीतवचागजकृष्णाकुष्ठवाजिगन्धाभिः ।
पः श्रवणपयोधरध्वज उच्चैः स्थूलकृद्भवति ॥१४०॥
तमधुयुक्तं तैलं बृहतीफलमात्मगुप्ता च ।
भिर्वराङ्गवृद्धिः सप्तदिनं ताम्रभाण्डपर्युषितैः ॥१४१॥
श्वगन्धामपामार्गं बृहतीं सारिवां तिलान् ।
टजस्य च बीजानि तथा वै राजसर्षपान् ॥ १४२ ॥
मभागानि कृत्वा तु क्षीरेणाज्येन पेषयेत् ।
ासमुद्वर्तितं लिङ्गं तेनातिस्थूलतां व्रजेत् ॥ १४३ ॥
ांसीकुष्ठसमायुक्तं बृहतीफलमिश्रितम् ।
तावरीमूलयुतमश्वगन्धासमन्वितम् ॥ १४४ ॥
ैलवलं प्रयत्नेन सम्यङ्मृद्वग्निना पचेत् ।
न लिङ्गं समभ्यक्तं यावदिच्छं प्रवर्धते ॥ १४५ ॥
ल्लातकाम्बिजलशूकमथाब्जपत्र-
मन्तर्विदह्य मतिमान् सह सैन्धवेन ।
तद्विरूढबृहतीफलतोयपिष्ट-
मालेपनं महिषविड्डिमलीकृतेऽङ्गे ॥ १४६ ॥
धूलं महद्वरतुरङ्गमतुल्यमाशु
लिङ्गं करोति विपुलौ श्रवणौ प्रलम्बौ ।
ीणां नितम्बतटमायतहेमगौरं
पूर्णौ तथा करिकरप्रतिमौ च बाहू ॥ १४७ ॥
दसो क्षौद्रमिश्रेण वराहस्य प्रलेपितम् ।
म्यग्लिङ्गं रतान्तेऽपि स्तब्धतां न विमुञ्चति ॥१४८॥

क्षौद्रेण सह संपिष्टं पुण्डरीकस्य केशरम्।
तेनैवालेपितं यावत्तावल्लिङ्गं स्थिरं भवेत्॥ १४९॥
संसाधितं दाडिमवल्कलैर्यत्क्षुद्राफलारुष्करचूर्णयुक्तैः।
अभ्यञ्जनात्सर्षपसंभवं तत्तैलं नृणां लिङ्गविवर्धनं स्यात् १५०
भल्लातकं वालकमम्बुजिन्याः पत्राणि कृष्णं लवणं च तुल्यम्।
दग्ध्वा पटान्तः स्वरसं निदध्यात्पक्कस्य तस्मिन्बृहतीफलस्य॥

सेवालगोपिशितचूर्णयुतेन लिप्त-
माज्येन यत्त्रिमुहुर्मृदितं महिष्याः।
तल्लिङ्गमुन्मदननिष्ठुरदाक्षिणात्य-
कान्तारतोत्सवसहस्रसहत्वमेति॥ १५२॥
सेवालसैन्धवसरोरुहिणीदलानि
भल्लातकानि च फलानि च कण्टकार्याः।
हैयङ्गवीनमपि माहिषमश्वगन्धा-
कन्दे सुधीः प्रणिदधीत दिनानि सप्त॥१५३॥
तैरुद्धृतैस्तदनु यन्महिषीपुरीषे-
णोद्वर्त्य लिङ्गमुपलेपितमादरेण।
तस्याग्रतः खरतुरङ्गमतङ्गजानां
लिङ्गानि लाघवपदं परमं श्रयन्ति॥ १५४॥
उन्मत्तकस्वरसफाणितवाजिगन्धा-
कन्दोपगूढमहिषीनवनीतमार्दौ।
धार्यं फले वृषभवाहनवल्लभस्य
निःशेषबीजरहिते कतिचिद्दिनानि॥ १५५॥
उद्वर्तनं तदनु यन्महिषीपुरीष-
धत्तूरकाण्डनवनीतविलेपितं स्यात्।
तत्साधनं निधुवनप्रधनोद्धराङ्ग-
नारीवराङ्गदलनक्षमतां दधाति॥ १५६॥

क्षीणशुक्रलक्षणम् ।

दौर्बल्यं मुखशोषश्च पाण्डुत्वं सदनं श्रमः ।
क्लैब्यं शुक्राविसर्गश्च क्षीणशुक्रस्य लक्षणम् ॥ १५७ ॥

क्लैब्यलक्षणम् ।

तैस्तैर्भावैरहृद्यैश्च रिरंसोर्मनसि क्षते ।
ध्वजं पतत्यतो नृणां क्लैब्यं समुपजायते ॥ १५८ ॥
अन्नैरम्लोष्णलवणैरतिमात्रोपसेवितैः ।
सौम्यधातुक्षये दृष्टं क्लैब्यं तदपरं स्मृतम् ॥ १५९ ॥
अतिव्यवायशीलो वा न च वाजिक्रियारतः ।
ध्वजभङ्गमवाप्नोति तच्छुक्रक्षयहेतुकम् ॥ १६० ॥
असाध्यं सहजं क्लैब्यं मर्मच्छेदाच्च यद्भवेत् ।
साध्यानामवशिष्टानां कार्यो वाजीकरो विधिः ॥१६१॥

वृष्यलक्षणम् ।

यत्किञ्चिद्बृंहणं स्निग्धं मधुरं बलवर्धनम् ।
मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यते ॥ १६२ ॥

वीर्यस्तम्भकराः कतिपययोगाः ।

वृक्षोत्पलत्वचा सिद्धं क्षीरं यावन्न जीर्यति ।
तावत्स्त्रीभोगसक्तानां स्थिरं बीजं भवेन्नृणाम् ॥१६३॥
बीजं बृहत्करञ्जस्य कृतमन्तः सपारदम् ।
हेम्नाऽथ वेष्टितं न्यस्तं वदने बीजधृन्मतम् ॥ १६४ ॥
श्वेतार्कतूलवर्त्या वराहमेदःप्रदिग्धया दीपः ।
ध्वजं पुरुषवराङ्गं धारयति शर्वरीं सकलाम् ॥ १६५ ॥
आ वक्त्रस्य दासो द्विजपतिरभवत्तत्सितं वा सुधा वै
निर्माल्यं नेत्रकान्त्या प्रवरकुवलयं यन्मधुश्रावणी वाक् ।
रोचिः किं महेम्ना हितमुहितमुखी काकिनीमन्त्रयुक्ता
यस्यास्तारुण्यभूषा प्रतिदिनरसायुक्तां सेवेत कान्ताम् (?) ॥

इति श्रीवैद्यश्रीशोटलग्रथिते गदनिग्रहे नवमं वाजीकरणतन्त्रं समाप्तम् ॥

# गदनिग्रहः ।

## अथ पञ्चकर्माधिकारखण्डो दशमः ।

### अथ स्नेहाधिकारः प्रथमः ।

तत्र प्रथमं स्नेहविधिं व्याख्यास्यामः—

पञ्चकर्मप्रयोजनं भेदाश्च ।

प्रावृड्घनात्ययवसन्तदिनेषु यस्मा-
त्प्रादुर्भवन्ति पवनादिरुजस्ततश्च ।
वातादिरोगशमनाय शरीरशुद्धिः
स्यादम्बुदागमशरन्मधुवासरेषु ॥ १ ॥
प्राक्पाचनं स्नेहविधिस्ततश्च स्वेदस्ततः स्याद्वमनं विरेकः ।
निरूहणान्वासनवस्तिकर्म नस्यं क्रमश्चेति भिषग्वराणाम् ॥ २ ॥
अथ पञ्चविधं कर्म प्रवक्ष्याम्यनुपूर्वशः ।
शिष्याणां कर्मसिध्यर्थं प्रजानाममृतोपमम् ॥ ३ ॥
वमनं स्रंसनं चैव निरूहमनुवासनम् ।
नस्यकर्म तथा कर्म वैद्याः पञ्चविधं विदुः ॥ ४ ॥
न स्नेहस्वेदरहिता क्रिया काचित्प्रवर्तते ।
तस्मादादिक्रिया ह्येषा स्नेहस्वेदविधिर्नृणाम् ॥ ५ ॥

स्नेहभेदास्तद्गुणानि च ।

सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतम् ।
तत्रापि चोत्तमं सर्पिः संस्कारस्यानुवर्तनात् ॥ ६ ॥
माधुर्यादविदाहित्वाज्जन्मादेव च शीलनात् ।
पित्तघ्नास्ते यथापूर्वमितरघ्ना यथोत्तरम् ॥ ७ ॥
घृतात्तैलं गुरु वसा तैलान्मज्जा ततोऽपि च ।
यमकं घृततैलाभ्यां त्रिवृतं वसया सह ॥ ८ ॥

सर्पिस्तैलं वसा मज्जा महास्नेहमिहोच्यते ।
सर्पिस्तैलं वसा मज्जा स्नेहः स्थावरजङ्गमः ॥ ९ ॥
चतुर्विधः स्नेहनार्थे योज्यः सात्म्याद्यपेक्षया ।

स्नेह्ययोग्याः ।

स्नेहयेद्वामनीयांश्च विरेच्यांश्चैव मानवान् ॥ १० ॥
आस्थाप्यानुवास्यांश्च वातव्याधींश्च सर्वशः ।

ऋतुविशेषे स्नेहविशेषोपयोगः ।

सर्पिः प्रयोज्यं शरदि, प्रायस्तैलं घनागमे ॥ ११ ॥
हिमागमे चोपयोज्या वसा, मज्जा तपात्यये ।
तैलं प्रावृषि वर्षान्ते सर्पिरन्यौ च माधवे ॥ १२ ॥
ऋतौ साधारणे स्नेहः शस्तोऽह्नि विमले रवौ ।

घृतादिस्नेहेऽनुपानयोजना ।

घृते तु पानमुष्णाम्बु यूषस्तैले प्रशस्यते ॥ १३ ॥
वसामज्ज्ञोस्तु मण्डः स्यात्सर्वेषूष्णमथाम्बु वा ।

स्नेहपानयोग्यः कालः ।

पिबेत्संशमनं स्नेहमन्नकाले प्रकांक्षितः ॥ १४ ॥
शुद्ध्यर्थं पुनराहारे नैशे जीर्णे पिबेन्नरः ।

सद्यःस्नेहना योगाः ।

पिप्पल्यो लवणं स्नेहाश्चत्वारो दधिमस्तुकम् ॥ १५ ॥
पीतमेकध्यमेतद्धि सद्यः स्नेहनमुच्यते ।
शर्कराचूर्णसंसृष्टे दोहनस्थे घृते तु गाम् ॥ १६ ॥
दुग्ध्वा क्षीरं पिबेद्रूक्षः सद्यः स्नेहनमुच्यते ।
सुकुमारं कृशं वृद्धं शिशुं स्नेहद्विषं तथा ।
तृष्णार्तमुष्णकाले च सह भक्तेन पाययेत् ॥ १७ ॥

स्नेहमात्रालक्षणम् ।

अहोरात्रेण महती जीर्यत्यह्ना च मध्यमा ॥ १८ ॥

---

१ 'च माधवे' क. ।

दिनार्धेनावरा तिस्रः स्नेहमात्राः प्रमाणतः।
एकाहमुत्तमा पेया त्र्यहमेव तु मध्यमा॥ १९॥
स्नेहमात्रा यथायोगं सप्ताहं तु लघीयसी।
पिबेत्त्र्यहं चतुरहं पञ्चाहं षडहं तथा॥ २०॥
सप्तरात्रात्परं स्नेहः सात्म्यीभवति सेवितः।

स्नेहाजीर्णचिकित्सा।

जीर्णाजीर्णविशङ्कायां स्नेहस्योष्णोदकं पिबेत्॥ २१॥
तेनोद्गारो भवेच्छुद्धो भक्तं प्रति रुचिस्तथा।

स्नेहाजीर्णलक्षणानि।

मूर्च्छा सादोऽरतिस्तृष्णाजृम्भादाहभ्रमक्लमाः॥ २२॥
भवन्त्यजीर्यति स्नेहे जीर्णः सर्वः शमं गतः।

अस्नेह्याः।

न स्नेह्याश्छर्दयतीसारतृष्णामूर्च्छामदातुराः॥ २३॥
अजीर्ण्युत्थश्लेष्माणो गलरोगार्दिताश्च ये।
तथा च—न स्नेह्यास्त्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बलाः।
ऊरुस्तम्भातिसारामगलरोगगरोदरैः॥ २४॥
मूर्च्छाच्छर्द्यरुचिश्लेष्मतृष्णामद्यैश्च पीडिताः।
अपप्रसूता युक्ते च नस्ये बस्तौ विरेचने॥ २५॥

चतुर्विधस्नेहयोग्या रोगिणः।

तत्र धीस्मृतिमेधाग्निकांक्षिणां शस्यते घृतम्।
ग्रन्थिनाडीकृमिश्लेष्ममेदोमारुतरोगिषु॥ २६॥
तैलं लाघवदार्ढ्यार्थिक्रूरकोष्ठेषु देहिषु।
वातातपाध्वभारस्त्रीव्यायामक्षीणधातुषु॥ २७॥
रूक्षक्लेशक्षमात्यग्निवाताष्टतपथेषु च।
शेषौ, वसा तु सन्ध्यस्थिमर्मकोष्ठरुजासु च॥ २८॥
तथा दग्धाहतभ्रष्टयोनिकर्णशिरोरुजि।

स्नेहायोगलक्षणम्।

रूक्षं पुरीषं ग्रथितं कृच्छ्रादन्नं च पच्यते ॥ २९ ॥
उरो विदह्यते वायुः कोष्ठादुपरि धावति।
दुर्वर्णो दुर्बलश्चैव रूक्षो भवति मानवः ॥ ३० ॥

सम्यक्स्निग्धलक्षणम्।

वातानुलोम्यं दीप्तोऽग्निः स्निग्धं सकृदसंहतम्।
स्निग्धता मृदुभावश्च गात्राणां स्निग्धलक्षणम् ॥ ३१ ॥

अतिस्निग्धलक्षणम्।

तन्द्रा सारुचिरुत्क्लेशो गात्रसादोऽग्निमार्दवम्।
पाण्डुता गौरवं जाड्यं स्यादतिस्निग्धलक्षणम् ॥ ३२ ॥

स्नेहोपयोगफलम्।

दीप्तान्तराग्निः परिशुद्धकोष्ठः प्रत्यग्रधातुर्बलवर्णयुक्तः।
दृढेन्द्रियो मन्दजरः शतायुः स्नेहोपसेवी पुरुषः प्रदिष्टः॥३३॥

इति श्रीशोढलप्रथिते गदनिग्रहे दशमे पञ्चकर्माधिकारखण्डे
स्नेहाधिकारः प्रथमः ॥

---

## अथ स्वेदाधिकारो द्वितीयः।

अथातः स्वेदविधिमध्यायं व्याख्यास्यामः—

स्वेदभेदाः।

स्वेदस्तापोपनाहोष्मद्रवभेदाच्चतुर्विधः।

तापस्वेदविधिः।

तापोऽग्नितप्तवसनफालहस्ततलादिभिः ॥ १ ॥

उपनाहविधिः।

उपनाहो वचाकिण्वशताह्वादेवदारुभिः।
धान्यैः समस्तैर्गन्धैश्च रास्नैरण्डजटामिषैः ॥ २ ॥
उद्रिक्तलवणैः स्नेहचुक्रतक्रपयःप्लुतैः।
केवले पवने, श्लेष्मसंसृष्टे सुरसादिभिः ॥ ३ ॥

पित्तेन पत्रकाद्यैश्च शाल्वणाख्यैः पुनः पुनः ।
स्निग्धोष्णवीर्यैर्मृदुभिश्चर्मपट्टैरपूतिभिः ॥ ४ ॥
अलाभे वातजित्पत्रकौशेयाविकशाटकैः ।
बद्धं रात्रौ दिवा मुञ्चेन्मुञ्चेद्रात्रौ दिवाकृतम् ॥ ५ ॥

ऊष्मस्वेदविधिः ।

ऊष्मा तूत्कारिकालोष्टकपालोपलपांसुभिः ।
पत्रभङ्गेन धान्येन करीषसिकतातुषैः ॥ ६ ॥
अनेकोपायसंतप्तैः प्रयोज्यो देशकालतः ।

परिषेकविधिः ।

शिग्रुवरुणकैरण्डकरञ्जसुरसार्जकात् ॥ ७ ॥
शिरीषवासावंशार्कमालतीदीर्घवृन्ततः ।
पत्रभङ्गैर्वचाद्यैश्च मांसैश्चानूपवारिजैः ॥ ८ ॥
दशमूलेन च पृथक्सहितैर्वा यथामलम् ।
स्नेहवद्भिः सुरासुक्तवारिक्षीरादिसाधितैः ॥ ९ ॥
कुम्भीर्गलन्तीर्नाडीर्वा पूरयित्वा रुजार्दितम् ।
वाससाऽऽच्छादितं गात्रं स्निग्धं सिञ्चेद्यथासुखम् ॥ १० ॥

अवगाहस्वेदविधिः ।

तैरेव वा द्रवैः पूर्णं कुण्डं सर्वाङ्गगेऽनिले ।
अवगाह्यातुरस्तिष्ठेदर्शःकृच्छ्रादिरुक्षु च ॥ ११ ॥
निवातेऽन्तर्बहिःस्निग्धो जीर्णान्नः स्वेदमाचरेत् ।
व्याधिव्याधितदेशर्तुवशान्मध्यवरावरम् ॥ १२ ॥
स्निग्धोऽनिले स्निग्धरूक्षौ वातश्लेष्मणि शस्यते ।
कफे रूक्षो हितः स्वेदः स्तम्भशूलव्यपोहकृत् ॥ १३ ॥
आमाशयगते वाते कफे पक्वाशयाश्रिते ।
रूक्षपूर्वं तथा स्नेहपूर्वं स्थानानुरोधतः ॥ १४ ॥

स्वेदप्रकाराः ।

समासाद्द्विविधः स्वेदः संयुक्तोऽग्निगुणैर्न च ।

एकाङ्गसर्वाङ्गगतः स्निग्धो रूक्षस्तथैव च ॥ १५ ॥

विविधाः स्वेदयोगाः ।

पुनर्नवैरण्डयवातसीभिः कार्पासजैरस्थिभिरारनालैः ।
स्विन्नैः समापैरिति पङ्क्तिरेव स्वेदः समीरार्तिहरो नराणाम् १६

कार्पासास्थिकुलत्थिकातिलयवैरेरण्डमूलातसी-
वर्षाभूशणबीजकाञ्जिकयुतैरेकीकृतैर्वा पृथक् ।
स्वेदः पर्शुककूर्परोदरशिरःस्फिक्पाणिपादाङ्गुली-
गुल्फस्कन्धकटीरुजो विजयते सामाः समीरात्मकाः ॥

अस्वेद्याः ।

न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छितान् ।
स्तम्भनीयक्षतक्षीणक्षाममद्यविकारिणः ॥ १८ ॥
तिमिरोदरवीसर्पकुष्ठशोफाढ्यरोगिणः ।
पीतदुग्धदधिस्नेहमधून् कृतविरेचनान् ॥ १९ ॥
भ्रष्टदग्धगुदग्लानिक्रोधशोकभयार्दितान् ।
क्षुत्तृष्णाकामलापाण्डुमेहिनः पित्तपीडितान् ॥ २० ॥
गर्भिणीं पुष्पितां सूतां मृदु चात्ययिके गदे ।
तृपतां मद्यनित्यानां कुष्ठिनां रक्तपित्तिनाम् ॥ २१ ॥
विषार्तानामुदरिणां कामलापाण्डुरोगिणाम् ।
क्षीणक्षतानां स्थूलानां गर्भिण्या मधुमेहिनाम् ॥ २२ ॥
स्वेदस्तैमिरिकाणां च न कार्यश्चातिसारिणाम् ।

स्वेद्याः ।

श्वासकासप्रतिश्यायग्रहाध्मानविबन्धिषु ॥ २३ ॥
स्वरभेदानिलव्याधिपक्षाघातापतानके ।
अङ्गमर्दकटीपार्श्वपृष्ठकुक्षिहनुग्रहे ॥ २४ ॥
महत्त्वे मुष्कयोः खल्यामायामे वातकण्टके ।
मूत्रकृच्छ्रार्बुदग्रन्थिशुक्राघाताढ्यमारुते ॥ २५ ॥

वेपथुक्षवथुस्तापस्तम्भजृम्भाङ्गगौरवे ।
कर्णमन्याशिरःकोष्ठजङ्घार्तौ पादरुक्षु च ॥ २६ ॥
स्वेदं यथायथं कुर्याद्यद्दोषपथविभागतः ।

दोषविशेषे स्वेदविशेषः ।

स्वेद्याश्च वातकफजा वातजाः कफजास्तथा ॥ २७ ॥
रोगास्तत्रोष्णलवणैः स्निग्धैश्च श्लैश्च वातजाः ।
करीषतुषपाषाणवाष्पाङ्गारैः कफात्मकाः ॥ २८ ॥
स्वेद्यास्तु स्निग्धरूक्षाभ्यां ज्ञात्वा व्याधिबलाबलम् ।
स्वेदो हितस्त्वनाग्नेयो वाते मेदःकफावृते ॥ २९ ॥

अवयवविशेषेण मृद्वादिस्वेदयोगः ।

वृषणौ हृदयं दृष्टिं स्वेदयेन्मृदु वा न वा ।
मध्यमं वंक्षणौ शेषमङ्गावयवमिष्टतः ॥ ३० ॥

सम्यक्स्विन्नलक्षणम् ।

स्तम्भशूलाद्युपरमे शीतवेपथुनिग्रहे ।
स्वेदागमे लघुत्वे च स्वेदः सुविहितो भवेत् ॥ ३१ ॥

अतिस्विन्नलक्षणम् ।

दाहोऽङ्गे स्वरदौर्बल्यं रक्तपित्तप्रवर्तनम् ।
मूर्च्छा भ्रमः क्लमस्तृष्णा चातिस्विन्ने ज्वरस्तथा ।
व्यायामं तदहर्जह्यात्स्विन्नो मितहिताशनः ॥ ३२ ॥

सर्वस्वेदे सामान्यो विधिः ।

सर्वान् स्वेदान्निवाते च जीर्णान्नस्यावचारयेत् ।
स्नेहाभ्यक्तशरीरस्य शीतैः संछाद्य चक्षुषी ॥ ३३ ॥

स्वेदफलम् ।

दीप्ताग्नित्वं मार्दवं त्वक्प्रसादं
भक्तश्रद्धां स्रोतसां निर्मलत्वम् ।
कुर्यात्स्वेदो हन्ति निद्रां सतन्द्रां
सन्धीन् स्तब्धांश्चेष्टयेदाशु युक्तः ॥ ३४ ॥

स्नेहक्लिन्ना कोष्ठगा धातुगा वा
स्रोतोलीना ये च शाखास्थिसंस्थाः।
दोषाः स्वेदैस्ते द्रवीकृत्य कोष्ठे
नीताः सम्यक्शुद्धिभिर्निर्ह्रियन्ते ॥ ३५ ॥

इति श्रीसोढलवैद्यग्रथिते गदनिग्रहे दशमे पञ्चकर्माधिकारखण्डे स्वेदाधिकारो द्वितीयः ॥ २ ॥

---

## अथ वमनाधिकारस्तृतीयः।

अथातो वमनविधिमध्यायं व्याख्यास्यामः—

वमनौषधपानविधिः।

अथ साधारणे काले स्निग्धस्विन्नं यथाविधि।
श्वोवम्यमुत्क्लिष्टकफं मत्स्यमाषतिलादिभिः ॥ १ ॥
निशि सुप्तं सुजीर्णान्नं पूर्वाह्णे कृतमङ्गलम्।
निरन्नमीषत्स्निग्धं वा पेयया पीतसर्पिषम् ॥ २ ॥
वृद्धबालाबलक्लीबभीरून् रोगानुरोधतः।
आकण्ठं पायितं मद्यं क्षीरमिक्षुरसं रसम् ॥ ३ ॥
यथाविकारविहितां मधुसैन्धवसंयुताम्।
कोष्ठं विभज्य भैषज्यमात्रां मन्त्राभिमन्त्रिताम् ॥ ४ ॥
ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः।
ऋषयः सौषधिग्रामा भूतसङ्घाश्च पान्तु वः ॥ ५ ॥
रसायनमिवर्षीणाममराणामिवामृतम्।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ ६ ॥

ॐ नमो भगवते भैषज्यगुरवे वैडूर्यप्रभुराजाय तथाऽऽगतायार्हते सम्यक्संबुद्धाय तद्यथा ॐ भैषज्ये भैषज्ये महाभैषज्ये समुद्गते स्वाहा ॥

धन्वन्तरिः काशिपतिर्दिवोदासस्तथाऽश्विनौ।
नकुलः सहदेवश्च सप्तैते गदनाशनाः ॥ ७ ॥

प्राङ्मुखं पाययेत्पीते मुहूर्तमनुपालयेत् ।
तन्मना जातहृल्लासप्रसेकश्छर्दयेत्ततः ॥ ८ ॥
अङ्गुलिभ्यामनायस्तो नालेन मृदुनाऽथवा ।
गलताल्वरुजन् वेगानप्रवृत्तान् प्रवर्तयन् ॥ ९ ॥
प्रवर्तयन्प्रवृत्तांश्च जानुतुल्यासने स्थितः ।
उभे पार्श्वे ललाटं च वमतश्चास्य धारयेत् ॥ १० ॥
प्रपीडयेत्तथा नाभिं पृष्ठं च प्रतिलोमतः ।

दोषविशेषेण वमनद्रव्यग्रहणविचारः ।

कफे तीक्ष्णोष्णकटुकैः पित्ते स्वादुहिमैरिति ॥ ११ ॥
वमेत्स्निग्धाम्ललवणैः संसृष्टे मरुता कफे ।
पित्तस्य दर्शनं यावच्छेदो वा श्लेष्मणो भवेत् ॥ १२ ॥

वमनायोगलक्षणं तच्चिकित्सा च ।

हीनवेगः कणाधात्रीसिद्धार्थलवणोदकैः ।
वमेत्पुनः पुनस्तत्र वेगानामप्रवर्तनम् ॥ १३ ॥
प्रवृत्तिः सविबन्धा वा केवलस्यौषधस्य वा ।
अयोगस्तेन निष्ठीवकण्डूकोठज्वरादयः ॥ १४ ॥

वमनसम्यग्योगलक्षणम् ।

निर्विबन्धं प्रवर्तन्ते कफपित्तानिलाः क्रमात् ।
मनःप्रसादः स्वास्थ्यं च अवस्थानं स्वयं भवेत् ॥ १५ ॥
वैपरीत्यमयोगानां न चातिमहती व्यथा ।
सम्यग्योगे-

वमनातियोगलक्षणम् ।

ऽतियोगे च फेनचन्द्रकरक्तवत् ॥ १६ ॥
वमितं क्षामता दाहः कण्ठशोषस्तमो भ्रमः ।
घोरा वाय्वामया मृत्युर्जीवशोणितनिर्गमात् ॥ १७ ॥

सम्यग्वान्तस्य पश्चात्कर्म ।

सम्यग्योगेन वमिते क्षणमाश्वास्य पाययेत् ।

धूमत्रयस्यान्यतमं स्नेहाचारमथादिशेत् ॥ १८ ॥

वमनायोगप्रतीकारः।

यदा तु वमनं पीतं न छर्दयति मानवः।
किं तत्र भेषजं कार्यं कथं वैद्यः समाचरेत् ॥ १९ ॥
दर्शयेत्तस्य हि भिषग्व्यलीकानि पृथक्पृथक्।
मक्षिकाकेशचूर्णानि तक्रमण्डेन योजयेत् ॥ २० ॥
एतेन तु प्रयोगेण क्षिप्रं प्रच्छर्दयेन्नरः।
एषा क्रिया समाख्याता दुर्वान्तानां विशेषतः ॥२१॥

वमनद्रव्याणि।

बिम्बिनिम्बपटोलं च मदनं कृतवेधनम्।
वत्सकेक्ष्वाकुबीजं तु बीजं धामार्गवस्य च ॥ २२ ॥
जीमूतकानि त्रपुसं नागवल्ल्यथ कट्फलम्।
पिप्पल्यः शतपुष्पा च सर्षपा मदनं वचा ॥ २३ ॥
एतानि वामनीयेषु कल्प्यमानेषु कल्पयेत्।

कतिपयवमनयोगाः।

अङ्कोठस्याथ मूलं च क्वाथं च मधुना पिबेत् ॥ २४ ॥
सर्पिषा भेषजैश्चैतैः सुखोष्णं शीतमेव वा।
मदनस्य फलं पिष्ट्वा देवदालीफलैः सह ॥ २५ ॥
निम्बपत्राणि मधु च सैन्धवं मरिचानि च।
एष योगः प्रयोक्तव्यः प्रधानो वमनौषधे ॥ २६ ॥
सुखावहश्च पथ्यश्च सर्वरोगविनाशनः।
काकादनी देवदाली मदनस्य फलानि च ॥ २७ ॥
सैन्धवेन-समायुक्तं प्रधानं वमनौषधम्।
मदनं बन्धुजीवश्च शतपुष्पा सतापसा ॥ २८ ॥
सैन्धवेन समायुक्तं प्रधानं वमनौषधम्।
मदनस्य च पत्राणि पुष्पाणि च फलानि च ॥ २९ ॥

सैन्धवं बन्धुजीवश्च राजकोशातकानि च ।
एष प्रच्छर्दनो योगः प्रधानं वमनौषधम् ॥ ३० ॥
श्रेष्ठश्च विषयुक्तेषु कासे श्वासे च पूजितः ।
कृष्णामदनसिन्धूत्थकल्कैः क्षौद्रसमन्वितम् ॥ ३१ ॥
पाययेन्मधुकक्काथमेतद्वमनमुत्तमम् ।
रास्नेन्द्रयवभूनिम्बराढकल्कयुतं पिबेत् ॥ ३२ ॥
यष्टीकषायं सक्षौद्रं तेन साधु वमत्यलम् ।
कृशरां राढसंसिद्धां तद्बीजैर्वा शृतं पिबेत् ।
पीत्वा राढकषायं वा सिन्धुकृष्णान्वितं वमेत् ॥ ३३ ॥
सकलिङ्गवचामगधामधुकं लवणेन युतं मदनाम्बु पिबेत् ।
वमनं कफरोगहरं हि नृणामथवा पिचुमन्दकषाययुतम् ॥३४॥
कषायैः स्वरसैः कल्कैश्चूर्णैरपि च बुद्धिमान् ।
भक्ष्यभोज्यान्नपानेषु वमनान्युपकल्पयेत् ॥ ३५ ॥

वमनानन्तरमाहारसंसर्जनक्रमः ।

ततः सायं प्रभाते च क्षुद्वान् स्नातः सुखाम्बुना ।
पुराणरक्तशालीनामस्नेहलवणोपणम् ॥ ३६ ॥
भुञ्जानोऽन्नमपेस्यामि भजेत्पेयादिकं क्रमम् ।
वमितं लङ्घयेत्सम्यक्शुद्धिलिङ्गानि लक्षयन् ॥ ३७ ॥
तानि दृष्ट्वाऽथ पेयादिक्रमं कुर्याच्च लङ्घनम् ।
संशोधनाभ्यां शुद्धस्य हृतदोषस्य देहिनः ।
यात्यग्निर्मन्दतां तस्मात्क्रमं पेयादिमाचरेत् ॥ ३८ ॥
पेयां विलेपीमकृतं कृतं च यूषं रसं त्रीनुभयं तथैकम् ।
क्रमेण सेवेत नरोऽन्नकालान् प्रधानमध्यावरशुद्धिशुद्धः ॥३९॥
यथाऽणुरग्निस्तृणगोमयाद्यैः संधुक्ष्यमाणो भवति क्रमेण ।
महास्थिरः सर्वपचस्तथैव शुद्धस्य पेयादिभिरन्तराग्निः ॥ ४० ॥
जघन्यमध्यप्रवरे तु वेगाश्चत्वार इष्टा वमने षडष्टौ ।

दशैव ते द्वित्रिगुणा विरेके प्रस्थस्तथा द्वित्रिचतुर्गुणश्च ॥ ४१ ॥
पित्तावसानं वमनं विरेकादर्धं कफान्तं च विरेकमाहुः ।
द्वित्रान् विट्कानपनीय वेगान्मेयं विरेके, वमने तु पीतम् ४२

कफपित्ते विशुद्धेऽल्पे मद्यपे वातपैत्तिके ।
तर्पणादिक्रमः कार्यः पेयाऽभिष्यन्दयेद्धि तान् ॥ ४३ ॥
एकाहात्परतः स्नेहात्स्थित्वा प्रच्छर्दनं पिबेत् ।

वमनार्हा रोगाः पुरुषाश्च ।

विसूच्यलसकश्चैव कासश्वासौ गलग्रहः ॥ ४४ ॥
अरोचकः श्लेष्मसेको हृद्रोगः श्लैष्मिकश्च यः ।
गलशुण्डी प्रतिश्यायो रोहिणीका विलम्बिका ॥४५॥
अधोभागगतं रक्तं हृल्लासः श्लेष्मविभ्रमः ।
श्लेष्मज्वरी प्रमेही च मधुमेही हलीमकी ॥ ४६ ॥
कृमिकोष्ठपरीताश्च कामलापाण्डुरोगिणः ।
कफस्थाने गता ये च पित्तरोगाः प्रकीर्तिताः ।
गरितो विषपीतश्च वामनीयः प्रकीर्तितः ॥ ४७ ॥
तथा च—
अजीर्णान्नविरुद्धान्नदुष्टदग्धनवज्वराः ।
अधोऽस्रपित्तं शोषश्च विषपीतविसूचिके ॥ ४८ ॥
अविपाकोऽतिसारश्च उत्क्लेशोऽरोचकोऽपची ।
ग्रन्थ्यर्बुदावपस्मारश्लीपदोन्मादमेदसः ॥ ४९ ॥
विसर्पश्वासहृल्लासपाण्डुवर्त्ममुखामयाः ।
कासकुष्ठप्रमेहाश्च स्तन्यघ्राणकफामयाः ॥ ५० ॥
शोफकोठशिरःकर्णरुजो वाम्याः प्रकीर्तिताः ।

वमनानर्हा रोगाः पुरुषाश्च ।

अवाम्या गर्भिणीरूक्षरूक्षाशनभुजः कृशाः ॥ ५१ ॥
कार्यव्यग्रातिदीप्ताग्निसुकुमाराध्वकर्शिताः ।

पानक्लान्तक्षतक्षीणाबलातिस्थूलदुर्बलाः ॥ ५२ ॥
वृद्धा भारवहाः क्रोधभयशोकक्लमातुराः ।
मदमूर्च्छाव्यवायाध्वक्षुत्तृषार्तोपवासिनः ॥ ५३ ॥
व्यायामाध्ययनच्छर्दिचिन्तायुक्तानुवासिनः ।
ऊर्ध्वपित्तास्रवातार्ता दुर्वान्तास्थापिताश्च ये ॥ ५४ ॥
उदावर्ती च हृद्रोगी मूत्राघाती च गुल्मिनः ।
अष्ठीलाजठरप्लीहतिमिरार्शोभ्रमार्दिताः ॥ ५५ ॥
स्वरोपघातः साक्षेपः पार्श्वशूली तथाऽर्दिती ।
शिरोक्षिशङ्खकर्णार्ताः कृमिकोष्ठाश्च सर्वशः ॥ ५६ ॥

तथा च—

अतिस्थूलो नेत्ररोगी तृष्णामूर्च्छानिपीडितः ।
सुभगो वैद्यमानी च निरूढोऽप्यनुवासितः ॥ ५७ ॥
दृष्योदरी क्षतक्षीणो वातरोगी च सर्वदा ।
उन्मत्तो वातहृद्रोगी वेपनोऽथायतश्वकी ॥ ५८ ॥
स्त्रीषु स्निग्धस्तथाऽस्निग्धो वृद्धो बालश्च मानवः ।
गर्भिणी चोर्ध्वरक्ती च न वाम्यास्ते कथंचन ॥ ५९

वमने मदनकल्पः ।

वमने मदनं श्रेष्ठं त्रिवृन्मूलं विरेचने ।
नित्यमन्यत्र तु व्याधिविशेषेण विशिष्टता ॥ ६० ॥
फलानि तानि पाण्डूनि न चातिहरितान्यपि ।
आदायाह्नि प्रशस्तर्क्षे मध्ये ग्रीष्मवसन्तयोः ॥ ६१ ॥
प्रमृज्य कुशमुचोल्यां क्षिप्त्वा बद्धा प्रलेपयेत् ।
गोमयेन तु मुचोलीं धान्यमध्ये निधापयेत् ॥ ६२
मृदुभूतानि मध्विष्टगन्धानि कुशवेष्टनात् ।
निःकृष्याभिगतेऽष्टाहे शोषयेच्चान्यथातपे ॥ ६३ ॥
तेषां ततः सुशुष्काणामुद्धृत्य फलपिप्पलीः ।

दधिमध्वाज्यपललैर्मृदित्वा शोषयेत्पुनः ॥ ६४ ॥
ततः सुगुप्तं संस्थाप्य कार्यकाले प्रयोजयेत्।
अथादाय ततो मात्रां जर्जरीकृत्य वासयेत् ॥ ६५ ॥
शर्वरीं मधुयष्ट्याश्च कोविदारस्य वा जले।
कर्बुदारस्य बिम्ब्या वा नीपस्य निचुलस्य च ॥ ६६ ॥
शणपुष्प्याः सदापुष्प्याः प्रत्यक्पुष्प्युदके तथा।
ततः पिबेत्कषायं तं प्रातर्मृदितगालितम् ॥ ६७ ॥
सूत्रोदितेन विधिना साधु तेन तथा वमेत्।
श्लेष्मज्वरप्रतिश्यायगुल्मान्तर्विद्रधीषु च ॥ ६८ ॥
प्रच्छर्दयेद्विशेषेण यावत्पित्तस्य दर्शनम्।
पित्ते कफस्थानगते जीमूतादिजलेन तत् ॥ ६९ ॥
हृद्दाहेऽधोस्रपित्ते च क्षीरं तत्पिप्पलीशृतम्।
क्षीरेयीं वा कफच्छर्दिप्रसेकतमकेषु च ॥ ७० ॥
दध्युत्तरं वा दधि वा तच्छृतक्षीरसंभवम्।
राढपुष्पफलश्लक्ष्णचूर्णमाल्यं सुरूपितम् ॥ ७१ ॥
वमेन्मण्डरसादीनां तृप्तो जिघ्रन्सुखं सुखी।
एवमेव फलालाभे कल्प्यं पुष्पं शलाटु वा ॥ ७२ ॥

वमने जीमूतकल्पः।

जीमूताद्यांश्च फलवज्जीमूतं तु विशेषतः।
प्रयोक्तव्यं ज्वरश्वासकासहिध्मादिरोगिणाम् ॥ ७३ ॥
शृते पयसि दध्यम्लं जाते हरितपाण्डुरे।
आसुत्य वारुणीमण्डे पिबेन्मृदितगालितम् ॥ ७४ ॥
कफादरोचके श्वासे पाण्डुत्वे राजयक्ष्मणि।
इयं च कल्पना कार्या तुम्बीकोशातकीष्वपि ॥ ७५ ॥
जीमूतकल्कं चूर्णं वा पिबेच्छीतेन वारिणा।
ज्वरे पित्ते कफोच्छ्राये कफवातात्कफादपि ॥ ७६ ॥

कासश्वासज्वरच्छर्दितृष्णार्ते कफकर्शिते ।
वमने इक्ष्वाकुकल्पः ।
इक्ष्वाकुर्वमने शस्तः प्रताम्यति च मानवे ॥ ७७ ॥
फलपुष्पविहीनस्य प्रवालैस्तस्य साधितम् ।
पित्तश्लेष्मज्वरे क्षीरं पित्तोद्रिक्ते प्रयोजयेत् ॥ ७८ ॥
हृतमध्ये फले जीर्णे स्थितं क्षीरं यदा दधि ।
स्यात्तदा कफजे कासे श्वासे वम्यां च पाययेत् ॥७९॥
मस्तुना वा फलान्मध्यं पाण्डुकुष्ठविषार्दितः ।
तेन तक्रं विपक्वं वा पिबेत्समधुसैन्धवम् ॥ ८० ॥
भावयित्वाऽजदुग्धेन बीजं तेनैव वा पिबेत् ।
विषगुल्मोदरग्रन्थिगण्डेषु श्लीपदेषु च ॥ ८१ ॥
सक्तुभिर्वा पिबेन्मन्थं तुम्बीस्वरसभावितैः ।
वमने धामार्गवकल्पः ।
कफोद्भवे ज्वरे कासे गलरोगेष्वरोचके ॥ ८२ ॥
कासगुल्मोदरगरे वाते श्लेष्माशयस्थिते ।
कफे च कण्ठवक्त्रस्थे कफसंचयजेष्वपि ॥ ८३ ॥
धामार्गवो गदेष्विष्टः स्थिरेषु च महत्सु च ।
धान्यतुम्बरुयूषेण कल्कस्तस्य विषापहः ॥ ८४ ॥
एकं धामार्गवं द्वे वा पीनसे मृदितं पिबेत् ।
कुष्ठपाण्ड्वामयप्लीहशोफगुल्मगरादिषु ॥ ८५ ॥
मदनमधुकलम्बानिम्बबिम्बीविशाला-
त्रपुसकुटजमूर्वादेवदालीकृमिघ्नम् ।
विदुलदहनचित्राः कोशवत्यौ करञ्जः
कणलवणवचैलासर्षपाश्छर्दनानि ॥ ८६ ॥
वमनस्यायोगातियोगसम्यग्योगलक्षणम् ।
कफप्रसेको हृदयाविशुद्धिः कण्डूश्च दुश्छर्दितलिङ्गमाहुः ।
पित्तातियोगं च विसंज्ञतां च हृत्कण्ठपीडामपि चातिवान्ते ॥

पित्ते कफस्यानु सुखं प्रवृत्ते शुद्धेषु हृत्कण्ठशिरःसु चापि।
लघौ च देहे कफसंस्रवे च स्थिते सुवान्तं पुरुषं व्यवस्येत्॥

वमनौषधमात्रा।

त्रिपलं ज्येष्ठमाख्यातं कनीयस्तु पलं भवेत्।
मध्यमं द्वे पले दद्यादिति मे निश्चिता मतिः॥ ८९॥
विषकुष्ठहता ये च कासश्वासहताश्च ये।
तरुणा बलवन्तश्च वामयेदुत्तमेन तान्॥ ९०॥
मध्यमे प्राणवयसि मध्यमं तत्र कारयेत्।
कनीयसि कनीयस्तु तथा प्राणे कनीयसि॥ ९१॥
विपरीतं प्रयुञ्जानो रोगान्विजनयिष्यति।
उपद्रवान्वा जनयेदातुरं वा विनाशयेत्॥ ९२॥

वमनस्य वेगसंख्याविशेषेणोत्तममध्यमाधमत्वम्।

वमनेऽपि च वेगाः स्युरष्टौ पित्तान्त उत्तमे।
षड्वेगा मध्यमे वेगाश्चत्वारस्त्ववरे मताः॥ ९३॥

वमनफलम्।

कासोपलेपस्वरभेदनिद्रातन्द्रास्यदौर्गन्ध्यविषोपसर्गाः।
कफप्रसेकग्रहणीप्रदोषा न सन्ति जन्तोर्वमतः कदाचित्॥९४॥

इति श्रीवैद्यवर्यसोढलप्रथिते गदनिग्रहे द्वसे पञ्चकर्माधिकारखण्डे
वमनाधिकारस्तृतीयः॥

---

## अथ विरेचनाधिकारश्चतुर्थः।

अथातो विरेकविधिमध्यायं व्याख्यास्यामः—
अथैनं वामितं भूयः स्नेहस्वेदोपपादितम्।
श्लेष्मकाले गते ज्ञात्वा कोष्ठं सम्यग्विरेचयेत्॥ १॥

कोष्ठलक्षणम्।

बहुपित्तो मृदुः कोष्ठः क्षीरेणापि विरिच्यते।
प्रभूतमारुतः क्रूरः कृच्छ्राच्छ्यामादिकैरपि॥ २॥

दोषविशेषेण विरेचनद्रव्यविशेषः।

कषायमधुरैः पित्ते विरेकः कटुकैः कफे।
स्निग्धोष्णलवणैर्वायावप्रवृत्तौ तु पाययेत् ॥ ३ ॥
उष्णाम्बु स्वेदयेदस्य पाणितापेन चोदरम्।
उत्थानेऽल्पे दिने तस्मिन्भुक्त्वाऽन्येद्युः पुनः पिबेत्॥४॥
अदृढस्नेहकोष्ठस्तु पिबेदूर्ध्वं दशाहतः।
भूयोऽप्युपस्कृततनुः स्नेहस्वेदैर्विरेचनम् ॥ ५ ॥
यौगिकं सम्यगालोच्य स्मरन्पूर्वमनुक्रमम्।

विरेचने वर्जनीयानि।

विरेचनं पीतवांस्तु न वेगान्धारयेद्बुधः ॥ ६ ॥
निवातशायी शीताम्बु न स्पृशेन्न प्रवाहयेत्।
समीक्ष्य देशं कालं च वयोऽवस्थाश्च देहिनाम् ॥ ७ ॥
रोगांश्च तत्त्वतो ज्ञात्वा ततो दद्याद्विरेचनम्।

विरेचनद्रव्यमात्रा।

पित्तेन सान्मृदुः कोष्ठः क्रूरो वातात्कफात्तथा ॥ ८ ॥
मध्यमः समदोषश्च मात्रा योज्यानुरूपतः।
त्रीन् भागानथ कुर्वीत ज्येष्ठमध्यकनीयसः ॥ ९ ॥
द्वे पले ज्येष्ठमाख्यातं मध्यमं तु पलं भवेत्।
पलार्धमथ दातव्यं कनीयस्तु विरेचनम् ॥ १० ॥
पुरुषान्खलु वक्ष्यामि ज्येष्ठमध्यकनीयसः।
विषकुष्ठहता ये च ये चोदावर्तपीडिताः ॥ ११ ॥
तरुणा बलवन्तश्च तेषां ज्येष्ठं विरेचनम्।
पाण्डुरोगेषु गुल्मे च पूर्वे वयसि मध्यमे ॥ १२ ॥
दह्यमाने च हृदये मध्यमं स्याद्विरेचनम्।
कनीयसि वयस्यथ तथा प्राणे कनीयसि ॥ १३ ॥
रोगेषु चानुरूपेषु कनीयः स्याद्विरेचनम्।

विरेचने प्रधानानि द्रव्याणि ।

अरुणाभं त्रिवृन्मूलं श्रेष्ठं मूलविरेचने ॥ १४ ॥
प्रधानस्तिल्वकस्त्वक्षु फलेष्वपि हरीतकी ।
तैलेष्वेरण्डजं तैलं स्वरसे कारवेल्लिका ॥ १५ ॥
सुधापयः पयस्सूक्तमिति प्राधान्यसंग्रहः ।

विरेचनाः कतिपययोगाः ।

पिप्पल्यादिकषायेण पिबेत्पिष्टां हरीतकीम् ॥ १६ ॥
सैन्धवोपहितः सद्य एष योगो विरेचनः ।
शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णावचूर्णितम् ॥ १७ ॥
रेचनं सुकुमाराणां त्वक्पत्रमरिचांशकम् ।
त्रिवृत्कल्ककषायेण क्षौद्रेण च सशर्करः ॥ १८ ॥
सघृतः साधितो लेहः श्रेष्ठमेतद्विरेचनम् ।
पथ्यासैन्धवशुण्ठीनां कल्कमुष्णाम्बुना पिबेत् ॥ १९ ॥
विरेकः सर्वरोगघ्नः श्रेष्ठो नाराचसंज्ञकः ।
व्योषदन्तीत्रिवृत्पथ्यानीलिनीगुडकल्कितः ॥ २० ॥
मोदकस्तु सुगन्धाढ्यो रेचनः सर्वदोषजित् ।
त्रिवृद्दन्तीविडङ्गानि सममागानि कारयेत् ॥ २१ ॥
हरीतकीनां द्वौ भागौ श्रेष्ठमेतद्विरेचनम् ।
त्र्यूषणस्य भवेद्भागः सैन्धवं रजनी तथा ॥ २२ ॥
हरीतकी पञ्चगुणा श्रेष्ठमेतद्विरेचनम् ।
अजगन्धा तुगाक्षीरी विदारी शर्करा त्रिवृत् ॥ २३ ॥
चूर्णितं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ।
सन्निपातज्वरस्तम्भदाहतृष्णार्दितो नरः ॥ २४ ॥
त्रिवृच्छाणाः शुभास्तिस्रस्तिस्रश्च त्रिफलात्वचः ।
विडङ्गपिप्पलीक्षारशाणास्तिस्रस्तु चूर्णिताः ॥ २५ ॥
लिह्यात्सर्पिर्मधुभ्यां च मोदकान् वा गुडेन वा ।

भक्षयेन्निष्परीहारमेतच्छ्रेष्ठं विरेचनम् ॥ २६ ॥
गुल्मं प्लीहोदरं कासं हलीमकमरोचकम् ।
कफवातकृतांश्चान्यान् व्याधीनेतद्व्यपोहति ॥ २७ ॥
व्योषत्वक्पत्रमुस्तैलाविडङ्गामलकान् समान् ।
त्रिवृतोऽष्टगुणं भागं शर्करायाश्च षड्गुणम् ॥ २८ ॥
चूर्णिता गुटिकाः कार्याः क्षौद्रेण पलसंमिताः ।
भक्षयेत्प्रातरुत्थाय शीतं चानुपिबेज्जलम् ॥ २९ ॥
मूत्रकृच्छ्रे ज्वरे वम्यां कासे श्वासे भ्रमे क्षये ।
तापे पाण्ड्वामयेऽल्पाग्नौ शस्तो मितहिताशिनः ॥ ३० ॥
योगः सर्वविषाणां च श्रेष्ठमेतद्विरेचनम् ।
हिङ्गुसौवर्चलव्योषविडाजाजीयवानिकैः ॥ ३१ ॥
वचाजगन्धात्रिफलाचव्यचित्रकधान्यकैः ।
मोदकान् कारयेच्चूर्णैस्तान् सतुम्बरुदाडिमैः ॥ ३२ ॥
त्रिकवंक्षणहृद्बस्तिशूलार्शःप्लीहरोगिणाम् ।
हिक्काकासारुचिश्वासकफोदावर्तिनां सुखान् ॥ ३३ ॥
पलं निचित्रकदन्तीभ्यां हरीतक्याश्च विंशतिः ।
पिप्पलीत्रिवृते क्षौद्रगुडस्याष्टपलेन तान् ॥ ३४ ॥
विनीय मोदकान् कुर्याद्दशैकं भक्षयेन्नरः ।
उष्णाम्बु च पिबेच्छेषान् दशमे दशमेऽह्नि च ॥ ३५ ॥
एते निष्परिहाराः स्युः सर्वरोगनिबर्हणाः ।
ग्रहणीपाण्डुरोगघ्नाः कण्डूकोठानिलापहाः ॥ ३६ ॥
दन्तीकल्कं समगुडं शीतवारियुतं पिबेत् ।
विरेचनं मुख्यतमं कामलाहरमुत्तमम् ॥ ३७ ॥
त्रिवृद्दुरालभामुस्ताशर्करोदीच्यचन्दनम् ।
द्राक्षाम्बुना सयष्ट्याह्वं सातला जलदात्यये ॥ ३८ ॥
त्रिवृतां चित्रकं पाठामजाजीं सरलां वचाम् ।

स्वर्णक्षीरीं च हेमन्ते चूर्णमुष्णाम्बुना पिबेत् ॥ ३९ ॥
त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ।
त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम् ॥ ४० ॥
क्षौद्रद्राक्षारसोपेतं वर्षाकाले विरेचनम् ।
त्रिवृत्त्रायन्तिहपुषाः सातलां कटुरोहिणीम् ॥ ४१ ॥
स्वर्णक्षीरीं च संचूर्ण्य गोमूत्रैर्भावयेत्त्र्यहम् ।
एष सर्वर्तुको योगः स्निग्धानां मलदोषजित् ॥ ४२ ॥
दन्ती द्रवन्ती मरिचं यवानी चोपकुञ्चिका ।
नागरं हेमदुग्धी च चित्रकं चेति चूर्णयेत् ॥ ४३ ॥
सप्ताहं भावयेन्मूत्रे गवां पाणितलं ततः ।
पिबेद्धृतेन चूर्णं तु विरिक्तश्चापि तर्पणम् ॥ ४४ ॥
सर्वदोषहरं मुख्यं सर्वेष्वृतुषु यौगिकम् ।
दुर्भक्ताजीर्णपार्श्वार्तिकुष्ठप्लीहोदरेषु च ॥ ४५ ॥
गण्डमालासु वाते च पाण्डुरोगे च शस्यते ॥ ४६ ॥
हरीतकीभिः क्वथितं सुवीरं दन्त्यग्निकृष्णाबिडचूर्णमिश्रम् ।
विरेचनं सोरुबुतैलमिश्रं निरत्ययं योज्यमथामयघ्नम् ॥ ४७ ॥
घृतेषु तैलेषु पयःसु चापि मद्येषु मूत्रेषु तथा रसेषु ।
भक्ष्यान्नलेह्येषु च तेषु तेषु विरेचनान्यग्रमतिर्विदध्यात् ॥ ४८

विरेचनार्हा रोगाः पुरुषाश्च ।

अपस्मारी विषार्तश्च सामस्तम्भश्च वातिकः ।
विषमज्वरवीसर्पी वातशोणितकश्च यः ॥ ४९ ॥
अर्शसो विषमाग्निश्च कुष्ठश्वयथुपीडितः ।
उदावर्ती तथोन्मत्तो विद्रध्यलजिपीडितः ॥ ५० ॥
पित्तश्लेष्मसमुत्थाश्च व्याकुला ये च धातवः ।
सन्निपातसमुत्थाश्च योनिदुष्टाश्च याः स्त्रियः ॥ ५१ ॥
शूलार्ता रक्तगुल्मिन्यो नार्यो याश्च निपीडिताः ।

रेतोदुष्टाश्च पुरुषा विरेच्यास्तु प्रकीर्तिताः ॥ ५२ ॥
विरेच्यास्तूर्ध्वपित्तास्रगुल्मप्लीहभगन्दराः ।
जीर्णज्वरोदरगरी क्रिमिकोष्ठोऽथ विद्रधिः ॥ ५३ ॥

रेतोयोनिविकारार्शोमूत्राघातहलीमकाः ।
वातास्रव्यङ्गतिमिरकाचाभिष्यन्दिकुष्ठिनः ॥ ५४ ॥

दुष्टव्रणाक्षिकोपाग्निक्षारदग्धाः शिरोरुजः ।
पक्वाशयरुजानार्दव्रणोदावर्तकासिनः ॥ ५५ ॥

विस्फोटादिविषन्वाश्च विसूचीच्छर्यरोचकाः ।
अविपाकापचीमेदोलसकश्लीपदामयाः ॥ ५६ ॥

प्रमेहश्वासहल्लासमदापस्मारवर्तिनः ।
पाण्डुरोगार्बुदग्रन्थिघ्राणकर्णास्यरोगिणः ॥ ५७ ॥
पित्तरोगा विसर्पश्च स्तन्यदोषाश्च शोफरुक् ।

विरेचनायोग्या रोगाः पुरुषाश्च ।

अविरेच्योऽतिसारी च क्षतपायुर्नवज्वरी ॥ ५८ ॥
अल्पाग्न्यधोगपित्तास्राः सशल्याभिहतास्तथा ।
क्रूरकोष्ठोऽथ शोषी च सातिस्निग्धो मदात्ययी ॥ ५९ ॥

लङ्घितास्थापिता रात्रिजागरिताश्च दुर्बलाः ।
अतिस्निग्धो रिक्तकोष्ठः कृशोऽतिस्थूल एव च ॥ ६० ॥

अशुद्धवातोल्लसितः सुकुमारोऽथ भीरुकः ।
ऊनद्वादशवर्षश्च व्यतिक्रान्तश्च सप्ततिम् ॥ ६१ ॥

गर्भिणी हीनरेताश्च वेपनो हृदयद्रवी ।
तृषार्तस्तालुशोषी च ऊरुस्तम्भार्दितोऽर्दिती ॥ ६२ ॥
हनुग्रहगृहीतश्च वातहृद्रोगपीडितः ।
सर्वेषु वातरोगेषु न विरेकं समाचरेत् ॥ ६३ ॥

विरेचनस्य योगायोगातियोगलक्षणम् ।

प्रमाणेनाढकं त्रिंशद्वेगाः श्लेष्मान्त उत्तमे ।
दश वेगावरे प्रस्थो मध्योऽर्धाढकविंशकः ॥ ६४ ॥
वमने च विरेके च तथा शोणितमोक्षणे ।
अर्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥ ६५ ॥

स्याद्दुर्विरिक्ते कफपित्तलिङ्गं दाहोऽरुचिर्गौरवमग्निसादः ।
मूर्च्छागुदभ्रंशकफातियोगाः शूलोद्गमश्चातिविरिक्तलिङ्गम्॥६६
गतेषु दोषेषु कफान्तिकेषु ग्लान्यां लघुत्वे मनसश्च तुष्टौ ।
गतेऽनिले चाप्यनुलोमभावं सम्यग्विरिक्तं मनुजं व्यवस्येत् ६७
मन्दाग्निमक्षीणमसद्विरिक्तं न पाययेताहनि तत्र पेयाम् ।
क्षीणं तृषार्तं सुविरेचितं च तन्वीमसान्द्रां लघु पाययेत ॥६८॥

विरेचनायोगातियोगचिकित्सा ।

सायाह्नि जीर्णभैषज्ये न विरिच्येत यो नरः ।
मृद्वल्पमात्रापीतश्च पाययेदौषधं मृदु ॥ ६९ ॥
वमनेऽतिप्रवृत्ते तु हृद्यं कार्यं विरेचनम् ।
विरेके चातिसंवृत्ते वमनं योजयेद्भिषक् ॥ ७० ॥

विरेचने त्रिवृत्कल्पः ।

कषायमधुरा रूक्षा विपाके कटुका त्रिवृत् ।
कफपित्तप्रशमनी रौक्ष्याच्चानिलकोपनी ॥ ७१ ॥
सेदानीमौषधैर्युक्ता वातपित्तकफापहैः ।
कल्पवैशेष्यमासाद्य जायते सर्वरोगजित् ॥ ७२ ॥
द्विधा ख्यातं च तन्मूलं श्यामं चारुणमेव च ।
त्रिवृदाख्यं वरतरं निरपायं सुखं तयोः ॥ ७३ ॥
सुकुमारे शिशौ वृद्धे मृदुकोष्ठे च तद्धितम् ।
श्यामं तीक्ष्णाशुकारित्वादतस्तदपि शस्यते ॥ ७४ ॥
क्रूरे कोष्ठे बहुदोषे क्लेशाक्षमिणि चातुरे ।

मूर्च्छासंमोहहृत्कण्ठकर्षणक्षणदप्रदम् ॥ ७५ ॥
गम्भीरानुगतं श्लक्ष्णमतिर्यग्विसृतं च यत् ।
गृहीत्वा विसृजेत्काष्ठं त्वचं शुष्कां निधापयेत् ॥ ७६ ॥
अथ काले ततश्चूर्णं किंचिन्नागरकेसरम् ।
वातामये पिबेदम्लैर्पित्ते चापि सितामधु- ॥ ७७ ॥
क्षीरद्राक्षेक्षुकाश्मर्यस्वादुस्कन्धवरारसैः ।
कफामये मूत्रमद्यपीलुरसाम्लकाञ्जिकैः ॥ ७८ ॥
पञ्चकोलादिचूर्णैश्च युक्त्या युक्तं कफापहैः ।
लिम्पेदन्तस्त्रिवृतया द्विधा कृत्वेक्षुगण्डकम् ॥ ७९ ॥
एकीकृत्य च तत्स्विन्नं पुटपाकेन भक्षयेत् ।
सन्निपातज्वरस्तम्भपिपासादाहपीडितः ॥ ८० ॥
भृङ्गैलाभ्यां समा नीली तैस्त्रिवृत्तैश्च शर्करा ।
चूर्णं फलरसक्षौद्रसक्तुभिस्तर्पणं पिबेत् ॥ ८१ ॥
वातपित्तकफोत्थेषु रोगेष्वल्पानलेषु च ।
नरेषु सुकुमारेषु निरपायं विरेचनम् ॥ ८२ ॥
विडङ्गतन्दुलवरायावशूककणास्त्रिवृत् ।
सर्वतोऽर्धेन तल्लीढं मध्वाज्येन गुडेन वा ॥ ८३ ॥
गुल्मं प्लीहोदरं कासं हलीमकमरोचकम् ।
कफवातकृतांश्चान्यान् परिमार्ष्टि गदान् बहून् ॥ ८४ ॥
व्योषत्रिजातकाम्भोदकृमिघ्नामलकैस्त्रिवृत् ।
सर्वैः समा समसिता क्षौद्रेण गुटिका कृता ॥ ८५ ॥
मूत्रकृच्छ्रज्वरच्छर्दिकासे श्वासे भ्रमे क्षये ।
तापे पाण्ड्वामयेऽल्पेऽग्नौ शस्ताः सर्वविषेषु च ॥ ८६ ॥
श्यामात्रिवृद्दुरालम्भाहस्तिपिप्पलिवत्सकम् ।
नीलिनीकटुकामुस्ताश्रेष्ठायुक्तं सुचूर्णितम् ॥ ८७ ॥
रसान्नोष्णाम्बुभिः शस्तं रूक्षाणामपि सर्वदा ।

ज्वरहृद्रोगवातासृग्गुदावर्तादिरोगिषु ।
हरीतकीमपि त्रिवृद्विधानेनोपकल्पयेत् ॥ ८८ ॥

वैरेचनः सुधाकल्पः ।

सुधा भिनत्ति दोषाणां महान्तमपि संचयम् ।
आश्वेव, कष्टविभ्रंशा नैव तां कल्पयेदतः ॥ ८९ ॥
मृदौ कोष्ठेऽबले बाले स्थविरे दीर्घरोगिणि ।
कल्प्या गुल्मोदरगरत्वग्रोगमधुमेहिषु ॥ ९० ॥
पाण्डौ दूषीविषे शोफे दोषविभ्रान्तचेतसि ।
सा श्रेष्ठा कण्टकैस्तीक्ष्णैर्बहुभिश्च समाचिता ॥ ९१ ॥
द्विवर्षा वा त्रिवर्षा वा शिशिरान्ते विशेषतः ।
तां पाटयित्वा शस्त्रेण क्षीरमुद्धारयेत्ततः ॥ ९२ ॥
बिल्वादीनां बृहत्योर्वा क्वाथेन सममेकशः ।
मिश्रयित्वा सुधाक्षीरं ततोऽङ्गारेषु शोषयेत् ॥ ९३ ॥
पिबेत्कृत्वा तु गुटिकां मस्तुमूत्रसुरादिभिः ।
विरेचने मुख्यतमा नवैते त्रिवृतादयः ॥ ९४ ॥

विरेचनानुपानानि ।

त्वक्केसराम्रातकदाडिमैलासितोपलामाक्षिकमातुलिङ्गैः ।
मद्येन तैस्तैश्च मनोनुकूलैर्युक्तानि देयानि विरेचनानि ॥ ९५ ॥

विरेचनो वर्गः ।

निकुम्भकुम्भत्रिफलागवाक्षीस्नुक्शङ्खिनीनीलिनितिल्वकानि ।
शम्याककम्पिल्लकहेमदुग्धा दुग्धं च मूत्रं च विरेचनानि॥९६॥

वमनविरेचनयोर्दोषहरणे वैशिष्ट्यम् ।

अपक्वं वमनं दोषान् पच्यमानं विरेचनम् ।
निर्हरेद्वमनस्यातः पाकं न प्रतिपालयेत् ॥ ९७ ॥

वमनविरेचनव्यापच्चिकित्सा ।

ऊर्ध्वाधो रेचनं युक्तं वैपरीत्येन जायते ।
यदा तदा छर्दयतः सिञ्चेदुष्णेन वारिणा ॥ ९८ ॥

नस्यविधिः।

स्निग्धस्विन्नोत्तमाङ्गस्य प्राकृतावश्यकस्य च।
निवातशयनस्थस्य जत्रूर्ध्वं स्वेदयेत्पुनः॥ १८॥
अथोत्तानर्जुदेहस्य पाणिपादे प्रसारिते।
किंचिदुन्नतपादस्य किंचिन्मूर्धनि नामिते॥ १९॥
नासापुटं पिधायैकं पर्यायेण निषेचयेत्।
उष्णाम्बुतप्तं भेषज्यं प्रनाड्या पिचुनाऽथवा॥ २०॥
दत्ते पाणितलस्कन्धहस्तकर्णादि मर्दयेत्।
शनैरुच्छिङ्घ्य निष्ठीवेत् पार्श्वयोरुभयोस्ततः॥ २१॥
आभेषजक्षयादेवं द्विस्त्रिर्वा नस्यमाचरेत्।
मूर्च्छायां शीततोयेन सिंचेत्परिहरंश्छिरः॥ २२॥
नस्यान्ते वाक्छतं तिष्ठेदुत्तानो धारयेत्ततः।
निशाहर्भुक्तवान्ताहःस्वप्नाध्वश्रमरेतसाम्॥ २३॥
शिरोभ्यञ्जनगण्डूषप्रस्रवाञ्जनवर्चसाम्।
दन्तकाष्ठस्य हास्यस्य योज्योऽन्तेऽसौ द्विबिन्दुकः॥२४॥
पञ्चसु स्रोतसां शुद्धिः क्लमनाशस्त्रिषु क्रमात्।
दृग्बलं पञ्चसु ततो दन्तदार्ढ्यं मरुच्छमः॥ २५॥
प्रतिमर्शः क्षतक्षामबालवृद्धसुखात्मसु।
प्रयोज्योऽकालवर्षेऽपि न त्विष्टो दुष्टपीनसे॥ २६॥
मद्यपीतेऽबलश्रोत्रे कृमिदूषितमूर्धनि।
नस्यं शिरोविरेकश्च प्रतिमर्शोऽवपीडनम्॥ २७॥
ज्ञेयं प्रधमनं चेति नस्तःकर्म च पञ्चधा।
प्राक्सूर्ये मध्यसूर्ये वा प्राकृतावश्यकस्य च॥ २८॥
उत्तानस्य शयानस्य शयने स्वास्तृते सुखम्।
प्रलम्बशिरसः किंचित्किंचित्पादोन्नतस्य च॥ २९॥
अनवाक्छिरसो नस्यं न शिरः प्रतिपद्यते।

ऊर्ध्वजत्रुगता ये च रोगाः संपरिकीर्तिताः ॥ ४१ ॥
नस्यकर्म हितं तेषु तैलं वा सर्पिरेव वा।

माङ्गल्यं नस्यतैलम्।

जीवकर्षभकौ द्राक्षा मधुकं नागरं बला ॥ ४२ ॥
प्रपौण्डरीकं बृहती मञ्जिष्ठा त्वक्पुनर्नवा।
सारिवांशुमती मेदा विडङ्गं नीलमुत्पलम् ॥ ४३ ॥
श्वदंष्ट्रा सैन्धवं रास्ना कृष्णागुरु निदिग्धिका।
समभागान्वितैरेतैस्तैलं वा यदि वा घृतम् ॥ ४४ ॥
चतुर्गुणं जलं दत्त्वा शनैर्मृद्वग्निना पचेत्।
अक्षिरोगांश्चिरोत्पन्नान्नस्येनानेन साधयेत् ॥ ४५ ॥
तिमिरं पटलं काचं पैल्लमप्याकुलाक्षिताम्।
दूषिकास्रावरोगांश्च शोफं शूलं च नाशयेत् ॥ ४६ ॥
खलितं पलितं व्यङ्गं शिरोरोगमथार्दितम्।
दन्तचालं हनुव्याधिं मूकत्वं स्रोतसां तथा ॥ ४७ ॥
बाधिर्यं मुखरोगं च दृष्टिदोषं च नाशयेत्।
इन्द्रियाणि मनोबुद्धिस्मृतिमेधाबलानि च ॥ ४८ ॥
नस्येनानेन वर्धन्ते माङ्गल्यं सार्वकामिकम्।

नस्यमणुतैलम्।

चन्दनागुरुणी पत्रं दार्वीत्वङ्मधुकं बलाम्।
प्रपौण्डरीकं सूक्ष्मैलां विडङ्गं बिल्वमुत्पलम् ॥ ४९ ॥
ह्रीबेरमभयां वन्यं त्वङ्मुस्तं सारिवां वचाम्।
जीवन्तीं सुरदारूणि पृश्निपर्णीं शतावरीम् ॥ ५० ॥
हरेणुबृहतीव्याघ्रीसुरभीपद्मकेसरम्।
विपाचयेच्छतगुणे माहेन्द्रे विमलेऽम्भसि ॥ ५१ ॥
तैलाद्दशगुणं शेषं कषायमवतारयेत्।
तेन तैलं कषायेण दशकृत्वो विपाचयेत् ॥ ५२ ॥

अथास्य दशमे पाके समांशं छागलं पयः।
दद्यादेषोऽणुतैलस्य नावनीयस्य संविधिः ॥ ५३ ॥
तस्य मात्रां प्रयुञ्जीत तैलस्यार्धपलोन्मिताम्।
स्निग्धस्विन्नोत्तमाङ्गस्य पिचुना नावनैस्त्रिभिः ॥ ५४ ॥
त्र्यहात्त्र्यहाच्च सप्ताहमेतत्कर्म समाचरेत्।
निवातोष्णसमाचारो हिताशी विजितेन्द्रियः ॥ ५५ ॥
तैलमेतत्रिदोषघ्नमिन्द्रियाणां बलप्रदम्।
प्रयोजयन् यथाकालं यथोक्तान् लभते गुणान् ॥ ५६ ॥

बिन्दुलक्षणम्।

प्रदेशिन्या निमग्ने द्वे पर्वणी पतितस्ततः।
नस्यकर्मणि तैलादिर्विज्ञेयो बिन्दुसंज्ञितः ॥ ५७ ॥

स्नैहिकनस्यप्रमाणम्।

नस्यस्य स्नैहिकस्याथ देयास्त्वष्टौ तु बिन्दवः।
प्रत्येकशो नासिकयोर्नृणामिति विनिश्चयः ॥ ५८ ॥
शुक्तिश्च पाणिशुक्तिश्च मात्रास्तिस्रः प्रकीर्तिताः।
द्वात्रिंशद्बिन्दवश्चापि शुक्तिरित्यभिधीयते ॥ ५९ ॥
द्वे शुक्ती पाणिशुक्तिश्च ज्ञेयाऽत्र कुशलैर्नरैः।
नस्यस्य स्नैहिकस्यैतत्प्रमाणं विहितं नृणाम् ॥ ६० ॥
शृङ्गाटकमभिप्लाव्य निरेति वदनाद्यथा।
कफोत्क्लेशभयाच्चैनं निष्ठीवेदविधारयन् ॥ ६१ ॥

सम्यक्प्रयुक्तनस्यलक्षणम्।

लाघवं शिरसो योगे सुखस्वप्नप्रतिबोधनम्।
विकारोपशमः शुद्धिरिन्द्रियाणां मनःसुखम् ॥ ६२ ॥
कफप्रसेकः शिरसो गुरुतेन्द्रियविभ्रमः।
लक्षणं मूर्ध्न्यतिस्निग्धे रूक्षं तत्रावचारयेत् ॥ ६३ ॥

शिरोविरेचनार्हा रोगाः।

गलग्रहो रोहिणिका शङ्कोऽर्धावभेदकः।
प्रतिश्यायश्च कासश्च श्वासो हिक्का गिलायुकः॥ ६४॥
मुखामयो ह्यपस्मारो हनुतालुकविद्रधिः।
दन्तपुप्पुटकश्चैव पूतिनासामुखं तथा॥ ६५॥
अभिष्यन्दाश्च चत्वारः प्रोक्ता ये नेत्रसंभवाः।
सार्बुदाश्चाप्यधीमन्था नासार्शांस्यजका तथा॥ ६६॥
उपजिह्वा गलग्रन्थिः कण्ठशालूक एव च।
गलशुण्ड्यामलसके कार्यं शीर्षविरेचनम्॥ ६७॥

शिरोविरेचनाः कतिपययोगाः।

मरिचानि विडङ्गानि पिप्पल्योऽथ फणिज्झकः।
क्षवको बर्बरश्चैव शिग्रुबीजं मयूरकः॥ ६८॥
हिङ्गु सौवर्चलं भार्गी नक्तमालफलानि च।
ज्योतिष्मती शृङ्गवेरं शैरीषं बीजमेव च॥ ६९॥
एतच्छीर्षविरेकार्थमेषु व्याधिषु योजयेत्।
अवपीडोऽथ चूर्णं वा द्वन्द्वतः सर्वतोऽपि वा॥ ७०॥
एतैरेवौषधगणैस्तैलं धीरो विपाचयेत्।
अविमूत्रेण संयुक्तं श्रेष्ठं शीर्षविरेचनम्॥ ७१॥

नस्यं विदध्याद्गुडनागरं वा ससैन्धवां मागधिकामथैकाम्।
घ्राणास्यमन्याहनुबाहुपृष्ठशिरोक्षिकण्ठश्रवणामयेषु॥ ७२॥

तन्दुलाः स्युरपामार्गात्पिप्पल्यो मरिचानि च।
विडङ्गान्यथ शिग्रूणि शिरीषस्तुम्बरूणि च॥ ७३॥
अजाज्यश्चाजमोदा च पीलून्येला हरेणवः।
पृथ्वीके द्वे च वार्ताकं फलं मूर्धविरेचनम्॥ ७४॥
सुरामैरण्डजं चैव शिग्रुमूलकमेव च।
पर्णासश्च कुठेरश्च क्षवकोऽथ फणिज्झकः॥ ७५॥

हरिद्रा शृङ्गवेरं च करञ्जलशुनानि च।
एते नस्तः प्रणिहिताः कन्दा मूर्धविरेचनाः ॥ ७६ ॥
अर्कः कुष्ठमलर्का च भार्गी दन्ती वचा तथा।
काण्डपुष्पी गवाक्षी च वयस्थाऽतिरसा तथा ॥ ७७ ॥
ज्योतिष्मती तथा श्वेता वृश्चिकाली तथैव च।
मूलान्यासां तु मेधावी दद्याच्छीर्षविरेचनम् ॥ ७८ ॥
इङ्गुदी च वराङ्गं च कट्फलं रोध्रमेव च।
एताः शीर्षविरेकार्थं त्वचो दृष्टा विचक्षणैः ॥ ७९ ॥
मूलका कृष्णगन्धा च सर्वैरेव यवैः सह।
विरेचयन्ति मूर्धानं तिक्तानि लवणानि च ॥ ८० ॥
सर्वेषामेव चैतेषां धूमः शीर्षविरेचनम्।
प्रत्येकशः सर्वशश्च तत्प्राज्ञो बोद्धुमर्हति ॥ ८१ ॥
इत्यनेकविधं सम्यगुक्तं मूर्धविरेचनम्।

शिरोविरेचने नस्यप्रमाणम्।

चत्वारो बिन्दवः पञ्च तथाऽष्टौ वा यथाबलम् ॥८२॥
शिरोविरेचने योज्या ह्यूर्ध्वजत्रुविकारिणाम्।

प्रतिमर्शलक्षणम्।

ईषदुच्छिङ्घनात् स्नेहो यावद्वक्त्रं प्रपद्यते ॥ ८३ ॥
नस्तो निषिक्तस्तं विद्यात्प्रतिमर्शं प्रमाणतः।

नस्यकालावधिः।

एकान्तरं द्व्यन्तरं वा नस्यं दद्याद्विचक्षणः ॥ ८४ ॥
सप्ताहं तु परं देयं विश्रान्तस्य पुनः पुनः।
परं नवाहमूर्ध्वं तु नवाहात्सात्म्यतां व्रजेत् ॥ ८५ ॥

नस्येन सम्यक्शुद्धशिरसो लक्षणम्।

लाघवं शिरसः शुद्धिः स्रोतसां व्याधिनिर्जयः।
चित्तेन्द्रियप्रसादश्च शिरसः शुद्धिलक्षणम् ॥ ८६ ॥

नस्येन हीनशुद्धस्य शिरसो लक्षणम् ।

कण्ड्पदेहो गुरुता स्रोतसां कफसंस्रवः ।
मूर्ध्नि हीनविशुद्धे तु लक्षणं परिकीर्तितम् ॥ ८७ ॥

नस्येनातिशुद्धस्य शिरसो लक्षणम् ।

मस्तुलुङ्गागमो वातवृद्धिरिन्द्रियविभ्रमः ।
शून्यता शिरसश्चापि मूर्ध्नि गाढं विरेचिते ॥ ८८ ॥

नस्यगुणाः ।

पित्तानिलहरं केश्यं वक्त्रोपचयवर्णकृत् ।
प्रसादनं चेन्द्रियाणां स्नैहिकं नस्यमुच्यते ॥ ८९ ॥
शिरोविरेचनं नेत्रगलनासामयापहम् ।
हन्ति मेदःकफे ग्रन्थिगौरवारुचितन्द्रिकाः ॥ ९० ॥
नस्येन रोगाः शाम्यन्ति नराणामूर्ध्वजत्रुजाः ।
इन्द्रियाणां च वैमल्यं कुर्यादास्यं सुगन्धि च ॥ ९१
हनुदन्तशिरोग्रीवात्रिकबाहूरसां बलम् ।
वलीपलितखालित्यव्यङ्गानां चाप्यसंभवः ॥ ९२ ॥
घनोन्नतप्रसन्नत्वं स्कन्धग्रीवास्यवक्षसः ।
दृढेन्द्रियास्त्वपलिता भवेयुर्नस्यशीलिनः ॥ ९३ ॥
सुगन्धवदनाः स्निग्धनिःस्वना विमलेन्द्रियाः ।
निर्वलीपलितव्यङ्गा भवेयुर्नस्यशीलिनः ॥ ९४ ॥

नस्यानर्हाः ।

नाजीर्णे नार्द्रशिरसि नाध्माते गन्तुमिच्छतः ॥ ९५
न पीतमात्रे पानीये ज्वरितस्य न दापयेत् ।
न मैथुनं गतवतो मद्यपीतस्य नैव च ॥ ९६ ॥
नाध्वनीनस्य कुशलो नस्यकर्म प्रकारयेत् ।

नस्यादियोग्य वयः ।

सप्तवर्षमुपादाय नस्यकर्म चतुर्विधम् ॥ ९७ ॥

प्रतिमर्शोऽथ वमनं जन्मप्रभृति शस्यते ।
धूमो द्वादशवर्षस्य कवलः पञ्चमान्मतः ॥ ९८ ॥
दोषव्याधिबलावस्थां वीक्ष्य चैतान् प्रयोजयेत् ।
न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ॥ ९९ ॥
नचोनाष्टादशे धूमः कवलो नोनपञ्चमे ।
न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ ॥ १०० ॥
शिग्रुबीजसुरसार्जकबीजैर्विश्वजीरककणामरिचैश्च ।
नस्यं मूर्ध्नि रुजि योज्यममीभिः कारवीरुबुकतुम्बरुभिश्च ॥१०१

संशोधनान्तरमन्नसंसर्जनक्रमः ।

स्नेहपीतस्य वान्तस्य विरिक्तस्य स्रुतासृजः ।
निरूढस्य च कायाग्निर्मन्दो भवति देहिनः ॥ १०२ ॥
अत्यर्थं गुरुभिश्चान्नैरुपयुक्तः प्रशाम्यति ।
अल्पो महद्भिर्बहुभिश्छादितोऽग्निरिवेन्धनैः ॥ १०३ ॥
स चाल्पैर्लघुभिश्चान्नैरुपयुक्तैर्विवर्धते ।
काष्ठैरणुभिरल्पैश्च संधुक्षित इवानलः ॥ १०४ ॥
हृतदोषप्रमाणेन सदाऽऽहारविधिः स्मृतः ।
त्रीणि चात्र प्रमाणानि प्रस्थोऽर्धाढकमाढकम् ॥ १०५॥
तत्रावरं प्रस्थमात्रं विशेषो मध्यमोत्तमे ।
प्रस्थे परिस्रुते देया यवागूरल्पतन्दुला ॥ १०६ ॥
द्वे चैवार्धाढके देये तिस्रश्चाप्याढके गते ।
विलेपीमुचिताज्ञस्काचतुर्थीशकृतां ततः ॥ १०७ ॥
दद्यादुक्तेन विधिना क्लिन्नसिक्थामपिच्छिलाम् ।
अस्निग्धलवणस्वच्छमुद्गयूषसमं ततः ॥ १०८ ॥
अंशद्वयप्रमाणेन दद्यात्सुखिन्नमोदनम् ।
ततस्तु कृतसंज्ञेन हृद्येनेन्द्रियबोधिना ॥ १०९ ॥

त्रीनंशान् वितरेद्दोक्तुमातुरायौदनं मृदु ।
ततो यथोचितं भक्तं मोक्तुमस्मै प्रयोजयेत् ॥ ११० ॥
लघूनि मुद्गमोज्यानि दद्यार्द्धाणे विरेचने ।

विषयविशेषे वमनादीनां प्राधान्यम् ।

कफापहानां वमनं पित्तघ्नानां विरेचनम् ।
बस्तिर्वातहराणां च स्वेदो मार्दवकारिणाम् ॥ १११ ॥

सावशेषौषधलक्षणम् ।

क्लमो दाहोऽङ्गसदनं भ्रमो मूर्च्छा शिरोरुजः ।
अरतिर्बलहानिश्च सावशेषौषधाकृतिः ॥ ११२ ॥

जीर्णौषधलक्षणम् ।

अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णा सुमनस्कता ।
लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः ॥ ११३ ॥

अन्नकाललक्षणम् ।

या क्षुद्भवति जीर्णेषु दोषधातुमलेषु च ।
उचितेऽनुचिते वाऽपि सोऽन्नकालः प्रशस्यते ॥ ११४ ॥

विसृष्टे विण्मूत्रे विशदकरणे देहे च सुलघौ
विशुद्धे चोद्गारे हृदि च विमले वातेऽनुसरति ।
तथाऽन्नश्रद्धायां क्लमपरिगमे कुक्षौ च शिथिले
प्रदेयस्त्वाहारो भवति भिषजां कालः स तु मतः ११५

षड्विधा भेषजकल्पाः ।

क्षीरं रसः कल्कमथो कषायः
शृतश्च शीतश्च तथैव चूर्णम् ।
कल्पाः षडेते खलु भेषजानां
यथोत्तरं ते लघवः प्रदिष्टाः ॥ ११६ ॥

अजीर्णौषधलक्षणम् ।

अजीर्णे छर्दिमुत्क्लेशमरुचिं गात्रगौरवम् ।
ग्लानिं बन्धं च मूर्च्छां च जनयेत् परमौषधम् ॥ ११७ ॥

संशमनलक्षणम् ।

न दूषयति यद्दोषान् समान्नोदीरयत्यपि ।
समीकरोति च क्रुद्धांस्तत्संशमनमुच्यते ॥ ११८ ॥

इति श्रीवैद्यवर्यशोढलप्रथिते गदनिग्रहे दशमे पञ्चकर्माधिकारखण्डे नस्याधिकारः पञ्चमः ॥ ५ ॥

समाप्तोऽयं पञ्चकर्माधिकाराख्यो दशमः खण्डः ।

---

ग्रन्थोपसंहारः ।

यावल्लवणसमुद्रो यावन्नक्षत्रमण्डितो मेरुः ।
यावच्चन्द्रादित्यौ तावदिदं पुस्तकं जयति ॥ १ ॥

समाप्तोऽयं गदनिग्रहः ।



# गदनिग्रहद्वितीयभागपाठसंशोधनम् ।



| अपपाठः । | सुपाठः । | पृ. | पं. |
|---|---|---|---|
| औपर्यगन्वये | ओपर्यन्वये | ६ | २५ |
| स शीतः | सशीतः | ८ | १९ |
| त्रिता | त्रिवृतौ | ९ | ५ |
| सन्ति वज्राः | लभ्यते तत् | १२ | २६ |
| ह्लारचि° | कह्लारचि° | १४ | २४ |
| धान्यया | धान्यकैः | १९ | ६ |
| आमज्वरेपाचनकषायाः | आमज्वरे पाचनकषायाः | २० | १८ |
| मुस्तपर्पटकं | मुस्तपर्पटजं | २१ | १४ |
| °पिप्पलिकाकषायं | °पिप्पलिकाः कषायं | २३ | २३ |
| °दुरालभा° | °दुरालम्भा° | ,, | २६ |
| शतावरी गुडूच्यम्बु | शतावरीगुडूच्यम्बु | २४ | २ |
| श्याह्वः | श्याह्वः | २७ | ९ |
| अष्टावशेषतः | अष्टावशेषितः | ,, | १० |
| मधूकं प्रपौण्डरीकं | प्रपौण्डरीकं मधुकं | ,, | २६ |
| लाजाफलं | लाजा फलं | २८ | १८ |
| °मज्जायां | °मज्जाया | ३० | २० |
| पतन्ति | पतन्त्यो | ३१ | ८ |
| पाटलामूर्वा | पाटला मूर्वा | ३४ | २५ |
| कषायः एषः | कषाय एष | ३६ | .१२ |
| कषायः | कषाय | ४१ | ९ |
| तृतीय | प्रथमो | ४२ | १० |
| हिता न ते | हिताश्च ते | ४५ | २७ |
| शिरोरुगन्तरे | शिरोरुगन्विते | ५१ | २७ |
| °मिस्युद्गत° | °मस्युद्गत° | ५६ | २१ |
| चूर्णमातुः | चूर्णमत्र | ,, | २३ |
| हरिद्रायसनम् । | वचादिधूपः । | ५९ | ८ |
| वचादिधूपः । | पथ्यभोजनम् । | ,, | १० |
| °योजयत् | °योजयेत् | ६४ | ११ |

| अपपाठः । | शुद्धपाठः । | पृ. | पं. |
|---|---|---|---|
| यथास निहृतिः | यथाशनिहृतिः | ,, | २५ |
| अम्लप्रस्थरसोन्मिश्रं | प्रस्थाम्लरसगर्भमिश्रं | ६७ | १८ |
| °रसानं मद्यपीडितः | °रसानमद्यपीडितः | ६९ | ४ |
| शुण्ठ्युदच° | शुण्ठ्युदच° | ७१ | १ |
| श्रृंगवेरम्ब नाशार्थे | श्रृंगवेरम्बनाशार्थे | ,, | २० |
| तथार्दितम् | तथा दितम् | ,, | २१ |
| तृष्णोपद्रवशान्त्यर्थे | तृष्णोपद्रवशान्त्यर्थं | ७२ | ७ |
| निदिग्धिकादिक्वाथः | निदिग्धिकादिक्वाथः | ,, | ११ |
| शर्करोमधुभूमिजः | शर्करो मधुभूमिजः | ७३ | १६ |
| गुडधानयोगः | गुडधानकयोगः | ,, | १८ |
| भ्रष्टधानीकृता | भ्रष्टधानीकृता | ७७ | ९ |
| °रसचाकृतं | °रसचा कृतं | ८६ | १७ |
| सहिंगुरसकलिंगयवम् | सहिंगु सकलिंगयवम् | ८७ | ५ |
| मारिच° | मरिच° | ९१ | २४ |
| विपूचिका | विसूचिका | ९४ | १४ |
| ग्रहणीनीदानम् | ग्रहणीनिदानम् | ९५ | २४ |
| नागादिचूर्णं | नागरादिचूर्णं | ९८ | १८ |
| सद्याग° | सद्यग° | १०० | ११ |
| सर्वोद्देतु° | सर्वो हेतु° | १०४ | ६ |
| श्लष्मानुबन्धो | श्लेष्मानुबन्धो | १०६ | १० |
| श्लेष्मसमुत्थितम् | श्लेष्मसमुत्थितम् | ११० | २४ |
| षड्विदसृजातुरः | षड्विसृजातुरः | ११३ | १ |
| दृश्यते | दृश्यन्ते | ,, | २५ |
| °धिरजात° | °धिरजात° | ११६ | १८ |
| °शरोऽसौ पुन° | °शरः सोऽपुन° | १२३ | २४ |
| पटोलशेलसु° | पटोलशेलु सु° | १४५ | ११ |
| °जरसिन्दुवारजम् | °वरसिन्दुवारजम् | ,, | ,, |
| °रुक् शुष्ककासौ च | °रुक्शुष्ककासघ्नौ | १५६ | २४ |
| पुनरुक्ते | पुनरुक्तेः | १६० | ८ |
| °दसत° | °दजस° | १६२ | १३ |
| पञ्चविंशपलं | पञ्चविंशत्पलं | १६१ | १५ |
| इक्षुन्यालिका° | इक्षुवालिका° | १७१ | [illegible] |

| अपपाठः । | सुपाठः । | पृ. | पं. |
|---|---|---|---|
| सघोषवानाशु | स घोषवानाशु | १७३ | १२ |
| प्रिष्वग्मजति | विष्वग्व्रजति | १७४ | २८ |
| °निवृत्यर्थे | °निवृत्त्यर्थं | १८० | २० |
| जले पीते धृत्वा श्वासं | जलं पीत्वा धृते श्वासे | १८१ | १८ |
| सदाह° | स दाह° | १८२ | ७ |
| सर्पिर्नस्यं | सर्पिर्नस्यं | १८४ | १३ |
| °धिकार स्त्रयोदशः | °धिकारस्त्रयोदशः | ,, | २३ |
| रोध्र | रोध्रं | १८७ | ४ |
| त्रुटिरिक° | त्रुटिशोणित° | १९२ | २ |
| शीघ्र | शीघ्रम् | १९५ | १६ |
| पीतच्छर्दि° | पीतश्छर्दि° | ,, | १९ |
| हरिद्रापिप्पली | हरिद्रा पिप्पली | ,, | २३ |
| संन्यासलणम् | संन्यासलक्षणम् | २०३ | १७ |
| °चिकिसा | °चिकित्सा | २०९ | २० |
| क्षेपश्चन्दनसपि | क्षेपश्चन्दनस्यापि | २१४ | ३ |
| रक्तानि | रिक्तानि | ,, | २४ |
| ११७ | २१७ | (पृष्ठाङ्कः) | |
| शीतता ज | शीतता च | २१७ | १ |
| प्रपद्यने | प्रपद्यते | ,, | ७ |
| ११९ | २१९ | (पृष्ठाङ्कः) | |
| १२० | २२० | ,, | |
| शोपयत्वास° | शोपयित्वाऽस° | २२० | २२ |
| °स्वेदन° | °स्वेद° | २२४ | ९ |
| नस्यनिपितो | नस्यनिपीतो | ,, | २६ |
| एरण्डैतलयोगः | एरण्डतैलयोगः | २२८ | १७ |
| हस्तिपिप्पलली | हस्तिपिप्पली | २३२ | ९ |
| गृध्रीसीम् | गृध्रसीम् | ,, | १५ |
| विलात् | तिलात् | ,, | २६ |
| सेव्याः | सेव्या | २३३ | ३ |
| कुष्ठंसमहा | कुष्ठं रामहा | ,, | ११ |
| शोष्ण° | कोष्ण° | ,, | |

| अपपाठः । | सुपाठः । | पृ. | प |
| --- | --- | --- | --- |
| वासवासव° | वासावासव° | २३४ | [illegible] |
| °सालिकोच° | °शालिचोच° | २३५ | [illegible] |
| °सिलालक° | °शिलालक° | ,, | ६ |
| १४३ | २४३ | (पृष्ठाङ्कः) | |
| हिसंभ्रमावूरू | हि संभ्रमावूरू | २४२ | २२ |
| परिपेचालेपनयोगः | परीषेचनालेपनयोगः | २४६ | १३ |
| जाण्ड्यान्त्र° | जाड्यान्त्र° | २४७ | २० |
| °वल्लूर° | °भल्लूर° | २५१ | ११ |
| स क्षारो | सक्षारो | २५६ | २६ |
| °केसरवद्विचूर्ण्यं | °केसरकं विचूर्ण्य | २६५ | ४ |
| पुरषं | पुरीषं | २६८ | १५ |
| पञ्चविंशतितमः | पञ्चविंशतितमः | २७२ | १ |
| स्नेहादष्टगुणं | कल्कादष्टगुणं | ,, | १४ |
| बीजपुर° | बीजपूर° | २८० | ३ |
| वातहृद्रो° | वातहृद्रोग° | २८२ | २४ |
| वस्तो | वस्तौ | २८५ | १४ |
| सर्पिगुडा° | सर्पिर्गुडा° | २८९ | ३ |
| सहन्येते | संहन्येते | २९२ | ७ |
| कालनुसारिवा | कालानुसारिवा | २९४ | १२ |
| बला | बलाम् | २९६ | ३ |
| °कल्कत्वक्कार्थं तत्कल्क° | °त्वक्कल्कं क्वाथं वा कल्क° | ३०० | १३ |
| शीतलियावशूकम् | स्वर्जिकयावशूकम् | ,, | २१ |
| श्रीवेय° | श्रीवेष° | ३०२ | १० |
| °स्वसाध्याः | °स्वसाध्यः | ,, | २२ |
| खाद्वास्वं' | खाद्वास्वं च' | ३०३ | २६ |
| अथातो | अथातः | ३०६ | ११ |
| बभीत° | विभीत° | ३०८ | २ |
| कटकान् | वटकान् | ३१० | २० |
| सौवोरकं | सौवीरकं | ३१२ | २ |
| एक त्रिंशत्तमः | एकत्रिंशत्तमः | ,, | ५ |

१ पाठान्तरम् ।

| अपपाठः। | सुपाठः। | पृ. | पं. |
|---|---|---|---|
| श्लोष्मोदर° | श्लेष्मोदर° | ३१६ | २५ |
| परिसव्युदर° | परिस्राव्युदर° | ३१७ | २४ |
| प्रञ्चशतानि | पञ्चशतानि च | ३२५ | २५ |
| शासन्ति | शंसन्ति | ३२६ | ८ |
| क्षीरमांरसयोः | क्षीरमांसरसयोः | ,, | ९ |
| शिग्रमूलकषायः | शिग्रुमूलकषायः | ,, | १५ |
| पिष्य | पिष्ट्वा | ३२७ | २१ |
| दन्ती | दन्तीं | ३३० | १६ |
| चेति | चापि | ,, | १७ |
| व्ययातो | अयातः | ३३१ | १३ |
| अयातो | अथातः | ३३३ | २४ |
| कोलान् | कोलानि | ३३४ | ५ |
| °स्तरपटिकासु | °स्तपिटिकासु | ३३८ | ३ |
| °संमितम् | °संयुतम् | ३४३ | ३ |
| विद्रध्यां | विद्रध्योः | ,, | ११ |
| पिष्ट्वा | पीत्वा | ,, | २३ |
| सार्धं दुःस्पर्शपत्र | पटूर्णाऽथ दुरालभा | ३४४ | १२ |
| सरस्प्रदुः | सरस्मृदुः | ३४५ | १९ |
| चलयं | चालयन् | ,, | २० |
| अङ्गुष्ठमध्यत्वक्छित्वा | त्वचं भित्त्वाऽङ्गुष्ठमध्ये | ३४७ | १ |
| क्षिपेत्सैन्धव° | पचेत्सैन्धव° | ३५० | २ |
| स्थितं पीतं | स्थिरं स्त्यानं | ३५२ | ४ |
| यदक्ष° | यदध्य° | ,, | ७ |
| °मृक्षजिह्वं | °मृध्यजिह्वं | ,, | ,, |
| °रोगचक्षु° | °कर्णनेत्र° | ३५७ | ५ |
| °दष्टाङ्ग° | °दष्टांश° | ३५८ | १० |
| °श्वयथु° | °श्वयथु° | ३५९ | २ |
| रसायनम् | रसायनः | ,, | २६ |
| तथा | वा | ३६१ | ११ |
| स्याद्वीपि° | याद्विपि° | ,, | २२ |
| गन्थिथ | ग्रन्थिश्च | ३६२ | १२ |

| अपपाठः । | सुपाठः । | पृ॰ | पं॰ |
|---|---|---|---|
| °दुर्वादिलेपः | °दुर्वादिलेपः | ३६३ | २१ |
| कुष्टे बाकुचीयोगः | | ३६५ | १७ |
| °सेवात्याग° | °सेवा त्याग° | ३७४ | ६ |
| छायायां | च्छायायां | ३७६ | ७ |
| सोनुबन्धस्तु | सानुबन्धस्तु | ३७८ | २१ |
| °विदाह° | °विदाहि° | ३८० | ९ |
| °योजितो | °र्योजितो | ३८२ | २२ |
| बलासपित्तो | बलासपित्तं | ३८४ | १२ |
| तयाद्वारिणा | दयाद्वारिणा | ३९६ | १६ |
| हन्तल्यवश्यं | हन्त्यवश्यं | ३९७ | १८ |
| धूपयेत्सुरसादिभिः | धूपयेत्सुरसादिभिः | ४०३ | ६ |
| बन्धोपतापैश्च: | बन्धोपतापैश्च | ४०५ | १२ |
| शिरोभिघातः | शिरोभितापः | ,, | १४ |
| ,, | ,, | ,, | २० |
| ,, | ,, | ४०६ | १ |
| °बीजक° | °बीज° | ४०९ | १९ |
| सूयावर्ते | सूर्यावर्ते | ४११ | ११ |
| मूध्नि | मूर्ध्नि | ४१३ | २५ |
| क्षेपाभीत्य | क्षेपाभित्यं | ४१६ | २६ |
| कण | कर्णे | ४२२ | १४ |
| अपामार्गक्षारजले | खरमञ्जरिभस्मजले | ४२३ | २० |
| विरिक्तान्ततः° | विरिक्तकोष्ठ° | ४२४ | २१ |
| निर्गुण्ड्यर्केण | निर्गुण्ड्यर्केण | ४२५ | ४ |
| चर्हिर्विघाता° | छर्दविधाता° | ४२७ | २७ |
| परं | परम् | ४३१ | ३ |
| पश्यद्रफेन | पश्येद्रफेन | ,, | १४ |
| शिराः | सिरा | ४३५ | १६ |
| °दनिष्यन्दा° | °दभिष्यन्दा° | ४३६ | १२ |
| प्रशौण्डरीकं | प्रपौण्डरीकं | ४३९ | १० |
| °रन्तर्गते | °रन्तर्गतं | ४४१ | १५ |
| जनयति न च शूलं | जयति च रुशूलं | ४४२ | १८ |
| दलीकल्लापरिश्रवम् | दलीकल्लापरिस्रवम् | ४४५ | ११ |

| अपपाठः । | सुपाठः । | पृ. | पं. |
|---|---|---|---|
| °मात्रा | °मात्राः | ,, | १ |
| शश्वद्गातादि | नेत्रस्रेमानि | ४४६ | |
| छागीक्षोरेण | छागीक्षीरेण | ४५१ | १ |
| रात्र्यन्धं | निशान्ध्यं | ४५७ | १ |
| अर्मं | अर्म | ,, | २ |
| व्यञ्जनं नेत्र° | अञ्जनान्नेत्र° | ,, | २ |
| पयसि | पयसि च | ४५८ | २ |
| पृथग्दिव्याशु | पृथग्दिव्याप्सु | ४५९ | १ |
| रक्ताराजी° | रक्तराजि° | ४६२ | १ |
| °ऽभिहितस्य | °ऽभिहतस्य | ४७७ | २ |
| भवान्त | भवन्ति | ४७९ | |
| °शिरो | °शिरा | ,, | १ |
| रोध्रपतञ्च | रोध्रपत्राञ्च | ४९४ | [illegible] |
| छित्वा° | छित्त्वा° | ४९५ | [illegible] |
| नाडीदन्तं | नाडी दन्तं | ,, | १[illegible] |
| मुखरोगे जात्याद्या गुटिका। | | ५०१ | २[illegible] |
| इत्येपा गुटिका कार्या | इत्येषा गुटिका धार्या | ,, | २[illegible] |
| °रजश्चयाप्यचलो | °रजश्चाप्यचलो | ५०५ | २[illegible] |
| वातजाति° | वातजादि° | ५०६ | [illegible] |
| ,, | ,, | ५०७ | [illegible] |
| मुदुः° | मृदु° | ,, | १[illegible] |
| अक्षैः | शक्षैः | ५०९ | [illegible] |
| तदनुज्वालन° | तदनु ज्वालन° | ५१० | १[illegible] |
| शस्यते | प्रशस्यते | ,, | ,, |
| पनसशिफा लेपो | पनसशिफालेपो | ,, | २[illegible] |
| रक्तो° | रक्ते° | ५१३ | १[illegible] |
| °प्रभवां° | °प्रभवान° | ५१६ | [illegible] |
| मूलं हि | मूलं | ,, | [illegible] |
| °म्भः शृता | °म्भःशृता | ५२१ | १[illegible] |
| तृतीये | चतुर्थे | ,, | १[illegible] |
| अभेद्ये | अभ्यज्य | ५२५ | २[illegible] |

# गदनिग्रहद्वितीयभागान्तर्गतविषयानुक्रमणिका ।

## कायचिकित्साखण्डो द्वितीयः ।



## पाण्डुरोग-कामला-कुम्भकामला-हलीमकाधिकारः ७.

## मूर्च्छाधिकारः १६.



## मदात्ययाधिकारः १७.

## मूत्राघाताधिकारः २८.

## मेदोरोगाधिकारः ३१.



## उदररोगाधिकारः ३२.

## शीतपित्ताधिकारः ३७.

## अथ शालाक्यतन्त्रं नाम तृतीयः खण्डः

### शिरोरोगाधिकारः १.

## कर्णरोगाधिकारः २.

## नासारोगाधिकारः ५.

## मुखरोगाधिकारः ५.

## अथ शल्यतन्त्रं नाम चतुर्थः खण्डः

## बालग्रहाधिकारः १२.

## अथ पञ्चकर्माधिकारखण्डो दशमः ।

### स्नेहाधिकारः १.

## आयुर्वेदीयग्रन्थमालायां प्रसिद्धीभूता ग्रन्थाः ।



**रसहृदयतन्त्रम्**—श्रीमद्गोविन्दभगवत्पादाचार्यविरचितं, चतुर्भुजमिश्रविरचित-**मुग्धावबोधिनी**-व्याख्यासहितम् । मूल्यमेको रूप्यकः । प्रापणभृतिः ३ आणकाः ।

**रसप्रकाशसुधाकरः**—श्रीयशोधरविरचितः । मूल्यमेको रूप्यकः । प्रापणभृतिः ३ आणकाः ।

**गदनिग्रहस्य प्रथमो भागः (प्रयोगखण्डात्मकः)**-श्रीशोढलवैद्यविरचितः । अस्मिन् खण्डे घृततैलचूर्णगुटीलेहासवाख्याः षडधिकारा विद्यन्ते । मूल्यं सार्धरूप्यकः । प्रापणभृतिः ३ आणकाः ।

**रससारः**—श्रीगोविन्दाचार्यविरचितः, तथा **रससंकेतकलिका**—नैगमकायस्थजातीयश्रीचामुण्डवैद्यविरचिता । एतद्ग्रन्थद्वयमेकत्र बद्धमेवोपलभ्यते । मूल्यं १२ आणकाः । प्रापणभृतिः २ आणकौ ।

**राजमार्तण्डः**—श्रीभोजमहाराजविरचितः, तथा **नाडीपरीक्षा**—श्रीरावणविरचिता । एतद्ग्रन्थद्वयमेकत्र बद्धमेवोपलभ्यते । मूल्यं ८ आणकाः । प्रापणभृतिः २ आणकौ ।

**नाडीपरीक्षा**—श्रीरावणकृता । मूल्यं १ आणकः । प्रापणभृतिः ॥ आणकः ।

**वैद्यमनोरमा**—श्रीकालिदासवैद्यविरचिता, तथा **धाराकल्पः** । मूल्यं ८ आणकाः । प्रापणभृतिः २ आणकौ ।

**रसरत्नाकरान्तर्गतश्चतुर्थो रसायनखण्डः**—श्रीनित्यनाथसिद्धविरचितः । मूल्यं ८ आणकाः । प्रापणभृतिः २ आणकौ ।

**आयुर्वेदप्रकाशः**—श्रीमदुपाध्यायमाधवविरचितः । मूल्यं १। रूप्यकः । प्रापणभृतिः ३ आणकाः ।

रसहृदयाद्यायुर्वेदप्रकाशान्तानामेकादशग्रन्थानां मनोरमचर्मपत्राच्छादितैकत्र बद्धानां मूल्यं ७ रूप्यकम् । प्रापणभृतिः ८ आणकाः ।

**गदनिग्रहस्य द्वितीयो भागः**—कायचिकित्सा-शल्य-शालाक्य-भूततन्त्र-कौमारतन्त्र-अगदतन्त्र-रसायन-वाजीकरण-पञ्चकर्मविध्याख्यनवखण्डात्मकः । मूल्यं ४॥ रूप्यकाः । प्रापणभृतिः ८ आणकाः ।

पुस्तकप्राप्तिस्थानम्— वैद्य जादवजी त्रिकमजी आचार्य,
२७३, धोराबजार स्ट्रीट,